THE

# NEW TESTAMENT

OF OUR

LORD AND SAVIOUR

# JESUS CHRIST

IN SANSKRIT.

TRANSLATED FROM THE GREEK

the Calcutta Baptist Missionaries, with Native Assistants.

CALCUTTA:
THE BRITISH AND FOREIGN BIBLE SOCIETY,
(CALCUTTA AUXILIARY)
23, CHOWRINGHEE ROAD,
1910.

धर्म्मपुस्तकस्य शेषांशः ।

अर्थतः

## प्रभुणा यीशुख्रीष्टेन

निरूपितस्य

# नूतनधर्म्मनियमस्य

ग्रन्थसङ्ग्रहः ।

ईंलण्डीयवङ्गदेशीयपण्डितै र्यूनानीयभाषातो व्याकृतः

धर्म्मसमाजसाहाय्येन मुद्राक्षराङ्कितश्च ।

कलिकातानगरे

कलिकाता-सहकारिणा ब्रिटिश्फरेन्धर्म्मसमाजेन,

२३ नं, चौरङ्गी रोड भवनात् प्रकाशितम् ।

१८३१ शाके । ई सन १९१० ।

# निघण्टपत्र

# मथिलिखितः सुसंवादः।

प्रभो र्यीशुख्रीष्टस्य आख्यानपत्रम्

१ अथ यीशोः ख्रीष्टस्य जन्मपत्रम्। स तु दायूदस्य सन्तानः।
२ दायूदोऽब्राहामस्य सन्तानः। अब्राहाम इस्हाकं जनयामास।
इस्हाको याकोबं जनयामास। याकोबो यिहूदां तस्य भ्रातॄंश्च
३ जनयामास। थामरो गर्भे यिहूदाः पेरसं सेरहञ्च जनयामास।
४ पेरसो हिष्रोणं जनयामास। हिष्रोणोऽरामं जनयामास। अरामो-
ऽम्मीनादबं जनयामास। अम्मीनादबो नहशोनं जनयामास। नह-
५ शोनः सल्मोनं जनयामास। सल्मोनो राहबो गर्भे बोयसं जनया-
मास। बोयसो रूतो गर्भे ओबेदं जनयामास। ओबेदो यिशं
६ जनयामास। यिशयो राजानं दायूदं जनयामास। राजा दायूदो
मृतस्योरियस्य जायाया गर्भे शलोमानं जनयामास। शलोमा
७ रहबियामं जनयामास। रहबियामोऽबियं जनयामास। अबिय
८ आसां जनयामास। आसा यिहोशाफटं जनयामास। यिहोशाफटो
योरामं जनयामास। योराम उषियं जनयामास। उषियो योथमं
९ जनयामास। योथम आहसं जनयामास। आहसो हिष्कियं जनया-
१० मास। हिष्कियो मनःशिं जनयामास। मनःशिरामोनं जनयामास।
११ आमोनो योशियं जनयामास। योशियो यिकनियं तस्य भ्रातॄंश्च
जनयामास। तदा बाबिलीयप्रवासोऽभूत्। बाबिलीयप्रवासात् परं
१२ यिकनियः शल्टीयेलं जनयामास। शल्टीयेलः सरुब्बाबिलं

जनयामास । सिरुब्बाबिलोऽबीहूदं जनयामास । अबीहूद इलीया- १३
कीमं जनयामास । इलियाकीम आसोरं जनयामास । आसोरः
सादोकं जनयामास । सादोक आखीमं जनयामास । आखीम १४
इलीहूदं जनयामास । इलीहूद इलियासरं जनयामास । इलि- १५
यासरो मत्तनं जनयामास । मत्तनो याकोबं जनयामास । याको-
बश्च मरियमः पतिं योषेफं जनयामास । तस्या एव गर्भे ख्रीष्टो- १६
ऽर्थतोऽभिषिक्त इत्यभिधो यीशुर् जज्ञे ।

इत्थमब्राहामाद् दायूदं यावत् साकल्येन चतुर्दशपुरुषाः, १७
दायूदात् पुन र्बाबिलीयप्रवासं यावच्चतुर्दशपुरुषाः, बाबिलीयप्रवा-
सात् पुनः ख्रीष्टं यावच्चतुर्दशपुरुषाश्च ।

### प्रभो र्यीशोर्जन्मविवरणम् ।

यीशोः ख्रीष्टस्य तु जन्मेत्थमभूत् । तस्य मातरि मरियमि १८
योषेफाय वाग्दत्तायां सत्यां तयोः सङ्गमात् प्राक् सा पवित्रेणात्मना
गर्भवतीत्याविष्कृता । तस्याः पति र्योषेफस्तु धार्म्मिकोऽथच तां साधा- १९
रणनिन्दाभाजनं कर्त्तुमनिच्छन् तां गुप्तं परित्यक्तुमकल्पयत् । तस्मिं
स्त्वेतच्चिन्तयते प्रभो र्दूतः स्वप्ने दर्शनं दत्त्वावादीत्, भो दायूदस्य सुत २०
योषेफ स्वभार्य्याया मरियमः परिग्रहणान्माऽभैषीः, यतस्तस्या
गर्भफलं पवित्रादात्मनः सम्भूतम् । सा हि पुत्रं प्रसविष्यते त्वञ्च २१
तस्य नाम यीशुरर्थतस्त्रातेति करिष्यसि, यतः स एव स्वप्रजास्तासां
पापेभ्यस्तारयिष्यति । सर्व्वमेतत्तु तथा बभूव यथा भाववादिना २२
व्याहृतं प्रभोरिदं वाक्यं सिद्धिं गच्छेत्, यथा,

कुमारी गर्भिणी पश्य सा पुत्रं प्रसविष्यते । २३
इम्मानूयेल इत्येव तस्य नाम भविष्यति ।

नाम्नोऽस्य तात्पर्य्यम् अस्मत्सङ्गीश्वर इति । अनन्तरं निद्रोत्थितो २४

योषेफो यथादिष्टं दूतेन तथैवाकार्षीत्, फलतः स्वभार्य्यां पर्य्यग्रहीत्,
२५ सा परं यावत् प्रथमसुतं न सुषुवे तावत् स तां न प्राजानात्।
तस्य नाम च यीशुरित्यकार्षीत् ॥ १ ॥

### प्रभो यीशोः शैशवविवरणम्।

२ १ राज्ञो हेरोदस्य काले यिहूदियादेशस्थे बैतलेहमे यीशो
र्जन्मनः परं, पश्य, प्राच्यदेशात् केचिज्ज्योतिर्विदो यिरूशालेम-
२ मागत्य जगदुः, कुत्र स यिहूदीयानां नवजातो राजा? यस्मादु-
३ दयदिशि तस्य नक्षत्रं दृष्टवन्तो वयं तं प्रणिपतितुमागताः। श्रुते
त्वस्मिन् राज्ञो हेरोदस्य तेन च सह कृत्स्नस्य यिरूशालेमस्योद्वेगः
४ सञ्जातः। ततः स सर्व्वान् मुख्ययाजकान् प्रजानां शास्त्राध्यापकांश्चैकत्र
५ कृत्वा पप्रच्छ खीष्टेन कुत्र जन्म ग्रहीतव्यं? ते तं जगदुः, यिहूदिया-
देशस्थे बैतलेहमे, यतो भाववादिनेत्थं लिखितमास्ते यथा,

यिहूदीयप्रदेशस्य त्वन्तु भो बैतलेहम।
यिहूदानायकश्रेण्यां स चोदिष्टं कथञ्चन॥
त्वत्त एव यतो हेतोः स उदेष्यति नायकः।
मत्प्रजावृन्दमिस्रायेल् येन सम्पालयिष्यते

अनन्तरं हेरोदस्तान् ज्योतिर्विदो गुप्तमाहूय तन्नक्षत्रं कति
८ कालं प्रकाशितमिति पृष्ट्वा सूक्ष्ममवगत्य तान् बैतलेहमं प्राहिणो-
दिदमब्रवीच्च, यूयं गत्वा सूक्ष्मं तस्य शिशोः, तथ्यानुसन्धानं कुरुत,
प्राप्ते तदुद्देशे मां ज्ञापयत, तेनाहमपि गत्वा तं प्रणिपतिष्यामि।
९ राज्ञो वाक्यं श्रुत्वा ते गमने कृते, पश्य, पूर्व्वदिशि यन्नक्षत्रं ते दृष्टं
तत् तेषामग्रतोऽगच्छत् शिशुश्च स यत्राविद्यत तत् स्थानं प्राप्य
१० तदूर्द्ध्वमवतस्थे। नक्षत्रं तद् दृष्ट्वा तेऽतीव महतानन्देन प्रफुल्लिताः।
११ अनन्तरं प्रविश्य ते गृहं मात्रा मरियमा सह शिशुं विलोके।

ततस्ते प्रणिपत्य तस्य भजनं चक्रुः स्वधनकोषानुन्मोच्य तस्मै स्वर्णकुन्दुरु- १२
गन्धरसान् दर्शनीयानुपजहुश्च । ततः परं ते हेरोदं प्रति मा
प्रत्यावर्त्तध्वमित्यादेशं स्वप्नेनेश्वराल्लब्ध्वान्य मार्गेण स्वदेशं प्रतस्थिरे ।

प्रस्थितेषु तेषु, पश्य, प्रभो र्दूतः स्वप्ने योषेफाय दर्शनं दत्त्वा १३
जगाद, उत्तिष्ठ शिशुं तन्मातरञ्च गृहीत्वा मिसरं पलायस्व च,
यावच्चाहं तुभ्यं नान्यत् कथयामि तावत् तत्रावतिष्ठस्व, यतो हेरोदः
शिशो र्हत्यायै तं मृगयितुमुद्यतः । अतः स रात्रावुत्थाय शिशुं १४
तन्मातरञ्च गृहीत्वा मिसरं प्रतस्थे हेरोदस्य मृत्युं यावत् तत्रावतस्थे १५
च । इत्थं भाववादिनोक्ता प्रभोरियं कथा संसिद्धा यथा,

मिसर्देशत एवाहं स्वीयपुत्रं समाह्वयम् ।

तदा ज्योतिर्विद्भिरहं प्रवञ्चित इति दृष्ट्वा हेरोदो भृशं चुकोप, १६
ज्योतिर्विदां वचनाच्च सूक्ष्मं निर्णीतकालानुरूपं वर्षद्वयवयस्कास्तन्न्यून-
वयस्काश्च यावन्तः पुंशिशवो बैतलेहमे तत्प्रान्तपरिसीमनि चावि-
द्यन्त जनान् प्रहित्य स तान् सर्व्वान् घातयामास । तदा भाववादिना १७
यिरमियाहेणोक्तमिदं वचनं सिद्धिं गतं यथा,

रामायां श्रूयते रावः शोकजं परिदेवनं । १८
रोदनं बहुरूपस्य हाहाकारस्य च ध्वनिः ॥
स्वसुतान् अनुशोचन्ती राहेल् करोति रोदनं ।
सान्त्वनां सा न गृह्णाति यतो हेतो र्न सन्ति ते ॥

अनन्तरं पश्य मृते हेरोदे प्रभो र्दूतो मिसरे योषेफाय स्वप्ने १९
दर्शनं दत्त्वा जगाद, उत्तिष्ठ शिशुं तन्मातरञ्च गृहीत्वेस्रायेलदेशं २०
गच्छ च, यस्माच्छिशोः प्राणनाशार्थिनो मृतवन्तः । ततः स उत्थाय २१
शिशुं तन्मातरञ्च गृहीत्वेस्रायेलदेशं प्रविवेश । किन्त्वार्खिलायः २२
स्वपितुर्हेरोदस्य पदं प्राप्य यिहूदियायां राजत्वीति निशम्य स तत्र

२३ गन्तुं शङ्कितः। ततः परं स्वप्न ईश्वरीयादेशं लब्ध्वा स गालीलीय-
जनपदं प्रतस्थे, तत्रागत्य च नासरताभिधे नगरे वसतिं चक्रे।
इत्थं स नासरीयोऽभिधास्यत इति भाववादिभिरुक्ता कथा
सिद्धिं गता॥ २॥

स्नापकयोहनस्य प्रचारादिकार्य्यम्।

३ १ तस्मिन् काले स्नापको योहन उपतिष्ठते। स यिहूदीयाया
२ मरौ घोषणां कुर्व्वन्नवदत्, मनांसि परावर्त्तयत यतः स्वर्गराज्यं
३ समीपमागतं। वास्तवं स हि भाववादिना यिशायाहेन निर्द्दिष्टो
नरो यथा,

मरौ घोषयतः प्रोच्चैरस्त्ययं कस्यचिद् रवः।
प्रभोः संस्कुरुताध्वानं विधद्ध्वं तत्सृती ऋजूः॥

४ तस्य तु योहनस्योष्ट्रलोमनिर्म्मितं वसनं कटौ बद्धा चर्म्मनिर्म्मिता
पटुका चासीत्; पतङ्गा वन्यमधु च तस्य खाद्यान्यासन्।
५ तदानीं यिरूशालेमस्य समस्तयिहूदीयादेशस्य यर्द्दनान्तिकस्य
६ समस्तजनपदस्य च मानवास्तत्समीपं गत्वा स्वपापानि स्वीकुर्व्वाणा
७ यर्द्दने तेनास्नाप्यन्त। अनन्तरं तदीयस्नानार्थिनः फिरूशिनां सिदूकि-
नाञ्च बहवो नरा आगच्छन्तीति दृष्ट्वा स तान् जगाद, भो सर्प-
८ वंशाः, यूयं भाविक्रोधात् पलायितुं केनादिष्टाः? अतो मनःपरा-
९ वर्त्तनस्य योग्यानि फलानि फलत। अस्माकं पिताब्राहामो विद्यत
इति वाक्यप्रयोगं वा स्वान्तरे मैव कल्पयत। यतोऽहं युष्मान्
ब्रवीमि, एतेभ्यः प्रस्तरेभ्योऽब्राहामस्य कृते सन्तानानुत्पादयितुमीश्वरः
१० शक्तिमान्। परन्त्वधुनैव पादपानां मूलेषु कुठारो लगन्नास्ते, अतो
यः कश्चित् पादपः सत्फलं न फलति, स उच्छिद्यते वह्नौ निक्षिप्यते
११ च। युष्मान् अहं मनःपरावर्त्तनार्थं तोये स्नापयामि; मत्पश्चाद् य

आगच्छति स मत्तो बलवान् तस्योपानहौ वोढुमहं न योग्यः, स
युष्मान् पवित्र आत्मनि वह्नौ च स्नापयिष्यति। तस्य हस्ते च १२
सूर्प्प विद्यते, स स्वीयखलं सम्यक् संशोधयिष्यति निजगोधूमान्
कुशूले संग्रहीष्यति च तुषांस्त्वनिर्व्वाणवह्निना दाहयिष्यति।

प्रभो र्यीशोः स्नापनं परीक्षा च।

तदा योहनेनाहं स्नापयितव्य इति मत्वा यीशु र्गालीलतो १३
यर्द्दने तत्समीपमाजगाम। योहनस्तु तं वारयन्नब्रवीत्, भवता मम १४
स्नापनं प्रयोजनीयं, भवांस्तु मदन्तिकमागच्छति? ततो यीशुस्तं १५
प्रत्यवादीत्, अधुनानुमन्यस्व यस्मादित्थं सर्व्वधर्म्मसाधनमावयो र्युक्तं।
तदा स तमन्वमन्यते। स्नापितस्तु यीशुस्तूर्णं तोयादुत्थितः। पश्य १६
तदा तस्य कृते स्वर्ग उद्घाटित ईश्वरस्यात्मा च कपोत इवावरोहन् १७
तमाश्रयंश्च तेन दृष्टः स्वर्गत मञ्जाता चैका वाणी बभाषे, मम
प्रियः पुत्रोऽयम् अस्मिन्नेवाहं प्रीतः॥ ३॥

तदानीं यीशु र्दियावलेन परीक्षासहनार्थमात्मना मरुं नीतः। ४ १
तत्र स चत्वारिंशद्दिनानि चत्वारिंशद्रात्रीश्चोपोषितः, ततः परं २
चुक्षोध। तदा परीक्षकस्तमुपागत्य जगाद, भवांश्चेदीश्वरस्य पुत्रस्तर्हीमे ३
प्रस्तरा यथा पूपा भवेयुस्तथाज्ञापयतु। स तु प्रतिजगाद, ४
लिखितमास्ते, न केवलेन पूपेन मनुष्यो जीविष्यति, किन्त्वीश्वरस्य
मुखान्निर्गच्छता येन केनचिद् वचनेन। तदा दियावलस्तं पुण्यनगरं ५
नीत्वा धर्म्मधाम्नः शिखरे स्थापयित्वा जगाद, भवांश्चेदीश्वरस्य ६
पुत्रस्तर्ह्यधस्तात् प्रपततु यतो लिखितमास्ते,

त्वत्कृते निजदूतेभ्यः स आदेशं प्रदास्यति।
यत्नात्त्वां ते करे कृत्वा भक्ष्यन्ति तथा तत्।

यीशुस्तं जगाद, इदमपि लिखितमास्ते, त्वं स्वेश्वरस्य प्रभोः

८ परीक्षां माऽकार्षीः। पुनश्च दियावलस्तमतीवोच्चं गिरिं नीत्वा
९ जगतो निखिलराज्यानि तेषां प्रतापञ्च दर्शयन्नवादीत्, त्वं चेत्
प्रणिपत्य मम भजनां कुर्य्यास्तर्ह्येतानि सर्व्वाणि तुभ्यं दास्यामि।
१० तदा यीशुस्तं जगाद, अपसर शैतान, यतो लिखितमास्ते,
निजेश्वरस्य प्रभो र्भजना त्वया कर्त्तव्या, एकश्च स एव त्वयाराध-
११ यितव्यः। तदा दियावलस्तमत्याक्षीत्, पश्य चापरं स्वर्गदूता उपागत्य
तं परिचरितुं प्रावर्त्तन्त।

### यीशोः प्रकाश्यकार्य्यारम्भः।

१२ ततः परं योहनः कारायां समर्पित इति निशम्य यीशु
१३ र्गालीलं प्रतस्थे नासरतं त्यक्त्वा च सिबूलूनस्य नप्तालेश्च सीमनि
१४ सागरतीरस्थे कफरनाहूम उपस्थाय वसतिं चक्रे। इत्थं भाववादिना
यिशायाहेन कथितमिदं वाक्यं सिद्धिं गतं यथा,

१५ सिबूलूनस्य यो देशो नप्तालेरपि या क्षितिः।
पद्धतिः सागरासन्ना यर्द्दनस्योत्तरे स्थिता॥
सेविते परजातीयैस्तस्मिन् गालीलमण्डले।
१६ अन्धकारे समासीने र्ज र्दृष्टा महाद्युतिः॥
मृत्युच्छायावृते देश उपविष्टाश्च ये पुरा।
ज्योतिस्तेषां मनुष्याणामुदितं दृष्टिगोचरे॥

१७ ततः परं यीशु र्घोषणां कर्त्तुमारभ्येदमब्रवीत्, मनांसि परा-
१८ वर्त्तयत, यतः स्वर्गराज्यं सन्निकटमागतं। अपरं यीशु र्गालीलीय-
सागरस्य तटे विहरन् द्वौ भ्रातरावर्थतः पितराभिधं शिमोनं तस्य
सहोदरमान्द्रियञ्च सागरे जालं क्षिपन्तौ ददर्श, यतस्तौ धीवरा-
१९ वास्तां। स तौ जगाद, मम पश्चादागच्छतम् अहञ्च युवां मनुष्य-
२० धारिणौ धीवरौ विधास्यामि। ततस्तौ तूर्णं जालानि विहाय

तमन्वगच्छतां। तस्मात् स्थानात् प्रगत्य सोऽपरौ द्वौ भ्रातरावर्थतः २१
सिवदियस्य पुत्रं याकोबं तदीयसहोदरं योहनञ्च स्वजनकेन
सिवदियेन सह नौकायां स्वजालानां जीर्णोद्धारे नियुक्तौ दृष्ट्वा
तावाजुहाव। तौ च तत्क्षणमेव नौकां स्वपितरञ्च विहाय तमन्व- २२
गच्छतां।

अनन्तरं यीशुः कृत्स्नं गालीलं परिभ्राम्यन् तत्रत्यानां समाजगृहेषु २३
शिक्षामददात् राज्यस्य सुसंवादञ्चाघोषयत् जनानां यावतीयरोगं
यावतीयदौर्ब्बल्यञ्चोपाशमयत्। एवं तस्य ख्यातिः कृत्स्ने सुरियादेशे २४
व्यानशे, अस्वस्था विविधै रोगै र्व्यसनैश्च क्लिष्टा भूताविष्टा अपस्मारिणः
पक्षाघातिनश्च सर्व्वे मनुष्यैस्तस्यान्तिकमानीतास्तेन स्वस्थीकृताश्च।
अपरं गालील-दिकापलि-यिरूशालेम-यिहूदियाप्रदेशेभ्यो यर्द्दन- २५
पाराच्च महान्तो मानवनिवहा तमन्वगच्छन्॥ ४॥

पर्व्वतोपरि प्रभुयीशोरुपदेशनम्।

तान् मानवनिवहान् दृष्ट्वा स गिरिमारुरोह। तत्र तस्मिन्नुपविष्टे ५ १
शिष्यास्तस्य समीपमागमन्। तदा स वक्त्रमुद्घाट्य तेभ्यः शिक्षां दातुं २
प्रवृत्तोऽब्रवीत्—

स्वर्गराज्यस्य प्रजानिर्णयः।

दीनात्मानो धन्याः, यतः स्वर्गराज्यं तेषामेव। शोकार्त्ता धन्याः, ३
यतस्ते सान्त्वयिष्यन्ते। मृदुशीला धन्याः, यतस्ते दायांशवत् क्षितिं ४ ५
लप्स्यन्ते। धार्म्मिकतां बुभुक्षवः पिपासवश्च धन्याः, यतस्ते परितर्प्स्यन्ति। ६
कृपावन्तो धन्याः, यतस्ते कृपामवाप्स्यन्ति। शुचिहृदो धन्याः, यतस्त ७ ८
ईश्वरं द्रक्ष्यन्ति। सन्धिकारिणो धन्याः, यतस्त ईश्वरस्य पुत्रा ९
इत्यभिधायिष्यन्ते। धर्म्महेतुनोपद्रुता धन्याः, यतः स्वर्गराज्यं तेषा- १०
मेव। धन्या यूयं यदा मनुष्या मदर्थं युष्मान् निन्दन्त्युपद्रवन्ति च ११

१२ युष्मद्विरुद्धं मृषा सर्व्वविधां कुकथां व्याहरन्ति च। आनन्दतोल्लसत
च, यतः सञ्चितं स्वर्गे युष्माकं प्रभूतं पारितोषिकं। वास्तवं युष्माकं
पूर्व्वं ये भाववादिन आसन्, तांस्ते तथैवोपाद्रवन्।
१३ यूयं पृथिव्या लवणं। लवणं तु यदि विस्वादं जायते, तर्हि
केनोपायेन तत् स्वादयुक्तं कारिष्यते? ततः परं तत् कस्मिंश्चिन् कार्य्ये
१४ न युज्यते, केवलं वहि र्निक्षेपणे मानवपदै र्मर्द्दने च युज्यते। यूयं
जगतो दीपः। पर्व्वतोपरि स्थितं नगरं प्रच्छन्नमवस्थातुं न शक्नोति।
१५ मनुष्याश्च दीपिकां प्रज्वाल्य न द्रोणस्याधस्तात् अपि तु दीपाधार-
१६ स्योपरि स्थापयन्ति सा च गृहेऽवस्थितानां सर्व्वेषां राजते। तथैव
युष्माकं दीप्ति र्मनुष्याणां समक्षं विराजतां, तथा कृते युष्माकं
सत्क्रिया दृष्ट्वा ते युष्माकं स्वर्गस्थं पितरं स्तोष्यन्ति।

स्वर्गराज्यस्य व्यवस्थोत्कर्षः।

१७ व्यवस्थाया भाववादिनां वा मोचनायाहमागत इति मानुमिमीध्वं।
१८ न मोचनाय, प्रत्युत पूरणायाहमागतः, यतोऽहं युष्मान् सत्यं ब्रवीमि,
यावद् व्योममेदिन्योरत्ययो न भविष्यति तावद् व्यवस्थाया एका
१९ मात्रैको विन्दु र्वा नैवात्येष्यति सर्व्वमेव हि सेत्स्यति। अतो यः
कश्चिदेतासां चोदिष्ठानामाज्ञानामेकां मुञ्चति मनुष्यांश्च तदनुरूपं
२० शिक्षयति, स स्वर्गराज्ये चोदिष्ठोऽभिधायिष्यते। यस्तु ता आचरति
शिक्षयति च स स्वर्गराज्ये महानभिधायिष्यते। यतोऽहं युष्मान्
ब्रवीमि, युष्माकं धार्म्मिकता यदि शास्त्राध्यापकानां फरीशिनाञ्च
धार्म्मिकतातोऽधिकं प्रभूता न स्यात्, तर्हि यूयं स्वर्गराज्यं
नैव प्रवेक्ष्यथ।
२१ त्वं नरहत्यां माऽकार्षीः, यस्तु नरहत्यां करोति स धर्म्माधिकरणे
शासनीयो भविष्यतीति प्राचीनेभ्यः कथितमासीत् युष्माभिरश्रुतम्।

अहन्तु युष्मान् ब्रवीमि, यः कश्चिदकारणं स्वभ्रात्रे कुप्यति स धर्म्मा- २२
धिकरणे शासनीयो भविष्यति। यश्च स्वभ्रातरं निर्ब्बोधस्त्वमिति
वदति स सभायां शासनीयो भविष्यति। यश्च वदति मूढस्त्वमिति,
सोऽग्निमये नरके शासनीयो भविष्यति। अतस्त्वया स्वकीयोपहारे २३
यज्ञवेदिमानीते तव भ्रातु र्मनसि त्वद्विरुद्धा कथा विद्यत इति
तत्र चेत् स्मरसि, तर्हि तत्र स्वकीयोपहारं यज्ञवेद्याः सम्मुखे विहाय २४
याहि, प्रथमं स्वभ्रात्रा सम्मिलितो भव, ततः परमागत्य स्वकीयोपहारं
निवेदय। स्वप्रतिपक्षेण सह यावन्मार्गे वर्त्तसे, तावत्, तूर्णं तस्यानु- २५
कूलो भव, नो चेत् प्रतिपक्षेण विचारयितु र्हस्ते समर्पितस्त्वं
विचारयित्रा पदातिकस्य हस्ते समर्पितः कारायां निक्षेप्स्यसे।
त्वामहं सत्यं वदामि, शेषोऽपि कपर्द्दको यावत् त्वया न शोधितस्तावत् २६
तत्स्थानान्न निर्गमिष्यते।

त्वं व्यभिचारं माऽकार्षीरिति प्राचीनेभ्यः कथितमासीत्, २७
युष्माभिस्तच्छ्रुतम्। अहन्तु युष्मान् ब्रवीमि यः कश्चित् कामुकभावेन २८
योषितं प्रति दृक्पातं करोति, स तावता स्वहृदये तया सह
व्यभिचारं कृतवान्। यदि तु तव दक्षिणं नेत्रं तव स्खलनकारणं २९
भवेत्, तर्हि तदुत्पाट्य दूरं निक्षिप। यतस्तवैकस्याङ्गस्य नाशः, न तु
कृत्स्नशरीरस्य नरके निपातस्तद्धि तव हितं। यदि वा तव दक्षिणो ३०
हस्तस्तव स्खलनकारणं भवेत्, तर्हि तं छित्त्वा दूरं निक्षिप। यतस्तवैक-
स्याङ्गस्य नाशः, न तु कृत्स्नशरीरस्य नरके निपातस्तद्धि तव हितम्।

पुनश्च कथितमासीत्, यः कश्चित् स्वभार्य्यां त्यजति, स तस्यै ३१
त्यागपत्रं ददातु। अहन्तु युष्मान् वदामि, य कश्चिद् व्यभिचार- ३२
दोषादन्येन हेतुना स्वभार्य्यां त्यजति, स तां व्यभिचारं कारयति।
यश्च त्यक्तां योषितमुद्वहति स व्यभिचारं करोति।

३३ पुनस्त्वं मृषा शपथं माऽकार्षीः, स्वशपथफलन्तु प्रभवे दास्यसीति
३४ प्राचीनेभ्यः कथितं, युष्माभिस्तच्छ्रुतम्। अहन्तु युष्मान् ब्रवीमि,
यूयं सर्व्वथा मा शपध्वं; न स्वर्गेण, यतः स ईश्वरस्य सिंहासनं;
३५ न मेदिन्या, यतः सा तस्य पादपीठं, न यिरूशालेमेन, यतस्तन्महतो
३६ राज्ञो नगरं। निजशिरसा वा मा शपस्व, यतः शिरोरुह एकोऽपि
३७ सितीकर्त्तुम् असितीकर्त्तुं वा त्वया न शक्यते। युष्माकन्तु संलपने
यत् तथा तत् तथैव यन्न तन्नैव भवतु; यदेतदधिकं तत्
पापात्मनो जातम्।

३८ चक्षुषो विनिमये चक्षु र्दन्तस्य विनिमये च दन्त इति
३९ कथितमासीत् युष्माभिस्तच्छ्रुतम्। अहन्तु युष्मान् ब्रवीमि, दुर्जनस्य
प्रतिरोधो न कर्त्तव्यः, अपितु यः कश्चित् तव दक्षिणकपोले
४० चपेटाघातं करोति, तं प्रत्यन्यतरं कपोलमपि व्याघोटय। यश्च
धर्म्माधिकरणे त्वया विवदमानस्तवाङ्गाच्छादकं जिहीर्षति, तस्य कृते
४१ प्रावारमपि त्यज। यश्च विनावेतनं क्रोशमेकं गमनाय त्वां हरति,
४२ गच्छ तेन क्रोशद्वयं। यश्च त्वत्तो याचते तस्मै देहि। यश्च त्वत्त
ऋणमभिवाञ्छति तं प्रति विमुखो मा भव।

४३ त्वं स्वनिकटस्थं प्रति प्रेम, स्वशत्रुं प्रति तु द्वेषं करिष्यसीति
४४ कथितमासीत् युष्माभिस्तच्छ्रुतम्। अहन्तु युष्मान् ब्रवीमि, यूयं
स्वशत्रून् प्रति प्रेम कुरुत, ये युष्मान् शपन्ति तानाशिषं वदत, ये
युष्मान् द्विषन्ति तेषां हितमाचरत, ये युष्मान् अपवदन्त्युपद्रवन्ति
४५ च तेषां कृते प्रार्थनां कुरुत। तथा कृते युष्माकं यः स्वर्गस्थः पिता
दुर्जनानां सुजनानाञ्चोपरि स्वसूर्य्यमुदाययति धार्म्मिकाणामधार्म्मि-
४६ काणाञ्चोपरि तोयं वर्षयति च, तस्य पुत्रा भविष्यथ। यतो यदि
केवलं युष्मत्प्रेमकारिणः प्रति प्रेम कुरुथ तर्हि किं पारितोषिकं

लभ्यध्वे? शुल्कादायिनोऽपि किं न तदेव कुर्व्वन्ति? केवलं स्वभ्रातॄन् ४७
वा यद्यभिवदथ, तर्हि विशिष्टं किं कुरुथ? शुल्कादायिनोऽपि किं
न तदेव कुर्व्वन्ति? अतो युष्माकं स्वर्गस्थः पिता यथा सिद्धोऽस्ति, ४८
यूयं तथैव सिद्धा भवत ॥ ५ ॥

दानप्रार्थनादिधर्म्मकर्म्मणां कथा।

यूयं स्वधर्म्मानुष्ठाने सावधाना भवत, जनावलोकनार्थाय ६ १
तन्मानवानां समक्षं माऽकार्ष्ट। अन्यथा युष्माकं स्वर्गस्थपितृतो लभ्यं
किमपि पारितोषिकं युष्माकं न भविष्यति। अतस्त्वं यदा भिक्षां २
ददासि तदा मनुष्येभ्यः प्रशंसालिप्सुकामेन समाजगृहेषु रथ्यासु च
कपटिनो यथा कुर्व्वन्ति तथा आत्मनोऽग्रे तूर्य्यध्वनिं मा कुरु।
अहं युष्मान् सत्यं वदामि ते स्वपारितोषिकं लब्धवन्तः। त्वयि तु ३
भिक्षां ददति तव दक्षिणहस्तेन यत् क्रियते तत् तव वामहस्तेन मा
ज्ञायतां। तथानुष्ठिते तव भिक्षादानं निभृतं भविष्यति, तव ४
निभृतदर्शी पिता तु तत्फलं तुभ्यं प्रकाश्यं दास्यति।

यदा पुनः प्रार्थनां करोषि, तदा कपटिनां सदृशो मा भव, ५
यतस्ते मनुष्याणां गोचरीभवितुकामाः समाजगृहेषु चत्वरास्तेषु च
तिष्ठन्तः प्रार्थयितुमनुरक्ताः। युष्मानहं सत्यं ब्रवीमि, ते स्वपारि-
तोषिकं लब्धवन्तः। त्वन्तु यदा प्रार्थयसे तदा स्वान्तरागारं प्रविश्य ६
द्वारञ्च रुद्ध्वा निभृतम् उपस्थितं तव पितरमुद्दिश्य प्रार्थनां कुरु,
निभृतदर्शी तव पिता तु तत्फलं तुभ्यं प्रकाश्यं दास्यति।

प्रार्थनकाले च यूयं परजातीयजनवद् वृथा पुनरुक्तिं मा कुरुत, ७
ते हि स्ववाक्यबाहुल्यादुत्तरलाभः सम्भविष्यतीति मन्यन्ते, तद् यूयं
तेषां सदृशा मा भवत। युष्माकं हि यद्यदेव प्रयोजनं तत्तद् युष्माभि ८
र्याचनात् प्राग् युष्मत्पित्रा ज्ञायते। अतो यूयमित्थं प्रार्थयध्वं, ९

१० भो अस्माकं स्वर्गस्थ पितः, तव नाम पवित्रं पूज्यतां। तव राज्य-
११ १२ मायातु। यथा स्वर्गे तथा मेदिन्यामपि तवेच्छा सिध्यतु। अस्माकं
भक्ष्यमद्यास्मभ्यं देहि। वयञ्च यथास्मदपराधिनां क्षमामहे, तथा
१३ त्वमस्माकमपराधान् क्षमस्व। अस्मांश्च परीक्षां मा नय, अपि तु
दुरात्मत उद्धर। यतो राज्यं पराक्रमः प्रतापश्च युगे युगे तवैव।
१४ आमेन्। वास्तवं हि यूयं चेन्मनुष्याणामपराधान् क्षमध्वे, तर्हि युष्माकं
१५ स्वर्गस्थः पिता युष्माकमपि क्षमिष्यते। यदि तु मनुष्याणामपराधान्
न क्षमध्वे, तर्हि युष्माकं पिता युष्माकमप्यपराधान् न क्षमिष्यते।

१६ यदा चोपवासं कुरुथ, तदा कपटिन इव विषण्णवदना मा
भवत, यतस्ते मनुष्याणाम् उपवासिनः प्रत्यक्षीभवितुकामाः स्ववदनानि
मलिनीकुर्व्वते। युष्मानहं सत्यं वदामि ते स्वपारितोषिकं लब्धवन्तः।
१७ १८ त्वन्तूपवासकाले स्वशिरसि तैलं मिड्ढ्व स्ववदनं प्रक्षालय च। तथा कृते
न मनुष्याणाम् अपि तु निभृतमास्थितस्य तव पितुः त्वमुपोषितः
प्रत्यक्षीभविष्यसि। निभृतदर्शी तव पिता च तत्फलं तुभ्यं प्रकाश्य
दास्यति।

स्वर्गे धनसञ्चयकरणकथनम्।

१९ यूयमात्मकृतेऽत्र मेदिन्यां धनानि मा सञ्चिनुत, यस्मादत्र
२० कीटकलङ्कौ क्षयं नयतः, चौराश्च कुड्यं छित्त्वा मुष्णन्ति। स्वर्गे
स्वात्मकृते धनानि सञ्चिनुत, तत्र कीटः कलङ्को वा क्षयं न नयति,
२१ चौराश्च नापि कुड्यं छिन्दन्ति न वा मुष्णन्ति। यतो युष्माकं यत्र
२२ वित्तं तत्र युष्माकं चित्तमपि स्थास्यति। नयनं देहस्य दीपकं, अतस्तव
नयनं चेत् सरलं तर्हि तव कृत्स्नो देहो दीप्तिमयो भविष्यति।
२३ तव नयनं तु चेद् दुष्टं तर्हि तव कृत्स्नो देहस्तिमिरमयो भविष्यति।
अतस्तवान्तर्ज्योतिश्चेत् तिमिरं भवेत्, तर्हि तत् तिमिरं कियन्महत्।

द्वयोः स्वामिनो दास्यं कर्त्तुं केनापि न शक्यं, यतः स एकतरं २४
द्विषन्नन्यतरस्मिन् प्रेष्यते, न चेदेकतरस्मिन्नासज्जमानोऽन्यतरमवमंस्यते।
ईश्वरस्य धनस्य चोभयो दास्यं कर्त्तुं युष्माभि र्न शक्यते।

ईश्वरे विश्वासस्थापनकथा।

अतोऽहं युष्मान् ब्रवीमि, किं भक्षिष्यामः किं वा पास्याम इति २५
विचिन्त्य स्वप्राणानधि, किं वसिष्यामह इति विचिन्त्य स्वदेहमधि
वा माकुलीभवत। किं हि प्राणा न भक्ष्याच्छ्रेष्ठाः? वसनाद् वा
नापि देहः श्रेष्ठः? विहायसो विहङ्गमान् निरीक्षध्वं, ते नोप्यते २६
नापि छत्यते न चापि कुशूलेषु सञ्चीयते, युष्माकं स्वर्गस्थः पिता
च तान् पुष्णाति। किं यूयं तेभ्यो नाधिकं विशिष्यध्वे? चिन्तयित्वा २७
वा युष्माकं केन स्ववयो हस्तमेकं वर्द्धयितुं शक्यते? कस्माद् वा २८
वस्त्राण्यधि चिन्ताकुलीभवथ? शूशनाख्यानि क्षेत्रपुष्पाणि पर्य्या-
लोचयत, कथं तानि वर्द्धन्ते? न तानि श्रमं कुर्व्वते नापि सूत्राणि २९
तन्वन्ति। युष्मान् त्वहं ब्रवीमि, शलोमापि स्वहृतस्वप्रतापे तेषामेकमिव ३०
न पर्य्यधीयत। यदि त्वद्य वर्त्तमानं श्वश्चुल्ल्यां निक्षेप्स्यं क्षेत्रस्थं
तृणमीदृशमीश्वरः परिधापयति, तर्हि भो स्तोकविश्वासिनः,
स किं युष्मान् नाधिकप्रचुरं परिधापयिष्यति? अतः किं भक्षिष्यामः ३१
किं वा पास्यामः किं वापि वसिष्यामह इति विचिन्त्य माकुलीभवत,
यतः परजातीयजना हि सर्व्वाण्येतान्यनुसन्दधते। वास्तवं यदिमानि ३२
सर्व्वाणि युष्माकमावश्यकानि तद् युष्माकं स्वर्गस्थः पिता जानीते।
प्रथमतस्त्वीश्वरस्य राज्यं धार्म्मिकताञ्चान्विच्छत, तथा कृते सर्व्वाणी- ३३
मान्यपि युष्मभ्यं प्रदायिष्यन्ते। अतः श्वःकृते चिन्ताकुला मा भवत, ३४
यतः श्वस्तनं दिनमात्मनो विषयं चिन्तयिष्यति। दिनस्य निजकष्टं
तस्य कृते पर्य्याप्तं॥ ६॥

परस्य विचारकरणकथनम्।

७ १ मा विचारं कुरुत, तेनैव युष्माकं विचारो न कारिष्यते।
२ यतो यूयं यद्विचारेण परस्य दोषान् निर्णयथ, तद्विचारेणैव युष्माकं
दोषा निर्णायिष्यन्ते। येन परिमाणेन च मिमीध्वे, तेनैव
३ युष्मादर्थमपि मायिष्यते। कुतश्च त्वं स्वभ्रातुश्चक्षुःस्थं शूककणं निरीक्षसे,
तव चक्षुःस्थन्तु गेहकाष्ठं नावधारयसि? तव चक्षुषः शूककणस्य
मयोद्धरणमनुमन्यस्वेति वा स्वभ्रातरं कथं गदिष्यसि? तव चक्षुषि तु
५ गेहकाष्ठमवतिष्ठते। कपटिन् प्रथमं स्वचक्षुषस्तद् गेहकाष्ठमुद्धर, ततः
६ स्वभ्रातुश्चक्षुषः शूककणस्योद्धरणार्थं स्पष्टं द्रक्ष्यसि। युष्माकं पवित्रं
द्रव्यं सारमेयेभ्यो मा दत्त। मापि स्वमुक्ताः शूकरेभ्यो निक्षिपत,
यतस्तेन ते चरणैस्ता मर्द्दयिष्यन्ति परावृत्य च युष्मान् विदारयिष्यन्ति।

प्रार्थनाकथनम्।

७ याचध्वं, तेन युष्मभ्यं दायिष्यते। अन्विच्छत, तेनासादयिष्यथ।
८ द्वारमाहत तेन युष्मभ्यम् उद्घाटयिष्यते। यतो यः कश्चिद् याचते
स लभते, यश्चान्विच्छति स आसादयति, यश्च द्वारमाहन्ति
९ तदर्थमुद्घाट्यते। युष्मत्सु तादृशः को वा मानवो विद्यते यः स्वपुत्रेण
१० पूपं याचितस्तस्मै पस्तरं दास्यति, मीनं वा याचितः सर्पं दास्यति?
११ तद् दुर्जना अपि यूयं चेत् स्वसन्तानेभ्य उत्तमं द्रव्यं दातुं
जानीथ, तर्हि किमधिकं युष्माकं स्वर्गस्थः पिता स्वयाचकेभ्यो हितानि
१२ वितरिष्यति। तत् सर्व्वस्मिन् विषये युष्मान् प्रति मनुष्य यादृगा
माचरितुं यूयमभिवाञ्छथ, यूयमपि तान् प्रति तादृगेवाचरत।
यद् एतदेव व्यवस्थाया भाववादिग्रन्थस्य च तत्त्वं।

स्वर्गपथ गमनकथनम्

प्रविशत सङ्कीर्णेनैव गोपुरेण, यतो येन विनाशं नीयते विशालं

तद् गोपुरं स मार्गः पृथुतरश्च, तेनैव च बहवः प्रविशन्ति । जीवनं १४
हि येन नीयते सङ्कीर्णं तद् गोपुरं मार्गश्च स सङ्कुचितः, स च यैः
प्राप्यते तेऽल्पाः ।

यूयं कूटभाववादिभ्यः सावधाना भवत, ते मेषवेशा युष्मत्समीप- १५
मागच्छन्ति, अन्तरे तु ते ग्रसिष्णवो वृकाः । तत्फलैरेव यूयं १६
तान् निश्चेष्यथ । कण्टकेभ्यः किं द्राक्षा गोक्षुरकेभ्यो वोडुम्बरफलानि
सञ्चीयन्ते ? एवमेव सर्व्वः सुवृक्षः सुफलान्युत्पादयति, कुवृक्षस्तु १७
कुफलान्येवोत्पादयति । सुवृक्षः कुफलान्युत्पादयितुं न शक्नोति, १८
कुवृक्षश्च सुफलान्युत्पादयितुं न शक्नोति । येन सुफलं नोत्पाद्यते, १९
तादृशः सर्व्वो वृक्ष उच्छिद्यते वह्नौ प्रक्षिप्यते च । अतो यूयं तेषां २०
फलैरेव तान् निश्चेष्यथ ।

ये मां प्रभो प्रभो इत्यभिभाषन्ते न ते सर्व्वे स्वर्गराज्यं प्रवेक्ष्यन्ति, २१
यस्तु मम स्वर्गस्थपितुरभीष्टमाचरति स एव प्रवेक्ष्यति । अमुष्मिन् २२
दिने बहवो मां वक्ष्यन्ति, प्रभो प्रभो, न किं भवतो नाम्नास्माभि
र्भावोक्ति र्घोषिता ? नापि किं भवतो नाम्नास्माभि र्भूता निःसारिताः ?
न चापि किं भवतो नाम्नास्माभि र्बह्वः प्रभावसिद्धाः क्रिया साधिताः ?
तान् तु तदाहं स्पष्टं वदिष्यामि, युष्मानहं न कदाचित् ज्ञातवान्, २३
अधर्म्माचारिणो यूयं मत्तोऽपसरत ।

अतो यः कश्चिन्ममैतानि वाक्यानि निशम्याचरति तमहं तेन २४
बुद्धिमता नरेणोपमास्ये येन पाषाणोपरि स्वगेहं निरमायि, परं २५
वृष्ट्या पतितायां प्रवाहैरागत्य वायुभिः प्रोह्य तद् गेहमाक्रान्तं, न तु
पपात, यतस्तस्य भित्तिमूलं पाषाणे स्थापितमासीत् । यः कश्चित् २६
तु ममैतानि वाक्यानि निशम्य नाचरति स तेन मूढेन नरेण
सदृशः प्रतिपत्स्यते, येन सिकतोपरि स्वगेहं निरमायि । यत् परं २७

वृष्ट्या पतिता प्रवाहैरागत्य वायुभिः प्रोक्ष्य तद् गेहमाहतं, तदा
तत् पपात, अभूच्च तत्पतनं घोरतरम् ।
२८ अनन्तरं यीशुनैतेषु वाक्येषु समापितेषु जननिवहास्तस्य
२९ शिक्षामाश्चर्य्यां मेनिरे, यतः स क्षमतापन्न इव, न तु शास्त्राध्यापका
इव तान् अशिक्षयत् ॥ ७ ॥

यीशो र्विविधालौकिककर्म्माणि ।

८ १ पर्व्वताद् यीशोरवरोहणात् परं महान्तो जननिवहास्तमनुजग्मुः ।

यीशुना जनैककुष्ठिनो रोगमोचनम् ।

२ पश्य चापरं नर एकः कुष्ठी आगत्य तस्य समक्षं प्रणिपत्य
जगाद, प्रभो भवान् यदीच्छति तर्हि मां शुचीकर्त्तुं शक्नोति ।
३ ततो यीशुः हस्तं प्रसार्य्य तं स्पृष्ट्वा जगाद, इच्छामि, शुचि र्भव ।
४ अनेनैव तस्य कुष्ठं शुचित्वं गतं । यीशुस्तं जगाद, सावधानः,
कमपि मा ज्ञापय, अपितु याहि याजकमात्मानं दर्शय, मोशिना-
दिष्टमुपहारञ्च तेभ्यः साक्ष्यदानार्थमुत्सृज ।

यीशो र्जनैकशतपतेर्दासाय निरामयत्वदानम् ।

५ अनन्तरं यीशौ कफरनाहूमं प्रविष्टे कश्चिच्छतपतिस्तस्यान्तिक-
६ मागत्य तं प्रसादयन् जगाद, प्रभो, मम किङ्करो गेहेऽवशाङ्गस्तीव्रं
७ पीड्यमानः शेते । ततो यीशुस्तं ब्रवीति, अहमागत्य तं निरामयं
८ करिष्यामि । स शतपतिस्तु प्रत्यब्रवीत्, प्रभो, भवान् यन्मम वेश्म
प्रविशेत्, नाहं तावता योग्यः । केवलं वाक्यं व्याहरतु, तेनैव मम
९ किङ्करो निरामयो भविष्यति । यतोऽहमपि क्षमताधीनो मनुष्यः,
ममाधीनाश्च सैनिकाः सन्ति । तेषामेकं गच्छेति मया कथिते
गच्छति, अपरश्चायाहीति कथिते समायाति, मम दासश्चेदं

कुर्व्विति कथिते तत् करोति । इदं श्रुत्वा यीशुराश्चर्य्यं १०
मन्यमानोऽनुगामिनोऽब्रवीत्, युष्मानहं सत्यं वदामि, इस्रायेलेऽपि
मयेदृशो विश्वासो न लक्षितः । युष्मांस्तु वदामि, पूर्व्वपश्चिमदिग्भ्यो ११
बहवो मनुष्याः स्वर्गराज्येऽब्राहामेणेस्हाकेन याकोबेन च सह भोक्ष्य
समासिष्यन्ते, राज्यस्य पुत्रास्तु बहिःस्थान्धकारे निक्षेप्स्यन्ते, तत्र च १२
रोदनं दन्तै र्दन्तघर्षणञ्च सम्भविष्यतः । अनन्तरं यीशुस्तं शतपतिं १३
जगाद, याहि यथा च त्वया विश्वसितं तथैव तव सिध्यतु । तस्मिन्नेव
च दण्डे तस्य किङ्करो निरामयीभूतः ।

यीशुना पितरस्य श्वश्र्वाः ज्वरमोचनम् ।

ततः परं यीशुना पितरस्य गेहं प्रविश्य तस्य श्वश्रूः शयाना १४
ज्वरातुरा च दृष्टा, ततस्तेन तस्या हस्ते स्पृष्टे ज्वरस्तां तत्याज, सा १५
चोत्थाय तं पर्य्यचरत् ।

सन्ध्यायान्तूपस्थितायां भूताविष्टा बहवो मनुष्यास्तस्य समीप- १६
मानीताः । स च वाक्येन भूतान् निःसारयामास, अस्वस्थांश्च सर्व्वान्
निरामयान् चकार । इत्थं भाववादिना यिशायाहेन कथितमिदं १७
वचनं सिद्धिं गतं, यथा,

सत्यमस्माकमेवार्त्तीः स गृहीत्वावहत् स्वयं ।
अस्मदीयव्यथाभारं स चाधारीत् स्वभारवत् ॥

ततः परं यीशुः स्वपरितो जननिवहान् बहून् दृष्ट्वा स्वशिष्यान् १८
ह्रदं तरितुमाज्ञापयामास । कश्चिच्छास्त्राध्यापकस्तदा तमागत्य १९
जगाद, गुरो, यत्र कुत्रचिद् भवता गन्तव्यं तत्राहमपि भवन्तमनु-
गमिष्यामि । यीशुस्तं जगाद, सन्ति गर्त्तानि शृगालानां नीडाश्च २०
विहायसो विहङ्गमानां न स्थानं मनुष्यपुत्रस्य तु शिरः शाययितुं ।
शिष्याणामन्यतमस्तं जगाद, प्रभो, प्रथमं स्वपितुः सत्कारार्थं गमिष्यन्तं २१

२१ मामनुमन्यस्व। यीशुस्तु तं जगाद, मामनुगच्छ, मृतानेव मृतानां
स्वकीयानां सत्काराायानुजानीहि।

यीशो र्झञ्झानिवारणम्।

२३ ततस्तस्मिन् नौकामारूढे तस्य शिष्यास्तमनुजग्मुः। पश्य च सागरे
२४ सञ्जातस्तुमुलसङ्क्षोभो नौस्तरङ्गैश्चाच्छाद्यत। स तु निद्रामसेवत।
२५ शिष्याः पुनस्तत्समीपमागत्य तं जागरयित्वा चावदन्, प्रभो, रक्षास्मान्,
२६ वयं नश्यामः। स तु तान् जगाद, भो स्तोकविश्वासिनः कुतो यूयं
भीरवः? उत्थाय च स तदा वातान् समुद्रञ्च तर्जत्, भूतञ्च
२७ विशालं निःक्षोभं। नराश्चाश्चर्य्यं मत्वा जगदुः; कीदृगयं, यतो
वाताः समुद्रश्चास्याज्ञां गृह्णन्ति?

यीशुना लोकद्वयस्य भूतमोचनम्।

२८ अनन्तरं तस्मिन् सागरस्यापरपारस्थं गीदारीयाणां देशमागते
नरौ द्वौ भूताविष्टौ शवागारेभ्यो निर्गत्य तत्समक्षमुपस्थितौ,
२९ तयोरतिप्राचण्डान्मार्गेण तेन गन्तुं केनापि नाशक्यत। पश्य च
तावुत्क्रोशन्तौ जगदतुः, भो ईश्वरस्य सुत यीशो, भवता सहावयोः
कः सम्बन्धः? भवान् किं समयात् प्रागावयो र्यातनां चिकीर्षु-
३० रत्रागतवान्? तेषान्तु कियद्दूरे बहूनां शूकराणां व्रजोऽचरत्।
३१ अतस्तौ भूतौ तं प्रसादयन्तौ जगदतुः, यद्यावां निःसारयेत्
३२ तर्ह्यावाममुष्मिन् शूकरव्रज आवेष्टुमनुजानातु। स तौ जगाद, यातं।
ततस्तौ निःसृत्य प्रविविशतुस्तं शूकरव्रजं, पश्य च तदा स कृत्स्नः
३३ शूकरव्रजो वेगेन धावन् पतित्वा शैलाग्रतस्तोये पञ्चत्वं जगाम।
ये च तमचारयंस्ते पलाय्य नगरं गत्वा निखिलवृत्तान्तं
३४ भूताविष्टयोस्तयोः कथाञ्च निवेदयामासुः। पश्य च नगरस्य सर्व्वे यीशुं

साद्यादुपस्थातुं निर्गत्य तं दृष्ट्वा तेषां स्वसीमभ्यस्तस्य स्थानान्तरगमनं
प्रार्थयाञ्चक्रिरे ॥ ८ ॥

यीशुना अनेकपक्षाघातिने आरोग्यदानं तस्य पापमर्षणञ्च।

अनन्तरं स नौकामारुह्य ह्रदं तरित्वा च स्वनगरमाजगाम। ९ १
पश्य च तदा खट्वायां शयानो नर एकोऽवशाङ्गस्तत्समीपमानीयत। २
यीशुश्च तेषां विश्वासं दृष्ट्वा तमवशाङ्गं जगाद, आश्वसिहि, वत्स,
तव पापानि मोचितानि। पश्य च तदा शास्त्राध्यापकानां केचित् ३
स्वान्तर्जगदुः, असावीश्वरं निन्दति। यीशुस्तु तेषां मनोगतान्यवलोक्य ४
जगाद, कुतो युष्माभिः स्वहृदयेषु कुचिन्तास्चिन्त्यन्ते? ब्रूत, तव ५
पापानि मोचितानीति वा त्वमुत्थाय परिव्रजेत्येतयोः कथनयोः
कतरम् अनायासं? पृथिव्यान्तु पापानि मोचयितुं मनुष्यपुत्रस्य ६
सामर्थ्यमस्तीति यथा युष्माभि र्ज्ञायते, तदर्थं—तमवशाङ्गमभिभाष्य
स उवाच—त्वमुत्थाय स्वखट्वामादाय स्वगेहं याहि। स तूत्थाय ७
स्वगेहं जगाम। तद् विलोक्य जननिवहा भयं गत्वा तुष्टुवुरीश्वरं ८
मनुष्येभ्यस्तादृशसामर्थ्यं दत्तवन्तम्।

मथ्याह्वानं। यीशोस्तद्विषयकशिक्षा।

अनन्तरं यीशुस्तस्मात् स्थानात् प्रगत्य शुल्कादायस्थाने मथि- ९
रित्यभिधं नरं दृष्ट्वा जगाद, मामनुगच्छ, स चोत्थाय तमन्वगच्छत्,
ततः पश्य गेहमध्ये भोजनार्थमासीने तस्मिन् शुल्कादायिनो बहवः १०
पापिनश्चागत्य यीशुना तदीय शिष्यैश्च सार्द्धम् उपविविशुः। तद्दृष्ट्वा ११
फरीशिनस्तस्य शिष्यान् जगदुः, किमर्थं भुङ्क्ते गुरु युष्माकं शुल्का-
दायिभिः पापिभिश्च सार्द्धम्? तच्छ्रुत्वा यीशुस्तु तान् जगाद, १२
चिकित्सको न बलवताम् अपि त्वस्वस्थानामावश्यकः। यूयन्तु गत्वा १३
शिक्षध्वं वचनस्यैतस्य तात्पर्य्यम्,

दयामेवाभिवाञ्छामि न तु यज्ञक्रियामहं।

यतो न धार्म्मिकान् अपि तु मनःपरावर्त्तनाय पापिन आह्वातुमहमागतः।

१४ योहनस्य शिष्यास्तदा तस्य समीपमागत्य जगदुः, कथं वा
फरीशिनो वयञ्च भूयोभूय उपवसामः, भवतः शिष्या वा कथं
१५ नोपवसन्ति? यीशुस्तान् जगाद, वरो यावद् वरसखैः सार्द्धं
वर्त्तते, तावत् किं तैः शोचितुं शक्यते? दिनानि तावदुपस्थास्यन्ति
१६ यदा वरस्तेभ्योऽपहारिष्यते तदैव च त उपवत्स्यन्ति। जीर्णवसनेन
न कोऽप्यनाहतवस्त्रस्य खण्डं सिव्यति, यतस्तादृशपूरणेन जीर्णवसनात्
१७ कियदपह्रियते, महत्तरं तेन च कुछिद्रं सञ्जायते। नापि नवो
द्राक्षारसो जीर्णकुतूषु निधीयते, यतस्तथाकृते कुत्वो विदीर्य्यन्ते,
तेन द्राक्षारसश्च विस्रवति, कुत्वोऽपि नश्यन्ति। प्रत्युत नवो द्राक्षारसो
नवकुतूष्वेव निधीयते, तेन चोभयोरक्षा सम्भवति।

यीशुना प्रदररोगिण्याः आरोग्यकरणं मृतकन्यायै जीवनदानञ्च।

१८ स यावत् तानिमानि वाक्यान्यवदत्, पश्य तावदागत्य
कश्चिदध्यक्षस्तत्समक्षं प्रणिपतन् जगाद, मम दुहितेदानीमेव मृतवती,
१९ तथापि भवान् आगत्य तस्यां हस्तमर्पयतु, तेन सा जीविष्यति। ततो
२० यीशुस्तस्य शिष्याश्चोत्थाय तमनुजग्मुः। पश्य चानन्तरं द्वादशवर्षान्
यावद् रक्तस्रावातुरा काचिन्नारी पश्चाद्दिश्युपागत्य तदीयवस्त्रप्रलम्बकं
२१ पस्पर्श, यतः सा स्वान्तरवदत्, केवलं चेत् तस्य वस्त्रं स्पृशेयं, तर्हि
२२ तरिष्यामि। यीशुस्तु परावृत्य दृष्ट्वा च तां जगाद, आश्वसिहि, वत्से,
तव विश्वासस्त्वां तारितवान्। ततार च सा नारी तस्मिन्नेव दण्डे।
२३ अनन्तरं यीशुस्तस्याध्यक्षस्य गेहमागत्य वंशीवादकान् शब्दायमानं
२४ सशान्तं जननिवहञ्च दृष्ट्वा जगाद, अपगच्छत, यतो बालिकामी

न मृता, सा निद्राणा। ते तु तमपजहसुः। वहिष्कृते तु जननिवहे २५
तेनान्तः प्रविश्य तस्या हस्तो धृतः, बालिका चोत्तस्थे। अनेन तस्य २६
ख्यातिः कृत्स्नं तं प्रदेशं व्यानशे।

यीशुना अन्धद्वयाय नेत्रदानं मूकाय आरोग्यदानञ्च।

तस्मात् प्रगच्छति यीशौ द्वावन्धौ तमनुव्रजन्तौ प्रोच्चरवेणावदतां, २७
भो दायूदस्य पुत्र भवानावामनुकम्पतां। गेहं प्रविष्टे च तस्मिंस्तावन्धौ २८
तत्समीपमाजग्मतुः। यीशुस्तदा तौ जगाद, एतत् कर्त्तुं मया शक्यत
इति विश्वासो युवयोः किमस्ति? तावूचतुः, अस्ति, प्रभो। स तदा २९
तयो र्नेत्राणि स्पृष्ट्वा कथयामास, विश्वासानुरूपं वां सिध्यतु।
अभवंश्चोद्घाटितानि तावत् तयो र्नेत्राणि। यीशुस्ततस्तौ प्रत्यन्यथावृत्तिं ३०
गत्वा जगाद, यतेथां, कोऽप्येतन्मा जानातु। तौ तु निर्गत्य कृत्स्ने ३१
प्रदेशे तस्मिन् तत्ख्यातिं कीर्त्तयामासतुः।

पश्य च तयो र्निर्गमनकाले नर एको मूको भूताविष्टस्तत्समीप- ३२
मानीतः। ततो निःसारिते च भूते मूकः सोऽभाषत। अनेन जननिवहा ३३
आश्चर्य्यं मत्वा जगदुः, इस्रायेले नेदृशं कदापि प्रतिभातं। फरीशि- ३४
नस्तूचुः, निःसारयत्यसौ भूतान् भूतराजस्य साहाय्येन।

यीशुना द्वादशशिष्याणां प्रेरितपदे नियोगः।

ततः परं यीशु र्नगराणि सर्व्वाणि ग्रामांश्च सर्व्वान् परिभ्राम्यन् ३५
तेषां समाजगेहेषूपादिशत् राज्यस्य सुसंवादञ्चाघोषयत् प्रत्यकरोच्च
तथा प्रजावृन्देषु निखिलरोगं निखिलामयञ्च। निरीक्ष्य च स ३६
जननिवहान् तेषु सकरुणो बभूव, यतस्ते व्याकुला अवसन्नाश्चासन्
मेषा इव रक्षकविहीनाः। स तदा स्वशिष्यानवादीत्, प्रचुरं तावच्छस्यं ३७
कर्त्तनीयं कार्य्यकारिणस्त्वल्पे, तत् तदेव प्रार्थयध्वं शस्यक्षेत्रस्य ३८
स्वामिनं यत् स स्वक्षेत्रे कार्य्यकारिणः प्रहिणुयात्॥ ९॥

१० १ अनन्तरं स शिष्यान् द्वादश निजान् स्वसमीपमाहूय ददौ तेभ्यः
सामर्थ्यं निःसारणायात्मनाम् अशुचीनां प्रतीकाराय च सर्व्वरोगस्य
२ सर्व्वामयस्य च । तेषां द्वादशशिष्याणां नामानीमानि, पित्राभिधः
शिमोनः प्रथमस्तस्य भ्रातान्द्रियश्च सिबदियस्य पुत्रो याकोबस्तस्य
३ भ्राता योहनश्च, फिलिपो बर्थलमयश्च, थोमा शुल्कादायी च मथिः,
४ आल्फेयस्य पुत्रो याकोबो थद्देयाभिधश्च लिब्बेयः, कानानी शिमोन
ईष्कारियोतीयश्च यिहूदाः, असौ शत्रुषु तस्य समर्पयिता ।

५ इमान् द्वादश यीशुः प्रेषयामास, प्रेषणकाले तु स तान् जगाद,
परजातीयानां पन्थानं मा गच्छत, शमरीयाणां वा नगरं मा प्रविशत,
६ वरमिस्रायेलकुलस्य हारितान् मेषाननुगच्छत । गच्छन्तश्चेदं घोषयत,
७ स्वर्गराज्यं सन्निकटं जातमिति । अस्वस्थान् निरामयान् कुरुत, कुष्ठिनः
८ शुचीकुरुत, मृतानुत्थापयत, भूतान् निःसारयत । लब्धवन्तो यूयं मूल्यं
९ विनैव, प्रदत्त मूल्यं विना । मोपार्ज्जयत कोऽपि युष्माकं स्वकटिबन्धे
१० स्वर्णं वा रूप्यं वा ताम्रं वा गमनस्य कृते चेलसम्पुटकं वाङ्गरक्षके द्वे
११ वस्त्रे वा पादुके वा यष्टिं, यतः कार्य्यकारी स्ववृत्तिमर्हति । प्रविशथ
तु यदा किञ्चन नगरं कञ्चन ग्रामं वा, अनुसन्दद्ध्वं तदा नरस्तत्र
१२ को योग्यः, यावच्च न प्रस्थास्यध्वे तावत् तत्रैवावतिष्ठध्वं । गेहं
१३ प्रविशन्तश्च तस्मै मङ्गलं वदत । गेहं तद् यदि योग्यं स्यात् युष्मदुक्ता
शान्तिस्तर्हि तदाश्रयतु, यदि त्वयोग्यं पुन र्युष्मदुक्ता शान्तिस्तर्हि
१४ युष्मासु परावर्त्ततां । कश्चिच्च यदि युष्मान् न गृह्णाति युष्माकं
वाक्यानि च न शृणोति, तर्हि यूयं तस्माद् गेहान्नगराद् वा
१५ निर्गच्छन्तः स्वचरणेभ्यो धूलिमवधूनुत । युष्मानहं सत्यं ब्रवीमि,
भविष्यति विचारदिने सह्यतरा सदोमघोमरयो र्देशस्य दशा
नगरस्य तस्य दशातः ।

पश्यत, प्रहीयध्वे मया यूयं मेषा इव वृकाणां मध्ये, तद्भवत यूयं १६
भुजङ्गा इव सतर्काः कपोता इव चाभायिकाः। भवत तु सावधाना १७
मनुष्येभ्यः, यतस्ते युष्मान् विचारसभासु समर्पयिष्यन्ति स्वसमाजगृहेषु
च कशाभिः प्रहरिष्यन्ति। नायिष्यध्वेऽपि च यूयं ममत्वं देशाधिपानां १८
राज्ञाञ्च, साक्ष्यन्तु सम्भविष्यत्यनेन तेषां परजातीनाञ्च कृते। यदा १९
तु समर्पयिष्यध्वे, कथं किं वा तदा वक्तव्यं तच्चिन्तया माकुलीभवत।
यतो यद् वक्तव्यं तत् तस्मिन्नेव दण्डे युष्मभ्यं दायिष्यते। यतो न २०
यूयं वक्तारः, वक्ता तु युष्मदन्तर्भाषमाणो युष्मत्पितुरात्मा। भ्राता २१
पुन र्भ्रातरं जनकश्च सुतं मृत्यवे समर्पयिष्यति, सन्तानाश्च पित्रोः
प्रातिकूल्येनोत्थाय तौ घातयिष्यन्ति। मम नाम्नो हेतुना च यूयं २२
सर्व्वै र्द्वेक्ष्यध्वे। यस्त्वन्तं यावत् स्थिरः स्थास्यति स एव त्रायिष्यते।
यदा त्वेकस्मिन् नगरे जना युष्मानुपद्रवन्ति, तदान्यन्नगरं गन्तुं २३
पलायध्वं। यतो युष्मानहं सत्यं ब्रवीमि, इस्रायेलस्य नगरेषु युष्माकं
कार्य्यसमाप्तेः प्राक् मनुष्यपुत्र आगमिष्यति। न श्रेयान् शिष्यो गुरुतो २४
न च दासः स्वामितः। स्वगुरुणा समानत्वं शिष्यस्य कृते पर्य्याप्तं, २५
दासस्य कृते च स्वामिना समानत्वं। गेहपति र्यदि तै र्बेल्सबूब
इत्यभिहितस्तर्हि तद्गृहस्थाः किं वाधिकं नाभिधायिष्यन्ते? यूयन्तु २६
तेभ्यो मा बिभीत, यतो नास्ति किमपि तादृशं तिरोहितं
यन्नाविर्हितं भविष्यति, नापि तादृशं निगूढं यन्न ज्ञायिष्यते। यूयं २७
मया तिमिरे उद्यध्वे तद् दीप्तौ वदत, कर्णे च कथितं युष्मच्छ्रुणुथ
तद् गृहोपरिष्टाद् घोषयत। ये च देहं घ्नन्ति, नात्मानन्तु हन्तुं २८
शक्नुवन्ति, तेभ्यो मा बिभीत, तस्मादेव वरं बिभीत यस्त्वात्मानञ्च
देहञ्च नरके नाशयितुं शक्नोति। चटकौ द्वौ किं नैकेन ताम्रखण्डेन २९
विक्रीयेते? युष्माकं पितुरनुमतिं विना तु तेषाम् एकोऽपि भूमौ

३० न पतिष्यति। सन्ति च गणिताः सर्व्वेऽपि युष्मच्छिरसां कचाः।
३१ ३२ अतो मा बिभीत। बहुभ्यश्चटकेभ्यो यूयं विशिष्यध्वे। तद् यः
कश्चिन्मनुष्याणां समक्षं मामङ्गीकुरुते, तमहमपि मम स्वर्गस्थस्य
३३ पितुः समक्षमङ्गीकरिष्ये। यस्तु मनुष्याणां समक्षं मां प्रत्याख्याति,
तमहमपि मम स्वर्गस्थस्य पितुः समक्षं प्रत्याख्यास्यामि।
३४ मानुमिमीध्वं यदहं पृथिव्यामैक्यमवतारयितुमागत इति।
३५ नैक्यम् अपि त्वसिम् अवतारयितुमागतोऽस्मि। यतो मनुष्यं पितु
र्विरुद्धं दुहितरं मातु र्विरुद्धं पुत्रबधूं श्वश्र्वा विरुद्धं भेदयितुमहमागतः,
३६ स्वगृह्याश्च मनुष्यस्य शत्रवो भविष्यन्ति। यः पितरि मातरि वा
३७ मत्तोऽधिकं प्रेम कुरुते स मम न योग्यः। यः सुते सुतायां वा
३८ मत्तोऽधिकं प्रेम कुरुते स च मम न योग्यः। यश्च स्वक्रुशमादाय
३९ मां नानुव्रजति, स मम न योग्यः। यः स्वप्राणानामादयति स तान्
हारयिष्यते, यश्च मत्कृते स्वप्राणान् हारयते स तानामादयिष्यति।
४० यो युष्मान् गृह्लाति स मामेव गृह्लाति, माञ्च यो गृह्लाति
४१ स मत्प्रेषयितारमेव गृह्लाति। यो भाववादिप्रत्ययाद् भाववादिनं
गृह्लाति स भाववादिनः पारितोषिकं लप्स्यते। यश्च धार्म्मिकप्रत्ययाद्
४२ धार्म्मिकं गृह्लाति स धार्म्मिकस्य पारितोषिकं लप्स्यते। शिष्यप्रत्ययाद्
यश्चैतेषां क्षुद्राणामेकतमं चषकमेकं शीतलमजलं पाययति, युष्मानहं
सत्यं ब्रवीमि स कथञ्चन स्वपारितोषिकेण नोपवञ्चिष्यते॥ १०॥

११ १ समापिते स्वीयद्वादशशिष्येभ्य आदेशप्रदाने यीशु र्जनानां
नगरेषु शिक्षादानार्थं घोषणार्थञ्च तस्मात् स्थानात् प्रतस्थे।

योहनस्य प्रश्नः ख्रीष्टस्योत्तरञ्च।

कारायां योहनस्तु ख्रीष्टस्य क्रियाणां संवादं श्रुत्वा स्वशिष्याणां
द्वौ प्रहित्य तं पप्रच्छ, येनागन्तव्यः स किं भवान्, वान्यः कश्चिदस्माभिः

प्रतीक्षितव्यः? ततो यीशुस्तौ प्रतिजगाद, युवाभ्यां यद्यच्छ्रूयते दृश्यते ४
च गत्वा तद् योहनाय निवेद्यतां। अन्धा दृष्टिं लभन्ते, खञ्जाः परि- ५
व्रजन्ति, कुष्ठिनः शुचीभूयन्ते, वधिराः शृण्वन्ति, मृता उत्थाप्यन्ते, ६
दरिद्राणां सुसंवादं ज्ञाप्यन्ते, यस्य मयि न स्खलति स धन्यः।

तयोस्तपगच्छतो यीशु जननिवहेभ्यो योहनमधीद कथयितु- ७
मारेभे, किं निरीक्षितुं यूयं मरुं निर्गतवन्तः? किं वायुना
चाल्यमानं नलं? किमथवा द्रष्टुं यूयं निर्गतवन्तः? किं सूक्ष्मवेश- ८
परिहितं मनुष्यं? पश्यत सूक्ष्मवेशा मनुष्या राजभवनेषु विद्यन्ते।
किमथवा द्रष्टुं यूयं निर्गतवन्तः? किं भाववादिनं? तथैव, ९
युष्मांस्तहं ब्रवीमि, भाववादितोऽपि श्रेष्ठतरं नरं। यतोऽसौ स १०
यमधीद लिखितमास्ते,

पश्य त्वदग्रस्याग्रे स्वदूतं प्रहिणोम्यहं।
गन्तव्यं तव मार्गं स तवाग्रे संस्करिष्यति॥

युष्मानहं सत्यं ब्रवीमि, नारीप्रसूतेषु स्नापकाद् योहनान्महान् कोऽपि ११
नोत्पन्नः। स्वर्गराज्ये तु यः क्षोदीयान् स तस्मादपि महत्तरः।
परन्तु स्नापकस्य योहनस्य दिनान्यारभ्याद्य यावत् स्वर्गराज्यं बला- १२
दाक्रम्यते बलवन्तश्च तद्धरन्ते। यतो भाववादिनो व्यवस्था च १३
योहनपर्य्यन्ताः, यूयञ्च चेदेतद् ग्रहीतुं सम्मतास्तर्हि जानीत, १४
येनागन्तव्यं स एलियोऽसौ। शृणोतु यस्य श्रोतुं श्रोत्रे स्तः। १५

तदेतत्कालीया मया कैरुपमेयाः? ते हट्टेषूपविष्टैर्बालकैः १६
सदृशाः, ये स्ववयस्यान् आह्वयन्तो वदन्ति, युष्मत्कृते वयं वंशीर- १७
वादयाम यूयन्तु नानृत्यत, युष्मत्कृते वयं व्यलपाम यूयन्तु स्ववक्षांसि
नाताडयत। योहनो हि न भोजनं न पानं वा सेवमान आगतः, १८
जनैरुच्यते स भूताविष्टः। मनुष्यपुत्रो भोजनं पानञ्च सेवमान १९

आगतः, जनैरुच्यते पश्यासौ भोक्ता मद्यपश्च मनुष्यः, शुल्कादायिनां
पापिनाञ्च बन्धुः । प्रज्ञा तु स्वसन्तानानामाचारतो निर्दोषीकृता ।

अविश्वासिनः प्रति भर्त्सनम् ; भाराक्रान्तलोकान् प्रति निमन्त्रणवाक्यम् ।

२० तदानीं येषु नगरेषु कर्म्माणि भूयिष्ठानि प्रभावसिद्धानि तेन
कृतानि, तेषां निवासिभि र्मनांसि न परावर्त्तितानीति हेतोः स
२१ तानि भर्त्सयितुमारभ्य जगाद, हा कोरासिन, हा बैत्सैदे, युवां
सन्तापार्हे, यतो युवयो र्मध्ये कृतानि यानि प्रभावसिद्धानि कर्म्माणि,
तानि चेत् सोरे सीदोने चाकारिष्यन्त, प्रागेव तन्निवासिनस्तर्हि
२२ शाणं परिधाय भस्मन्युपविश्य च मनांसि परावर्त्तयिष्यन् । अहन्त
वां ब्रवीमि, विचारदिने युवयो र्दशातः सोरस्य सीदोनस्य च
२३ दशा सह्यतरा भविष्यति । त्वञ्च हा स्वर्गं यावदुन्नमिते कफरना-
हूमपुरि; पातालं यावदवरोहयिष्यसे, यतस्त्वयि कृतानि प्रभाव-
सिद्धानि यानि कर्म्माणि, तानि चेत् सदोमेऽकारिष्यन्त, तर्ह्यद्य
२४ यावत् तदस्थास्यत् । युष्मांस्त्वहं ब्रवीमि, विचारदिने सदोमदेशस्य
दशा तव दशातः सह्यतरा भविष्यति ।

२५ तस्मिन् काले यीशुरनुवभाषे, भो स्वर्गमर्त्त्ययोः स्वामिन् पितः,
त्वामहं साधु वदामि, यतस्त्वया विज्ञेभ्यस्तीक्ष्णबुद्धिभ्यश्चैमानि
२६ निगुह्य शिशूनामाविष्कृतानि । अतः किं पितः, यदित्थं तव दृष्टौ
२७ यत् प्रीतिकरं तदेव सिद्धं । मम पित्रा मयि सर्व्वमेव समर्पितं ;
पितरं विनापरः कोऽपि पुत्रं न विजानाति, पुत्रञ्च विनापरः
कोऽपि पितरं न विजानाति, यस्मै च तं प्रकाशयितुं पुत्राय रोचते
सोऽपि तं विजानाति ।

२८ भो परिश्रान्ता भाराक्रान्ताश्च सर्व्वे, मम समीपमायात,
२९ तेनाहं युष्मान् विश्रमयिष्यामि । मम युगं स्वेष्वर्पयत मत्तः शिक्षाञ्च

गृह्णीत, यतो मृदुशीलो नम्रहृदयश्चाहं। तथानुष्ठिते यूयं स्वमनसां
कृते विश्राममवाप्स्यथ। यतः सुसाध्यं मम युगं लघुश्च मम भारः॥१२॥

विश्रामवारमधि यीशोरुपदेशः।

यीशुस्तदा विश्रामवारे शस्यक्षेत्रेणाव्रजत्, तस्य शिष्याश्च बुभुक्षन् १२ १
शस्यमञ्जरी भङ्क्त्वा च भोजने प्रावर्त्तन्त। तद् दृष्ट्वा फरीशिनस्तमूचुः, २
पश्यतु, विश्रामवारे यदविधेयं भवतः शिष्यैस्तत् क्रियते। स तु ३
तान् जगाद, न किं पठितं भो दायूदस्तस्य सङ्गिनश्च यदाबुभुक्षन्
तदा स किमकार्षीत्? स ईश्वरस्य गेहं प्रविश्य तानेव दर्शनीय- ४
पूपान् अभुङ्क्त यान् भोक्तुं याजकैः केवलैः विधेयमासीत्, न तु
तेन न तत्सङ्गिभि र्वा। नापि किं व्यवस्थायां पठितं भो यद् ५
धर्मधाम्नि याजका विश्रामवारञ्च लङ्घयन्ति निर्दोषास्तु सन्ति?
युष्मांस्त्वहं ब्रवीमि, धर्मधाम्नोऽपि महत्तरेण केनाप्यत्रोपस्थितं। परन्तु ६

दयामेवाभिवाञ्छामि न तु यज्ञक्रियामहम्। ७

एतस्य तत्त्वं यदि यूयमज्ञास्यत, न निर्दोषान् दोषिणस्तदाकरिष्यत।
प्रभु र्हि मनुष्यपुत्रो विश्रामवारस्यापि। ८

अनन्तरं स स्थानात् तस्मात् प्रगत्य तेषां समाजगृहं प्रविवेश। ९
पश्य च तदासीदुपस्थितो नर एकः शुष्कहस्तः। ते च तस्मिन्न- १०
भियोगमारोपयितुकामास्तं पप्रच्छुः, किमामयस्य प्रतीकारो विधेयो
विश्रामवारे? स तु तान् जगाद, अस्ति वः कोऽप्येकस्य मेषस्य स्वामी? ११
तस्य मेषश्चेद् विश्रामवारे गर्त्ते पतति, स तर्हि किं तं धृत्वा
नोद्धरिष्यति? मेषात्तु मनुष्यः किं न सुदूरं विशिष्यते? अतो १२
विधेया सत्क्रिया विश्रामवारे। स तदा नरं तं जगाद, तव हस्तं १३
प्रसारय। हस्तश्च तेन प्रसारितः स्वस्थीभूतश्च सोऽन्यतर इव।

अनन्तरं फरीशिनो निर्गत्य मिथो मन्त्रयाञ्चक्रिरे कथं स १४

१५ विनाशयितव्यः। यीशुस्तु तज्ज्ञात्वा स्थानं तत् तत्याज, महान्तो
१६ जननिवहाश्च तमन्वव्रजन्, स च सर्व्वान् निरामयांश्चकार, तान्
निर्भर्त्सयंश्च जगाद, मां साधारणगोचरं माऽकार्ष्ट। इत्थं भाव-
१७ वादिना यिशायाहेन कथितमिदं वाक्यं सिद्धं, यथा,

१८ सेवको मम पश्यासौ वरयित्वा मया धृतः।
मामकप्रेमपात्रं स मन्मनस्तुष्टिकारकं॥
१९ मया तस्योपरिष्टाच्च स्वात्माधिष्ठापयिष्यते।
विचारस्य च संवादं जातिभ्यः स प्रदास्यति॥
नैव कोलाहलस्तेन नोच्चशब्दः करिष्यते।
राजमार्गेषु वा कोऽपि नैव श्रोष्यति तद्रवं॥
२० प्रचूर्णोऽपि नलस्तेन नैव खण्डीकरिष्यते।
निस्तेजा वर्त्तिका तेन न च निर्व्वापयिष्यते॥
२१ इत्थं शेषे जयप्राप्तं विचारं सोऽभिनेष्यति।
करिष्यन्ति च तस्यैव नाम्न्याशां परजातयः॥

यीशुना भूतग्रस्ताय आरोग्यदानं लोकेभ्य उपदेशदानञ्च।

२२ तदानीमन्धो मूकश्चैको भूताविष्टो मनुष्यस्तस्य समीपमानिन्ये,
स च तं स्वस्थं चकार, तेनान्धो मूकश्च स वाक्शक्तिं दृष्टिञ्च
२३ लेभे। ततः सर्व्वे जननिवहा आश्चर्य्यं मत्वाब्रुवन्, किमसौ दायू-
२४ दस्य पुत्रः? फरीशिनस्तु तच्छ्रुत्वा जगदुः, निःसारयत्यसौ भूतान्
केवलं भूतराजस्य बेल्सबूबस्य साहाय्येन नान्येन केनाप्युपायेन।
२५ यीशुस्तु तेषां चिन्ता विज्ञाय तान् जगाद, उत्सीदति सकलं
तद् राज्यं यद् भिन्नं स्वविरुद्धं, नाप्यवस्थास्यते सकलं तन्नगरं कुलं
२६ वा यद् भिन्नं स्वविरुद्धं। शैतानश्चेत् शैतानं निःसारयति स तर्हि
स्वविरुद्धं भिन्नः सञ्जातः, तेन तस्य राज्यं वा कथमवस्थास्यते?

तदहं यदि बेलसबूबबलेन भूतान् निःसारयामि, युष्माकं पुत्रास्तर्हि २७
केन तान् निःसारयन्ति? अतस्ते युष्माकं विचारयितारो भविष्यन्ति।
यदि चेश्वरस्यात्मनाहं भूतान् निःसारयामि, तर्हीश्वरस्य राज्यं २८
युष्मत्समीपमुपस्थितं। अथवा तस्य बलिष्ठस्य गेहं प्रविश्य तस्य २९
द्रव्याणि लोठयितुं मनुष्येण कथं शक्यते? बलिष्ठं तम् अग्रे न बद्धा
तत् कर्त्तुं तेन न शक्यं बद्धा तु तस्य गेहस्थं धनं तेन लोठयिष्यते।
यो न मम सहायः स मम विरोधी, यश्च मया सार्द्धं न सञ्चि- ३०
नोति स विकिरति।

तद् युष्मानहं ब्रवीमि, क्षमिष्यते तु मनुष्याणां सर्व्वपापं सर्व्व- ३१
निन्दा च आत्मनस्तु निन्दा मनुष्याणां न क्षमिष्यते। यस्तु मनुष्य- ३२
पुत्रस्य प्रतिकूलं वाक्यं व्याहरति तस्य क्षमिष्यते; यस्तु पवित्रस्या-
त्मनः प्रतिकूलं वाक्यं व्याहरति तस्य नास्मिन् युगे न भविष्यति
युगे वा क्षमिष्यते। युष्माभिः सुवृक्षे कल्पिते सुफलान्यपि तस्य ३३
कल्पयितव्यानि, कुवृक्षे च कल्पिते कुफलान्यपि तस्य कल्पयितव्यानि
यतो फलेनाभिज्ञायते वृक्षः। भो कालसर्पान्वयाः, यूयं दुष्टाः, ३४
युष्माभिः सद्वाक्यानि व्याहर्त्तुं कथं शक्यते? यतो हृदयस्याति-
पूर्णमेव वक्त्रं व्याहरति। सुजनो हृदयात् सञ्चितसुधनात् सुवा- ३५
क्यानि निःसारयति, कुजनश्च कुधनात् कुवाक्यानि निःसारयति।
युष्मांस्त्वहं ब्रवीमि, वचनस्यानर्थकस्यैकैकस्य मनुष्यैः कथितस्योत्तरं ३६
विचारदिने दातव्यं। यतस्त्वं स्ववाक्येभ्यो निर्द्दोषः स्ववाक्येभ्य एव ३७
दोषी वा कारिष्यसे।

तदानीं शास्त्राध्यापकानां फिरूशिनाञ्च केचित्तं प्रत्यवदन्, भो ३८
गुरो, भवतो दूरेऽभिज्ञानं द्रष्टुमिच्छामः। स तु तान् प्रतिजगाद, ३९
दुष्टो व्यभिचारी च वंशोऽभिज्ञानमनुसन्धत्ते, तस्मै तु भाववादिनो

४० योनाहस्याभिज्ञानादन्यदभिज्ञानं न दायिष्यते। यतो योनाहो
यथा दिनत्रयं रात्रित्रयञ्च यावत् तिमेरुदरेऽवस्थितवान्, तथा
मनुष्यपुत्रो दिनत्रयं रात्रित्रयञ्च यावत् पृथिव्या उदरेऽवस्थास्यते।
४१ नीनवीयनरा विचारे वंशेनैतेन सार्द्धमुत्थास्यन्ति तं दोषीकरिष्यन्ति
च, यतो योनाहस्य घोषणे तै र्मनांसि परावर्त्तितानि, पश्य त्वत्र
४२ योनाहान्महत्तरेण केनाप्युपस्थितं। दक्षिणदिशो राज्ञी विचारे
वंशेनैतेन सार्द्धमुत्थापयिष्यते तं दोषीकरिष्यति च, यतः सा
सुलेमनो विज्ञानोक्तीः श्रोतुं पृथिव्याः प्रान्तेभ्य आगतवती, पश्य
त्वत्र सुलेमनो महत्तरेण केनाप्युपस्थितं।
४३ आत्मा परन्त्वशुचिर्मनुष्यान्निर्यानात् परं निरुदकानि स्थानानि
४४ पर्य्यटन् विश्रामं मृगयते न तु तं प्राप्नोति। स तदा वदति
निर्गतोऽहं मामकाद् गेहाद् यस्मात् तत् पुनर्गच्छामि। तत्रोपस्थाय
४५ तु स तत् शून्यं मार्जितं शोभितञ्च पश्यति। गत्वा च स तदापरान्
स्वतो दुष्टतरान् सप्तात्मनः स्वसङ्गिनः करोति, सर्व्वे च ते तत्र प्रविश्य
निवसन्ति। अनेन मनुष्यस्य तस्यान्तिमदशादिदशातो निकृष्टा
भवति। दुष्टस्य वंशस्यैतस्यापि तादृशी दशा सम्भविष्यति।
४६ स यावत् जननिवहेभ्योऽकथयत्, पश्य तावत् तस्य माता
४७ भ्रातरश्च वहिस्तिष्ठन्तस्तेन संलपितुमैच्छन्। कश्चिच्च तं जगाद,
पश्यतु, भवतो माता भ्रातरश्च भवता संलपितुमिच्छन्तो वहि-
४८ स्तिष्ठन्ति। स तु तं संवाददातारं प्रतिजगाद, का मम माता?
४९ के वा मम भ्रातरः? स्वशिष्यानुद्दिश्य हस्तं प्रसार्य्य च स जगाद,
५० पश्यामी मम माता मम भ्रातरश्च। यतो यः कश्चिन्मम
स्वर्गस्थस्य पितुरिच्छां पालयति, स एव मम भ्राता भगिनी
माता च॥ १२॥

स्वर्गराज्यमधि सप्तदृष्टान्ताः।

तस्मिन्नेव दिने यीशुः गेहान्निर्गत्य समुद्रतीर उपविवेश। १३ १
समीपागतेषु तु महत्सु जननिवहेषु स नौकामारुह्य तत्रोपविवेश, २
कृत्स्नो जननिवहस्तु समतले तीरेऽतिष्ठत्। स तदा दृष्टान्तकथा- ३
भिर्बहुश आलपंस्तानब्रवीत्,

बीजवापकस्य दृष्टान्तः।

पश्य वप्ता बीजानि वप्तुं निर्जगाम; वपनकाले तु पथपार्श्वे ४
कतिपयबीजानि पतितानि विहङ्गमैश्चागत्य तानि खादितानि।
पतितानि चापराणि कतिपयानि स्वल्पेषु पाषाणमयेषु, तत्र ५
नाविद्यत मृत्तिका प्रचुरं तेषां कृते, मृत्तिकाया गभीरत्वस्या- ६
भावात् तान्याशु प्ररूढाणि, सूर्य्ये तूच्चसंस्थे दग्धानि मूलाभावाच्च
शोषितानि। पतितान्यपराणि तु कण्टकेषु सम्पीडितानि च ७
कण्टकै र्वृद्धा। अपराणि तूत्तममृत्तिकायां पतित्वा फलं फलित- ८
वन्ति, कानिचिच्छतगुणं, कानिचित् षष्टिगुणं, कानिचिद् वा
त्रिंशद्गुणं। शृणोतु यस्य श्रोतुं श्रोत्रे स्तः। ९

अनन्तरं शिष्याः समीपमागत्य तं पप्रच्छुः, कुतो भवान् १०
दृष्टान्तकथाभिरमूनालपति? स तान् प्रतिजगाद, युष्मभ्यं स्वर्ग- ११
राज्यस्य निगूढाणां विषयानां ज्ञानमदायि, अमुभ्यस्तु नादायि।
यतो यस्यास्ति, तस्मै दायिष्यते, तेन तस्योपचायिष्यते। यस्य १२
तु नास्ति तस्य यदस्ति तदपि तस्माद्धारिष्यते। अतोऽहं दृष्टान्त- १३
कथाभिरमूनालपामि, यतस्ते पश्यन्तोऽपि न पश्यन्ति शृण्वन्तोऽपि
च न शृण्वन्ति न वा बुध्यन्ते। तेषु च यिशायियस्येयं भाववाणी १४
सिध्यति, यथा,

श्रोत्रैः संश्रुत्य युष्माभि र्बोधो नैवोपलभ्यते।

सम्यग् दृष्ट्वा च युष्माभि र्नैव दर्शनमाप्स्यते ॥
१५ जातेरस्या यतो हेतो र्हृदयं स्थूलतां गतं ।
मन्दमेव स्वकर्णैश्च वाचं शृण्वन्ति तज्जनाः ॥
विनिमीलितवन्तश्च स्वनेत्राणि नरा अमी ।
सर्व्वे ते लोचनै र्द्रष्टुं कर्णैः श्रोतुमनिच्छवः ॥
यस्मात् ते हृदयै र्बुद्ध्वा परावर्त्य मनांसि च ।
मत्तो रोगप्रतीकारं प्रग्रहीतुमसम्मताः ॥

१६ युष्माकन्तु नेत्राणि धन्यानि यतस्तानि पश्यन्ति, कर्णाश्च धन्या
१७ यतस्ते शृण्वन्ति । वस्तुतोऽहं युष्मान् सत्यं ब्रवीमि, बहवो भाववादिनो
धार्म्मिकाश्च द्रष्टुं वाञ्छितवन्तो युष्माभि र्यद्यद्दृश्यते, श्रोतुञ्च युष्माभि
र्यद्यच्छ्रूयते, न तु तानि दृष्टवन्तो न वा श्रुतवन्तः ।

१८ तद् युष्माभिः श्रूयतां तस्य वप्तु र्दृष्टान्तकथा । यदा कश्चिद्
१९ राज्यस्य वाक्यं शृण्वन् न बुध्यते दुष्टात्मा तदागत्य तस्य हृदये
२० यदुप्तं तदपहरति । मनुष्यः स एव लब्धवीजः पथपार्श्वे । स्थलेषु
पाषाणमयेषु लब्धवीजः स एव यो वाक्यं शृणोति तूर्णञ्च सानन्दं
२१ गृह्णाति, स त्वन्तरे निर्म्मूलोऽतः क्षणस्थिरः, तत् तत्क्षणं स्खलति
२२ पुन र्जाते क्लेशे वाक्यहेतुत उपद्रवे वा । कण्टकेषु लब्धवीजः स एव
यो वाक्यं शृणोति परन्त्वेतस्य युगस्य भावनया धनस्य मायया च
२३ वाक्यं तत् सम्पीड्यते निष्फलञ्च जायते । उत्तममृत्तिकायां
लब्धवीजस्तु स एव यो वाक्यं शृणोति बुध्यते च । न च फलवान्
भवति, कोऽपि शतगुणं, कोऽपि षष्टिगुणं, कोऽपि वा त्रिंशद्गुणं
फलमुत्पादयति ।

श्यामाकदृष्टान्तः ।

२४ अनन्तरं स तेभ्योऽन्यां दृष्टान्तकथां कथयामास, स्वर्गराज्यं

तेनैव मनुष्येणोपमेयं यः स्वक्षेत्रे सुवीजमुवाप। निद्राणेषु तु जनेषु २५
तस्य शत्रुरागत्य गोधूमानां मध्ये श्यामाकवीजान्युप्त्वा प्रस्थितः।
ततस्तृणानि यदा प्रवृद्ध्य फलवन्त्यभवन् तदा श्यामाका अपि प्रत्यक्षा २६
अभवन्। दासास्ततो गृहस्वामिनः समीपमागत्य जगदुः, प्रभो, २७
अपि क्षेत्रे भवान् किं सुवीजानि नोप्तवान्? तदस्य श्यामाकाः, २८
कथमेतत्? स तान् जगाद, केनचिच्छत्रुणा मनुष्येणेदं कृतं।
दासास्तं पुन र्जगदुः, अभिमन्यते भवता यद् वयं गत्वा तान्
सङ्गृह्णीयामः? स लब्रवीत्, मैवं यतः श्यामाकान् सङ्गृह्णन्तस्तैः सह २९
गोधूमानुन्मूलयिष्यथेति बिभेमि। शस्यच्छेदनं यावदुभयोरेकत्र ३०
वृद्धिं सहध्वं। शस्यच्छेदनकालेऽहं तच्छेत्तृनिदमाज्ञापयिष्यामि,
श्यामाकान् प्रथमं सङ्गृह्य दाहनार्थं कूर्च्चं बध्नीत, गोधूमांस्तु मम
कुशूले निधत्तेति।

सर्षपवीजकिण्वयोर्दृष्टान्तौ।

स तेभ्योऽपरां दृष्टान्तकथां कथयामास, स्वर्गराज्यं सर्षपवीजेन ३१
तेन सदृशं यदादाय कश्चिन्मनुष्यः स्वक्षेत्र उवाप। क्षुद्रतमं तत् ३२
सर्व्ववीजेषु, वृद्धा पुनः शाकेभ्यो वृहद् भवति वृक्षो जायते च,
ततो विहायसो विहङ्गमा आगत्य तस्य शाखासु निवसन्तीति।

स तानपरां दृष्टान्तकथां जगाद, स्वर्गराज्यं किण्वेन तेन ३३
सदृशं यत् कयाचिद् योषितादाय गोधूमचूर्णानां द्रोणत्रयप-
रिमितानां मध्ये निक्षुतं येन च परिणामे सर्व्वातं तत्समाकण्ठं
किण्वभावितं।

सर्व्वमेतद् यीशु र्दृष्टान्तकथाभि र्जननिवहान् जगाद, दृष्टान्तं ३४
विना च स तेभ्यः किञ्चिन्नाकथयत्। इत्थं भाववादिन इयमुक्तिः ३५
सिद्धिं गता, यथा,

अहं दृष्टान्तवाक्यै र्हि व्यादास्यामि निजं मुखं।
आजगत्सृष्टितो गूढा व्याहरिष्याम्यहं कथाः।

श्यामाकदृष्टान्ततात्पर्य्यम्।

३६ तदानीं यीशु र्जननिवहान् विसृज्य गृहमाजगाम, तस्य शिष्यश्च
तत्समीपमागत्य जगदुः, भवानस्मान् क्षेत्रस्थानां श्यामाकानां दृष्टा-
३७ न्तकथां बोधयितुमर्हति। स ततस्तान् प्रत्यब्रवीत्, सुबीजानां
३८ वप्ता मनुष्यपुत्रः, क्षेत्रञ्च जगत्, सुबीजानि च राज्यस्य सन्तानाः।
श्यामाकास्तु दुष्टात्मनः सन्तानाः, तद्वप्ता च शत्रु र्दियावलः।
३९ शस्यच्छेदनकालश्च युगान्तः, छेत्तारश्च स्वर्गदूताः। अतो यथा
४० श्यामाकाः सङ्गृह्यन्ते वह्नौ च निर्दह्यन्ते, तथैव युगान्ते सम्भविष्यति,
४१ मनुष्यपुत्रः स्वदूतान् प्रहेष्यति, ते च तस्य राज्यस्य मध्यात्
४२ सर्व्वाणि विघ्नान्यधर्म्माचारिणश्च सङ्गृह्य वह्निमयकुण्डे निक्षेप्स्यन्ति,
४३ तत्र रोदनं दन्तैर्दन्तघर्षणञ्च सम्भविष्यतः। धार्म्मिकास्तदा स्वपितृ-
राज्ये सूर्य्यवद् विराजिष्यन्ते। श्रोतुं यस्य श्रोत्रे स्तः स शृणोतु।

गुप्तवित्तदृष्टान्तः उत्तममौक्तिकदृष्टान्तश्च।

४४ पुनः स्वर्गराज्यं क्षेत्रे निखातेन तेन धनेन सदृशं यदासाद्य
कश्चिन्मनुष्यो निखाय निजानन्दवशाद् गत्वा सर्व्वस्वं विक्रीय क्षेत्रं
तत् क्रीणीते।

४५ पुनः स्वर्गराज्यं मुक्ताः समीचीनाः अनुसन्दधानेन वणिजा
४६ तेन सदृशं, येन महामूल्यैका मुक्तासादिता, प्रस्थाय च सर्व्वस्वं
विक्रीय सा क्रीता।

आनायनिक्षेपदृष्टान्तः।

४७ पुनः स्वर्गराज्यं समुद्रे निक्षिप्तेन सर्व्वविधान् तोयचरान् सङ्गृह-
४८ तीनायेन सदृशं। पूर्णे च सति, तस्मिन्नानायिभिस्तं तीरमानीय
तत्रोपविश्य सुमीनाः पात्रेषु सङ्गृहीताः कुत्सितास्च वहि र्निक्षिप्ताः।

युगान्ते तादृशं सम्भविष्यति, स्वर्गीयदूता आगत्य धार्म्मिकाणां ४९
मध्यतो दुष्टान् पृथक्कृत्य वह्निमयचुल्ल्यां निक्षेप्स्यन्ति, तत्र रोदनं ५०
दन्तैर्दन्तघर्षणञ्च सम्भविष्यतः ।

यीशुस्तान् पप्रच्छ, बुद्धं किं युष्माभिरेतत् सर्व्वं? ते तं जगदुः, ५१
बुद्धं, प्रभो । तदा स तानब्रवीत्, अतो यः कश्चिच्छास्त्राध्यापकः ५२
स्वर्गराज्यस्य कृते शिक्षितः स स्वभाण्डागाराद् द्रव्याणि पुराणानि
नवीनानि चाहरता गृहस्वामिना सदृशः ।

यीशोः स्वनगरे असम्मानम् ।

समाप्यैतां दृष्टान्तकथा यीशुः स्थानात् तस्मात् प्रतस्थे । ततः ५३
स स्वदेशमागत्य तत्रत्यजनानां समाजगृहे तेभ्यः शिक्षां दातुं ५४
प्रावर्त्तत, तेन च त आश्चर्य्यं गत्वावदन्, कुतोऽस्यैतादृशं ज्ञानम्
ईदृशप्रभाववैभवञ्च लब्धवान्? नायं किं सूत्रधारस्य पुत्रः? नामुष्य ५५
मातु र्नाम मरियमिति? भ्रातृणाञ्च नामानि याकोब् योषिः
शिमोनो यिहूदाश्चेति? नामुष्य भगिन्योऽपि सर्व्वा विद्यन्तेऽत्रा- ५६
स्मन्मध्ये? तत् कुतोऽमुनालम्भि सर्व्वमेतत्? इत्थं ते तस्मिन् ५७
स्खलिताः । यीशुस्तु तान् जगाद, नान्यत्र कुत्रापि भाववादिनो-
ऽसम्माननं, केवलं तस्य स्वदेशे स्वकुले च । तेषामविश्वासवशाच्च ५८
तेन तत्र प्रभावसिद्धानि कर्म्माणि बहूनि न चक्रिरे ॥ १३ ॥

योहनस्नापकस्य वधः ।

तस्मिन् काले चतुर्थांशाधिपति र्हेरोदो यीशोः ख्यातिं श्रुत्वा १४ १
स्वदासान् जगाद, असौ स्नापको योहनः, मृतानां मध्यादुत्थितः २
सः । अतो हेतोः प्रभाववैभवं तस्मिन् स्वकार्य्यं कुरुते । तद्यथा हेरोदः ३
स्वभ्रातुः फिलिपस्य भार्य्याया हेरोदियाभिधायाः कृते योहनं
धृत्वा बद्धा च कारायां निहितवान् । यतो योहनस्तमवदत्, न ४

५ विधेयं भवता तस्याः पत्नित्वं। तं हन्तुकामस्तु स जननिवहाद्-
६ बिभेत्, यतः सर्व्वे तं भाववादिनममन्यन्त। हेरोदस्य जन्मदिनोत्सवे
७ तु हेरोदियायाः दुहिता सभामध्ये नृत्यन्ती हेरोदायारोचत। स
च सशपथं प्रत्यज्ञासीत्, किमपि यत् त्वं याचिष्यसे तदेवाहं तुभ्यं
८ दास्यामि। तदा सा स्वमात्रा प्रवर्त्तिता जगाद, स्नापकस्य योहनस्य
९ शिरः स्थाले निधायात्र मह्यं ददातु। अनेन राजाशोचीत्
१० शपथानां कृते सहभोजिनश्चापेक्ष्य तु तस्य दानमादिदेश प्रेष्यञ्च
११ प्रहित्य कारायां योहनस्य शिरश्छेदयामास। स्थाले निहितमानीतञ्च
तस्य शिरो तत्तस्य तद् बालायै, उपहृतञ्च तया स्वमातुः
१२ समीपम्। ततः परं शिष्यास्तस्यागत्य शवमादाय शवागारे निदधुः,
यीशोः समीपमागत्य च तस्मै संवादं निवेदयामासुः।

यीशुना पञ्चसहस्रलोकेभ्यो भोजनदानम् पद्भ्यां जलसञ्चरणञ्च।

१३ तदाकर्ण्य यीशुस्तस्मात् स्थानात् प्रस्थाय नौकया निर्जनं स्थानं
किञ्चन निभृतं जगाम, जननिवहास्तु तच्छ्रुत्वा नगरेभ्यो निर्गत्य
१४ स्थलमार्गेण तमनुवव्रजुः। यीशुस्तदा बहिरागत्य महान्तं जननिवहं
१५ दृष्ट्वानुचकम्पे चकार च निरामयान् तेषां मध्ये रोगिणः। सन्ध्याया-
मुपस्थितायां तस्य शिष्यास्तत्समीपमागत्य जगदुः, स्थानमेतन्निर्जनम्
आगतञ्च दिनावसानं, तद् विसृज्यन्तां भवता जननिवहा यथामी
१६ ग्रामान् गत्वा खाद्यानि स्वार्थं क्रीणीयुः। यीशुस्तु तान् जगाद,
१७ तेषामपगमनमनावश्यकं, यूयं वितरत तेभ्यो भक्ष्याणि। ते तम-
१८ ब्रुवन् पूपान् पञ्च मीनौ च द्वौ विहायास्माकमत्र किमपि नास्ति।
१९ स तान् जगाद, तानेवात्र मदन्तिकमानयत। ततः स जननिवहानां
शष्योपर्य्युपवेशनमादिदेश, तान् पूपान् पञ्च मीनौ च द्वौ चादाय
स्वर्गं प्रत्यूर्द्ध्वदृष्टिं कृत्वाशीर्व्वादनं चकार, ततः पूपान् भङ्क्त्वा शिष्येभ्यो

ददौ, ते च जननिवहेभ्यो.ददुः। भुक्त्वा च सर्व्वे ततृपुः। भग्नानामं- २०
शानां शेषेण च ते द्वादशडल्लकान् पूरयित्वाददुः। योषितो २१
बालकांश्च विहाय भोक्तारस्ते प्रायेण पुरुषाः पञ्चसहस्राण्यासन्।

अनन्तरं यीशुः शिष्यांस्तत्क्षणं नौकामारोह्य तावदात्मनः २२
प्राक् पारं गन्तुं साग्रहमादिदेश, स यावत् जननिवहं विसृजति।
जननिवहं विसृज्य स निभृतं प्रार्थनार्थं गिरिमारुरोह च। तत् २३
सन्ध्यायाः परं स तत्रासीदेकाकी, तदा तु मध्यसमुद्रं नौरूर्म्मि- २४
भिराहन्यत, यतो वायुरासीत् प्रतिकूलः। यामे तु यामिन्याश्चतुर्थे २५
यीशुस्तेषां समीपं गन्तुकामः समुद्रोपर्य्यव्रजत्, शिष्यास्तु तं समु- २६
द्रोपरि व्रजन्तं दृष्ट्वोद्विजन्त त्रासाच्चुक्रुशुश्चोक्ता प्रतिच्छायामाविति।
यीशुस्तु तत्क्षणं तानालप्याब्रवीत्, आश्वसित, अहमेषः, मा भैष्ट। २७
पितरस्तदा तमन्वब्रवीत्, प्रभो भवानेव चेत्, तर्हि तोयोपरि २८
भवतोऽन्तिकं मम गमनमनुमन्यतां। स जगाद, एहि। ततः पितरो २९
नौकातोऽवरुह्य यीशोः समीपगमनार्थं तोयोपर्य्यव्रजत्। वायुन्तु
बलवन्तं दृष्ट्वाबिभेत्, निमङ्क्तुमारभ्य च चुक्रोश, प्रभो मां ३०
तारयतु। यीशुस्तत्क्षणं हस्तं प्रसार्य्य तं दधार जगाद च, भो ३१
स्तोकविश्वासिन्, किमर्थं समशेथाः? ततस्तयो र्नौकामारूढयो र्वायुः ३२
शशाम नौकास्थजनाश्चागत्य प्रणिपत्य च तं जगदुः, सत्यं भवान् ३३
ईश्वरस्य पुत्रः।

तरित्वेत्थं ते प्रदेशं गिनेषरताख्य उपतस्थिरे। स्थानस्य तस्य ३४
नराश्च तमभिज्ञाय कृत्स्नं जनपदं जनान् प्रहित्यास्वस्थान् मनुष्यान् ३५
सर्व्वांस्तस्य समीपमानाययामासुः प्रार्थयाञ्चक्रिरे च ते तेषां कृते ३६
तदीयवस्त्रप्रलम्बकस्य स्पर्शनानुमतिमेव, तेऽस्य तावन्तो यावन्तः
स्पर्शनं चक्रुः॥ १४॥

अशौचमधि उपदेशः।

१५ १ तदा यिरूशालेमत आगताः शास्त्राध्यापकाः फरीशिनश्च
२ यीशोरन्तिकमुपस्थाय जगदुः, भवतः शिष्याः कथं प्राचीनानां
परम्परागतां शिक्षां लङ्घयन्ति? यतस्ते भोजनकाले हस्तान् न
३ प्रक्षालयन्ति। स तु तान् प्रतिजगाद, यूयमपि कथं युष्माकं
४ परम्परागतशिक्षायामनुरागवशाद् ईश्वरस्याज्ञां लङ्घयथ? यत ईश्वर
इदमाज्ञापयामास, त्वं स्वपितरं स्वमातरञ्च सम्मन्यस्वेति, अपि च,
५ यः स्वपितरं मातरं वा शपेत स वध्यो भविष्यतीति। यूयन्तु
वदथ, यः स्वपित्रे स्वमात्रे वा कथयति मत्तो यद्दानेन तवोपकारः
६ समभविष्यत् तदीश्वरायोपहृतमित्यादि; स्वपितरं स्वमातरं वेत्थं स
न कथञ्चन सम्मंस्यते। स्वशिक्षायां परम्परागतायामनुरागाद् इत्थं
७ युष्माभिरीश्वरस्याज्ञा व्यर्थीकृता। भो कपटिनः, युष्मानधि यिशा-
याहः समीचीनामिमां भावोक्तिं कथितवान्, यथा,

८ मनुष्याः सकला एत आयान्त्यास्यै मदन्तिकं।
अधरैरेव सम्मानम् आचरन्ति च मां प्रति।
किन्त्वन्तःकरणं तेषां मत्तो दूरमवस्थितं॥
९ अलीकार्थन्त्विमे सर्व्वे मम कुर्व्वन्ति सेवनं।
धर्म्मशिक्षाच्छलेनैव शिक्षयन्तो नृणां विधीन्॥

१० अनन्तरं स जननिवहं स्वसमीपमाहूय जगाद, श्रुत्वा युष्माभि
११ र्बुध्यतां। यन्मुखं प्रविशति न तन्मनुष्यमशुचीकरोति। यत्तु मुखा-
१२ न्निःसरति तदेव मनुष्यमशुचीकरोति। तस्य शिष्यास्तदोपागत्य
जगदुः, अपि ज्ञायते भवता यद् वाक्यं तच्छ्रुत्वा फरीशिनः
१३ स्खलिता इति? स तु प्रतिजगाद, उन्मूलयिष्यते यः कश्चिद् वृक्षो
१४ मम पित्रा न रोपितः। यूयंमभून् परित्यजत, तेऽन्धानामन्धाः

पथप्रदर्शकाः। अन्धश्चेदन्धं नयेत्, तर्ह्युभौ गर्त्ते पतिष्यतः।
पितरस्तु तं प्रतिजगाद, भवानस्मानुपमां तां बोधयितुमर्हति। १५
यीशुस्तदाब्रवीत्, यूयं किमधुनाप्यबोधाः? युष्माभिरधुनापि किं न १६
बुध्यते यद् यत् किञ्चन मुखं प्रविशति तदुदरमाश्रयति शौचकूपे १७
च निरस्यते, यत्तु मुखान्निःसरति, तद्धृदयान्निरेति, तदेव च १८
मनुष्यमशुचीकरोति। यतो हृदयात् कुतर्का नरहत्या परदारगमनं १९
व्यभिचारश्चौर्य्यक्रिया मृषासाक्ष्यं धर्म्मनिन्दा च बहुशो निःसरन्ति।
एतान्येव मनुष्यमशुचीकुर्व्वन्ति, नाशुचीकरोति पुन र्मनुष्यम- २०
प्रक्षालितै र्हस्तैराहारकरणम्।

### यीशुना कस्यैचिद् भूतग्रस्तबालिकायै आरोग्यदानं चतुःसहस्रलोकेभ्यो भोज्यदानञ्च।

स्थानात् तस्मात् प्रस्थाय यीशु र्जगाम प्रदेशं सोरसीदोनयोः। २१
पश्य च कनानीया काचिन्नारी तत्परिसीमतो निर्गत्य तमुद्दिश्य २२
क्रोशन्ती जगाद, प्रभो दायूदस्य सन्तान, मामनुकम्पतां। दुहिता
मम भूतावेशवशाद् अतीव क्लिश्यते। स तु तां प्रत्यवादीन्नैकमपि २३
वाक्यम्। शिष्याः पुनस्तस्यान्तिकमुपस्थाय प्रार्थयमाना अब्रुवन्,
विसृजत्वमूम्, यतः सास्माकं पश्चात् क्रोशति। स तदा प्रतिजगाद, २४
प्रहितोऽहं केवलमिस्रायेलकुलस्य हारितान् मेषान् प्रति नापरं
प्रति। सा तु तमुपागम्य प्रणिपपात जगाद च, प्रभो, ममोप- २५
करोतु। स प्रत्यवादीत्, न भद्रं भक्ष्यं बालकानां हृत्वा शुनाम- २६
भिमुखं तत् प्रक्षेप्तु। सानेन जगाद, सत्यं प्रभो, यत् श्वानः २७
स्वामिनां भोज्यमञ्चाद् भ्रंशतीर्भक्ष्यफेलीः खादन्ति। यीशुस्तदा तां २८
प्रत्यवादीत्, भो नारि, महांस्तव विश्वासः, सम्भवतु तथा तव २९
यथाभीष्टं। निरामयाभूच्च तस्या दुहिता तस्मादेव दण्डात्।

स्थानात् तस्मात् प्रस्थाय यीशु र्गालीलीयसमुद्रस्य तटमागत्य
३० पर्व्वतमारुह्य तत्रोपविवेश। मंहान्तो जननिवहाश्च खञ्जान् अन्धान्
मूकान् हीनाङ्गान् अपरांश्च बहून् सार्द्धमानीय यीशोश्चरणसमीपे
३१ निचिक्षिपुः, स च तान् निरामयांश्चकार। इत्थं मूकान् भाष-
माणान्, हीनाङ्गान् स्वस्थान्, खञ्जान् पर्य्यटतोऽन्धांश्च प्राप्तदृष्टीन्
निरीक्ष्य जननिवहा विस्मयं गत्वेस्रायेलश्येश्वरं तुष्टुवुः।

३२ अनन्तरं यीशुः शिष्यान् स्वसमीपमाहूय जगाद, मनुष्येष्वेतेषु
कारुण्यं ममोत्पद्यते, यतस्त आदिनत्रयान्मम सन्निधाववतिष्ठन्ते
भक्ष्यन्तु तेषां किमपि नास्ति। मार्गे ते मूर्च्छां यास्यन्तीति
३३ भयादहं तान् अकृताहारान् विस्रष्टुं नेच्छामि। तदा शिष्यास्तमूचुः,
कुतोऽस्माभि र्लभ्याः स्थानेऽत्र निर्जने तावन्तः पूपा यैर्जननिवहमी-
३४ दृक्ष्महान्तं तर्पयिष्यामः? यीशुस्तान् पप्रच्छ, पूपाः कति युष्माकं
३५ विद्यन्ते? ते जगदुः सप्त स्वल्पे मत्स्याश्च क्षुद्राः। ततः स जननि-
३६ वहान् भुव्युपवेशनमाज्ञापयामास, तांश्च सप्तपूपान् मत्स्यांश्चादाय
धन्यवादवाचनपूर्व्वकं भङ्क्त्वा स्वशिष्येभ्योऽददात्, ते च मनुष्ये-
३७ भ्योऽददन्। ततः सर्व्वे भुक्त्वा तृप्तवन्तो भग्नांशाना शेषेण च सप्तपे-
३८ टकान् प्ररयित्वादद्रिरे। योषितो बालकांश्च विहाय भोक्तारस्ते
पुरुषाश्चतुःसहस्राण्यासन्।

३९ अनन्तरं स जननिवहान् विसृज्य नौकामारुह्य मग्दलायाः
सीमानमागमत्॥ १५ ॥

यीशो र्नानाविधशिक्षा।

१६ १ तदा फिरूशिनः सिदूकिनश्च तस्यान्तिकमागत्य तं परीक्षमाणा
२ गगनात् अभिज्ञानस्य कस्यचित् प्रदर्शनं ययाचिरे। स तु तान्
प्रतिजगाद, सन्ध्यायामुपस्थितायां यूयं वदथ, सुदिनं, यतो भात्या-

काशो रक्तवर्णः। प्रातश्च वदथ, वात्याद्य, यतो भात्याकाशो ३
मलिनो रक्तवर्णश्च। भो कपटिनः, यूयम् आकाशस्य रूपं
निर्णेतुं जानीथ, न शक्नुथ किं कालानामभिज्ञानानि निर्णेतुं? ४
दुष्टो व्यभिचारी च वंशोऽभिज्ञानमनुसन्धत्ते, तस्मै तु भाववादिनो
योनाहस्याभिज्ञानादन्यदभिज्ञानं न दायिष्यते। अनन्तरं स तान्
विहाय प्रतस्थे।

ततः परं शिष्याः पारमागत्य पूपानादातुं विस्मृताः। यीशुस्तु ५
तानब्रवीत्, यूयमालोच्य फरीशिनां सदूकिनाञ्च किण्वतः सावधाना ६
भवत। अनेन ते मिथो विचारयन्तो जगदुः, अस्माभि र्यत् पूपा ७
नादत्ता इति। यीशुस्तु तज्ज्ञात्वा तानब्रवीत्, भो स्तोकविश्वा- ८
सिनः, युष्माभिः पूपा नादत्ता इत्येवं कथं मिथो विचारयथ?
अधुनापि किं न बुध्यते? अपि न स्मरथ किं पञ्चसहस्रेषु तान् ९
पञ्चपूपान् लब्ध्वतल्लकसङ्ख्यांश्च, चतुःसहस्रेषु च तान् सप्तपूपान् १०
लब्ध्वपेटकसङ्ख्याश्च? युष्माभिः कथं न बुध्यते यत् फरीशिनां ११
सदूकिनञ्च किण्वतो युष्माभिः सावधानै र्भवितव्यमित्येतदधि मया
कथितं न पूपानधीति? तदा तैस्तस्योक्तेस्तात्पर्य्यमित्यैवमबोधि १२
यदस्माभिः फरीशिनां सदूकिनाञ्च शिक्षातः सावधानै र्भवितव्यं न
तु पूपस्य किण्वत इति।

यीशुरेव स ख्रीष्टः जीवनमयस्येश्वरस्य पुत्रः।

ततः परं यीशुः कैसरिया-फिलिप्याः सन्निकटं प्रदेशमागत्य १३
स्वशिष्यानपृच्छत्, मनुष्यपुत्रो योऽहं सोऽहं क इत्यधि किं वदन्ति
मानवाः? ते प्रत्यूचुः, केचिद् वदन्ति, भवान् स्नापको योहनः, १४
अपरे वदन्ति, भवान् एलियः, अन्ये च वदन्ति, भवान् यिरमि-
याहोऽथवा भाववादिनामन्यतमः कश्चिदिति। स तान् जगाद, १५

१६ कोऽहमित्यधि यूयमेव वा किं वदथ? शिमोनः पितरस्तदा प्रति-
जगाद, भवान् सोऽभिषिक्तः पुरुषो जीवनमयस्येश्वरस्य पुत्रः।
१७ यीशुः प्रतिवदन् तं जगाद, भो योनाःपुत्र शिमोन, धन्यस्त्वं
यतो न रक्तमांसाभ्यां तुभ्यमिदं व्यक्तीकृतम्, अपि तु मम स्वर्गस्थेन
१८ पित्रैव। अहञ्च त्वां ब्रवीमि, त्वं पितरः (पाषाणः), पाषाणस्यैतस्यो-
परि चाहं मम मण्डलीं प्रतिष्ठापयिष्यामि, पातालस्य गोपुराणि
१९ च न तस्याः प्रभविष्यन्ति। तुभ्यञ्चाहं स्वर्गराज्यस्य कुञ्जिकां दास्यामि,
किमपि यत् त्वं मेदिन्यां भन्त्स्यसि स्वर्गे तद् बद्धं स्यास्यति,
२० यद्पि च त्वं मेदिन्यां मोक्ष्यसि स्वर्गे तन्मुक्तं स्यास्यति। स
तांस्तदादिदेश, कस्मैचिदपि यूयमिदं न कथयितव्यं यदहं सोऽभि-
षिक्तः पुरुष इति।

यीशोः स्वमरणमधि भविष्यद्वाक्यकथनम्।

२१ ततो यावद् यीशुः स्वशिष्येभ्यो दर्शयितुमारेभे यदहं यिरू-
शालेमं गत्वा प्राचीनै र्मुख्ययाजकैः शास्त्राध्यापकैश्च प्रचुरं क्लेशं
भोक्ष्ये घानिष्ये च तृतीये दिने तु पुनरुत्थास्यामीत्युपयुक्तं।
२२ पितरोऽनेन तं निभृतं नीत्वा भर्त्सयितुमारभ्याब्रवीत्, ईश्वरो
भवन्तमनुकम्पतां, प्रभो, दशा सा भवतः कदापि न भविष्यति।
२३ स तु परावृत्य पितरं जगाद, मत्तोऽपसर, शैतन, त्वं मम स्खल-
नहेतुः, यतस्त्वया मानवं चिन्त्यते नेश्वरीयम्।

२४ यीशुस्तदा स्वशिष्यान् जगाद, कश्चिचेन्मामनुगन्तुमिच्छति, स
२५ तर्ह्यात्मानं प्रत्याख्यातु, स्वक्रुशमाददातु मामनुव्रजतु च। यतो
यः कश्चित् स्वप्राणान् रिरक्षिषति स तान् हारयिष्यति, यस्तु
२६ मदर्थं स्वप्राणान् हारयति स तान् लप्स्यते। यतो मनुष्यः कृत्स्नं
जगत् लब्ध्वा यदि स्वप्राणै र्वञ्च्यते, तर्हि तस्य हितं वा किं

भवति? स्वप्राणानां कं वा निष्क्रयं मनुष्यो दास्यति? यतः २७
स्वीयदूतैः सह मनुष्यपुत्रः स्वपितुः प्रतापेनागमिष्यति, तदा च स
प्रत्येकं तदाचारानुरूपं फलं दास्यति। युष्मानहं सत्यं वदामि, २८
विद्यन्तेऽत्र तिष्ठतां मध्ये केऽपि जना ये मनुष्यपुत्रं स्वराज्यान्वित-
मागच्छन्तं न दृष्ट्वा मृत्यु नास्वादयितव्यः॥ १६॥

यीशोरुज्ज्वलमूर्त्तिधारणम्।

ततः परं दिनेषु षट्स्वतीतेषु यीशुः पितरं याकोबं तस्य १७ १
सहोदरं योहनञ्च सार्द्धं नीत्वा निभृतं गिरिमुच्चं कञ्चिदारुरोह,
रूपान्तरीबभूव च तत्र तेषां समक्षं, तस्यास्यं तदा सूर्य्यवद् २
व्यराजत वसनानि च तस्य दीप्तिवत् सितान्यभवन्। पश्चापि च ३
मोशिरेलियश्च तैः संलपन्तौ तेभ्यो दर्शनमददतुः। पितरस्तदा ४
यीशुं प्रत्यब्रवीत्, प्रभो, भद्रमस्माकमत्रावस्थानं। भवांश्चेदभिमन्यते,
तर्ह्यस्माभिरत्रोटजानि त्रीणि निर्म्मायिष्यन्ते एकं भवदर्थम् एकं
मोशेरर्थम् एकमेलियार्थम्। पश्य च तस्मिन्नित्थं ब्रुवाणे दीप्र एको ५
मेघस्तेषामुपरि छायां ददौ, पश्चापि च मेघस्य तस्य मध्याद्
वाणीयमुदभूत्; अयं मम प्रियः पुत्रः, अस्मिन्नहं प्रीतः, अस्य
वचांसि युष्माभिः श्रूयन्तामिति। एतच्छ्रुत्वा शिष्या अधोमुखाः ६
पतित्वातीव बिभ्युः। तदा यीशुरुपागत्य तानब्रवीत्, उत्तिष्ठत, ७
मा भैष्ट। ततस्ते लोचनान्युन्मील्य केवलं यीशुं विहाय नापरं ८
कमपि ददृशुः।

ततः परं तेषु पर्व्वतादवरोहत्सु यीशुस्तानिदमादिदेश, मनुष्य- ९
पुत्रो यावन्मृतानां मध्यान्नोत्तिष्ठति, तावद् दर्शनमिदं यूयं
कस्मैचिन्मा कथयतेति। तदा तस्य शिष्यास्तमपृच्छन्, प्रथमम् १०
एलियेनागन्तव्यमिति शास्त्राध्यापकैः कथमुच्यते? यीशुस्तु तान् ११

प्रतिजगाद, एलियः प्रथममागत्य सर्व्वं प्रतिसंस्करिष्यतीति सत्यं,
१२ युष्मांस्त्वहं ब्रवीमि, इतिपूर्व्वमेलिय आगतवान्, मनुष्यास्तु तं
नाभिज्ञाय तं प्रति तत्तत् कृतवन्तो यद्यदैच्छंस्ते। तादृशं मनुष्य-
१३ पुत्त्रेणापि तेभ्यो दुःखभोगो लप्स्यते। शिष्यैस्तदाबोधि यत् सोऽस्मान्
स्नापकस्य योहनस्य कथामुक्तवानिति।

### यीशो र्विविधकर्म्माणि शिक्षाश्च।

#### यीशुना कस्यैचिद् अपस्मारग्रस्तबालकाय आरोग्यदानम्।

१४ ततस्तेषु जननिवहस्यान्तिकमागतेषु नरः कश्चित् तत्समीप-
१५ मुपस्थाय तं सजानुपातं जगाद, प्रभो, मम पुत्त्रमनुकम्पतां यतः
स चन्द्राहतोऽतीव क्लिश्यते च। स हि भूयो वह्नौ भूयश्च तोये
१६ पतति। स च मया भवतः शिष्याणां समीपमानीतः, ते तु तं
१७ स्वस्थं कर्त्तुं नाशक्नुवन्। यीशुरनेन प्रत्यवादीत्, रे अविश्वासिन्
उन्मार्गगामिंश्च वंश, कियन्तं वा कालं स्थातव्यं मया युष्माभिः
सार्द्धम्? कियन्तं वा कालं सोढव्या यूयं मया? बालकं तं
१८ मदन्तिकमत्रानयत। ततो यीशुस्तं भर्त्सयामास भूतश्च स तस्मा-
१९ न्निःससार, दण्डाच्च तस्माद् यावद् बालकः स स्वस्थोऽभूत्। ततः
परं शिष्या निभृतं यीशोः समीपमागत्य तं पप्रच्छुः, किमतः
२० कारणं यदस्माभिः स भूतो निःसारयितुं नाशक्यत? यीशुस्तान्
प्रतिजगाद, युष्माकमविश्वासस्तत्र हेतुः। यतोऽहं युष्मान् सत्यं
ब्रवीमि, सति विश्वासे युष्माकं सर्षपबीजमिते यूयं चेदमुं पर्व्वतं
वदथ; त्वमतोऽपसरन्नदो याहीति, तर्हि सोऽपसरन् यास्यति
२१ किमपि च न भविष्यति युष्माभिरशक्यं। परन्त्वेतज्जातीयो भूतो
न निःसार्य्यते प्रार्थनोपवासाभ्यामन्येन केनाप्युपायेन।

#### यीशुना स्वमरणमधि द्वितीयवारं भविष्यद्वाक्यकथनम्।

२२ ततः परं गालीले तेषां परिभ्रमणकाले यीशुस्तान् अब्रवीत्,

मनुष्यपुत्रो मनुष्याणां हस्तेषु समर्पयिष्यते ते च तं हनिष्यन्ति तृतीये २३
दिने स पुनरुत्थास्यति च। अनेन तेऽतीव शोकाकुला बभूवुः।

### मीनमुखे मुद्रा।

तेषु तु कफरनाहूममागतेष्वर्द्धशेकलमानानां मुद्राणामादायिनः २४
पितरस्य समीपमुपस्थाय जगदुः, न दीयते किं युष्माकं गुरुणा करो
मन्दिरार्थकोऽर्द्धशेकलमानः? सोऽब्रवीत्, दीयते। गृहं प्रविष्टे तु २५
तस्मिन् यीशुस्तस्य कथनमप्रतीक्ष्य जगाद, भो पितर, त्वया किमनु-
मीयते? मेदिन्या राजानः केभ्यः शुल्कं करं वा गृह्णन्ति? किं
स्वपुत्रेभ्योऽथवान्येभ्यः? पितरस्तं जगाद, अन्येभ्यः। यीशुस्तमब्रवीत्, २६
तथा ते पुत्राः सुतरां निष्कराः सन्ति। किन्त्वमी यदस्माभि र्न २७
स्खाल्येरन्, तत् त्वं समुद्रतटं गत्वा वडिशं क्षिप, प्रथमस्य यो मीन
उदेष्यति, तं धर, तस्य मुखमुद्घाट्य च त्वं शेकलमानां मुद्रामेकां
द्रक्ष्यसि, तामेवादाय मम तव च कृतेऽमीभ्यो देहि॥ १७॥

### स्वर्गराज्ये महान् कः एतदधि शिक्षा।

तस्मिन् दण्डे शिष्या यीशोरन्तिकमागत्य तं पप्रच्छुः, स्वर्ग- १८ १
राज्ये कस्तावन्महत्तरः? यीशुस्तदा क्षुद्रं बालकमेकं स्वसमीपमाहूय २
तेषां मध्ये स्थापयित्वा तान् जगाद, युष्मानहं सत्यं ब्रवीमि, यूयं
यदि न परावर्त्तध्वे न च बालका इव भवथ, स्वर्गराज्यं तर्हि ३
कथञ्चन न प्रवेक्ष्यथ। अतः यः कश्चिदात्मानं बालकमिममिव ४
नम्रीकरोति, स एव स्वर्गराज्ये महत्तरः। यश्च मम नाम्नेदृशमेकं ५
बालकं गृह्लाति, स मां गृह्लाति। यस्तु मयि विश्वसतामेषां ६
क्षुद्राणामेकं स्खालयति, तत्कण्ठे बृहत्पेषणीबन्धनं गभीरसमुद्रे
च तस्य निमज्जनं श्रेयः। स्खलनहेतुभ्यो जगतः सन्तापो भविष्यति। ७
स्खलनहेतवो ह्यवश्यम्भाविनः। येन तु स्खलनहेतुरायाति मनुष्यस्य

८ तस्य सन्तापो भविष्यति। यदि तु तव हस्तश्चरणो वा तव स्खलन-
हेतु र्भवेत् तर्हि तं छित्त्वा दूरं निक्षिप; तव हस्तद्वयसम्पन्नस्य
चरणद्वयसम्पन्नस्य वानन्ते वह्नौ निपातात् श्रेयांस्तव खञ्जस्य हीना-
९ ङ्गस्य वा जीवने प्रवेशः। तव चक्षु र्वा यदि तव स्खलनहेतुकं भवेत्
तर्हि तदुत्पाट्य दूरं निक्षिप; तव नेत्रद्वयसम्पन्नस्य वह्निमये नरके
१० निपातात् श्रेयांस्तवैकनेत्रस्य जीवने प्रवेशः। सावधानास्तिष्ठत,
क्षुद्राणामेषाम् एकमपि मावमन्यध्वं। यतो युष्मानहं ब्रवीमि, स्वर्गे
११ तेषां दूता निरन्तरं मम स्वर्गस्थस्य पितुरास्यं निरीक्षन्ते। वास्तवं
१२ हि हारितस्य त्राणार्थं मनुष्यपुत्र आगतवान्। युष्माभिः किमनु-
मीयते? मनुष्यस्य कस्यचित् शतं मेषेषु यदि तेषामेको भ्रान्तो
भवेत् तर्हि स किमन्यान् एकोनशतं मेषांस्त्यक्त्वा गिरिमयाणि
१३ स्थानानि च गत्वा हारितं तं मेषं न मृगयते? अहञ्च युष्मान् सत्यं
ब्रवीमि, यदि स कृतार्थस्तमासादयति, तर्ह्यभ्रान्तेषु तेष्वेकोनशतमेषेषु
यस्तस्यानन्दोऽस्ति तस्मादपि महत्तरस्तस्मिन्नेवानन्दो जनिष्यते।
१४ इत्थमेव क्षुद्राणामेषामेकस्यापि विनाशो मम स्वर्गस्थस्य पितु
रिच्छामवाञ्छितः।

१५ त्वां प्रति तु तव भ्रात्रा पापे कृते त्वं याहि तं भर्त्सय च
केवलं त्वयि तस्मिंश्च वर्त्तमानयोः। स चेत् तव वाक्यं गृह्णीयात्
१६ तर्हि त्वया स्वभ्रातोपार्जितः। यदि तु न गृह्णीयात् तर्ह्यात्मना
सार्द्धमपरमेकमपरौ वा द्वौ गृहाण, तथानुष्ठिते द्वयोस्त्रयाणां वा
१७ साक्षिणां मुखेन सर्व्वकथा संस्थास्यते। स चेत् तेषां वाक्यं न
गृह्णाति तर्हि मण्डलीं ज्ञापय। यदि स मण्डलीवाक्यमपि न
गृह्णीयात् तर्हि तव सकाशं स परजातीयेन शुल्कादायिना च
१८ समानो भवतु। युष्मानहं सत्यं वदामि, किमपि यद् यूयं मेदिन्यां

भनत्स्यथ स्वर्गे तद् बद्धं स्थास्यति। यदपि च यूयं मेदिन्यां
मोच्यथ स्वर्गे तन्मुक्तं स्थास्यति। पुनरपि युष्मान् ब्रवीमि, याचयितव्यं १९
कश्चिद् वरमधि यदि युष्मन्मध्ये नरौ द्वावेकमतौ भवेतां तर्हि
मम स्वर्गस्थात् पितुः स वरस्ताभ्यां लप्स्यते। वास्तवं हि यत्र २०
कुत्रापि जनौ द्वौ त्रयो वा जना मन्नामोद्दिश्य समागतास्तेषां
मध्येऽहं तत्र विद्ये।

क्षमाशीलत्वमधि शिक्षा।

तदा पितरस्तस्यान्तिकमागत्य जगाद, प्रभो, कतिकृत्वो मम २१
भ्राता मत्प्रतिकूलं पापे कृते तस्याहं क्षमिष्ये? किं यावत् सप्तकृत्व?
यीशुस्तं प्रत्यब्रवीत्, सप्तकृत्वो यावदिति त्वां न वदामि, अपि तु २२
सप्ततिकृत्वः सप्तकृत्वो यावदिति। अनेन स्वर्गराज्यं स्वदासैः सह जिगण- २३
यिषुणा नराधिपमनुष्येणोपमेयं। तस्मिन् गणयितुम् आरब्धवत्ययुत- २४
मुद्रागोणीनामृणैको दासस्तत्समीपमानीतः। तस्य तु परिशोधोपाया- २५
भावात् प्रभुस्तस्य तदीयभार्य्यासन्तानानां तत्सर्व्वस्वस्य च विक्रयं
तन्मूल्येन चर्णशोधमाज्ञापयामास। ततः स दासः प्रणिपत्य पूजयित्वा २६
च जगाद, प्रभो, सहतां मे, तेन तुभ्यं सर्व्वं प्रत्यर्पयिष्यामि।
प्रभुस्तदा दासं तमनुकम्प्य विससर्ज चक्षमे च तस्य तदृणं। २७
दासः स तु निर्गतः सहदासानां मध्ये यस्तस्य शतं मुद्रापादान् २८
अधारयत् तमासाद्य धृत्वा च तस्य कण्ठदेशं पीडयन् जगाद,
प्रत्यर्पय मम यद्यद् धारयसि। सहदासः स तदा तस्य चरणयो २९
र्निपत्य सविनयमुवाच, सहतां मे, तेन तुभ्यं सर्व्वं प्रत्यर्पयिष्यामि।
स त्वसम्मतोऽभूत्, गत्वा च तमृणशोधं यावत् कारायां निचिक्षेप। ३०
तमाचारं दृष्ट्वा सहदासास्तस्यातीव शुशुचु गत्वा च स्वप्रभवे सर्व्व- ३१
वृत्तान्तं निवेदयामासुः। तस्य प्रभुस्तदा तं स्वसमीपमाहूय जगाद, ३२

रे दुष्ट दास तव सविनयां प्रार्थनां गृहीत्वाहं तव तत् सर्व्वमृणं
३३ क्षमितवान्। कृपा यथा मया त्वयि कृता तव सहदासेऽपि किं न
३४ तथा कृपा त्वयापि कर्त्तव्यासीत्? अनन्तरं तस्य प्रभुः क्रुद्धा तेन
यद्धार्य्यत, तत्सर्व्वस्य परिशोधं यावत् यन्त्रणादायिषु तं समर्प-
३५ यामास। यूयञ्च प्रत्येकं यदि हृदयेण स्वभ्रातुरपराधान् न क्षमध्वे,
तर्हि मम स्वर्गस्थः पितापि युष्मान् प्रति तथैव करिष्यति॥ १८॥
१९ १ वाक्यान्येतानि समाप्य यीशु र्गालीलात् प्रस्थाय यर्द्दनस्य पारे
२ स्थितां यिहूदियायाः सीमानमागमत्। महान्तो जननिवहाश्च
तमन्वव्रजन् स च तत्र तान् निरामयान् चकार।

स्त्रीत्यागमधि शिक्षा।

३ अनन्तरं फिरूशिनस्तस्यान्तिकमागत्य परीक्षमाणास्तं पप्रच्छुः,
४ विधेयः किं मनुष्येण भार्य्यात्यागो येन केनचिद्धेतुना? स तु तान्
प्रत्यब्रवीत्, युष्माभिः किमेतन्न पठितं भो यदादौ निर्म्माता नरं
५ नारीञ्च तौ निर्म्मितवान् कथितवांश्च, एतद्धेतो मनुष्यः पितरं
मातरञ्च परित्यज्य स्वजायायामासंक्ष्यते तावुभौ चैकाङ्गीभविष्यत
६ इति? अनेन तौ पुन र्न द्वौ स्तः, तावेकाङ्गीभूतौ। अतो यद्
७ ईश्वरेण संयोजितं, तन्मनुष्येण मा वियोज्यतां। ते तं पप्रच्छुः,
८ तर्हि त्यागपत्रदानपूर्व्वकं तस्यास्त्यागो मोशिना कथमादिष्टः? स
तान् जगाद, युष्माकं हृत्काठिन्यमुद्दिश्य युष्मदीयभार्य्याणां त्यागो
९ मोशिनान्वज्ञायि न त्वादितो भूतमित्थम्। अहन्तु युष्मान् वदामि
व्यभिचाराद्न्यहेतुना यः कश्चित् स्वभार्य्यां त्यक्तापरामुद्वहति, स
व्यभिचारं करोति, यश्च स्वामित्यक्तां स्त्रियमुद्वहति स व्यभिचारं
१० करोति। तस्य शिष्यास्तमूचुः, भार्य्यया सह यदि नरस्येदृशः सम्ब-
११ न्धस्तर्ह्युद्वाहो न हितावहः। स तु तान् जगाद, वचनमेतत् सर्व्वैः

गृह्यते, तैरेव केवलं गृह्यते सामर्थ्यं येभ्योऽदायि। फलतो विद्यन्ते १२
च क्लीवा मामातृजठरात् तथाविधा जाताः, नरकृतक्लीवाश्च विद्यन्ते.
स्वर्गराज्यार्थम् आत्मकृतक्लीवाश्च विद्यन्ते। गृह्णातु यो ग्रहणे समर्थः।

शिशुविषयिणी शिक्षा।

शिशवः केचित् तदानीं तस्यान्तिकमानिन्यिरे यत् तेन तेषु १३
हस्तावर्पयित्वा प्रार्थना क्रियेत। शिष्यास्तु तान् अभर्त्सयन्। यीशुः १४
पुनरवादीत्, मत्समीपमागमिष्यतः शिशून् अनुमन्यध्वं मा वारयत
यतः स्वर्गराज्यम् ईदृशानामेव। स तदा तेषु हस्तावर्पयित्वा प्रतस्थे। १५

धनसम्बन्धिशिक्षा। कृषकाणां दृष्टान्तः।

पश्य चानन्तरं नरः कश्चिन्निकटमागत्य तं पप्रच्छ, भो सद्गुरो, १६
सत् किं कर्त्तव्यं मयानन्तजीवनलाभार्थम्? स तु तमब्रवीत्, १७
किमर्थं मां सतः कथां पृच्छसि? सन्नेक एव। यदि तु जीवनं
प्रवेष्टुमिच्छसि तर्ह्याज्ञाः पालय। स ब्रूते, का आज्ञाः? यीशु- १८
रनेनाब्रवीत्, नरहत्यां मा कुरु, व्यभिचारं मा कुरु, चौर्य्यं मा
कुरु, मृषासाक्ष्यं मा देहि, स्वपितरं स्वमातरञ्च सम्मन्यस्व। अपि च १९
स्वनिकटस्थं प्रत्यात्मवत् प्रेम कुर्विति। युवा स तं जगाद, पालितं २०
मया सर्व्वमेतदाबाल्यात्, अधुना मम किमसम्पूर्णम्? यीशुस्तं २१
जगाद, यदि सिद्धो भवितुमिच्छसि, तर्हि गत्वा सर्व्वं तव
यद्यदस्ति देहि विक्रीय दरिद्रेभ्यः। तथा कृते स्वर्गे तव धनं
स्थास्यति। ततः परमागत्य मामनुव्रज। वचनमेतच्छ्रुत्वा युवा स २२
शोचन्नापजगाम, यतस्तस्य वस्तूनि प्रचुराण्यासन्।

यीशुस्तदा स्वशिष्यानुवाच, युष्मानहं सत्यं ब्रवीमि, दुष्करो हि २३
धनवतः स्वर्गराज्यप्रवेशः। पुनश्च युष्मान् ब्रवीमि, धनवतः स्वर्गराज्य- २४
प्रवेशात् सूचीच्छिद्रेणोष्ट्रगमनं सुसाध्यं। एतच्छ्रुत्वा शिष्याश्चमत्कार- २५

२६ सतीव गत्वा जगदुः, कस्तर्हि तरितुं शक्नोति? यीशुस्तदा तान्
समालोक्याब्रवीत्, तन्मनुष्याणामसाध्यम्, ईश्वरस्य तु सर्व्वं साध्यम्।
२७ पितरस्तदानीं तं प्रत्यब्रवीत्, पश्यतु वयं सर्व्वं त्यक्त्वा भवन्तम्
२८ अनुव्रजितवन्तः, किमस्माभि र्लप्स्यते? यीशुस्तान् जगाद, युष्मानहं
सत्यं ब्रवीमि, पुनर्जन्मनि यदा मनुष्यपुत्रः स्वप्रतापसिंहासन उपविष्टो
भविष्यति, तदा मामनुव्रजितवन्तो यूयमपि द्वादशसिंहासनेषूपविष्टा
२९ इस्रायेलस्य द्वादशवंशानां विचारं करिष्यथ। अपरं यः कश्चिन्मम
नाम्नः कृते गृहाणि वा भ्रातॄन् वा भगिनी र्वा पितरं वा मातरं
वा जायां वा सन्तानान् वा भूम्यधिकारान् वा त्यक्तवान् स
तच्छतगुणं लप्स्यते, दायांशरूपमनन्तजीवनञ्च प्राप्स्यति।
३० अपि तु प्रथमा बहवोऽन्त्या भविष्यन्ति; अन्त्याश्च बहवः
प्रथमा भविष्यन्ति॥ १९॥

२० १ यतः स्वर्गराज्यं गृहस्वामिना तेन सदृशं, यः प्रत्यूष एव
स्वद्राक्षाक्षेत्रे कृषकान् वेतनजीविनो नियोक्तुमिच्छन् निर्जगाम।
२ कृषकांश्च प्राप्य तैः सह दैनिकभृतिं मुद्रापादं निरूप्य तान्
३ स्वद्राक्षाक्षेत्रं प्राहिणोत्। ततः परं प्रायशः प्रहरे प्रथमेऽतीते स
पुन र्निर्गत्यापरान् कतिपयान् निष्कर्म्मकान् हट्टे तिष्ठतो दृष्ट्वा
४ तानपि जगाद, यूयमपि मम द्राक्षाक्षेत्रं गच्छत, यच्च न्याय्यं
५ तदहं युष्मभ्यं दास्यामि, तेन च ते जग्मुः। द्वितीयस्य तृतीयस्य
६ च पुनः प्रहरस्यान्ते निर्गत्य स तथैव चकार। चतुर्थप्रहरस्य
पुनस्तृतीयांशेऽवशिष्टे निर्गत्य सोऽन्यान् निष्कर्म्मकं तिष्ठतः कतिपयान्
७ दृष्ट्वा पप्रच्छ, किमर्थं यूयमत्र कृत्स्नं दिनं निष्कर्म्मकास्तिष्ठथ? ते
तमब्रुवन्, कर्म्मणि केनापि वयं न नियुक्ताः। स तानवादीत्,
८ यूयमपि मम द्राक्षाक्षेत्रं गच्छत, तेन यन्न्याय्यं तल्लप्स्यध्वे। सन्ध्या-

यान्तूपस्थितायां द्राक्षाक्षेत्रस्य स्वामी विषयाध्यक्षं निजं जगाद, त्वं
कृषकानाहूयान्त्येभ्यो दातुमारभ्य प्रथमान् यावत् तेभ्यो भृतिं
देहि। अनेन ये सन्ध्यायाः सार्द्धदण्डद्वयं प्रागागतवन्त उपस्थाय ९
ते प्रत्येकं मुद्रापादं लेभिरे। अनन्तरं प्रथमा उपस्थायास्माभि- १०
रधिकं लप्स्यत इत्यमन्यन्त। तेषान्त्वप्येकैको मुद्रापादमेव लेभे। ११
लब्ध्वा तु ते गृहस्वामिनमपवदन्तो जगदुः, अन्त्या अमी कर्म्म १२
कृतवन्तो मुहूर्त्तमेकमेव, वयन्तु दिनस्य भारमुत्तापञ्च सोढवन्तः,
भवान् पुनरमूनस्माभिस्तुल्यान् कृतवान्। स ततः प्रतिवदन् १३
तेषामेकं जगाद, मित्र, नाहं तवापराध्नोमि, मया सह त्वया किं
भृति मुद्रापादमाना न निरूपिता? गृहीत्वापगम्यतां त्वया १४
यल्लभ्यं। रोचये त्वहमन्त्यायैतस्मै दातुं तुभ्यमिव। न किं विधेयं १५
मया स्वं मम निजस्वमधि यदहं कर्त्तुमिच्छामि? अथवा किं तव
नेत्र दृष्यति। यदहं परहितैषीति? इत्थमेवान्त्याः प्रथमा भविष्यन्ति १६
प्रथमाश्चान्त्याः। यत आहूता बहवोऽल्पे तु वरिताः।

यीशुना स्वमरणमधि तृतीयवारं भविष्यद्वाक्यकथनम्।

ततः परं यीशुरूर्द्धगमार्गेण यिरूशालेमं गच्छन् पथि द्वादश- १७
शिष्यान् निभृतं नीत्वा तेभ्यः कथयामास, पश्यत वयं यिरूशालेमं १८
गच्छामः, मनुष्यपुत्रश्च मुख्ययाजकेषु शास्त्राध्यापकेषु च समर्प-
यिष्यते। ते च विचारेण तस्य प्राणदण्डाज्ञां कृत्वा पारुष्याय १९
कशाघाताय क्रुशारोपणाय च तं परजातीयेषु समर्पयिष्यन्ति,
तृतीये दिने तु स पुनरुत्थास्यति।

तत्त्वतः महान् कः? एतद्विषयकशिक्षा।

सिवदियस्य पुत्रयो र्जननी तदा स्वसुताभ्यां सह तस्यान्तिक- २०
मागत्य प्रणिपत्य वरं ययाचे। स तां जगाद, किं वाञ्छसि? सा २१

तमब्रवीत्, भवतो राज्ये यथा ममैतयोः पुत्रयोरेको भवतो दक्षिणे-
२१ ऽन्यतरश्च भवतो वामे समुपविशेत् तथैवादिशतु। यीशुस्तु प्रत्य-
ब्रवीत्, युवां यद् याचेथे तन्न जानीथः। येन पानपात्रेणाहं पास्यामि
तेन किं युवां पातुं शक्नुथः? येन च स्नानेनाहं स्नास्ये, तेन स्नातुं
२३ किं युवाभ्यां शक्यं तौ तमूचतुः शक्यं। तदा स तावब्रवीत्, मम
पानपात्रेण युवां पास्यथः, येनाहं स्नास्ये तेन स्नानेन स्नास्येथे च,
परन्तु मम दक्षिणे वामे वोपवेशनाधिकारस्य दानं मया न विधेयं,
स तु केवलेभ्यस्तेभ्यो दातव्यो येषां कृते मम पित्रा स निरूपितः।
२४ श्रुत्वैतदन्ये दश शिष्यास्तयोः सहोदरयो रौष्यमापन्नाः। यीशुस्तु
२५ तान् स्वसमीपमाहूयोवाच, यूयं जानीथ, परजातीयानां शास्ता-
रस्तेषामुपरि तीक्ष्णप्रभुत्वं कुर्वते, महान्तश्च तेषां तीक्ष्णकर्तृत्वं
२६ कुर्वते। न भवन्तु तादृशं युष्माकं मध्ये। प्रत्युत युष्मन्मध्ये यो
२७ महान् भवितुमिच्छति स युष्माकं परिचारको भविष्यति। यश्च
युष्मन्मध्ये प्रथमो भवितुमिच्छति, स युष्माकं दासो भविष्यति।
२८ यतस्तथैवागतो मनुष्यपुत्रो न परिचर्य्यां भोक्तुम् अपि तु परि-
चरितुं दातुञ्च स्वप्राणान् निष्क्रयमूल्यं बहूनां विनिमयेन।

अध्याय चतुर्दानम्। यीशो र्यिरूशालेमगमनम्।

२९ अनन्तरं तेषु यिरीहूतो निर्गच्छत्सु महान् जननिवहस्तमन्व-
३० व्रजत्। पश्य च पथपार्श्व उपविष्टौ द्वावन्धौ यीशो र्गमनस्य कथां
श्रुत्वा क्रोशन्तावववदतां, भो प्रभो दायूदस्य पुत्र, आवामनुकम्पतां।
३१ जननिवहस्तावनेन तर्जयन्नब्रवीत्, तूष्णीम्भवतं। तौ त्वधिकतरं
क्रोशन्तावववदतां, भो प्रभो दायूदस्य पुत्र, आवामनुकम्पतां।
३२ यीशुस्तदा तिष्ठंस्तावाहूय पप्रच्छ, किं वाञ्छथः? युवयो र्मया किं
३३ कर्त्तव्यं? तौ तमूचतुः, प्रभो, आवयो र्नेत्राणि यदुद्घाट्येरन् तद्

वाञ्छावः। तदा यीशुः कृपां कृत्वा तयो र्नेत्राणि पस्पर्श, ३४
तत्क्षणात् तौ दृष्टिं प्राप्य तत्पश्चाद् वव्रजतुः॥ २०॥

अनन्तरं तेषु यिरूशालेमस्य समीपमागत्य जैतुनाख्यगिरौ २१ १
स्थितं बैत्फगीनामकं ग्राममुपस्थितेषु यीशुः शिष्यौ द्वौ प्रेषयन्निद-
मादिदेश, युवाममुख्स्थममुं ग्रामं गच्छतं, तत्र तत्क्षणमेवैकां बद्धां २
सवत्सां गर्दभीमामादयिष्यथः, तां मुक्त्वोभौ मदन्तिकमानयतं।
यदि तु कश्चिद् युवां किमपि वदेत्, तर्हि ब्रूतम्, आभ्यां प्रभोः ३
प्रयोजनमस्ति। तेन स तत्क्षणं तौ विस्रक्ष्यति। सर्व्वस्यैतस्य ४
फलमिदं, यद् भाववादिनोक्तं कथा सफलाभूत्, यथा,

यूयं ब्रूत कथामेतां सियोनद्दुहितरं प्रति।
पश्य यस्तव राजासौ नम्रशीलो भवन् तव।
विनीतो गर्द्दभारूढो रासभीशिशुवाहनः॥

अनन्तरं शिष्यौ तौ गत्वा यीशुना यथादिष्टं तथैव कृत्वा तां ६
गर्द्दभीं तस्याः पोतञ्चानिन्यतुः स्ववस्त्राणि च तयो र्निदधाते स ७
च तदुपर्य्युपविवेश। जननिवहस्याधिकांशो मार्गे स्ववसनानि विस्ता- ८
रयामास, अन्ये च पादपानां शाखाश्छित्त्वा पथि व्यस्तारयन्।
अग्रपश्चाद्गामिनश्च बहव उच्चैःस्वरेणाब्रुवन् जय दायूदः पुत्र, प्रभो ९
र्नाम्ना य आयाति स धन्यो भूयात, ऊर्द्ध्वलोके जयध्वनि र्भवतु।
तस्मिंस्तु यिरूशालेमं प्रविष्टे नगरस्य जनाः सर्व्वे वेपमाना अप्रृच्छन्, १०
को ऽसौ? जननिवहास्तवदन्, नासरतनिवासी गालीलीयो भाव- ११
वादी यीशुरसौ।

अनन्तरं यीशुरीश्वरीयं धर्म्मधाम प्रविश्य धर्म्मधाम्नि क्रय- १२
विक्रयकारिणः सर्व्वान् बहिश्चकार, बणिजां मुद्रासनानि कपोत-
विक्रेतृणामासनानि च न्युब्जयामास, जगाद च तान्, लिखितमास्ते, १३

प्रार्थनागृहमित्येव नाम्ना मे ख्यास्यते गृहं।

१४ तत्तु युष्माभिरकारि दस्यूनां गह्वरः। अनन्तरमन्धाः खञ्जाश्च धर्म्म-
१५ धाम्नि तस्यान्तिकम् आगमन् स च तान् निरामयांश्चकार। मुख्य-
याजकाः शास्त्राध्यापकाश्च तालोक्याद्भुतकर्म्माणि तेन क्रियमाणानि
बालकांश्च धर्म्मधाम्नि जय दायूदस्य पुत्रेति वाचम् उदीरयतः
१६ क्रुध्यन्तस्तमूचुः, श्रूयते किं त्वयामी यद् वदन्ति? यीशुस्तु तान्
प्रत्यवादीत्, श्रूयत इति। यूयं किं कदापि नैतत् पठितवन्तो यथा,

स्तन्यपायिशिशूनाञ्च बालकानाञ्च वक्त्रतः। (sic)

१७ अनन्तरं स तांस्त्यक्त्वा गत्वा च नगरस्य वहिःस्थं बैथनियाग्रामं
रजनीं तत्र यापयामास।

१८ प्रभाते तु नगरं गच्छन् सोऽक्षुध्यत्, तत् पथपार्श्व उडुम्बरवृक्षं
१९ दृष्ट्वा स तत्समीपं जगाम, तस्मिंस्तु पत्रेभ्योऽन्यत् किमपि नादृक्षत्,
सोऽतस्तं जगाद, इतः परं कदापि त्वत्तः फलं नोत्पद्यतां। अनेनो-
२० डुम्बरवृक्षः स सद्यः शुष्को जातः। तद् दृष्ट्वा शिष्या आश्चर्य्यं मत्वा-
२१ ऽब्रुवन्, वृक्षोऽसौ कियत्क्षीप्रं शुष्कीभूतः। यीशुस्तान् प्रतिजगाद,
अहं युष्मान् सत्यं ब्रवीमि, यूयं यदि विश्वासमसन्दिग्धं न संशेध्वे,
तर्हि न केवलम् उडुम्बरवृक्षमधि युष्माभिरीदृशं कर्म्म कारिष्यते,
परन्तु त्वमुत्पाट्य समुद्रे निपतेत्यमुं गिरिं प्रति युष्माभिरुक्तेऽपि तत्
२२ सेत्स्यति। तप्यध्वे च सर्व्वं प्रार्थनया विश्वसन्तो यद्यद् याचिष्यध्वे।

यीशो र्यिरूशालेमे शिक्षादानम्।

यीशोरधिकारमधि शिक्षा।

२३ अनन्तरं धर्म्मधाम प्रविश्य स यदोपदेशमददात् मुख्ययाजका
जनानां प्राचीनाश्च तदा तस्यान्तिकमागत्य पप्रच्छुः, केनाधिकारेण
करोषि त्वं कर्म्माण्येतानि? को वा तुभ्यं त्वमधिकारं दत्तवान्?

यीशुस्तु तान् प्रत्यब्रवीत्, युष्मानहमपि कथामेकां पृच्छामि, २४
मह्यं चेत् तदुत्तरं दत्थ, तर्हि केनाधिकारेण सर्व्वमेतत् करोमि,
तदहमपि युष्मान् वदिष्यामि। कुतो योहनस्य स्नापनमुत्पन्नम्? २५
अपि स्वर्गादुत मनुष्येभ्यः? ते तदा परस्परं विचारयन्तोऽवदन् तत्
स्वर्गात्पन्नमित्युक्ते सोऽस्मान् पृच्छति, यूयं तर्हि तस्मिन् किमर्थं न
विश्वसितवन्तः? तत्त मनुष्येभ्य उत्पन्नमित्युक्ते जननिवहाद् भेतव्यं, २६
यतः सर्व्वे योहनं भाववादिनं मन्यन्ते। तत् ते यीशुं प्रत्यवदन्, २७
न जानीमः। सोऽप्यनेन तानवादीत्, नाहमपि युष्मान् ज्ञाप-
यामि करोम्यहं सर्व्वमेतत् केनाधिकारेणेति।

यूयं परं किं मन्यध्वे? कस्यचिन्नरस्य पुत्रौ द्वावास्तां। स २८
तयोरेकस्यान्तिकं गत्वा तं जगाद, वत्स, याहि, कुरु चाद्य कर्म्म मम
द्राक्षाक्षेत्रे। स प्रत्यब्रवीत्, नेच्छामि, पश्चात्तु सोऽनुतप्य जगाम। २९
नरः सोऽन्यतरस्यान्तिकं गत्वा तथैव जगाद। स तं प्रत्यब्रवीत् ३०
यथाज्ञापयतु प्रभो, न तु जगाम। तयो र्द्वयोः कः पितुरभि- ३१
मतमाचरितवान्? ते तं वदन्ति, प्रथमः। यीशुस्तदा तान्
जगाद, युष्मानहं भत्यं ब्रवीमि, शुल्कादायिनो वेश्याश्चेश्वरराज्यं
प्रवेष्टुं युष्माकमग्रगामिनो भवन्ति, यतो योहनो धर्म्ममार्गेण ३२
युष्मदन्तिकमागतवान् यूयं पुनस्तस्मिन् न विश्वसितवन्तः, शुल्का-
दायिनस्तु वेश्याश्च विश्वासं तस्मिन् चक्रिरे। तद्दृष्ट्वा पश्चादपि
यूयं नान्वतप्यध्वं तस्मिन् विश्वसितुं।

गृहस्वामिन्कृषकाणां दृष्टान्तः।

शृणुतापरामेकां दृष्टान्तकथां। गृहस्वामी कश्चिद् द्राक्षालता ३३
रोपयन् द्राक्षोद्यानं कृत्वा वृत्या परिवार्य्य तन्मध्ये द्राक्षामर्द्दनार्थक-
कुण्डं खनित्वाट्टालं निर्म्माय च कृषकेषु करदायिषु समर्प्य देशान्तरं

३४ जगाम। ततः परम् आसन्न फलकाले निजफलांशमादातुं कृषकाणां
३५ समीपं स स्वदासान् प्राहिणोत्। कृषकास्तु तस्य दासान् धृत्वा
३६ तेषामेकं ताडयामासुरन्यं मारयामासुरपरञ्च प्रस्तरैरभ्याजघ्नुः। पुनः
स प्रथमेभ्यस्तेभ्योऽधिकान् अन्यान् दासान् प्राहिणोत्, ते तान्
३७ प्रत्यपि तादृशमाचारं चक्रुः। अतो मत्पुत्रं प्रति ते चपिता भविष्य-
न्तीति बुद्ध्वा स पश्चात् तेषां समीपं स्वपुत्रं प्राहिणोत्। तन्तु दृष्ट्वा
३८ कृषकास्ते परस्परमब्रुवन्, दायहरोऽसौ, तदागच्छत, वयममुं
३९ हनिष्यामस्तस्य दायांशञ्चात्मसात् करिष्यामः। एवमुक्त्वा ते तं धृत्वा
४० द्राक्षोद्यानाद् बहिर्निक्षिप्य जघ्नुः। अतो द्राक्षोद्यानस्य स्वामी
४१ यदायास्यति, स तदा कृषकांस्तान् प्रति किं करिष्यति? ते तं
वदन्ति, स तान् दुर्जनान् दुरन्तं विनाशयिष्यति, समर्पयिष्यति च
स्वद्राक्षोद्यानं तेष्वेव कृषकेषु ये तस्मै यथाकालं फलानि दास्यन्ति।
४२ यीशुस्तदा तानवादीत्, युष्माभिः कदापि किं शास्त्रे न पठितं, यथा

गृहनिर्मातृभि र्लोकै र्यः पाषाणो निराकृतः।
स एव गृहकोणस्थः प्रमुख्यः प्रस्तरोऽभवत्।
परमेशस्य कर्म्मेदम् अस्मद्दृष्टौ तदद्भुतम्॥

४३ अतोऽहं युष्मान् ब्रवीमि, ईश्वरस्य राज्यं युष्मत्तोऽपहारिष्यते,
दायिष्यते च तदन्यस्यै जात्यै या तदुपयुक्तैः फलैः फलवती भविष्यति।
४४ प्रस्तरेऽस्मिन् यस्तु पतिष्यति स खण्डशो भग्नो भविष्यति, प्रस्तरश्चायं
४५ यस्मिन् पतिष्यति तं सञ्चूर्णयिष्यति। तास्तस्य दृष्टान्तकथाः
श्रुत्वा मुख्ययाजकैः फिरूशिभिश्चाबोधि यदयमस्मानधि कथयतीति।
४६ तं पुन र्धर्त्तुं यतमानास्ते जननिवहेभ्यो बिभ्युः, यतस्ते तं भाववा-
दिनममन्यन्त॥ २१॥

विवाहभोजनदृष्टान्तः।

तदुत्तरं यीशुरिदं पुनस्तेभ्यो दृष्टान्तैः कथयामास, स्वर्ग- **२२** १
राज्यं राज्ञा तेन सदृशं यः स्वपुत्रस्योद्वाहोत्सवं चकार, नरांश्च निम- २
न्त्रितान् उद्वाहोत्सवायाह्वातुं स्वदासान् प्राहिणोत्। ते त्वागन्तु- ३
मभवन्न सम्मताः। स पुन र्दासानपरान् प्रेषयन्निदमादिदेश, यूयं ४
नरांस्तान् निमन्त्रितान् वदत, पश्यत, पूर्व्वाह्णिकं भोज्यं मम
सज्जीकृतं, पशवश्च पुष्टा गवादयो मारिताः, सर्व्वमेव प्रस्तुतं।
यूयमुद्वाहोत्सवमायातुमर्हथ। ते त्ववहेलयन्तः स्वक्षेत्रमेकः स्वबा- ५
णिज्यं वापरो जगाम, शेषाश्च दूतांस्तस्य धृत्वा न्यक्कारपूर्व्वकं जघ्नुः। ६
तच्छ्रुत्वा राजा स प्रकुप्य स्वबलानि प्रहित्य घातकांस्तान् नाशया- ७
मास नगरञ्च तेषां दाहयामास। ततः स स्वदासान् व्याजहार, ८
उद्वाहः सज्जीकृतो निमन्त्रितास्तु पुनरयोग्या आसन्। यूयम- ९
तस्तावत उद्वाहोत्सवायाह्वयत राजमार्गाणां संयोगस्थानानि गत्वा
यावतो यूयं द्रक्ष्यथ। ततो दासास्ते राजमार्गान् गत्वा दुर्जनान् १०
सुजनांश्च यावत आसादयन् तावतः समानिन्युः। तेनोद्वाहगृहं
जनैः समासीनैः पूर्णमभूत्। राजा तदा भोज्योपविष्टान् मनुष्यान् ११
निरीक्षितुं प्रविश्योद्वाहवसनहीनं जनमेकं तत्र दृष्ट्वा पप्रच्छ मित्र १२
उद्वाहवसनविहीनस्त्वं कथमेतत् स्थानं प्रविष्टः? अनेन स निर्वाक्
जातः। राजा तदा परिचारकान् जगाद, यूयमस्य चरणौ हस्तौ १३
च बद्धीत धृत्वा चैनं बहिःस्थे तिमिरे निक्षिपत तत्र रोदनं दन्तै
र्दन्तघर्षणञ्च भविष्यतः। वास्तवं आहूता बहवः स्वल्पे तु वरिताः। १४

यीशुना शत्रूणां कतिपयप्रश्नानां उत्तरदानम्।

फरीशिभि र्गत्वा तदा मन्त्रयाञ्चक्रे कथं स वाक्पाशेन निबध्यत १५
इति। ततस्ते स्वशिष्यान् हेरोदीयैः सहितान् तस्यान्तिकं प्रेषया- १६

माहुः। त ऊचुः, भो गुरो, वयं जानीमो यद् भवान् सत्यवान्
सत्येनेश्वरस्य पन्थानं शिक्षयति च, कस्मादपि न बिभेति, यतो भवान्
१७ मनुष्याणां मुखापेक्षां न करोति, अतो भवानस्मान् वक्तुमर्हति किं
मन्यते भवान् कैसराय करदानं विधेयं न वेति। यीशुस्तु तेषां
१८ दुष्टतां ज्ञात्वा जगाद, किमर्थं मां परीक्षध्वे कपटिनः? करदानस्य
१९ मुद्रामेकां मां दर्शयत। तैस्त्वेकस्मिन्नानीते दीनारे स तान् जगाद,
२० कस्येयं मूर्त्तिरिदं लेखनञ्च? ते तं वदन्ति, कैसरस्य। तदा स
२१ तानब्रवीत्, दत्त तर्हि कैसराय यद्यत् कैसरस्य, दत्त चेश्वराय
२२ यद्यदीश्वरस्य। श्रुत्वैतत्त आश्चर्य्यं मेनिरे तं विहाय च प्रतस्थिरे।
२३ दिने तस्मिन् पुनरुत्थानमनङ्गीकुर्व्वाणाः सद्दूकिनस्तस्यान्तिक-
२४ मागत्य तमूचुः, भो गुरो, मोशिनादिष्टं यो निःसन्तानो म्रियते,
२५ तस्य भ्राता तद्भार्य्यामुद्वह्य स्वभ्रात्रे वंशमुत्पादयिष्यतीति। अस्माकं
मध्ये तु सप्त भ्रातर आसन्, प्रथमो विवाहं कृत्वा ममार,
२६ निःसन्तानत्वाच्च स्वभार्य्यां भ्रातुः कृते तत्याज। ततः परं द्वितीयस्य
२७ तृतीयस्य चैवं सप्तानामेव तादृशी गति र्बभूव। सर्व्वेषां पश्चाद्
२८ योषित् सापि ममार। अतः पुनरुत्थाने सा तेषां सप्तानां कस्य
२९ भार्य्या भविष्यति? यतस्ते सर्व्व एव तामुदूढवन्तः। यीशुस्तदा
तान् प्रत्यवादीत्, यूयं शास्त्राणीश्वरस्य शक्तिञ्च न जानीथ हेतोरतो
३० भ्राम्यथ। यतः पुनरुत्थाने मनुष्या नोद्वहन्ति नोद्वाह्यन्ते वा,
३१ प्रत्युतेश्वरस्य दूता इव स्वर्गे वर्त्तन्ते। न पठितं भो मृतानां
३२ पुनरुत्थानमधि युष्मभ्यमीश्वरेण कथितमिदं वाक्यं, यथा, अब्राहा-
मस्येश्वर इस्हाकस्य चेश्वरो याकोबस्य चेश्वरोऽहमिति। ईश्वरो न
३३ मृतानाम्, अपि तु जीवताम् ईश्वरोऽस्ति। श्रुत्वेदं जननिवहास्तस्य
शिक्षां चमत्कारं मेनिरे।

फरीशिनस्तु सदूकिनां तेन निरुत्तरीभवनम् अवगत्यैकत्र समा- ३४
जग्मुः, तेषां मध्ये चैको व्यवस्थावेत्ता परीक्षमाणस्तं पप्रच्छ, भो ३५
गुरो, व्यवस्थायाः काज्ञा महती? यीशुस्तमब्रवीत्, त्वं कृत्स्नान्तः- ३६
करणेन कृत्स्नप्राणैः कृत्स्नचित्तेन च स्वेश्वरे प्रभौ प्रेम कुर्वितीयं ३७
प्रथमा महती चाज्ञा। द्वितीया चास्याः सदृशी, यथा त्वम् ३८
स्वनिकटस्थे आत्मवत् प्रेम कुर्विति। आज्ञयोर्द्वयोरेतयोः कृत्स्ना ३९
व्यवस्था भाववादिनश्च समालम्बन्ते। ४०

यीशोः शत्रूणां निर्वाक्त्वम्।

ततः समेतेषु फरीशिषु यीशुस्तान् पप्रच्छ, ख्रीष्टमधि ४१
युष्माभिः किं मन्यते? कस्य पुत्रः सः? ते तं वदन्ति दायूदस्येति। ४२
स तान् ब्रवीति, आत्मन आवेशाद् दायूदेन कथं स तर्हि प्रभुरि- ४३
त्यभिधीयते? यथा,

मम प्रभुमिदं वाक्यं बभाषे परमेश्वरः। ४४
त्वच्छत्रून् पादपीठं ते यावन्नहि करोम्यहं।
अवतिष्ठस्व तावत् त्वम् आसीनो मम दक्षिणे॥

तद् यदि स दायूदेन प्रभुरित्यभिधीयते, कथं तर्हि स तस्य पुत्रो ४५
भवेत्? एतस्योत्तरे केनापि वाक्यमेकं वक्तुं नाशक्यत, नाभवच्च ४६
तद्दिनादारभ्य साहसं कस्यापि तं किमपि प्रष्टुं॥ २२॥

फरीश्यध्यापकान् प्रति यीशोराक्षेपः।

यीशुस्तदा जननिवहेभ्यः स्वशिष्येभ्यश्च कथयामास, शास्त्रा- **२३** १
ध्यापकाः फरीशिनश्च मोशेरासनोपविष्टाः, अतः पालयतानुतिष्ठत २
च यद्यद् युष्मांस्ते पालनीयं वदन्ति। मा पुनः कुरुत तेषां ३
क्रियानुरूपं, यतस्ते वदन्ति न त्वनुतिष्ठन्ति। वस्तुतस्ते भारान् ४
गुरून् दुर्वहांश्च बद्धा स्कन्धेषु मनुष्याणामर्पयन्ति स्वयं तांस्त्वङ्गु-

५ ख्यापि सारयितुं नाङ्गीकुर्वते। स्वकर्म्माणि सर्व्वाणि ते लोकदर्श-
नायैव कुर्व्वन्ति, कुर्व्वन्ति च पृथून् स्वपट्टबन्धान् सुदीर्घाणि च
६ स्ववसनानां प्रलम्बकानि। आकाङ्क्षन्ति च ते भोज्येषु श्रेष्ठस्थानानि
७ समाजगृहेषु श्रेष्ठासनानि हट्टेष्वभिवन्दनानि मनुष्यैश्च भो रब्बिन्
८ भो रब्बिन्नित्यभिभाषणम्। यूयन्तु रब्बिनिति माभिभाष्यध्वं, यतो
९ युष्माकं गुरुरेक एव ख्रीष्टः, यूयं सर्व्वे मिथो भ्रातरः। कमपि च
मेदिन्यां भो पितरिति माभिभाषध्वं यतः पिता युष्माकमेक एव
१० स स्वर्गवासी। मनुष्यैराचार्य्या इति माभिभाष्यध्वं, यतो युष्माक-
११ माचार्य्य एक एव ख्रीष्टः। युष्माकं मध्ये यस्य महत्तमः स युष्माकं
१२ परिचारको भविष्यति। यस्त्वात्मानम् उच्चीकरिष्यति स नीचीका-
रिष्यते, यश्चात्मानं नीचीकरिष्यति स उच्चीकारिष्यते।
१३ अरे कपटिनः शास्त्राध्यापकाः फरीशिनश्च, यूयं सन्तापभाज-
नानि, यतो यूयं मनुष्येभ्यः स्वर्गराज्यस्य द्वारं रुन्ध, यूयं पुन र्न
१४ प्रविशथ, प्रविशतस्तु प्रवेशान्निवारयथ। अरे कपटिनः शास्त्राध्या-
पकाः फरीशिनश्च यूयं सन्तापभाजनानि, यतो यूयं विधवानां
गृहाणि ग्रसथ छलाच्च सुदीर्घं प्रार्थयध्वे। तल्लप्स्यध्वे विचारे गुरुतरं
१५ दण्डं। अरे कपटिनः शास्त्राध्यापकाः फरीशिनश्च, यूयं सन्ताप-
भाजनानि, यतो यूयं सागरं स्थलञ्च परिभ्राम्यथ कर्त्तुं मनुष्यमेकं
यिहूदिमतावलम्बिनम्, कुरुथ च तं नारकिणं युष्मत्तो द्विगुणं
१६ यस्तदवलम्बी भवति। अरे अन्धाः पथप्रदर्शका यूयं सन्तापभाज-
नानि, यूयं हि वदथ, यो मन्दिरेण शपते नानुष्ठेयं तेन किमपि,
१७ यस्तु सुवर्णेन मन्दिरस्थेन शपते स ऋणी। अरे मूढा अन्धाश्च,
१८ महत् कतरं, सुवर्णम् अथवा सुवर्णस्य पावकं मन्दिरं? वदथ च,
यो यज्ञवेद्या शपते नानुष्ठेयं तेन किमपि, यस्तूपहारेण तदुपरि-

स्थेन शपते स ऋणी। अरे मूढा अन्धाश्च, महत् कतरं, उप- १९
हारोऽथवोपहारस्य पाविका यज्ञवेदी? यो हि यज्ञवेद्या शपते, २०
शपते स तया सर्व्वेण च तेन तदुपरि यद्यदास्ते। यश्च मन्दिरेण २१
शपते, शपते हि स तेन तन्निवासिना च। यश्च स्वर्गेण शपते, २२
शपते च स ईश्वरस्य सिंहासनेन तदासीनेन च। अरे कपटिनः २३
शास्त्राध्यापकाः फरीशिनश्च, यूयं सन्तापभाजनानि, यतो यूयं
पोदिनायाः सितच्छत्रायाः जीरकस्य च दशमांशान् उपहरथ, परि-
त्यक्तवन्तस्त्वेतान् व्यवस्थाया गरीयसोऽंशान् विचारो दया विश्वा-
सश्च। आसन्निमे युष्माभिरनुष्ठातव्या अमी च न त्यक्तव्याः। अरे २४
अन्धाः पथप्रदर्शका यूयं पानीये परिस्रावयन्तो मशकमपसारयथ
महाङ्गन्तु निगिलथ। अरे कपटिनः शास्त्राध्यापकाः फरीशिनश्च, २५
यूयं सन्तापभाजनानि, यतो युष्माभिः पानपात्रस्य स्थालस्य च वहिर्देशः
शुचीक्रियते, अन्तस्तु ते परस्वापहारेणाजितेन्द्रियत्वेन च परिपूर्णा
स्तः। अरे अन्ध फरीशिन् प्रथमं पानपात्रस्य स्थालस्य चान्तर्देशं शुची- २६
कुरु, तथा कृते वहिर्देशोऽपि तयोः शुचि र्भविष्यति। अरे कपटिनः
शास्त्राध्यापकाः फरीशिनश्च, यूयं सन्तापभाजनानि, यतो यूयं सुधा- २७
धवलितैः शवागारैः सदृशा यानि वहिश्चारूणि प्रतिभान्ति, सन्त्यन्तस्तु
शवानाम् अस्थिभिः सर्व्वविधैरपद्रव्यैश्च परिपूर्णानि। तानीव यूयमपि
वहि र्मनुष्येभ्यो धार्म्मिकाः प्रतिभाथ, अन्तस्तु कापट्येनाधर्म्मेण च पूर्णाः २८
स्थ। अरे कपटिनः शास्त्राध्यापकाः फरीशिनश्च, यूयं सन्तापभा- २९
जनानि, यतो यूयं भाववादिनां शवागाराणि निर्म्मिमीध्वे धार्म्मिका-
णाञ्च समाधिस्थानान्युपशोभयथ, वदथ च, वयं चेत् स्वपूर्व्व- ३०
पुरुषाणां कालेऽवेत्स्यामहि, नाभविष्याम वयं तर्हि तैः सहभागिनो
भाववादिनां शोणितपातने। एवमेव, यूयं यद् भाववादिघातकानां ३१

३२ पुत्राः स्थ युष्मानधि तस्य साक्ष्यं यूयमेव दत्थ। यूयमपि स्वपूर्व्वपुरुषाणां
३३ परिमाणं पूरयत। अरे सर्पाः कालसर्पाणामात्मजाः, विचारे कथं
यूयं नरकदण्डान्निस्तरीतुं शक्यथ?
३४ तत् पश्यत यूष्मदन्तिकमहं भववादिनो विज्ञवरान् शास्त्रा-
ध्यापकांश्च प्रेषयितुमुद्यतोऽस्मि। तेषां मध्यात् केचिद् युष्माभि-
र्घानिष्यन्ते क्रुशमारोपयिष्यन्ते च, केचिच्च तेषां युष्माभिः स्वस-
माजगृहेषु कषाभिराघानिष्यन्ते केचिच्च नगरान्नगरं प्रद्रावयिष्यन्ते।
३५ इत्थं धार्म्मिकस्य हेबलस्य शोणितमारभ्य मन्दिरवेद्योरन्तराले युष्म-
द्धतस्य बेरिखियसुतस्य सखरियस्य शोणितं यावद् धार्म्मिकशोणितं
३६ भूतले यावदेव सिक्तमभूत्, युष्मासु तत्साकल्येन वर्त्तितव्यं। युष्मा-
३७ नहं सत्यं ब्रवीमि, जनेष्वधुनातनेषु तत् सर्व्वं वर्त्तिष्यते। हा
यिरूशालेम्, हा यिरूशालेम्, हा भाववादिनां हन्त्रि नराणां
त्वत्समीपं प्रहितानां प्रस्तराघातिनि पुरि, पक्षयोरधः स्वशावकान्
सङ्गृह्णन्ती कुक्कुटीवाहं कतिकृत्वस्तव शावकान् सङ्ग्रहीतुं वाञ्छित-
३८ वान्, यूयन्तु न सम्मताः। पश्यत युष्माकं भवनं युष्मत्कृते उत्सन्नं
३९ विहीयते। यतोऽहं युष्मान् ब्रवीमि, यावद् यूयं न वदिष्यथ, धन्यः स
यः प्रभोर्नाम्नायातीति, इतः परं तावन्मां न पुन र्द्रक्ष्यथ॥ २३॥

यिरूशालेमस्य विनाशं यीशोः पुनरागमनञ्चाधि भविष्यद्वाक्यम्।

२४ १ अनन्तरं यीशु र्यदा निष्क्रम्य धर्म्मधामतोऽपागच्छत्, तस्य
शिष्यास्तदा तं धर्म्मधाम्नो निर्म्माणप्रकारान् दर्शयितुं समीपम्
२ आगमन्। यीशुस्तु तान् जगाद, न दृश्यन्ते किं युष्माभिरेतानि
सर्व्वाणि? युष्मानहं सत्यं ब्रवीमि, अत्र प्रस्तरोपरि प्रस्तर एकोऽ-
प्यनिपातयितव्यो न विहायिष्यते।

अनन्तरं शिष्यास्तस्य जैतुनगिरावुपविष्टस्य समीपं गुप्तमागत्य

जगदुः, वक्तुमर्हत्यस्मान् भवान्, कदा तत् सम्भविष्यति किं वाभि
ज्ञानं भवतश्चोपस्थित्या युगान्तस्य चेति। यीशुस्तदा तान् प्रत्य- ४
वादीत्, सावधानास्तिष्ठत, युष्मान् कोऽपि मा प्रतारयतु, यतो ५
बहवो मन्नामध्वजिन आगत्य वदिष्यन्त्यहं ख्रीष्ट इति प्रतारयि-
ष्यन्ति च बहून्। कथाश्च यूयं युद्धानां युद्धस्य किंवदन्तीश्च श्रोष्यथ। ६
सावधानास्तिष्ठत, मैवोद्विजध्वं, यतः सर्व्वैरेतेन भवितव्यं, परिणामस्तु
नापि तदा। वस्तुतो जाति र्जाते विरुद्धं राज्यञ्च राज्यस्य विरुद्ध- ७
मुत्थास्यति, भविष्यन्ति च स्थाने स्थाने दुर्भिक्षमारीभूकम्पाः।
उपक्रमः पुनर्यातनानां सर्व्वमेतत्। ८

मानवास्तदा क्लेशभोगाय युष्मान् समर्पयिष्यन्ति युष्मान् ९
मारयिष्यन्ति च, द्वेक्ष्यध्वे च यूयं सर्व्वजातिभि र्मन्नामकृते।
तदानीं पुन र्बहवः स्खलिष्यन्ति, एकोऽन्यं समर्पयिष्यति विद्वेक्ष्यति १०
च। कूटभाववादिनो बहवश्चोत्थास्यन्ति बहून् प्रतारयिष्यन्ति च। ११
अनुष्णं भविष्यति च बहुतराणां प्रेमाधर्म्मप्राचुर्य्यात्। यस्त्वन्तं यावत् १२
स्थिरः स्थास्यति स तरिष्यति। सुसंवादश्च राज्यस्यायं घोषयिष्यते १३
कृत्स्ने भूमण्डले साक्ष्यार्थं सर्व्वजातीनां कृते। तदानीं पुनरुपस्था- १४
स्यते परिणामः।

अतो यूयं यदा भाववादिना दानीयेलेन कथितं ध्वंसकारि १५
घृण्यवस्तु स्थाने पवित्रे संस्थितं द्रक्ष्यथ—पाठको बुध्यतां—तदा ते १६
पलाय्य गिरीम् आश्रयन्तां ये यिहूदियायां विद्यन्ते, नावरोहतु स १७
स स्वगेहात् किमप्यादातुं यो गृहपृष्ठे विद्यते, स च न स्ववासां- १८
स्यादातुं प्रत्यावर्त्ततां यः क्षेत्रे विद्यते। भविष्यन्ति च दिनेषु तेषु १९
गर्भिण्यः स्तन्यदायिन्यश्च सन्तापभाजनानि। तथा च प्रार्थयध्वं २०
युष्माकं पलायनं यथा शीतकाले विश्रामवारे वा न भवेत्। यत- २१

तदा महाक्लेशो यादृशः सम्भविष्यति, आजगदारम्भाद् अद्य यावत्
२१ तादृशो न सम्भूतो नापि कदा सम्भविष्यति। दिनानि तानि च
चेन्न न्यूनकारिष्यन्त मर्त्त्यः कोऽपि तर्हि नातरिष्यत्। न्यूनीकारि-
ष्यन्ते तु दिनानि तानि वरितजनानां कृते।
२३ तदा च मा विश्वसित यूयमुक्ता अपि केनचित् पश्य ख्रीष्टोऽत्र
२४ वामुत्र विद्यत इति। यतः कूटख्रीष्टाः कूटभाववादिनश्चोत्थास्यन्ति,
प्रदर्शयिष्यन्ति च ते महाभिज्ञानान्यद्भुतलक्षणानि च तादृशानि
यैः साध्ये सति ते वरितानपि मनुष्यान् पथभ्रष्टान् करिष्यन्ति।
२५ पश्यत युष्मानहं पूर्व्वमेवोक्तवान्। तत् पश्य स मरौ विद्यत इति
२६ कथिते जनै र्युष्मभ्यं यूयं मा निर्गच्छत, पश्य वा सोऽन्तःपुरे विद्यत
२७ इति कथिते मा विश्वसित। यतो मनुष्यपुत्रस्यागमनं तथैव
भविष्यति क्षणप्रभा यथा पूर्व्वदिश उदेत्य पश्चिमदिशं यावत्
२८ प्रकाशते। यत्र हि कुणपं गृध्रास्तु तत्र समागमिष्यन्ति।
२९ तेषान्तु दिनानां क्लेशाद् अव्यवहितपरं सूर्य्यः सान्धकारो
भविष्यति, चन्द्रश्च ज्योत्स्नां न प्रदास्यति, नक्षत्राणि च नभसः
३० पतिष्यन्ति गगनस्य बलानि च विचलिष्यन्ति। तदा व्योम्नि
मनुष्यपुत्रस्याभिज्ञानं प्रकाशिष्यते। तदा गोष्ठ्यश्च सर्व्वा देशस्थाः
शोकेन स्ववक्षांस्याहनिष्यन्ति, निरीक्षिष्यन्ते च पराक्रमेण महाप्रतापेन
३१ च परीतमाकाशीयमेघरथेनागच्छन्तं मनुष्यपुत्रम्। स च तूर्य्यध्वनिना
महानिनादेन सहितान् स्वदूतान् प्रहेष्यति, ते च गगनस्यैक-
प्रान्तमारभ्यापरप्रान्तं यावच्चतुर्भ्यो वायुभ्यो मनुष्यांस्तस्य वरितान्
समानेष्यन्ति।
३२ उडुम्बरवृक्षाद् दृष्टान्तं शिक्षितुमर्हथ। स्पष्टं यदा तस्य शाखा
जायते कोमला पत्राणि च विकाशन्ते, जानीथ यूयम् आसन्नस्तदा

ग्रीष्मकाल इति । तथैव यदा यूयं सर्व्वमेतद् द्रक्ष्यथ, ज्ञास्यथ तदा ३३
स समीपस्थो द्वार उपस्थितश्चेति । युष्मानहं सत्यं ब्रवीमि, यावत् ३४
सर्व्वमेतन्न सम्भवति, तावन्न व्यत्येष्यन्ति मानवा एतत्कालिकाः ।
द्यावापृथिव्यावत्येष्यतः, मम वाक्यानि तु नैवात्येष्यन्ति । ३५

दिनस्य तस्य तु दण्डस्य च तस्य तत्त्वं कोऽपि न जानाति, स्वर्गीय- ३६
दूता अपि न जानन्ति, जानाति तन्मम पिता केवलः । वास्तवं हि ३७
नोहस्य काले यादृशमासीत् मनुष्यपुत्रस्यागमनेऽपि तादृशं भवि-
ष्यति । फलतो महावन्यायाः प्राक्तनेषु दिवसेषु पोते नोहस्य ३८
प्रवेशदिनं यावद् आसन्निविष्टा यथा मानवा भोजने पाने च विव-
हने विवाहने च नाजानंश्च तावद् वन्ययोपस्थाय यावत् सर्व्वं न ३९
समह्रियन्त, तादृशमेव भविष्यति मनुष्यपुत्रस्यागमने । नरयो र्द्वयो- ४०
स्तदा क्षेत्रे तिष्ठतोरेकतरो ग्राहिष्यतेऽन्यतरः परित्यक्ष्यते । योषितो ४१
र्द्वयोः पेषणीं नियुक्तयोरेकतरा ग्राहिष्यतेऽन्यतरा परित्यक्ष्यते ।

अतो यूयं जाग्रत, यतो यूयं न जानीथ दण्डे कस्मिन् युष्माकं ४२
प्रभुरायातीति । जानीत परन्त्विदं यद् यदि गृहस्वाम्यज्ञास्यद् ४३
आयाति चौरः कस्मिन् याम इति, स तर्ह्यजागरिष्यत् कुड्यभेदञ्च
स्वगेहस्य नासहिष्यत । तद् यूयमपि सज्जास्तिष्ठत, यत आयास्यति ४४
मनुष्यपुत्रस्तस्मिन्नेव दण्डे दण्डो यो युष्माभिर्नानुभूयते ।

को नु खलु स विश्वस्तो बुद्धिमांश्च दासो यो यथासमये ४५
भृत्येभ्यो भक्ष्यवितरणाय स्वामिना स्वभृत्येष्वधिकृतः? धन्यः स ४६
दासः स्वामी यमागमनकाले तथैवाचरन्तमासादयिष्यति । अहं ४७
युष्मान् सत्यं ब्रवीमि स तं कृत्स्ने सर्व्वस्वेऽधिकरिष्यति । मम स्वामी ४८
त्वागन्तुं विलम्बत इति मनसि ध्यात्वा दासः स दुष्टो यदि सहदा- ४९
सान् ताडयितुं प्रमत्तैश्च सह भोक्तुं पातुञ्च प्रवर्त्तते स तर्हि दिने ५०

यस्मिन् नापेक्षते दण्डञ्च यं स न जानाति तद्दैव दासस्य स्वामी
५१ तस्योपस्थाय तं द्विधाकरिष्यति भागञ्च तस्य कपटिभिः सार्द्धं
निरूपयिष्यति। तत्र रोदनं दन्तै र्दन्तघर्षणञ्च सम्भविष्यतः॥२४॥

विचारदिनमधि दृष्टान्तः शिक्षा च।

२५ १ स्वर्गराज्यं तदा भविष्यति सदृशं दशकन्याभि र्याः स्वप्र-
२ दीपान् आदाय वरं प्रत्युद्गन्तुं निरिताः। तासां मध्यादासन् पञ्च
३ बुद्धिमत्यः पञ्च च बुद्धिहीनाः। यास्तु बुद्धिहीनास्ताः स्वप्रदीपान्
४ आदाय स्वसार्द्धं तैलं नाददिरे। बुद्धिमत्यस्तु पुनः पात्रेषु तैलं
५ निधाय स्वप्रदीपैः सहाददिरे। विलम्बमाने तु वरे निद्रालुतां
६ गत्वा सर्व्वा एव प्रसुषुपुः। अर्द्धरात्रे त्वयम् उच्चध्वनि र्बभूव, पश्य-
७ तायाति वरो यूयं तत्प्रत्युद्गमनाय निर्गच्छत। कन्यास्तास्तदा सर्व्वा
८ उत्थाय स्वप्रदीपान् संस्चक्रुः। बुद्धिहीनास्तदा बुद्धिमती र्जगदुः,
९ दत्तास्मभ्यं किञ्चिद् युष्मदीयतैलाद् यतो निर्वायन्त्यस्माकं
प्रदीपाः। बुद्धिमत्योऽनेन प्रतिजगदुः, नैवं कर्त्तव्यम्। न पर्य्याप्तं
भविष्यति तदस्माकञ्च युष्माकञ्च कृते। क्रीणीत वरं यूयं विक्रे-
१० तॄणां समीपं गत्वा स्वार्थं। तास्तु क्रयार्थं यावदपगच्छन्ति वरस्तावद्-
पतस्थे, याः सज्जीकृतास्ताश्च तेन सह विवाहोत्सवीयगृहं प्रविविशु
११ द्वारञ्च रुरुधे। ततः परम् अन्यास्ताः कन्या आगत्य जगदुः, प्रभो
१२ प्रभो, मोचयतु द्वारमस्मत्कृते। स तु प्रतिबभाषे, युष्मानहं सत्यं
१३ ब्रवीमि नाहं जाने युष्मान्। अतो यूयं जागृत, यतो यूयं दिवसं
तं दण्डञ्च तं न जानीथ, आयाति यदा मनुष्यपुत्रः।

१४ फलतः स नरेण तेन सदृशः, यो विदेशगमनार्थं यात्राकाले
१५ निजदासान् आहूय स्वसम्पत्तिं तेषु समार्पयत्। स एकस्मै गोणीः
पञ्च मुद्रापूर्णा अपरस्मै गोण्यौ द्वे, अन्यस्मै गोणीमेकामित्थं यस्य

यथासामर्थ्यं तस्मै तदनुरूपमर्थं ददौ ततश्च तूर्णं प्रतस्थे। ततो १६
लब्धा येन मुद्रागोण्यः पञ्च स ताभि र्वाणिज्यं कुर्व्वन्नपराः पञ्च
गोणीरुपार्ज्जयामास। लब्धे येन गोण्यौ द्वे स तथैवापरं गोणीद्वय- १७
मुपार्ज्जयामास। लब्धा तु येनैका गत्वा स भूमिं खनित्वा स्वप्रभो १८
र्मुद्रास्तत्र न्यगूहत्। काले दीर्घेऽतीते दासानां तेषां प्रभुरागत्य १९
तैः सह गणयति। लब्धा येन गोण्यः पञ्च स तदोपस्थायापराः पञ्च २०
गोणीः पञ्चानीय व्याजहार, प्रभो समर्पिता भवता मयि गोण्यः
पञ्च। पश्यतु ताभिर्मयापरा गोण्यः पञ्चोपार्जिताः। तस्य स्वामी २१
तं जगाद, साधु भद्र विश्वस्त दास, आसीस्त्वं स्वल्पेषु विश्वस्तः,
बहुषु मयाधिकारिष्यसे, गत्वाभ्यन्तरं भव भागी स्वप्रभोरानन्दस्य।
अनन्तरं लब्धे येन गोण्यौ द्वे सोऽप्युपस्थाय व्याजहार, प्रभो २२
समर्पिते भवता मयि गोण्यौ द्वे, पश्यतु ताभ्यां मयापरं गोणी-
द्वयमुपार्जितं। तस्य स्वामी तं जगाद, साधु भद्र विश्वस्त दास, २३
आसीस्त्वं स्वल्पेषु विश्वस्तः बहुषु मयाधिकारिष्यसे। गत्वाभ्यन्तरं
भव भागी स्वप्रभोरानन्दस्य। ततः परं लब्धा येन गोण्येका, २४
सोऽप्युपस्थाय व्याजहार, प्रभो भवान् नरः कठोरः, नोप्तवान् यत्र
वीजानि छिनत्ति तत्र शस्यं, न यत्र विकीर्णवान् सञ्चिनोति तत्र,
अतोऽहं भीतो गत्वा भूमौ गोणीं भवतो गूढवान्, पश्यतु यद् २५
भवतस्तद् गृह्णातु। तस्य स्वामी तु प्रतिगदन् तमब्रवीत् रे दुष्ट २६
मन्द दास, त्वयेदं भो न्वज्ञायि यन्मया नोप्तानि यत्र वीजानि
छिद्यते तत्र शस्यं, न यत्र विकीर्णं सञ्चीयते तत्रेति? तथा सति २७
आसंस्त्वया मदीयमुद्रा वणिक्ष्वर्पयितव्याः, तथा कृतेऽहमेवोपस्थाय
निजस्वं मम सवृद्धि आदायिष्यं। अतो यूयं गोणीं तामस्माद् २८
अपहृत्य दशगोणीनाम् अधिकारिणे दत्त। यतो यस्य कस्यचिद् २९

आस्ते तस्मै दायिष्यते तस्य च प्राचुर्य्यं भविष्यति, यस्य तु नास्ते
३० तस्य यदस्ति तदपि तस्माद् अपहारिष्यते। दासं परन्त्विमम्
अनुपयोगिनं तिमिरे बहिःस्थे निक्षिपत, तत्र रोदनं दन्तै र्दन्त-
घर्षणञ्च सम्भविष्यतः।

३१ यदा तु स्वप्रतापान्वितो मनुष्यपुत्रः सहितः सर्व्वैं र्दूतैः पवित्रै-
३२ रागमिष्यति, स तदा स्वप्रतापसिंहासन उपवेक्ष्यति जातयश्च सर्व्वा-
स्तस्य समक्षम् एकत्रीकारिष्यन्ते। यथा च पालरक्षकः पृथक् करोति
३३ मेषेभ्यश्छागान्, स तथा विभज्य मनुष्यांस्तान् पृथक् करिष्यति,
३४ स्थापयिष्यति च मेषान् स्वदक्षिणे छगान् स्ववामे। ततः परं राजा
वदिष्यति स्वदक्षिणे स्थितान्, भो मत्पितुराशीर्वादभाजनान्यायात,
३५ दायवद् भुङ्क्त राज्यमुपकल्पितं युष्मदर्थमाजगत्स्थापनात्। यतो
मयि क्षुत्क्षामे यूयं मह्यं भक्ष्यम् अदत्त, तृषातुरे माम् अपाययत,
३६ अतिथौ माम् अन्वगृह्णीत, विवस्त्रे मां वासांसि पर्य्यधापयत,
३७ अस्वस्थं मां पर्य्यपश्यत, कारानिहिते माम् अभ्यागच्छत। धार्म्मिकास्ते
तदा तं प्रतिभाषिष्यन्ते, प्रभो दृष्टो वा कदा भवान् अस्माभिः
क्षुत्क्षामो भक्ष्येण तर्पितश्च? दृष्टो वा कदा तृषातुरः पायितश्च?
३८ दृष्टो वा कदा भवान् अतिथिरस्माभिरनुगृहीतश्च? दृष्टो वा कदा
३९ विवस्त्रो वासांसि परिधापितश्च? लक्षितो वा कदा भवान् अस्वस्थः
४० कारानिहितो वास्माभिः परिदृष्टश्च? राजा तांस्तदा प्रतिवदिष्यति,
युष्मानहं सत्यं ब्रवीमि, भ्रातॄणां ममैतेषां क्षोदिष्ठानाम् एकं प्रति
४१ युष्माभि र्यावद् अकारि तावन्मां प्रत्यकारि। ततः परं स वामे
स्थितानपीत्थम् आलपिष्यति, रे शप्ता यूयं मत्तो दूरमपगच्छता-
नन्तम् अग्निम् उपकल्पितं दियावलस्य तदीयदूतानाञ्च कृते।
४२ यतो मयि क्षुत्क्षामे यूयं मह्यं भक्ष्यं नादत्त, तृषातुरे मां नापा-

ययत, अतिथौ मां नान्वगृह्णीत, विवस्त्रे मां वासो न पर्य्यधापयत, ४३
अस्वस्थे कारानिहिते वा मां न पर्य्यपश्यत। तेऽपि तदोत्तरं कृत्वा ४४
तं गदिष्यन्ति, प्रभो, कदा वा भवन्तं क्षुत्क्षामं वा तृषातुरं वातिथिं
वा विवस्त्रं वास्वस्थं वा कारानिहितं वा दृष्ट्वास्माभि र्भवतः परि-
चर्य्या न कृता? स तांस्तदा प्रतिभाषिष्यते, युष्मानहं सत्यं ब्रवीमि, ४५
युष्माभिः चोदिष्टानामेतेषाम् एकं प्रति यावन्नाकारि तावन्मामेव
प्रति नाकारि। ततोऽपगमिष्यन्तीमे दण्डं भजितुमनन्तं धार्म्मिका- ४६
स्त्वनन्तं जीवनम्॥ २५॥

यीशोः शेषदुःखभोगागमनञ्च।

समाप्य वाक्यानि सर्व्वाण्येतानि यीशुः स्वशिष्यान् जगाद, २६ १
जानीथ यूयं यदुपस्थास्यते निस्तारपर्व्व दिनद्वयात् परं, मनुष्य- २
पुत्रस्तदा क्रुशारोपणाय समर्पयिष्यते। काले तस्मिन् मुख्ययाजकाः ३
शास्त्राध्यापकाः प्रजानां प्राचीनाश्च महायाजकस्य कायाफाभिधस्य
हर्म्ये समाजग्मुः सम्मन्त्रयामासिरे च यथा यीशुं छलेन धृत्वा ४
हन्युः। ते त्ववदंश्च मैव पर्व्वणि, चेत् तथा भविष्यति कलहो ५
जनानां मध्ये।

यीशोरभिषेकः।

बैथनियायान्तु यीशौ शिमोनस्य कुष्ठिनो गेहे विद्यमाने ६
योषिदेका श्वेतोपलभाजनेन महार्हं सुगन्धितैलमानीय तस्यान्तिकं ७
गत्वा स्रावयामास तच्छिरसि तस्य भोजनायासीनस्य। एवं दृष्ट्वा ८
शिष्यास्तस्यामसन्तुष्टा भूत्वा अगदन्, कथमयमपव्ययः? तैलेऽस्मिन् ९
विक्रीते मूल्यं महल्लब्धुं दरिद्रेभ्यो दातुञ्चाशक्ष्यत। यीशुस्तु १०
तज्ज्ञात्वा तान् बभाषे, कुरुथ कथं दुःखितां योषामिमां? कृतवती-
यन्तु मयि कर्म्म सत्। यतो दरिद्राः सततं युष्मत्सङ्गिनोऽहन्तु न ११

१२ सततं युष्मत्सङ्गी। देहे मम तैलमिदं निषिच्येयं तावत् कृतवती
१३ कर्म्म मम समाध्युपयोगि। युष्मानहं सत्यं ब्रवीमि कृत्स्नस्य जगतो
यत्र कुत्रचिद् घोषयिष्यते सुसंवादोऽयं, तत्र सर्व्वत्र कथयिष्यते
कर्म्माप्येतत् कृतमनया स्मरणार्थमस्याः।
१४ तदा द्वादशशिष्याणाम् एक ईष्करियोतीयो यिहूदा इत्यभिधो
१५ मुख्ययाजकानां समीपं गत्वा जगाद, अहं यत् तं युष्मासु
समर्पयेयं तद् यूयं मह्यं किं दातुं सम्मताः? ततस्ते त्रिंशद् रौप्य-
१६ मुद्रास्तोलयामासुस्तस्य कृते। तदाप्रभृत्यगवेषयत् स तत्समर्पणस्य
समयम्। निस्तारपर्व्वपालनम् प्रभोर्भोजस्थापनञ्च।
१७ अनन्तरं निष्किण्वपूपानां प्रथमे दिने यीशोः समीपम् उपस्थाय
शिष्यास्तं जगदुः, भवत इच्छातः कुत्रास्माभिरुपकल्पयितव्यं भोजनं
१८ निस्तारपार्व्वणं? स बभाषे, यूयं नगरममुकस्य समीपं गत्वा तं
ब्रूत, गुरु र्वक्ति, आसन्नो मम कालस्तव गृहेऽहं स्वशिष्यैः सह
१९ निस्तारपर्व्व सम्पालयिष्यामि। अतो यीशुना यथादिष्टं शिष्यास्तथैव
२० कुर्व्वन्तो भोजनं निस्तारपार्व्वणमुपकल्पयामासुः। सन्ध्यायान्तु
२१ जातायां यीशु र्द्वादशशिष्यैः सह भोजनार्थम् उपविवेश। तेषु च
भक्षमाणेषु स बभाषे, अहं युष्मान् सत्यं ब्रवीमि, युष्माकम् एको
२२ मां समर्पयिष्यति। अनेन तेऽतीव शोचन्तः प्रत्येकं तं प्रष्टुम्
२३ आरेभिरे, प्रभो स किमहं? स तु प्रतिबभाषे मया सार्द्धं यः
२४ सूपपात्रे पाणिममज्जयत् स एव मां समर्पयिष्यति। मनुष्यपुत्रमधि
यथा लिखितमास्ते स तथैव प्रयाति, नरेण येन तु मनुष्यपुत्रः
समर्प्यते स सन्तापपात्रं। तस्य नरस्य जन्म चेन्नाभविष्यत् तर्हि
२५ तेनैव तस्य क्षेमम् अभविष्यत्। तस्य समर्पयिता यिहूदास्तदा
प्रतिजगाद, भो रब्बिन् स किमहं? स बभाषे, त्वं व्याहार्षीः।

अतस्तेषां भोजनकाले यीशुः पूपमादायाशीर्वादं कृत्वा तं भङ्क्त्वा २६
शिष्येभ्यो ददौ बभाषे च, गृह्णीत भुंग्ध्वम्, एतन्मम शरीरं।
ततः स पानपात्रमादाय धन्यवादं कृत्वा तेभ्यस्तद् ददौ बभाषे २७
च, पिबतानेन सर्व्वे, यत एतन्मम शोणितं पापमोचनाय बहूनां २८
कृते विस्राव्यमाणं नूतननियमस्य शोणितं। युष्मांस्त्वहं ब्रवीमि, २९
गोस्तनीलतोत्पन्नोऽयं रसो दिने यस्मिन् मम पितू राज्ये नवीनो
मया युष्माभिः सह पायिष्यते अद्यारभ्य तद्दिनं यावत् स मया
नैव पायिष्यते। ततस्ते स्तोत्रं गीत्वा जैतूनपर्व्वतं जग्मुः। ३०
यीशुस्तांस्तदा जगाद, राव्यामस्यां सर्व्वे यूयं मयि स्खलिष्यथ, ३१
यतो लिखितम् आस्ते "अहं प्रजारक्षकमाहनिष्यामि, प्रजस्य मेषाश्च
विकीर्णा भविष्यन्ति।" परन्तु समोत्थानात् परम् अहं युष्मदग्रे ३२
गालीलं यास्यामि। पितरस्तं प्रतिजगाद, सर्व्वेऽपि चेद् भवति ३३
स्खलेयुस्तथाप्यहं कदाचन न स्खलिष्यामि। यीशुस्तं जगाद, त्वामहं ३४
सत्यं ब्रवीमि, राव्यामस्यां कुक्कुटस्य रवात् प्राक् त्वं मां त्रिःकृत्वः
प्रत्याख्यास्यसि। पितरस्तं ब्रवीति, यद्यपि भवता सार्द्धं मम मरणम् ३५
अवश्यं स्यात्, तथाप्यहं भवन्तं नैव प्रत्याख्यास्यामि। एवमेव शिष्याः
सर्व्वेऽप्यभाषन्त

### गेतशिमान्युद्याने यीशोर्मर्म्मान्तिकदुःखम्।

यीशुस्तदा तैः सह गेतशिमानीत्यभिधं स्थानमुपस्थाय शिष्यान् ३६
जगाद युयमत्रोपविशत, यावदहममुत्र गत्वा प्रार्थनां कुर्व्वे।
अनन्तरं स पितरं सिबदियस्य पुत्रौ च सङ्गिनः कृत्वा शोचितुं ३७
विषत्तुञ्चारेभे· तांश्च जगाद, प्राणा मम मृत्यवे शोकापन्नाः, ३८
यूयमत्रावतिष्ठमाना मया सह जागृत। ततः स किञ्चिद् अग्रं ३९
गत्वाधोमुखो निपत्य प्रार्थयमाणोऽब्रवीत्, भो मम पितः, यदि

शक्यं स्यात् तर्हीदं पानीयपात्रं मत्तोऽपसरतु, तथापि न मया,
४० अपि तु त्वया यथा वाञ्छ्यते तथैव भवतु। अनन्तरं स तेषां
शिष्याणां समीपमागत्य तान् निद्राणान् दृष्ट्वा पितरं जगाद,
४१ एवमेव यूयं घटिकाम् एकां मया सार्द्धं जागरितुं नाशक्नुत? जाग्रत
प्रार्थयध्वञ्च नो चेत् परीक्षायां निवेक्ष्यध्वे, यत आत्मोद्यतः शरीरन्तु
४२ दुर्बलम्। द्वितीयवारं पुन र्गत्वा स प्रार्थयाञ्चक्रे भो मम पितः,
पानीयपात्रमिदं यावन्मया न पीयते तावद् यदि मत्तोऽपसरितुं
४३ न शक्नुयात्, तवेच्छा तर्हि सिध्यतु। सोऽनन्तरमागत्य पुनस्तान्
४४ निद्राणान् ददर्श, यतस्तेषां नेत्राण्यवशान्यासन्। ततः स तांस्त्यक्त्वा
४५ पुनरपगत्य तृतीयवारं वाक्यं तदेव व्याहरन् प्रार्थयाञ्चक्रे। ततः
परं स्वशिष्याणां समीपमागत्य तान् जगाद, एवमेव यूयं निद्राणा
विश्रामं सेवध्वे किम्? पश्यतोपस्थितः स दण्डो मनुष्यपुत्रश्च
४६ पापिनां करेषु समर्प्यते। उत्तिष्ठत वयं गच्छामः। पश्यत मम
समर्पयिता समीपमागतः।

### यीशोः शत्रुहस्ते समर्पणम्।

४७ पश्य स यावदित्थं भाषत आगमत् तावद् द्वादशानाम् एकोऽर्थतो
यिहूदास्तेन सार्द्धञ्च मुख्ययाजकानां जनप्राचीनानाञ्च सकाशाद्
४८ असियष्टिधारी महान् जननिवहः। तस्य समर्पयिता तेभ्यः सङ्केतं
दत्तवान्, यथा, अहं यं चुम्बिष्यामि स एव सोऽस्ति यूयं तमेव
४९ धरतेति। अतः स तत्क्षणं यीशोरन्तिकमुपस्थाय, रब्बिन् प्रणाम
५० इत्युक्त्वा तं चुचुम्ब। यीशुस्तु तमब्रवीत्, मित्र किमर्थमुपतिष्ठसे?
५१ जनास्ते तदोपागत्य यीशौ हस्तार्पणं कृत्वा तं दध्रुः। पश्य नरस्तदा
यीशोः सङ्गिनामेको हस्तं प्रसार्य्य कोषादसिं निष्कृष्य महा-
५२ याजकस्य दासमाहत्य तस्य कर्णमेकं परिचिच्छेद। यीशुस्तदा

तमब्रवीत्, तवासिं पुनः स्वस्थाने निधेहि, यतो ऽसिग्राहिणः सर्व्वे
ऽसिना विनङ्क्ष्यन्ति। इदानीमेवाहं स्वपितरं याचितुं शक्नोमि, स ५३
च मह्यं द्वादशभ्यो वाहिनीभ्योऽप्यधिकान् स्वर्गदूतान् वितरिष्यतीदं
त्वया किम् असम्भवं मन्यते? परन्त्वेतेनैव भवितव्यमिति शास्त्री- ५४
योक्तयः कथं सेत्स्यन्ति?

दण्डे तस्मिन् यीशु र्जननिवहान् जगाद, दस्युमिव मां धर्त्तुमसीन् ५५
यष्टींश्चादाय किं यूयं वहिरागताः? अहन्तु प्रत्यहं धर्म्मधाम्नि
युष्मत्सकाशमासीनोऽशिक्षयं यूयं तदा न मां धृतवन्तः। सम्भूतन्तु ५६
सर्व्वमेतद् यथा भाववादिनां शास्त्रीयोक्तयः सिद्धिं गच्छेयुः।

महायाजकसमक्षं यीशोर्विचारः।

शिष्यास्तदा सर्व्वे तं त्यक्त्वा पलायाञ्चक्रिरे। ये तु यीशुं धृतवन्तस्ते ५७
स महायाजकस्य कायाफाः समीपं निन्युः तत्र शास्त्राध्यापकाः
प्राचीनाश्च समागमन्। पितरस्तु दूरान्महायाजकस्य हर्म्यं यावत् ५८
तमन्वव्रजत्, परिणामं दिदृक्षुश्च तत्र प्रविश्य पदातिभिः सहोपविवेश।
तदा मुख्ययाजकाः प्राचीनाः कृत्स्ना सभा च यीशुं हन्तुकामास्तस्य ५९
प्रतिकूलं मृषासाक्ष्यम् अमृगयन्त न तु लेभिरे बहुषु मृषासाक्षिषू-
पागतेष्वपि न लेभिरे। पश्चात्तु द्वौ मृषासाक्षिणावुपस्थायोचतुः, असौ ६०
व्याहृतवान् अहम् ईश्वरस्य मन्दिरं भङ्क्त्वा दिनत्रये निर्म्मातुं शक्नोमीति। ६१
महायाजकोऽनेनोत्थाय तमब्रवीत्, किमपि त्वं किं न प्रतिभाषसे? ६२
इमौ तव प्रतिकूलं किं साक्ष्यं ददतः? यीशुस्तु मौनम् अवलम्ब्यातिष्ठत्। ६३
अनन्तरं महायाजकस्तं प्रतिवभाषे, अहं त्वां जीवनमयेनेश्वरेण
शपयामि, त्वमीश्वरस्य पुत्रः ख्रीष्टो न वेत्यस्मान् वद। यीशुस्तं जगाद, ६४
त्वं व्याहार्षीः। अधिकन्तु युष्मानहं ब्रवीमि, इतः प्रभृति यूयं मनु-
ष्यपुत्रं प्रभावस्य दक्षिणे आसीनम् आकाशीयमेघरथेनागच्छन्तञ्च

६५ वीचिच्छिदे। महायाजकस्तदा स्ववासांसि विदीर्य्य बभाषे, स ईश्वरनिन्दां
चकार, साक्षिणामधिकानां किं प्रयोजनम्? पश्यताधुनास्यैव
६६ युष्माभिरीश्वरनिन्दा। युष्माभिः किं मन्यते? ते प्रत्यवदन्, स प्राण-
६७ दण्डमर्हति। ते तदा तस्यास्ये न्यष्ठीवन् मुष्टिभिश्च तमाघ्नन्। केचित्तु
६८ तं प्राहरन्नवदंश्च, ख्रीष्ट भाववोक्त्यास्मान् वद कस्त्वां ताडितवान्?

पितरेण यीशुः वारत्रयमस्वीकृतः।

६९ पितरस्तु बहिः प्राङ्गण आसीनोऽतिष्ठत्। दासी तदैका तस्यान्तिक-
७० मागत्याब्रवीत् त्वमपि गालीलीयस्य यीशोः संगयासीः। स तु सर्व्वेषां
समक्षम् अनङ्गीकुर्व्वन् जगाद, न बुध्यते मया त्वया किं गद्यते।
७१ तस्मिंश्च पुनर्गोपुरं गते काचिदन्या तं दृष्ट्वा जनांस्तत्र विद्यमानानवदत्,
७२ अयमपि नासरतीयस्य यीशोः संगयासीत्। स ततः शप्त्वा पुनरनङ्गीकुर्व्वन्
७३ जगाद मनुष्यं तं न जानामीति। क्षणात् परं नरास्तत्र स्थिता उपागत्य
पितरमब्रुवन्, नूनं त्वमपि तेषाम् एकतमोऽसि यतस्तव भाषा त्वां
७४ व्यञ्जयति। स तदाभिशप्तुं दिव्यञ्च कर्त्तुमारभ्याब्रवीत्, मनुष्यं तं न
७५ जानामीति। सद्यस्तु कुक्कुटो रुराव। अनन्तरं कुक्कुटरावात् प्राक्
त्वं मां त्रिस्त्वः प्रत्याख्यास्यसीति वाक्यं यत् स यीशुनोक्तस्तत्
स्मृत्वा पितरो बहिर्गत्वा तीव्रं रुरोद॥ २६॥

२७ ततः परं जाते पुनः प्रातःकाले मुख्ययाजका जनानां प्राची-
२ नाश्च सर्व्वे यीशो र्विरुद्धं तस्य बधार्थं मन्त्रणां चक्रुर्बद्ध्वा च तम-
पनीय देशाधिपतौ पन्तीये पीलाते समर्पयामासुः।

इष्करियोतीययिहूदाकर्त्तृक आत्मबधः।

३ कृता यीशो र्दण्डाज्ञेति दृष्ट्वा तस्य समर्पयिता यिहूदास्तदानुतप्य
तास्त्रिंशद् रौप्यमुद्रा मुख्ययाजकेषु प्राचीनेषु च प्रत्यर्पयन् बभाषे,
४ शोणितं निरपराधं समर्प्य पापं मयाकारीति। ते त्वब्रुवन्, किमने-

नास्माकं? त्वयैवालोच्यतां। स तदा रौप्यमुद्रास्ता मन्दिरे निक्षिप्य ५
प्रतस्थे गत्वा चात्मानं प्रतिलम्ब्य ममार। ततो मुख्ययाजकास्ता मुद्रा ६
आदाय जगदुः, भाण्डागारे स्थापनमेतासामविधेयं यतः शोणितस्य ७
मूल्यमेतत्। अतस्ते मन्त्रणां कृत्वा ताभि र्विदेशिनां मृतानां समा- ८
धिस्थानं कुम्भकारस्य क्षेत्रम् अक्रीणुः। तद्धेतुना क्षेत्रस्य तस्याद्यापि प्रबलं ९
शोणितक्षेत्रमिति नाम सम्भूतम्। इत्थं भाववादिना यिरमियाहेण
व्याहृतमिदं वाक्यं सिद्धिं गतं, यथा, "इस्रायेलः सुतानाम् आदेशाद्
यस्य मूल्यं निरूपितं, तस्य मूल्यवतो मूल्यं त्रिंशन्मुद्रामाणं रूप्यं तैरादाय १०
मदाप्रभु र्मां यथादिशत् तथा कुम्भकारस्य क्षेत्रे ऽर्पितमिति"।

देशाध्यक्षसमक्षं यीशोर्विचारः।

अनन्तरं यीशु र्देशाधिपतेः समक्षम् अतिष्ठत्। स तु देशाधि- ११
पतिस्तं पप्रच्छ त्वं किं यिहूदीयानां राजा? यीशुस्तमवादीत्,
भवान् व्याहरति। मुख्ययाजकैस्तु प्राचीनैश्च क्रियमाणे तस्याभियोगे १२
स किमपि न प्रत्यभाषत। तदा पीलातस्तं ब्रवीति, न किं शृणोषि १३
तव विरुद्धममी साक्ष्यवचांसि कति वदन्ति? स तु तस्मै नैकस्यापि १४
वचनस्योत्तरम् अदात्। अनेन देशाधिपतिरतीवाश्चर्य्यं मेने।

रीतिरियमासीत् यद् देशाधिपतिः प्रतिवर्षं पर्व्वणि तस्मिन् १५
जनानां कृते तैरभीप्सितम् नरमेकं कारागुप्तं मोचयतीति। प्रसिद्धो १६
नर एकस्तेषां तदा बारब्बा इतिनामकः कारागुप्त आसीत्। तेष्वतः १७
समागतेषु पीलातस्तान् अपृच्छत्, यूयं मत्तः कतरस्य मोचनं
वाञ्छथ? बारब्बाः किंवा ख्रीष्ट इति विख्यातस्य यीशोः? यतो १८
देशाधिपतिनाज्ञायत स यन्मात्सर्य्यात् तैः समर्पितः।

अनन्तरं यदा स विचारासन उपविष्ट आसीत् तस्य पत्नी १९
तदा प्रेष्यं प्रहित्य तं जगाद, धर्म्मवता तेन सह व्यापारः कोऽपि

भवतो मा भवतु यतस्तस्य कृतेऽद्य स्वप्नदर्शने सम्भूता मम यातना
२० बहुतरा। यथा तु जननिवहो बारब्बां याचेत यीशुञ्च नाशयेत्
२१ मुख्ययाजकाः प्राचीनाश्च तांस्तथा प्रावर्त्तयन्। देशाधिपतिस्ततस्तान्
पप्रच्छ युष्मदिच्छातस्तयो र्द्वयोः कतरो मया मोचयितव्यः?' ते
२२ जगदुः, बारब्बाः। पीलातस्तान् अब्रवीत्, ख्रीष्टाभिधं तर्हि तं
यीशुं प्रति मया किं कर्त्तव्यम्? सर्व्वे तमब्रुवन् स क्रुशमारोप्य-
२३ ताम्। देशाधिपति र्बभाषे, कथमेतत्? किमपराद्धं तेन? अनेन
२४ तेऽधिकं क्रोशन्तोऽवदन् स क्रुशमारोप्यताम्। तदा यत्नो मम
विफलः प्रत्युताधिकः कलहो जायत इति दृष्ट्वा पीलातस्तोयमादाय
जननिवहस्य समक्षं हस्तौ प्रक्षाल्य बभाषे, धर्म्मवतोऽस्य शोणितपा-
२५ तने निर्द्दोषोऽहं युष्माभिरालोच्यतामिति। कृत्स्नः प्रजानिवहस्तु
तं प्रतिबभाषे, तस्य शोणितम् अस्माकम् अस्मत्सन्तानानाञ्च शिरःसु
२६ वर्त्ततां। तेषां कृते स तदा बारब्बां मोचयामास यीशुन्तु कशाभिः
प्रहार्य्य क्रुशारोपणार्थं समर्पयामास।

२७ देशाधिपतेः सैनिकनरा यीशुं तदा राजहर्म्यस्याभ्यन्तरं नीत्वा
२८ सैन्यदलं कृत्स्नं तस्य परितः समागमयामासुः। वस्त्राणि तस्य च
२९ मोचयित्वा तं लोहितवर्णं प्रावारं परिधापयामासुः कण्टकैश्च स्रजं
निर्म्माय तस्य शिरसि निदधुस्तस्य दक्षिणहस्तोपरि च नलं सम-
र्पयामासुरनन्तरं तस्य समक्षं जानुपातं कुर्व्वन्त उपहासेन तमवदन्,
३० यिहूदीयानां राजन् प्रणामः। पुनश्च तस्मिन् निष्ठीव्य तं नल-
३१ मादाय तस्य शिरोऽताडयन्। इत्थं तम् उपहस्य तं प्रावारं मोचयित्वा
तस्य स्ववासांसि परिधाप्य च क्रुशम् आरोपयितुं तम् अपनिन्युः।

यीशोः क्रुशारोपणं मृत्युश्च।

३२ निर्गच्छन्तस्ते शिमोननामकं कुरीणीयं नरमेकमासाद्य-

मासु दधुश्च तं, क्रुशं तस्य वोढुं वेतनं विना। अनन्तरं गलगथा- ३३
र्थतः कपालस्थलमित्यभिधं स्थानमुपस्थाय पानीयार्थं ते तस्मै पित्त-
मिश्रितम् अम्लरसं ददुः। स तु तमास्वाद्य पातुं नाङ्गीचक्रे। ३४
अनन्तरं ते तं क्रुशमारोप्य गुटिकापातेन तस्य वासांसि मिथो ३५
विभेजिरे। इत्थं भाववादिनोक्तेयं कथा सिद्धिं गता, यथा,

मामकीनानि वस्त्राणि स्वमध्ये विभजन्ति ते।
मत्परिच्छदलिप्सातो गुटिकां पातयन्ति च॥

अनन्तरं ते तत्रोपविश्य तम् अरक्षन्। तस्य शिरसश्चोर्द्ध्वे ते ३६
बबन्धुरिदं तस्याभियोगलेख्यं यथा, यिहूदिनां राजा यीशुरयम्। ३७
तदा च दस्यू द्वौ तेन सार्द्धं क्रुशे आरोप्येताम्, एकतरस्तस्य दक्षिणे ३८
वामे चान्यतरः

अनन्तरं ये मनुष्या मार्गेण तेनाव्रजंस्ते शिरांसि चालयन्तस्त- ३९
मित्थमनिन्दन् यथा, मन्दिरभञ्जक दिनत्रये च तन्निर्मातरात्मानं ४०
तारय। त्वञ्चेदीश्वरस्य पुत्रोऽसि तर्हि क्रुशादवरोह। शास्त्राध्यापकैः ४१
प्राचीनैश्च सार्द्धम् ईदृशमेव तमुपहसन्तो मुख्ययाजका अपि
तमवदन्, सोऽपरान् अतारयत्, आत्मानं तारयितुं न शक्नोति।
स चेद् इस्रायेलस्य राजास्ति तर्हीदानीं क्रुशाद् अवरोहतु, तथा ४२
कृते वयं तस्मिन् विश्वसिष्यामः। स ईश्वरे विश्वासं कृतवान् ईश्वरश्चेत् ४३
तम् अभिरोचयति तर्हि तमुद्धरतु, यतः स कथितवान् ईश्वरस्य
पुत्रोऽहं। तेन सार्द्धं क्रुशारोपितौ दस्यू तावपि तथैव तमपवदताम्। ४४

आमध्याह्नात्तु तृतीयप्रहरं यावत् कृत्स्ने भूतलेऽन्धकारोऽभूत्। ४५
तृतीये प्रहरे च यीशुरुच्चैरनुच्चरवेण बभाषे, एली, एली, लामा ४६
शिवक्तानीति, अस्यार्थोऽयं,

हे मदीश मदीश त्वं मां परित्यक्तवान् कुतः।

४७ तच्छ्रुत्वा तत्र स्थितानां नराः केचिदवदन् असावेलियमाह्वयति।
४८ तत्क्षणञ्च तेषामेको द्रुत्वा स्पञ्जमादायाम्लरसेन पूरयित्वा नलाग्रे
४९ बद्ध्वा तम् अपीप्यत्। अपरे त्ववदन्, निवर्त्तस्व, अमुं तारयितुम्
एलिय आगच्छति न वेत्यस्माभि र्दृश्यताम्।

५० ततः परं यीशुः पुनरुच्चैरुत्क्रुश्य प्राणांस्तत्याज। पश्य च तदा
५१ मन्दिरस्य तिरस्करिण्यूर्द्ध्वादधो यावद् विदद्रे भूश्चकम्पे शैला
५२ विचिच्छिदिरे श्मशानानि मुक्तानि बभूवुः पवित्राणां
५३ कुणपानि बहून्युत्थापयाञ्चक्रिरे तस्योत्थापनात् परञ्च निर्गत्य ते
५४ पुण्यनगरं प्रविश्यानेकेषां प्रत्यक्षीबभूवुः। तांस्तु भूकम्पादीन् व्यापा-
रान् दृष्ट्वा शतपति र्यीशो रक्षणे नियुक्तास्तस्य सङ्गिनश्चातीव
भीत्वावदन्, सत्यम् आसीदसावीश्वरस्य पुत्रः।

५५ अपि च याः गालीलतो यीशुम् अनुगतास्तत्परिचर्य्यायाञ्च नियुक्ता
५६ बह्व्यो योषितो दूरादवलोकमानास्तत्राविद्यन्त। तासां मध्ये मग्द-
लीनी मरियम्, याकोब्योश्योश्च माता मरियम् सिबदियसुतयो
र्माता चासन्।

यीशोः समाधिः।

५७ सन्ध्यायान्तु जातायाम् अरिमाथियानिवासी योषेफनामक
५८ एको धनी नर आगमत्। सोऽपि यीशोः शिष्यः। स पीलातस्य
समीपं गत्वा यीशो र्देहं ययाचे। आदिष्टे तदा पीलातेन देहस्य
५९ दाने योषेफो देहमादाय शुचिना क्षौमवस्त्रेण वेष्टयामास
६० तच्चिते शैलरन्ध्रे च स्वार्थं स यच्छ्मशानागारं निर्मितवांस्तस्मिन्
नूतने श्मशानागारे निदधे महापाषाणञ्च लोठयित्वा श्मशानागारस्य मुखे
६१ दत्त्वा प्रतस्थे। तत्र तु मग्दलीनी मरियम् अन्यतरा च मरियम्
श्मशानागारस्य सम्मुखम् उपविश्यावातिष्ठताम्।

परदिने त्वर्थतः सज्जनदिनात् परं यद्दिनं तस्मिन् मुख्ययाजकाः ६२
फरीशिनश्च पीलातस्य समक्षं समेत्य जगदुः प्रभो स प्रवञ्चको ६३
जीवत्काल उक्तवान् दिनत्रयात् परम् उत्थास्यामीत्यस्माभिः स्मर्यते।
अतस्तृतीयं दिवसं यावत् तच्छ्मशानागारस्य रक्षणं भवतादिश्यताम्। ६४
नोचेत् शिष्यास्तस्य नक्तमागत्य तं हृत्वा जनेभ्यः कथयिष्यन्ति स
मृतानां मध्यादुत्थापित इति। एवं सत्यादिभ्रान्तितोऽन्तिमा
भ्रान्तिरनिष्टतरा भविष्यति। पीलातस्तान् जगाद, प्रहरिवर्गो ६५
युष्माकमास्ते, गत्वा तत् स्थानं यथाज्ञानं गोपयत। ते तदा गत्वा ६६
तमश्मानं मुद्रयाङ्कयित्वा प्रहरिवर्गेणापि श्मशानागारम् अगोपयन्॥२७॥

श्मशानाद् यीशोरुत्थानम्।
शिष्यान् प्रति तस्य शेषादेशश्च।

विश्रामवारे त्वतीते सप्ताहस्य प्रथमदिवसस्य प्रातःकाले **२८** १
मग्दलीनी मरियम् सा चान्यतरा मरियम् तच्छ्मशानागारं द्रष्टुमा-
गच्छताम्। पश्य च तदा महान् भूकम्पोऽभूत्, यतः प्रभोरेको २
दूतः स्वर्गाद् अवरुह्य समीपमागत्य प्रस्तरं तं द्वाराल्लोठयित्वा तदु-
पर्य्युपविवेश। तस्य तु विद्युदिवाभा तुषारवच्छुक्लश्च परिच्छद ३
आस्तां तस्य भयाच्च रक्षकाः समुद्विग्ना मृतकल्पाश्च बभूवुः। स ४
दूतस्ते योषिते प्राह, युवां मा भैष्टं यतोऽहं जाने युवां क्रुशारोपितं ५
यीशुम् अन्विष्यथः। स त्वत्र न विद्यते यतः स यथोक्तवांस्तथै- ६
वोत्थापितः। आयातं यत्र प्रभुरशेत स्थानं तन्निरीक्षेथां गत्वा च ७
सत्वरं तस्य शिष्यान् वदतं स मृतानां मध्यादुत्थापितः पश्यत च स
युष्मदग्रतो गालीलं याति, तत्रैव तं द्रक्ष्यथ। पश्यतमहं युवाभ्यां ८
कथितवान्। ततस्ते सभयं महानन्देन च सत्वरं श्मशानागारात् प्रस्थाय
तस्य शिष्येभ्यः संवादं दातुम् अधावताम्। पश्य च शिष्येभ्यस्तयोः ९

संवादं दातुं गच्छन्त्योर्यीशुस्ते साक्षात्कृत्याब्रवीत्, युवयो र्मङ्गलं
१० भूयात् । ते चोपागत्य तस्य चरणौ धृत्वा भजनाम् अकार्ष्टाम् ।
तदा यीशुस्ते अवादीत्, मा भैष्ट गत्वा तु मम भ्रातॄन् ममैन-
मादेशं ज्ञापयतं यत् ते गालीलं गन्तव्यं, तत्रैव ते मां द्रक्ष्यन्तीति ।
११ यावत् ते गच्छतः पश्य तावद् रक्षकवर्गस्य केचिन्नरा नगर-
मुपस्थाय यद्यद् वृत्तं तत् सर्व्वं मुख्ययाजकेभ्यो निवेदयामासुः ।
१२ ते तु प्राचीनैः सह समेत्य मन्त्रणाञ्च कृत्वा सैनिकनरेभ्यो यथेष्टा
१३ रौप्यमुद्रा ददु र्बभाषिरे च यूयं वदत, शिष्यास्तस्य रात्रावागत्य
१४ निद्रितेष्वस्मासु तम् अचूचुरन्निति । यदि च देशाधिपतेः समक्षम्
अस्य श्रवणं भवेत्, वयं तर्हि तम् अनुनेष्यामो युष्मांश्च निःशङ्कान्
१५ करिष्यामः । ततस्ते ता मुद्रा गृहीत्वा यथा शिक्षितास्तथैव चक्रुः ।
सा च कथा यिहूदिनां मध्ये व्याप्याद्याप्यनुतिष्ठते ।
१६ एकादश शिष्यास्तु गालीलं गत्वा यीशुना निर्द्दिष्टे गिरावुप-
१७ तस्थिरे । तत्र तं दृष्ट्वा तस्य भजनां चक्रुः । केचित्तु समशेरत । तदा
१८ यीशुः समीपमागत्य तैः संलपन् बभाषे, स्वर्गमेदिन्यो र्निखिलं
१९ सामर्थ्यं मह्यम् अदायि । अतो यूयं गत्वा यावतो जातीः शिष्यान्
कुर्व्वन्तः पितुः पुत्रस्य च पवित्रस्यात्मनश्च नामोद्दिश्य तान् स्नापयत,
२० शिक्षयत च तांस्तत्सर्व्वस्य रक्षणं युष्मानहं यद्यदादिष्टवान् ॥ अधिकन्तु
पश्यत, युगान्तं यावत् सर्व्वदिनान्यहं युष्माभिः सार्द्धमासे ॥ २८॥

# मार्कलिखितः सुसंवादः।

प्रभो र्यीशुख्रीष्टस्य स्नापनं परीक्षा च।

ईश्वरपुत्रस्य यीशोः ख्रीष्टस्य सुसंवादारम्भः। भाववादिनां ग्रन्थे १ १
लिखितम् आस्ते, २

पश्य त्वद्गमनस्याग्रे स्वदूतं प्रहिणोम्यहं।
तवाग्रे तव पन्थानं स हि सज्जीकरिष्यति॥
मरौ घोषयतः प्रोच्चैरस्त्ययं कस्यचिद् रवः। ३
प्रभोः संस्कुरुताध्वानं विधद्धं तत्सृती ऋजूः॥

तथैव योहनः प्रान्तर उपस्थायास्नापयत् पापमोचनाय च मनः- ४
परावर्त्तनार्थकम् स्नपनम् अघोषयत्। अपि च यिहूदियाया ५
निखिलो जनपदो यिरूशालेमनिवासिनश्च तदन्तिकम् अपागच्छन्
सर्व्वे च स्वपापानि स्वीकुर्व्वाणास्तेन यर्द्दननद्याम् अस्नाप्यन्त।
स तु योहन उष्ट्रलोमजपरिधानश्चर्म्मपट्टकया बद्धकटिश्चासीत् पत- ६
ङ्गान् वन्यमधु चाभक्षयत्। घोषणकाले तु सोऽवदत्, मत्तो बल- ७
वत्तरो नरो मत्पश्चाद् आयाति, नत्वा तदीयोपानहो बन्धन्यौ
मोक्तुमप्यहं न योग्यः। अहं तावद् युष्मान् तोये स्नापितवान्, ८
स तु युष्मान् पवित्र आत्मनि स्नापयिष्यति।

तेष्वेव दिनेषु यीशु र्गालीलस्यनासरताद् आगत्य योहनेन ९
यर्द्दनि स्नापयाञ्चक्रे सद्यश्च तोयान्निर्गच्छन्नेव स गगनं भिद्यमानम् १०
आत्मानञ्च कपोतमिव स्वोपर्य्यवतरमाणम् अदृक्षत्, स्वर्गाच्चेयं ११
वाणी समभूत् त्वं मम प्रियः पुत्रोऽयस्मिन्नहं प्रीत इति।

१२ तत्क्षणमात्मा तं मरुमपनिनाय तत्र मरौ तिष्ठंश्च स चत्वारिं-
१३ शद् दिनानि शैतानेन पर्य्यैक्ष्यत स वन्यैः सार्द्धमवर्त्तत स्वर्गदूताश्च
तं पर्य्यचरन्।

प्रभो यीशोः प्रकाश्यकार्य्यारम्भः।

१४ समर्पिते तु योहने यीशुः गालीलमागत्येश्वरराज्यस्य सुसंवादं
१५ घोषयन्नब्रवीत्, सम्पूर्णः कालः समुपस्थितश्चेश्वरस्य राज्यं। यूयं
मनांसि परावर्त्तयत सुसंवादे च विश्वसित।

१६ ततः परं गालीलीयसमुद्रस्य तटे विहरन् स शिमोनं तस्य
भ्रातरम् आन्द्रियञ्च समुद्रे जालं क्षिपन्तौ ददर्श यतस्तौ धीवरा-
१७ वास्ताम्। यीशुस्तावब्रवीत् मम पश्चाद् आयातम् अहञ्च युवां
१८ मानवधारिणौ धीवरौ विधास्यामि। तदा तौ सपदि स्वजालानि
१९ त्यक्त्वा तम् अन्वव्रजन्। ततश्च स्तोकम् अग्रं गत्वा स सिवदियस्य पुत्रं
याकोबं तत्सहोदरं योहनञ्च ददर्श, जालानां जीर्णोद्धारं कुर्व्वाणौ
२० तावपि नौकायामास्ताम्। तदा सपदि तेनाहूतौ तौ स्वपितरं
सिवदियं वेतनजीविभिः सार्द्धं नौकायां त्यक्त्वा तमनुजग्मतुः।

२१ ततः परं ते कफरनाहूमं प्रविष्टाः। सद्यश्च विश्रामवारे स
२२ समाजगृहं प्रविश्याशिक्षयत्। जनाश्च तस्य शिक्षायां चमत्कारम्
अमन्यन्त। यतः स सामर्थ्यविशिष्ट इवाशिक्षयत् न तु शास्त्राध्यापका
२३ इव। तेषां समाजे चाशुच्यात्माविष्ट एको नरोऽविद्यत स उच्चो-
२४ ऽशन् जगाद, भो नासरतीय यीशो, अस्माकं भवतश्च किं? भवान्
किमस्मान् नाशयितुमागतः? भवान् कस्तदहं जानामि, ईश्वरस्य
२५ पवित्रो नरो भवानिति। यीशुस्तु तं निर्भर्त्सयन् बभाषे मौनीभव,
२६ अस्माच्च निःसर। तदा सोऽशुचिरात्मा नरस्य तस्याङ्गान् सङ्कोच्य
२७ प्रोच्चरवेण क्रोशंस्तस्मान्निःसृतः। अनेन सर्व्वे चमत्कारं मत्वा मिथ

आलोचमाना अवदन्, किमिदं? का नूतनेयं शिक्षा? असौ
तावत् सामर्थ्येनाशुचीनात्मनोऽप्याज्ञापयति ते चामुष्याज्ञावर्त्तिनो
भवन्ति। अनन्तरं तस्य ख्यातिः सत्वरं गालीलस्य कृत्स्नं परिसरं २८
व्यानशे।

ततः परं समाजगृहान्निष्क्रम्य स सत्वरं याकोबेन योहनेन च २९
सार्द्धं शिमोनस्यान्द्रियस्य च गेहं प्रविवेश। शिमोनस्य श्वश्रू तु ३०
ज्वरातुराशेत। ते च तस्मै सत्वरं तस्या अवस्थाम् अकथयन्। ३१
तदा स उपस्थाय तस्या हस्तं धृत्वा ताम् उत्थापयामास। सद्यस्च
ज्वरस्तां तत्याज सा च तान् पर्य्यचरत्।

सन्ध्यायान्तु जातायां यदा सूर्य्योऽस्तमगमत् तदास्वस्था भूता- ३२
विष्टाश्च सर्व्वे तस्यान्तिकम् आनीताः कृत्स्नं नगरञ्च द्वारि समेत्या- ३३
तिष्ठत्। स च नानाविधव्याधिभिरस्वस्थान् बहून् मानवान् स्वस्थी- ३४
चकार भूतांश्च बहून् निःसारयामास, भूतांस्तु भाषितुं नानुजज्ञे
यतस्ते तम् अभ्यजानन्।

प्रातस्त्वतीव प्रत्यूषं स उत्थाय निष्क्रान्तो निर्जनं स्थानमपगत्य ३५
प्रार्थयत। शिमोनस्तु स्वसङ्गिभिः सार्द्धं तम् अनुदुद्राव। तमासाद्य ३६
च तेऽब्रुवन्, सर्व्वे भवन्तम् अन्विष्यन्ति। स तु तान् बभाषे, ३७
आयात, वयं समीपस्थान् ग्रामान् गच्छामः, तत्रापि मया घोषणं ३८
कर्त्तव्यं, यतस्तदर्थमहं निर्गतोऽस्मि। ततः परं स कृत्स्ने गालीले ३९
जनानां समाजगृहेष्वघोषयत् भूतांश्च निरसारयत्।

एकः कुष्ठी तु तस्यान्तिकमागत्य प्रसादयन् जानू पातयंश्च तम् ४०
अब्रवीत्, भवांश्चेदिच्छति तर्हि मां शुचीकर्त्तुं शक्नोति। तदा ४१
यीशुः करुणाविष्टो हस्तं प्रसार्य्य तं पस्पर्श बभाषे च, इच्छामि
शुचीभव। एवमुक्ते तेन सपदि कुष्ठं ततोऽपससार स च शुचीभूतः। ४२

४३ स तु तस्मिन्नधैर्य्यं गत्वा तत्क्षणं विसृज्य तं जगाद, सावधानो भव
४४ कमपि किमपि मा वद, अपि तु गत्वा याजकायात्मानं दर्शय
तेषाञ्च साक्ष्यार्थं स्वशुचित्वलाभनिमित्तं मोशिना यद्यदादिष्टं
४५ तदुपहर। स तु निर्गत्य बहुशो घोषयितुं तां कथां विज्ञापयितुञ्च
प्रावर्त्तत, तस्मात् पुनः प्रकाशं नगरं प्रवेष्टुं तेन नाशक्यत, अपि तु स
वहि र्निर्जनेषु स्थानेष्ववर्त्तत सर्व्वतश्च जनास्तत्समीपमागच्छन्॥ १॥

प्रभुर्यीशुः पापानि क्षमितुमपि शक्नोति।

२ १ कतिपयदिनेभ्यः परं स पुनः कफर्नाहूमं प्रविष्टः स च गृहे
२ विद्यत इति जनैः संश्रुतम्, तत्क्षणञ्च बहवः समागतास्ततो
द्वारसमीपेऽपि स्थानं नाशिष्यत। स च तेभ्यो वाचमकथयत्।
३ तदा केचिन्नराश्चतुर्भिर्वह्यमानम् एकमवशाङ्गं नयन्तस्तम् अभ्यगच्छन्
४ जनौघहेतोस्तु तदन्तिकम् उपस्थातुमशक्यत्वात् स यत्रासीत् तत्र
गृहपृष्ठं भित्त्वोत्खन्य च सोऽवशाङ्गो यत्राशेत तं पर्य्यङ्कम् अवा-
५ रोहयन्। तदा यीशुस्तेषां विश्वासं दृष्ट्वा तमवशाङ्गं जगाद, वत्स
६ तव पापानां क्षमा जातेति। तत्र तु केचिच्छास्त्राध्यापका आसीना
७ आसन्, ते स्वचित्तेष्वित्थम् अतर्कयन्, किमर्थमसावीदृशं भाषते?
स ईश्वरं निन्दति। एकस्माद् ईश्वरादन्यः कः पापानि क्षमितुं
८ शक्नोतीति? ते तु स्वान्तर ईदृशं तर्कयन्तीति यीशुस्तत्क्षणम् आत्म-
न्यभिज्ञाय तान् अब्रवीत्, किमर्थं यूयं स्वचित्तेष्विमानि तर्कयथ?
९ अवशाङ्गमिमं कतरं वक्तुं सुकरं, तव पापानां क्षमा जातेत्यथवा
१० त्वमुत्थाय स्वपर्य्यङ्कं वहन् विहरेति? मेदिन्यान्तु पापानि क्षमितुं
मनुष्यपुत्रस्य सामर्थ्यमस्तीति येन यूयं जानीयात, तदर्थं (स तम-
११ वशाङ्गमाह) त्वामहम् आदिशामि, उत्तिष्ठ, स्वपर्य्यङ्कमादाय वहन्
१२ स्वगृहं गच्छ। स च सपद्युत्थाय पर्य्यङ्कमादाय वहन् सर्व्वेषां समक्षं

निक्रान्तः। अनेन सर्व्वे चमत्कारं मत्वेश्वरं प्रशंसन्तोऽवदन्, ईदृशं किमप्यस्माभिः कदापि नादर्शि।

प्रभो यीशोर्नानाविधालौकिककर्म्माणि उपदेशश्च।

लेव्याह्वानं। यीशोस्तद्विषयकशिक्षा।

ततः परं स पुनः समुद्रतटमपजगाम। ततो जननिवहस्य १३
तत्समीपमागच्छत् स च तान् अशिक्षयत्। गच्छंश्च शुल्कादायस्थान १४
उपविष्टम् आल्फेयस्य पुत्रं लेविं दृष्ट्वा जगाद, मामनुव्रजेति।
ततः स उत्थाय तमनुजगाम। ततः परं तस्य गृहे तस्मिन् भोज- १५
नार्थमुपविशति बहवः शुल्कादायिनः पापिनश्चापि यीशुना तच्छि-
ष्यैश्च सार्द्धम् उपाविशन्, यतस्ते बहुसङ्ख्या आसन् तस्यान्वव्रजन्।
तन्तु शुल्कादायिभिः पापिभिश्च सार्द्धं भक्षयन्तं दृष्ट्वा शास्त्राध्यापकाः १६
फिरूशिनश्च तस्य शिष्यान् जगदुः, स किमर्थं शुल्कादायिभिः पापि- १७
भिश्च सह भक्षयति पिवति चेति? तच्छ्रुत्वा यीशुस्तान् अब्रवीत्, न
बलवताम् अपि तु अस्वस्थानां चिकित्सकेन प्रयोजनम्। न धार्म्मिकान्
अपि तु पापिनो मनःपरावर्त्तनायाह्वातुम् अहम् आगतोऽस्मि।

ततः तु योहनस्य शिष्याः फिरूशिनश्चोपावसन्, अतस्त आगत्य १८
तम् अपृच्छन् योहनस्य फिरूशिनाञ्च शिष्या उपवसन्ति, भवतः
शिष्यास्तु नोपवसन्त्येतस्य कारणं किं? यीशुस्तु तान् जगाद, कन्याया १९
वरो यावत् सखिभिः सह वर्त्तते तावत् ते किमुपवस्तुं शक्नुवन्ति?
यावत्कालं वरस्तैः सह विद्यते तावत्कालं त उपवस्तुं न शक्नुवन्ति।
आयास्यन्ति तु दिनानि यदा वरस्तेषां सान्निध्याद् अपहारिष्यते, २०
तेष्वेव दिनेषु त उपवत्स्यन्ति। जीर्णे वाससि कोऽप्यनाहतवस्त्रस्य २१
खण्डं न सीव्यति, अन्यथा नूतनेन तेन पूरणेपायेन जीर्णस्य किय-
द्भागोऽपकृष्यते छिद्रश्च बहुतरो भेदो जायते। अपि च कोऽपि जीर्णासु २२

कुठूषु नवीनं द्राक्षारसं न निधत्ते, अन्यथा नवीनो द्राक्षारसः कुठू
र्विदारयति, तेन द्राक्षारसश्च विस्रवति कुठ्वश्च नश्यन्ति । अपितु
नूतनासु कुठूषु नवीनो द्राक्षारसो निधितव्यः ।

विश्रामवारमधि यीशोरुपदेशः ।

२३ एकदा स विश्रामवारे शस्यक्षेत्रेणाव्रजत् तस्य शिष्याश्च गच्छ-
२४ न्तो मञ्जरी र्भङ्क्तुमारेभिरे । तदा फरीशिनस्तमवदन्, पश्यतु,
२५ विश्रामवारे यन्न विधेयं भवतः शिष्यास्तदेव कथं कुर्व्वन्ति ? स तु
तानब्रवीत्, अभावाद् दायूदस्य तत्सङ्गिनाञ्च क्षुधायां जातायां
२६ तेन यदकारि तत् किं युष्माभिः कदापि नापाठि ? महायाजक-
स्याबियाथरस्य काले स ईश्वरस्य गृहं प्रविष्टो ये च दर्शनीयपूपा
याजकेभ्योऽन्यैर्न भोक्तव्यास्तानेव सोऽभक्षयत् स्वसङ्गिभ्योऽप्यदात् ।
२७ पुनः स तान् बभाषे, मानवस्य कृते विश्रामवारः सृष्टो न तु
२८ विश्रामवारस्य कृते मनुष्यः । अतो मनुष्यपुत्रो विश्रामवारस्यापि
प्रभुरस्ति ॥ २ ॥

३ १ ततः परं स पुनः सभागृहं प्रविवेश । तत्र च शुष्कहस्तः
२ कश्चिन्नर आसीत्, अतः स विश्रामवारे तं स्वस्थं करिष्यति न
३ वेति ज्ञातुं ते तं निरैक्षन्त, यतस्ते तमभियोक्तुम् ऐच्छन् । स तु
४ तं शुष्कहस्तं मानवं जगाद, मध्यस्थान उत्तिष्ठ, तांश्चाब्रवीत्,
विश्रामदिने किं विधेयं ? हितक्रिया किंवाहितक्रिया ? प्राणरक्षा
५ किंवा प्राणनाशः ? अनेन ते मौनमवलम्बिरे । स तु सक्रोधं
तान् समवलोक्य तेषां चित्तजडतायां शोचंस्तं नरं जगाद, स्वहस्तं
प्रसारय । ततस्तेन प्रसारितः स हस्तः पुनरन्यतर इव स्वस्थः प्रतिपेदे ।
६ तदा फरीशिनो निर्गत्य तूर्णं हेरोदीयैः सह तद्विनाशोपायाकाङ्क्षया
तस्य विरुद्धं मन्त्रयाञ्चक्रिरे ।

यीशोरनेकालौकिककर्म्माणि।

यीशुस्तु स्वशिष्यैः सार्द्धं समुद्रतटं जगाम। गालीलाच्च महान् ७
जननिवहस्तमन्वगच्छत्। यिहूदियातो यिरूशालेमाद् इदोमाद् ८
यर्द्दनपारस्थदेशाच्चागता मानवाः सोरसीदोनयोश्चतुर्द्दिग्भ्यो महान्
जननिवहश्च तेन यद्यत् क्रियते तच्छ्रुत्वा तदन्तिकमाजग्मुः। तदा ९
जननिवहस्य कारणाद् अर्थतः स यत्ते र्न पीड्येत तदर्थं स्वशिष्यान्
जगाद, एका नौका मदर्थं सज्जीकृता तिष्ठत्विति। यतः स बहून् १०
निरामयान् अकार्षीत्, ततो व्याध्यापन्नाः सर्व्वे स्प्रष्टुं यतमानास्तम्
आकुलयन्। अशुचय आत्मानश्च यदा तम् अपश्यंस्तदा प्रणिपत्य ११
क्रोशन्तोऽवदन्, भवान् ईश्वरस्य पुत्रः। ते तु यत्तं न व्यक्तीकुर्य्युस्तदर्थं १२
स तान् भूयोऽभर्त्सयत्।

द्वादशशिष्याणां प्रेरितपदे नियोगः।

ततः परं स गिरिमारुह्य स्वकीयेच्छातः कांश्चन नरान् १३
स्वान्तिकम् आजुहाव ते च तत्समीपं जग्मुः। ये च तेन सह वर्त्तरन् १४
घोषणार्थञ्च तेन प्रेष्येरन् व्याधीनां प्रतीकाराय च भूतानां निःसा- १५
रणाय च सामर्थ्यविशिष्टा भवेयुस्तादृशान् द्वादशनरान् स नियुयुजे। १६
[तेषां मध्ये गणिताय] शिमोनाय च पित्र इति नाम ददौ,
सिवदियस्य पुत्राय याकोबाय तस्य याकोबस्य भ्रात्रे योहनाय च १७
स बनेरगश् इति नाम ददौ, एतस्यार्थो मेघनादसुताविति।
[शेषाणां नामानि] आन्द्रियः, फिलिपः, बर्थलमयः, मथिः, १८
थोमाः, आल्फेयसुतो याकोबः, थद्दियः, कानानिः शिमोनः,
ईष्करियोतीयो यिहूदाश्च। एष एव तस्य समर्पयिताभूत्। १९

यीशुना कस्मैचित् भूतग्रस्ताय आरोग्यदानं उपदेशदानञ्च।

अपरं ते गृहं प्रविविशुः। पुनश्च महान् जननिवहः समागमत्, २०
ततस्ते आहारमपि कर्त्तुं नाशक्नुवन्। तच्छ्रुत्वा तु तस्य बन्धुजनास्तं २१

२२ धर्त्तुं निर्जग्मुः, यतस्तेऽवदन् स हतबुद्धिरभूत्। यिरूशालेमाद्
आगताः शास्त्राध्यापकास्त्वाहुः, स बेलसबूलेनाविष्टः, भूतानामधि-
२३ पतेः साहाय्येन स भूतान् निःसारयतीति। तदा स तान् समीपम्
आहूयोपमाभि र्जगाद, शैतानः कथं शैतानं निःसारयितुं शक्नुयात्?
२४ किञ्चन राज्यं यद्यात्मविरुद्धं विभज्यते तर्हि तद् राज्यं स्थातुं न
२५ शक्नोति, किञ्चन कुलस्य यद्यात्मविरुद्धं विभज्यते तर्हि तत् कुलं
२६ स्थातुं न शक्नोति। शैतानश्च यद्यात्मविरुद्धमुत्थाय विभक्तो जातस्तर्हि
२७ स स्थातुं न शक्नोति प्रत्युतान्तं प्राप्नोति। तस्य बलवतो गृहं प्रवि-
श्यैव तस्य सज्जाम् अपहर्त्तुं केनापि न शक्यं। प्रथमतः स बलवांस्तेन
२८ बध्यतां, तथानुष्ठिते तद्गृहस्य द्रव्याणि तेनापहारिष्यन्ते। युष्मानहं
सत्यं ब्रवीमि, मनुष्यसन्तानानां सर्व्वाणि पापानि तै र्व्याहृतानि
२९ सर्व्वाणि धर्म्मनिन्दावचांसि च मार्जयिष्यन्ते, यस्तु पवित्रस्यात्मनो
विरुद्धं निन्दां व्याहरति सोऽनन्ते कालेऽपि क्षमां नावाप्स्यति, अपि
३० तु विचारेऽनन्तं दण्डमर्हति। यतस्तेऽवदन्, असावशुचिनात्मनाविष्टः।
३१ इतिमध्ये तस्य भ्रातरो माता चागत्य वहिस्तिष्ठन्तः प्रेष्यं प्रहित्य
३२ तम् आजुहूवुः। तस्य परितस्तु जनौघ आसीन आसीत्। अतस्ते तं
जगदुः, पश्यतु भवतो माता भ्रातरश्च वहिस्तिष्ठन्ति भवन्तमन्वि-
३३ च्छन्ति च। स तु तान् प्रतिबभाषे, मम माता का? मम भ्रातरश्च के?
३४ तदा स स्वपरित उपविष्टान् जनान् समवलोक्य बभाषे, पश्यत, मम
३५ माता मम भ्रातरश्चेमे। यतो यः कश्चिद् ईश्वरस्येच्छाम् आचरति
स एव मम भ्राता किंवा मम भगिनी किंवा मम माता॥ ३॥

यीशोः कतिपयदृष्टान्ताः।

४१ पुनः स समुद्रतटे शिक्षयितुम् आरेभे, तदा तु महति जनौघे
तत्समीपं समागते स नौकां प्रविश्य समुद्र उपाविशत् कृत्स्नो

जनौघश्च समुद्रतटस्थे स्थलेऽतिष्ठत। स च तेभ्यो दृष्टान्तकथाभिः २
प्रचुरशिक्षाम् अददात्, विशेषतः स्वशिक्षायां तान् अब्रवीत्, श्रूयतां, ३
पश्य वप्ता बीजानि वप्तुं निर्गतः। तस्य वपनकाले तु कतिपयानि ४
बीजानि पथपार्श्वेऽपतन् तत आकाशस्था विहङ्गमा आगत्य तान्य-
भक्षयन्। अपराणि तु पाषाणमये स्थलेऽपतन् यत्र तत्कृते ५
प्रभूतमृत्तिका नासीत्। मृत्तिकाया अगभीरत्वात् तानि क्षिप्रं ६
प्रारोहन् उदिते तु सूर्य्येऽदह्यन्त मूलहीनत्वाच्चाशुष्यन्त। अपराणि ७
च कण्टकानां मध्येऽपतन् तैः कण्टकैश्च वृद्धावपीडितानि फलं
नाफलन्। अपराणि तूत्तमायां भूम्यां पतित्वा प्ररोह्य वर्धित्वा च ८
फलम् अफलन्, कानिचित् त्रिंशद्गुणं, कानिचित् षष्टिगुणं, कानि-
चिच्छतगुणञ्च। स च तान् जगाद, शृणोतु यस्य श्रोतुं श्रोत्रे स्तः। ९
यदा तु स निर्जने स्थान आसीत्, तदा द्वादशभिः सह तस्य १०
सङ्गिनस्तं तस्य दृष्टान्तस्य तात्पर्य्यं पप्रच्छुः। स च तानब्रवीत्, ईश्वर- ११
राज्यस्य गूढविषयस्य ज्ञानं युष्मभ्यं दत्तं बहिःस्थानान्त्वमीनां कृते
सर्व्वं तथोपमारूपं जायते यथा ते पश्यन्तो द्रक्ष्यन्ति न त्वनुभवि- १२
ष्यन्ति शृण्वन्तश्च श्रोष्यन्ति न तु भोत्स्यन्ते, अन्यथा परावृत्तानां
तेषां पापक्षमा सम्भविष्यति। पुनः स तानाह, किं न जानीथ १३
दृष्टान्तकथामिमां कथञ्च सर्व्वा दृष्टान्तकथा युष्माभि र्ज्ञातव्याः? स १४
वप्ता वाक्यं वपति। पथपार्श्वस्थाश्च ते यत्र वाक्यमुप्यते श्रुते तु १५
तस्मिन् शैतान आगत्य तेषां हृदयेषूप्तं वाक्यम् अपहरति। पुनः १६
पाषाणमये स्थले लब्धबीजास्ते ये वाक्यं श्रुत्वैव तत्क्षणं सानन्दं
गृह्णन्ति तेषां त्वन्तर्मूलं नास्ति ततश्च तेऽल्पकालस्थायिनो भवन्ति १७
ततः परं वाक्यहेतुना क्लेश उपद्रवे वोत्पन्ने ते सद्यः स्खलन्ति।
कण्टकानाञ्च मध्ये लब्धबीजास्ते ये वाक्यं शृण्वन्ति ततः परं १८

१९ संसारसम्बन्धीयाश्चिन्ता धनस्य माया चान्यविषयाणामभिलाषाश्च
२० प्रविश्य वाक्यमवपीडयन्ति ततस्तन्निष्फलं जायते। उत्तमायान्तु
भूम्यां लब्धबीजास्ते ये वाक्यं शृण्वन्ति गृह्णन्ति फलं फलन्ति च,
केचित् त्रिंशद्गुणं, केचित् षष्टिगुणं, केचिच्च शतगुणं।

२१ अपि च स तान् जगाद दीपो यद् द्रोणस्याधः किंवा खट्वाया
अधः स्थाप्येत तदर्थं किमायाति? स यद् दीपाधारोपरि निधी-
२२ येत किं न तदर्थम् आयाति? वास्तवं नास्ति किमपि गूढं यत्
प्रत्यक्षं भविष्यति। तच्च येन सप्रकाशं स्थानं गच्छेत् तदर्थमेव
२३ प्रच्छन्नीभूतं। शृणोतु यस्य श्रोतुं श्रोत्रे स्तः।

२४ पुनः स तान् जगाद, युष्माभिः किं श्रूयते तद् आलोच्यतां।
येन परिमाणेन यूयं मिमीध्वे तेनैव युष्मदर्थं मायिष्यते, शृणवद्भ्यश्च
२५ युष्मभ्यम् अधिकं दायिष्यते। यतो यस्यास्ते तस्मै दायिष्यते यस्य
तु नास्ते तस्य यदस्ति तदपि तस्माद् अपहारिष्यते।

२६ पुनः स बभाषे, ईश्वरराज्यं तथा यथा कश्चिन्नरो भूमौ बीजानि
२७ वपति ततः प्रभृति यावत् स प्रतिरात्रं प्रतिदिनञ्च निद्रात्युत्तिष्ठति
२८ च तावत् तदलक्षितरूपं बीजानि प्ररोहन्ति वर्धन्ते च, यतो भूमिः
स्वयमेव फलन्ती प्रथमं तृणं ततः परं मञ्जरीं पश्चात् मञ्जर्य्यां
२९ सिद्धं शस्यम् उत्पादयति। परिणते तु फले स तूर्णं लवित्रं प्रयुंक्ते
यतः शस्यकर्त्तनकाल उपस्थितः।

३० पुनः स बभाषे, वयम् ईश्वरराज्यं केन सदृशं वदिष्यामः?
३१ कयोपमया वा तद् उपमास्यामहे? तत् सर्षपबीजेन सदृशं, यतो
३२ भूमौ वपनकाले तत् सर्व्वबीजेभ्यः क्षुद्रतरम्, उप्तन्तु प्ररुह्य सर्व्व-
शाकेभ्यो महत्तरं जायते महतीः शाखाश्च प्रसारयति, तस्य छाया-
यांचाकाशीयपक्षिणो निवस्तुं शक्नुवन्ति।

ईदृग्रेव बहुभि र्दृष्टान्तैः स तेषां श्रवणशक्त्यनुरूपं तेभ्यो ३३
वाचमकथयत् दृष्टान्तं विना तेभ्यः किमपि नाकथयत्। निर्जनन्तु ३४
स्वशिष्येभ्यः सर्व्वं व्याख्यत्।

### यीशोः कतिपयालौकिककर्म्माणि।

#### यीशो र्झञ्झानिवारणम् अनेकभूतग्रस्ताय निरामयत्वदानञ्च।

तस्मिन् दिने सन्ध्यायां जातायां स तान् जगाद, पारं गम्यतां। ३५
अतस्ते जनौघं त्यक्त्वा तथाभूतं तं नौकायाम् अग्रहिषुः। तत्सह ३६
त्वपराः काश्चिन्नौका आसन्। तदा महावात्या जाता तरङ्गाश्च नाव- ३७
माहनन् अनेन सा तोयेनापूर्य्यत। स तु नावः पश्चाद्भाग उपविश्योप- ३८
धानमालम्ब्य निद्रात्। अतस्ते तं प्राबोधयन् व्याहरंश्च भो गुरो वयं
नश्यामोऽत्र भवान् किं निश्चिन्तः? तदा स जागरितो वायुं तर्जया- ३९
मास समुद्रञ्च जगाद मौनं कुरु तूष्णीम्भव। अनेन वायुः प्रशाम
सम्पूर्णं निर्वातो बभूव च। स च तान् जगाद, किमर्थमीदृग्भीरवः ४०
स्थ? यूयं विश्वासहीनाः कथमेतत्? तदा ते महाभयग्रस्ता ४१
मिथो जगदुः, को न्वयं यद् वायुः समुद्रश्चाप्यस्याज्ञा गृह्लीतः॥ ४॥

ततः परं ते समुद्रपारस्थं गादारीयाणां देशं प्रापुः। नौकातश्च ५ १
निर्गते तस्मिन् तत्क्षणं शवागारेभ्य आगतः कश्चिद् अशुचिभूताविष्टो २
नरस्तस्य सम्मुखमुपतस्थे। स शवागारेषु कृतनिवास आसीत् कश्चिच्च ३
तं शृङ्खलैरपि बद्धुं नाशक्नोत् यतः बहुकृत्वो निगडैः शृङ्खलैश्च ४
बद्धेन तेन शृङ्खलानि विदीर्णानि निगडानि च चूर्णितानि तं
शमयितुं शक्तिमान् कोऽपि नासीत्। स दिने च रात्रौ च निरन्तरं ५
गिरिषु शवागारेषु वा तिष्ठन्नक्रोशत् प्रस्तरैश्चात्मानम् अकृन्तत्।
दूरात्तु यीशुं दृष्ट्वा सोऽभिधाव्य तस्य भजनं चकार महारवेण च ६
क्रोशन् व्याजहार भो परात्परस्येश्वरस्य पुत्र यीशो भवता सह मम ७

८ कः सम्बन्धः? ईश्वरेण भवन्तं शापयामि मां मा यातयतु। यतो
९ यीशुस्तमवदत् रे अशुचे आत्मन् मनुष्यादस्मान्निःसर। स च तं
पप्रच्छ तव नाम किं? स प्रत्युवाच वाहिनीति मम नाम यतो
१० वयं बहवः। भवानस्मानेतद्देशाद् वहि र्मां प्रेषयत्वित्युक्ता च स तं
११ भृशं प्रसादयामास। तत्र गिरिनितम्बे तु महान् शूकरव्रजोऽचरत्।
१२ अतस्ते सर्व्वे भूताः प्रार्थयमानास्तमवदन्, अमून् शूकरान् प्रत्यस्मान्
१३ विसृजतु, वयं तान् शूकरान् प्रविशाम। ततो यीशुना तूर्णम्
अनुज्ञातास्तेऽशुचय आत्मानो निःसृत्य तान् शूकरान् प्रविविशुस्तेन
स कृत्स्नो व्रजः सवेगं धावन् शैलाग्रात् समुद्रे निपपात। ते शूकराः
१४ प्रायेण द्वे सहस्रे आसन्, सर्व्वे च समुद्रे पञ्चत्वं गताः। शूकर-
रक्षकास्तु पलाय्य नगरे पल्लीषु च संवादं ख्यापयामासुः। ततो
१५ यद् वृत्तं तद् द्रष्टुं मनुष्या वहिराजग्मुः। यीशोः समीपमुपस्थाय
च वाहिन्याविष्टः स भूतग्रस्तो नर उपविष्टो वस्त्रान्वितः सुबुद्धिश्चेति
१६ पश्यन्तस्ते बिभ्युः। ये च दृष्टवन्तस्ते तेभ्यस्तस्य भूताविष्टस्य वृत्तान्तं
१७ शूकराणाञ्च कथां निवेदयामासुः। ततस्ते यीशुं स्वसीमातोऽप-
१८ सरणं याचितुमारेभिरे। तस्मिंस्तु नावं प्रविशति स भूताविष्टस्तं
सविनयं ययाचे, अहं यद् भवता सार्द्धं तिष्ठेयं तदनुमन्यतामिति।
१९ यीशुस्तु नानुमन्य तं जगाद, स्वगृहं स्वजनसमीपं याहि, प्रभुस्त्वा-
२० मनुकम्प्य त्वदर्थं यत् कृतवांस्तत् सर्व्वं तेभ्यो निवेदय च। ततः स
गत्वा तं प्रति यीशुना यदकारि तत् सर्व्वं दिकापल्यां घोषयितु-
मारेभे, तेन मानवाः सर्व्वे आश्चर्य्यममन्यन्त।

यीशुना स्त्रिया आरोग्यकरणं मृतकन्यायै जीवनदानञ्च।

२१ ततः परं यीशौ नावा ह्रदं तरित्वा पुनः पारम् आगते
२२ महान् जनौघस्तत्समीपे समायतो स तु समुद्रतट आसीत्। पश्य

च समाजाध्यक्षाणां मध्ये यायीरनामा नर एक आगच्छत् तञ्च
दृष्ट्वा तस्य चरणयोः प्रणिपपात तञ्च भृशम् अनुनयन्नवदत्, मम २३
क्षुद्रा दुहिता मृतकल्पा। भवान् आगत्य तस्यां हस्तावर्पयितुम्
अर्हति, तेन सा तरिला जीविष्यति। ततः स तेन सह जगाम, २४
महान् जननिवहस्य तम् अनुव्रजन्नपीडयत्।
तदा लाद्वादशवर्षेभ्यः प्रदररोगेण शीर्णा या काचिद् योषिद् २५
बहुभिश्चिकित्सकै भृशं क्लिष्टा सर्व्वस्वं व्ययित्वापि कमप्युपशमं न लब्ध- २६
वती प्रत्युताधिकमस्वस्था जाता सा यीशोः कथां श्रुत्वा जनौघस्य २७
मध्येन प्रच्छन्नं पश्चाद् उपस्थाय तस्य वसनं पस्पर्श यतः सावदत् तस्य २८
वासांसि स्पृष्टैवाहं तरिष्यामि। सद्यस्तु तस्याः शोणितोत्सः शुष्कीभूतः २९
सा च यद् व्याधिमुक्ताभूत् तत् स्वदेहेऽनुबभूव। यीशुस्तु सपदि ३०
स्वतः प्रभावस्य निर्गमनं ज्ञात्वा जननिवहस्य मध्ये परावृत्य पप्रच्छ,
को मम वसनं स्पृष्टवान्? तस्य शिष्यास्तम् अवादिषुः, जनौघेन ३१
भवान् पीड्यते तत् पश्यति, तथापि पृच्छति, को मां स्पृष्टवानिति।
तत्तु यथाकारि तां दिदृक्षुः स पर्य्यपश्यत्। तदा सभया सकम्पा ३२
च सा योषिद् आत्मनि यद् वृत्तं तज्ज्ञात्वोपस्थाय तत्समक्षं प्रणिपत्य ३३
सर्व्वं यथातथ्यं निवेदयामास। स तु तां जगाद, वत्से तव विश्वासस्त्वां ३४
तारयामास, कुशलं याहि स्वव्याधितो मुक्ता तिष्ठ च।
यावत् स एतद् भाषते तावत् तस्य समाजाध्यक्षस्य गृहात् ३५
केचिन्नरा आगत्यावदन्, भवतो दुहिता ममार, किमर्थं गुरुम्
अधिकं क्लिश्नीयात्? यीशुस्तु ताम् उच्यमानां कथां सपद्युपश्रुत्य ३६
तं समाजाध्यक्षं जगाद, मा भैषीः केवलं विश्वसिहि। स च पितं ३७
याकोबं याकोबस्य सहोदरञ्च योहनमपहायापरं कमपि स्वानु-
व्रजनाय नानुमेने। ततः परं समाजाध्यक्षस्य गृहमागत्य भृशं रुदतो ३८

३९ क्रोशतांश्च कोलाहलं दृष्ट्वा स प्रविश्य तान् जगाद, किमर्थं
कोलाहलं कुरुथ रुदिथ च? न मृता सा बाला सा निद्राणा।
४० ततस्ते तम् उपजहसुः। स तु तान् सर्व्वान् वहिः कृत्वा स्वसार्द्धं
बालिकायाः पितरं मातरञ्च स्वसङ्गिनश्च नयन् बालिकायाः
४१ शयनागारं प्रविवेश। तस्या बालिकाया हस्तञ्च गृहीत्वा तां जगाद,
तालिथा-कूमीति। भाषान्तर एतस्यार्थोऽयं, बालिके, उत्तिष्ठेति
४२ ममाज्ञा। सा च बालिका सपद्युत्थाय विहर्त्तुं प्रावर्त्तत, यतः
सा द्वादशवर्षवयस्कासीत्। तदा मानवा महाचमत्कारं मेनिरे।
४३ स तु तान् दृढमादिशत्, एतत् केनापि न ज्ञातव्यम्। अपि च
स तस्यै भक्ष्यदानम् आज्ञापयामास ॥ ५ ॥

स्वदेशीयलोके यीशोरसम्मानम्।

६ १ ततः परं स तस्मात् स्थानान्निर्गत्य स्वदेशमागमत् तस्य शिष्याश्च
२ तम् अन्वगच्छन्। उपस्थिते तु विश्रामवारे स भजनगृहे शिक्ष-
यितुम् आरेभे बहवश्च श्रोतार आश्चर्य्यं मन्यमाना अवदन्,
कुतोऽमुना सर्वमेतदलभि? अमुष्मै दत्तञ्चेदं किं ज्ञानं? अमुष्य
३ कराभ्यामीदृशानि प्रभावस्य कर्म्माणि कथं साध्यन्ते? असौ किं
नास्मदीयतक्षा मरियमः सुतो याकोवस्य योषे यिहूदाः शिमोनस्य
च भ्राता? अमुष्य भगिन्योऽपि किं नाचास्मन्निकटे वर्त्तन्ते? इत्थं
४ ते तस्मिन् स्खलिताः। यीशुस्तु तान् अब्रवीत्, नान्यत्र कुत्रापि
५ भाववादयसम्मानितः केवलं स्वदेशे स्वकुले स्वगृहे च। अतः स
तत्र प्रभावसिद्धं किमपि कर्म्म कर्त्तुं नाशक्नोत् केवलं स्वल्पान्
अस्वस्थान् नरान् हस्तार्पणेन निरामयान् अकार्षीत्। तेषाम्
६ अविश्वासे चातीवाश्चर्य्यं मेने। ततः परं स परितः स्थितेषु ग्रामेषु
पर्य्यटन्नशिक्षयत्।

शिष्यान् प्रति यीशोरुपदेशः। योहनस्नापकस्य वधः।

अपि च स पूर्व्वोक्तान् द्वादश शिष्यान् स्वसमीपम् आहूय द्वौ ७
द्वौ कृत्वा प्रेषयितुम् आरेभे, तेभ्यश्चाशुचीनाम् आत्मनां कर्त्तृत्वम्
अदात्। तांश्चेदमादिदेश, यात्रार्थं केवलं यष्टिमादायान्यत् किमपि ८
मादद्धं, भिक्षाधारं, पूपं, पटुकायां वा मुद्रा मादद्धं, अपि तु ९
काष्ठोपानहौ बध्नीत, द्वे त्वङ्गाच्छादने मा परिधद्धं। स तान् इद- १०
मपि जगाद, यत्र कुत्रचिद् गृहं प्रविशथ, स्थानान्तरगमनं यावत्
तत्रावतिष्ठध्वं। ये च सर्व्वे मानवा युष्मान् नानुगृह्लन्ति युष्मद्वाक्यानि ११
च न शृण्वन्ति, तेषां स्थानान्निर्गत्य तेषां विरुद्धं साक्ष्यार्थं
स्वचरणाधःस्थितां मृत्तिकामप्यवधुनुत। युष्मानहं सत्यं ब्रवीमि,
विचारदिने सदोमस्य घमोराया वा दशा तस्य नगरस्य दशातः
सह्यतरा भविष्यति। अतस्ते निर्गत्य मनःपरावर्त्तनस्य कर्त्तव्यताम् १२
अघोषयन्, बहून् भूतांश्च निरसारयन् अस्वस्थांश्च बहून् तैलेनाभि- १३
षिच्य निरामयान् अकुर्व्वन्।

तदा तस्य नाम्नि प्रसिद्धतां गते राजा हेरोदस्तस्य ख्यातिं १४
श्रुत्वाब्रवीत्, स्नापको योहनो मृतानां मध्याद् उत्थितस्ततो हेतोः
प्रभावास्तस्मिन् स्वकार्य्यं साधयन्ति। अन्ये त्ववदन् स एलियः। १५
अपरे चावदन् स भाववादी किंवा भाववादिनाम् एकेन सदृशः।
हेरोदस्तु श्रुत्वा जगाद, यस्य योहनस्य शिरो मया छिन्नं स एवासौ। १६
स मृतानां मध्यादुत्थितः।

वास्तवं हेरोद एव स्वभ्रातुः फिलिपस्य भार्य्यां यां हेरोदि- १७
यामुदूढवांस्तस्याः कारणात् प्रेष्यान् प्रहित्य योहनं धृत्वा कारायां
बद्धवान्। यतो योहनो हेरोदमगदत्, भ्रातृभार्य्यायाः स्वामित्वं १८
त्वया न विधेयमिति। हेरोदिया च तस्मै पर्य्यकुप्यत् तञ्च हन्तुम् १९

२० ऐच्छत् न लब्धक्तोत्। यतो हेरोदो योहनं धार्म्मिकं पवित्रञ्च नरं
ज्ञात्वा तस्मादबिभेत् तञ्चारचत् तस्यादेशं श्रुत्वा च बहूनि कर्म्माण्य-
२१ करोत् प्रीतश्च तस्य वाक्यान्याकर्णयत्। अपरम् उपस्थिते शुभदिने
यदा हेरोदः स्वीयजन्मोत्सवे स्वीयमहल्लोकानां सहस्रपतीनां गालौ-
२२ लीयप्रथमानाञ्च निमित्तं रात्रिभोज्यम् अकरोत्, तदा तस्या
हेरोदियाया दुहितरि सभां प्रविश्य नृत्येन हेरोदस्य तत्रोपवि-
ष्टानां तत्सङ्गिनाञ्च प्रीतिमुत्पादितवत्यां राजा तां बालिकामब्रवीद्
२३ यद् वाञ्छसि तन्मां याचस्व तदेव तुभ्यं दास्यामि। अपि च स
शपथं तां जगाद, यद् वाञ्छसि तत् तुभ्यं दास्यामि, अर्द्धराज्य-
२४ पर्य्यन्तं तद् दास्यामि। तदा सा निर्गत्य स्वजननीम् अप्राक्षीत्, किं
२५ याचिष्ये? सा जगाद, स्नापकस्य योहनस्य मस्तकमिति। ततः सा
क्षिप्रं भोत्साहं प्रविश्य राज्ञोऽन्तिकं गत्वायाचिष्ट यथा भवान् सपदि
मह्यं स्थाले स्नापकस्य योहनस्य मस्तकं ददात्विदं मम वाञ्छा।
२६ अनेन राजा शोकार्त्तो जातोऽपि शपथानां सङ्गिनाञ्च भयात् तां
२७ प्रत्याख्यातुं नैच्छत्। अतो राजा तूर्णं प्रतिहारिणं प्रहित्य तस्य
२८ शिरस आनयनमादिदेश। स च गत्वा कारायां तस्य शिरश्छित्त्वा
स्थाले निधायानीय बालिकायै ददौ बालिका च स्वमात्रे तद्
ददौ। सर्व्वमेतच्छ्रुत्वा तस्य शिष्या आगत्य तस्य देहम् आदाय
शवागारे निदधुः।

प्रभो यीशोरपराणि कानिचित् अलौकिककर्म्माणि।
यीशुना पञ्चसहस्रलोकेभ्य आश्चर्य्यरूपेण भोजनदानम्
पद्भ्यां जलसञ्चरणञ्च।

२९ ततः परं प्रेरिता यीशोः समक्षं समागम्य, यच्च कृतवन्तः शिक्षित-
३० वन्तश्च तत् सर्व्वं तस्मै निवेदयामासुः। स च तान् जगाद, यूयमेव

गुप्तं निर्जनं स्थानमागत्य किञ्चिद् विश्राम्यत। यत आगच्छतामप- ३१
गच्छताञ्च महती सङ्ख्यासीत्, आहारायाप्यवकाशस्तेषां नाभवत्। ३२
अतस्ते गुप्तं नावमारुह्य निर्जनं स्थानं जग्मुः। जननिवहास्तु गच्छतस्तान् ३३
अपश्यन् बहवस्ताभ्यजानन्, अतः सर्व्वनगरेभ्यो मानवाः स्थलमार्गेण
तत्र धावन्तस्तान् अतिचक्रमुस्तस्य समीपं समाजग्मुश्च। यीशुस्तु ३४
बहिरेत्य महान्तं जननिवहं दृष्ट्वा तान् अनुचकम्पे, यतस्ते हीनरक्षकै
र्मेषैः सदृशा आसन्। स च तेभ्यः प्रभूतां शिक्षां दातुमारेभे।

इत्थं दिनस्य महाभागेऽतीते शिष्या उपागत्य तमूचुः, निर्जन- ३५
मिदं स्थानं गतञ्च बहुतरं दिनं। भवान् अमून् विसृजतु यथा ३६
ते परितः स्थिताः पल्ली र्ग्रामांश्च गत्वा खाद्यं पूपान् क्रीणीयु र्यत
स्तेषां खाद्यं नास्ति। स तु तान् प्रतिबभाषे, यूयमेव तेभ्य आहारं ३७
दत्त। अनेन ते तम् अब्रुवन्, वयं किं गत्वा द्विशतमुद्रापादैः
पूपान् क्रीत्वामीभ्य आहारं दास्यामः? स तु तान् पप्रच्छ, युष्म- ३८
दन्तिकं कति पूपा विद्यन्ते? गत्वा पश्यत। ते तदवगत्याब्रुवन्, पञ्च
पूपा द्वौ मत्स्यौ च। ततः स तान् हरिति तृणे पङ्क्तिभिः सर्व्वेषाम् ३९
उपवेशनमादिदेश। तदा त आहारार्थं शतं शतं पञ्चाशत् पञ्चाशच्च ४०
नरास्तुरस्तपङ्क्तिभिरुपविष्टाः स च तान् पञ्च पूपान् द्वौ मत्स्यौ ४१
चादाय स्वर्गं प्रत्युर्द्धदृष्टि र्भूत्वाशिषमवादीत्, पूपांश्च भङ्क्त्वा तेभ्यः
परिवेषणार्थं स्वशिष्येभ्योऽददात् तौ द्वौ मत्स्यावपि सर्व्वेषां कृते ४२
विभेजे। इत्थं सर्व्वे भुक्त्वा तहपुः। भग्नांशान् सङ्गृह्य च द्वादशडल- ४३
कान् पूरयामासुः, मत्स्ययोरपि भग्नांशान् आददिरे। ते पूपभोक्तारः ४४
प्रायः पञ्चसहस्रपुरुषा आसन्।

ततः परं स सपदि सोत्साहं स्वशिष्यान् नावं प्रवेष्टुं यावच्च स ४५
लोकौघं विसृजति तावद् अग्रतो बैत्सैदाभुद्दिश्य गन्तुमादिदेश। ४६

४७ अनन्तरं स जनान् अनुज्ञाय प्रार्थयितुं गिरिमारुरोह। सन्ध्याया-
मुपस्थितायां नौका मध्यसागरं स चैकाकी स्थले आसीत्।
४८ नौकावाहने च ते क्लिश्यन्ते यतो वायुस्तेषां सम्मुख इति तेनादर्शि।
प्रायो यामिन्याश्चतुर्थे यामे तु स समुद्रोपरि व्रजंस्तेषां समीपमा-
४९ गमत् तानतिक्रमितुञ्च प्रावर्त्तत। ते च समुद्रोपरि व्रजन्तं तं
५० दृष्ट्वापच्छायां मत्वा चुक्रुशुः, यतः सर्व्वे एव तं पश्यन्त उद्विविजिरे।
स तु तूर्णं तानालपन्नब्रवीत्, आश्वसित, सोऽहं, मा भैष्ट।
५१ ततः परं स नौकामारुह्य तेषां समीपम् उपतस्थे वायुश्च शशाम।
५२ अनेन ते मनःस्वतिमात्रं विस्मिता आश्चर्य्यं मेनिरे, यतः पूपानां
वृद्धा ते न बुद्धं, तेषां हृदयन्तु जडीभूतमासीत्।
५३ तरित्वा ते गिनेषरताख्यं जनपदम् उपस्थाय नावं कूले बबन्धुः।
५४ नावस्तु निर्गतेषु तेषु मानवाः सपदि तमभिज्ञाय धावन्तो निकटस्थं
कृत्स्नं प्रदेशं गत्वा पर्य्यङ्कैरस्वस्थान् वहन्तो यत्र कुत्रापि तस्योपस्थितेः
५५ संवादम् अशृण्वंस्तत्तत् स्थानं निन्युः। तस्मिंश्च ग्रामान् नगराणि
वा पल्लीं वा प्रविशति मानवा अस्वस्थान् हट्टस्थानेषु निधाय तैस्त-
दीयवस्त्रप्रलम्बकस्पर्शनमेव तमयाचन्त, यावन्तश्चास्पृशंस्ते सर्व्वे तेरुः।

### अशौचमधि उपदेशः।

७ १ एकदा फरीशिनः शास्त्राध्यापकानाञ्च केचिज्जना यिरूशालेमत
२ आगत्य तस्यान्तिकं समाजग्मुस्तस्य कतिपयांश्च शिष्यान् अपवित्रैरर्थ-
३ तोऽप्रक्षालितै र्हस्तैराहरतो दृष्ट्वा निनिन्दुः। यतः फरीशिनो
यिहूदीयाश्च सर्व्वे प्राचीनानां परम्परागतां शिक्षां रक्षन्तीतिहेतोः
४ सयत्नं हस्तान् अप्रक्षाल्य न भक्षयन्ति। हट्टादागता न स्नात्वा न
भक्षयन्ति। अन्या अपि बह्वो रीत्यस्तैः शिक्षिता रक्ष्यन्ते, यथा
पानपात्राणां भाण्डानां तैजसभाजनानां शय्यानाञ्च क्षालनम्। अतः

फरौशिनः शास्त्राध्यापकाश्च तमपृच्छन्, तव शिष्याः किमर्थं प्राची- ५
नानां परम्परागतां शिक्षाम् अनाचरन्तोऽप्रक्षालितै र्हस्तैः खाद्यमा-
हरन्ति ? स तु तान् प्रतिजगाद, कपटिनो युष्मानधि यिशायाहः ६
समीचीनां भावोक्तिं व्याहृतवान्, यथा लिखितमास्ते,

अधरैरेव कुर्व्वन्ति मत्सम्मानं जना इमे।
किन्त्वन्तःकरणं तेषां मत्तो दूरमवस्थितं॥
अशीकार्थन्त्विमे सर्व्वे मम कुर्व्वन्ति सेवनं।
धर्म्मशिक्षाछलेनैव शिक्षयन्तो नृणां विधीन्॥

यतो यूयमीश्वरस्याज्ञां विहाय मानवानां परम्परागतां शिक्षां ८
रक्षन्तो भाण्डानां पानपात्राणाञ्च क्षालनं तत्सदृशा अन्याश्च बह्वः
क्रियाः कुरुथ। स पुनस्तान् जगाद, युष्माकं परम्परागतां शिक्षां ९
रक्षितुकामा यूयं वाढम् ईश्वरस्याज्ञां व्यर्थीकुरुथ। यतो मोशिः १०
कथयामास, त्वं निजपितरं मातरञ्च सम्मन्यस्वेति, अपि च यो निज-
पितरं मातरं वा शपेत स वध्यो भविष्यतीति। यूयन्तु वदथ, मत्तो ११
यद्दानेन तवोपकारः समभविष्यत् तत् कर्वाणमर्थत ईश्वरायोपहृत-
मित्थं पित्रे मात्रे वा यो मनुष्यः कथयतीति। यूयञ्च तत्पश्चात् तं
पितुर्मातुर्वा कमप्युपकारं कर्त्तुं नानुजानीथ। अनेन स्वपरम्परा- १२
गतशिक्षयेश्वरस्य वाक्यं व्यर्थीकुरुथ। ईदृशी र्बह्वः क्रियाश्च कुरुथ। १३

अनन्तरं स जननिवहं पुनः स्वसमीपमाहूय बभाषे, सर्व्वे यूयमाभिः १४
श्रुत्वा बुध्यतां। वाह्यान्मनुष्यस्यान्तरं प्रविश्य यत् तम् अपवित्रीकर्त्तुं १५
शक्नोति तादृशं किमपि नास्ति। प्रत्युत यद्यत् तस्मान्निःसरति
तत्तदेव मनुष्यम् अपवित्रीकरोति। यस्य श्रोतुं श्रोत्रे स्तः स शृणोतु। १६

तस्मिंस्तु जननिवहं त्यक्त्वा गृहं प्रविष्टे शिष्यास्तं तस्या उपमाया १७
अर्थं पप्रच्छुः। ततः स तान् जगाद, किं यूयमप्येवं निर्बोधाः? १८

यत् किञ्चन बाह्यान्मनुष्यं प्रविशति तत् तम् अपवित्रीकर्त्तुं न
१९ शक्नोत्येतत् किं न बुध्यध्वे ? तत् तावन्न तस्य हृदयं प्रविशत्यपि
२० तूदरमेव प्रविश्य सर्व्वभुक्तस्य शुचीकारकं शौचकूपं निर्याति । स
पुन र्जगाद, मनुष्याद् यन्निःसरति तदेव मनुष्यम् अपवित्रीकरोति ।
२१ यतोऽन्तरान्मनुष्याणां हृदयादेव कुचिन्ता निःसरन्ति यथा व्यभिचारा
२२ वेश्यागमनानि नरहत्याश्चौर्य्याणि लोभा अपकाराश्छलः स्वैरिता
२३ कुदृष्टि र्धर्म्मनिन्दाभिमानो मूढता । सर्व्वाण्येतान्यशुभान्यन्तरान्निःस-
रन्ति मनुष्यम् अपवित्रीकुर्व्वन्ति च ।

प्रभो र्यीशोरन्यानि कानिचित् अलौकिककर्म्माणि ।

यीशुना भूतग्रस्तबालिकाया आरोग्यकरणम् ।

चतुःसहस्रलोकेभ्य आश्चर्य्यरूपेण भोजनदानञ्च ।

२४ तस्मात् स्थानादुत्थाय स सोरसीदोनयोः सीमानं गत्वा
किमपि गेहं प्रविवेश, तत्र केनापि न ज्ञातव्यमित्यवाञ्छत् न
२५ त्वशक्नोदलक्षितः स्थातुम् । यतो यस्याः क्षुद्रा दुहिताशुच्यात्मा-
विष्टासीत् तादृशी काचित् स्त्री तच्छ्रुत्वागत्य तस्य चरणयोः
प्रणिपपात । सा योषित् सुरफैनीकीयजातीया यूनानीयासीत् ।
२६ स यथा तस्या दुहितुस्तं भूतं निःसारयेत् तदेव तयायाच्यत ।
२७ यीशुस्तु ताम् अब्रवीत्, प्रथमं बालकांस्तृप्तुमनुमन्यस्व, यतो
२८ बालकानां खाद्यं हृत्वा सारमेयेभ्यो दानं न भद्रं । अनेन सा तं
प्रतिजगाद, सत्यं प्रभो, यतो भोज्यमञ्चस्याधो बालकानां फेलाः
२९ सारमेयै र्भक्ष्यन्ते । ततः स तां जगाद, अस्य वाक्यस्य हेतुतो
३० याहि, तव दुहितुः स भूतो निर्गतः । सा च स्वगृहं गत्वा तं भूतं
निर्गतं स्वदुहितरञ्च पर्य्यङ्के शयानां ददर्श ।
३१ पुनः सोरसीदोनयोः सीमतः प्रस्थाय स दिकापलेः सीमां

मध्येन गालीलीयसमुद्रस्यान्तिकमाजगाम। तत्र मानवाः स्खलित- ३२
वाचमेकं वधिरं तत्समीपमानीय स यत् तस्मिन् हस्तावर्पयेत्
तद्याचन्त। ततः स तं जननिवहान्निर्ज्जनं स्थानमपनीय तस्य ३३
कर्णयोः स्वाङ्गुली र्निधाय निष्ठीवंस्तस्य जिह्वां पस्पर्श स्वर्गं प्रत्यूर्द्ध- ३४
दृष्टिं कृत्वा च निश्वस्य तं जगाद, इप्फाथाह, अस्यार्थो मुक्तो भवेति।
सपदि च तस्य कर्णावुद्घाटयाञ्चक्राते जिह्वाबन्धनञ्च मुमुचे स ३५
स्पष्टवाग् बभूव च। यीशुस्तु तानादिदेश, यूयं कमप्येतन्मा वदत। ३६
स तु यावदधिकं तानादिशत् तावदधिकं तेऽघोषयन्, अतिमात्रं ३७
चमत्कृतास्सांवदन्, स सर्व्वमेव सम्यक् चकार, वधिरांश्च श्रवणे
मूकांश्च कथने समर्थीकृतवान्॥ ७॥

तेषु दिनेष्वेकदातीव महति जनारण्ये सति तेषाञ्च खाद्याभावे ८ १
जाते यीशुः शिष्यान् स्वसमीपमाहूय जगाद, अनुकम्पेऽहममून् २
मानवान्, यतस्त्रीण्येव दिनानि ते मत्समीपम् अवस्थिताः खाद्यञ्च
किमपि तेषां नास्ति। अनशनास्तु ते चेन्मया स्वगेहेषु निसृज्यन्ते ३
तर्हि पथ्यवसत्स्यन्ति, यतस्तेषां केचित् सुदूरादागताः। तस्य शिष्यास्तं ४
प्रतिजगदुः, अत्र निर्जने स्थाने कः कस्मात् पूपान् लब्धामून् तर्पयितुं
शक्नुयात्? स तान् पप्रच्छ, युष्माकं कति पूपाः सन्ति? तेऽब्रुवन्, ५
सप्तैव। ततः स जननिवहं भूमावुपवेष्टुमादिदेश, तान् सप्त ६
पूपांश्चादाय भङ्क्त्वा च परिवेषणार्थं स्वशिष्येभ्योऽददात्, ते च
जनौघाय पर्य्यवेषयन्। स्वल्पाः क्षुद्रा मत्स्या अपि तेषामासन्, ७
स आशिषं वदित्वा तेषामपि परिवेषणमाज्ञापयामास। इत्थं ८
ते बुभुजिरे तृप्ताश्च, अपशिष्टस्य भग्नांशैः पूर्णान् सप्त पेटकां- ९
श्चाददिरे। ते भोक्तारः प्रायश्चतुःसहस्राण्यासन्। अनन्तरं स तान्
विससर्ज।

यीशो र्नानाविधोपदेशाः कर्म्माणि च।

१० तत्क्षणाच्च स स्वशिष्यैः सह नावं प्रविश्य दाल्मानूथेतिनामके
११ प्रदेश उपतस्थे। फरीशिनस्तु बहिरागत्य तेन सह वादानुवादौ
कर्त्तुमारेभिरे परीक्षमाणाश्च तं गगनात् किमप्यभिज्ञानं ययाचिरे।
१२ स त्वात्मना निश्वस्य जगाद, एतत्कालस्य मानवाः किमर्थमभिज्ञानं
याचन्ते? युष्मानहं सत्यं ब्रवीमि, वंशायास्मै किमप्यभिज्ञानं न दायि-
१३ ष्यते। इत्युक्त्वा स तांस्त्यक्त्वा पुन र्नावं प्रविश्यापरपारं प्रतस्थे।
१४ तैस्तु विस्मृत्य पूपा नानीता नावि च तैः साकं केवलमेकः पूप
१५ आसीत्। स च तानादिशत्, सतर्का भवत, फरीशिनां किण्वतो
१६ हेरोदस्य च किण्वतः सावहिता भवत। अनेन ते मिथो विचार-
यन्तोऽवदन्, अस्माकं पूपा न सन्ति तदेतत् कथयति। यीशुस्तु ज्ञात्वा
१७ तान् जगाद, युष्माकं पूपा न सन्तीति किं विचारयथ? इदानीमपि
१८ किं न जानीथ न वा बुध्यध्वे? अधुनापि किं जडहृदो यूयं? सनेत्राः
१९ किं न पश्यथ? सकर्णाः किं न शृणुथ नापि स्मरथ? पञ्चसहस्रेभ्यहं
यदा पञ्च पूपान् अभाङ्क्षं तदा भग्नांशैः पूर्णाः कति डल्लका युष्माभि-
२० रादत्ताः? ते तं वदन्ति, द्वादशेति। चतुःसहस्रेषु च यदा सप्त
पूपानभाङ्क्षं, तदा भग्नांशैः पूर्णाः कति पेटका आदत्ताः? तेऽवदन्,
२१ सप्तेति। ततः स तान् बभाषे, युष्माभि र्न बुध्यते कथमेतत्?
२२ बैत्सैदायान्तूपस्थिते तस्मिन् मानवा अन्धमेकमानीय प्रसादय-
२३ न्तस्तं तस्य स्पर्शनं ययाचिरे। ततः स तस्यान्धस्य हस्तं धृत्वा तं ग्रामाद्
बहि र्निनाय तन्नेत्रयो र्निष्ठीव्य च तस्मिन् करावर्पयित्वा तं पप्रच्छ
२४ त्वया किमपि दृश्यते किं? अनेन स दृक्पातं कृत्वाब्रवीत्, मनु-
२५ ष्यान् निरीक्षे यतः पादपानिव तान् विहरतः पश्यामि। तदा स
२६ पुनस्तस्य नेत्रयोः करावर्पयित्वा तं दृक्पातं कारयामास। अनेन तस्या-

स्वलप्रतीकारे जाते स सर्व्वान् सुस्पष्टमपश्यत्। स तु तं गेहाय विसृज्य
जगाद्, ग्राममपि मा प्रविश ग्रामस्थं वा कमपि मा ज्ञापय।

यीशोः स्वमरणपुनरुत्थानेऽधि कथाकथनम्।

ततः परं यीशुस्तच्छिष्याश्च कैसरियाफिलिप्या ग्रामान् जग्मुः। २७
पथि च स शिष्यान् पप्रच्छ, मानवा मां कं ज्ञात्वा वदन्तीति। ते
प्रत्यूचुः, स्नापकं योहनम्, अपरे एलियम् अपरे च भाववादिना- २८
मेकतममिति॥ स पुनस्तान् बभाषे, यूयन्तु मां कं ज्ञात्वा वदथ? २९
अनेन पितरस्तं प्रत्युवाच, भवान् ख्रीष्ट इति। ततः स तांस्तर्जयन्न- ३०
ब्रवीत्, मम कथां कमपि मा वदत।

अनन्तरं स तानिदं शिक्षयितुमारेभे यथा, मनुष्यपुत्रस्यावश्यं ३१
यत् स बहुदुःखं भुञ्जीत प्राचीनै र्मुख्ययाजकैः शास्त्राध्यापकैश्च
निराक्रियेत घात्येत च त्रिभ्यो दिनेभ्यस्तु परं पुनरुत्तिष्ठेत्। स च ३२
वाक्यमेतत् स्पष्टमभाषत। तदा पितरस्तं निर्जनमादाय तर्जयितु-
मारेभे। स तु परावृत्य स्वशिष्यान् दृष्ट्वा च पितरं तर्जयन् ३३
जगाद्, मत्तोऽपसर शैतान, यतो नैवेश्वरस्यापि तु मनुष्याणामेव
विषयास्त्वया चिन्त्यन्ते।

ततः परं स स्वशिष्यैः सह जननिवहमपि स्वसमीपमाहूय ३४
तान् जगाद्, यः कश्चिन्माम् अनुगन्तुमिच्छति स आत्मानं प्रत्या-
ख्यातु स्वक्रुशमादाय च मामनुव्रजतु। यतो यः स्वप्राणान् ३५
रिरक्षिषति स तान् हारयिष्यति। यस्तु मदर्थं सुसंवादार्थञ्च
स्वप्राणान् हारयति स तान् रक्षिष्यति। यतो मनुष्यः कृत्स्नं ३६
जगल्लब्ध्वा यदि स्वप्राणं वञ्च्यते तर्हि तस्य हितं वा किं भवति?
स्वप्राणानां वा कं निष्क्रयं मनुष्यो दास्यति? यतो यः कश्चिद् ३७
व्यभिचारिषु पापिष्ठेषु चैतत्कालिकमानवेषु मत्तो मदीयवाक्येभ्य-

३८ स्वापचपते, पवित्रै दूतै र्वृतो मनुष्यपुत्रो यदा स्वपितुः प्रतापे-
नागमिष्यति तदा सोऽपि तस्मादपचपिष्यते।
३९ अपि च स तान् जगाद, युष्मानहं सत्यं ब्रवीमि, अत्र ये
तिष्ठन्ति तेषां मध्ये केचिद् यावदीश्वरराज्यं प्रभावेनागतं न द्रक्ष्यन्ति
तावन्मृत्योरास्वादं न लप्स्यन्ते॥ ८॥

यीशोरुज्ज्वलमूर्त्तिधारणम्।

९ १ षड्भ्यो दिनेभ्यः परं यीशुः पितरं याकोबं योहनञ्च गृहीत्वा
विजनं केवलं तानेव प्रोच्चमेकं गिरिम् आरोहयामास तेषां समक्षं
२ रूपान्तरीबभूव च। तस्य परिच्छदश्चोज्ज्वलो हिमवदतीव शुभ्र-
३ श्चाभूत्, तादृक् शुभ्रीकर्त्तुं पृथिवीस्थेन रजकेण न शक्यं। अपि च
४ मोशिरेलियश्च तेभ्यो दर्शनं ददतुः। तौ यीशुना सह समलपतां।
५ तदा पितरो यीशुं सम्बोध्यावादीत् रब्बिन् भद्रमस्माकमत्रावस्थानम्
अतोऽस्माभिस्त्रीणुटजानि निर्म्मीयन्तां भवतः कृत एकं मोशेः कृत
६ एकम् एलियस्य कृते चैकं। वास्तवं किं वक्तव्यं तत् तेन नाज्ञायत
७ यतस्ते त्रासापन्ना आसन्। ततः परं तेषामुपरि छायाकरो मेघः
मञ्जातस्तस्मान्मेघाद् वाणीयमुदभूत् अयं मम प्रियः पुत्रोऽस्य वर्चांसि
८ युष्माभिः श्रूयन्तामिति। अकस्मात्तु परितो दृक्पातं कुर्व्वन्तस्ते
पुन र्नापरं कमपि ददृशुः केवलं तैः सहितं यीशुं।
९ गिरितस्त्ववरोहत्सु तेषु यीशुस्तानिदमादिदेश, मनुष्यपुत्रो
यावन्मृतानां मध्यान्नोत्तिष्ठति तावद् यूयं यद्यद् दृष्टवन्तस्तत्
१० कमपि मा ज्ञापयत। अतस्ते तद् वचनं स्वार्थम् अरचन् अपि तु
११ मृतानां मध्यादुत्थानं किं भवेदेतदधि मिथो व्यचारयन्। ततस्ते
यीशुं पप्रच्छुः प्रथमम् एलियेनागन्तव्यमिति शास्त्राध्यापकैः कथ-
१२ मुच्यते? स तान् प्रतिजगाद, सत्यं प्रथमम् एलिय आगत्य सर्व्वं

पुनः संस्करिष्यति। मनुष्यपुत्रमप्यधि कथमिदं लिखितमास्ते यत्
तेन बहुदुःखं सोढव्यं नगण्यता च गन्तव्या? युष्मांस्त्वहं सत्यं १३
ब्रवीमि, एलियोऽप्यागतवान् तमधि च यल्लिखितमास्ते तदनुरूपं
ते तं प्रति तत्तत् कृतवन्तो यद्यदैच्छंस्ते।

यीशो र्विविधकर्म्माणि शिक्षा च।

यीशुना भूतग्रस्तबालकस्य आरोग्यकरणम्।

ततः परं यदा स शिष्याणामन्तिकमागमत् तदा महान्तं १४
जननिवहं तेषां परितः संस्थितं शास्त्राध्यापकांश्च तैः विवदमानान्
ददर्श। तत्क्षणन्तु स हत्स्नो जननिवहस्तं दृष्ट्वा चमत्कारं मेने १५
मनुष्याश्च समाद्रवन्तस्तमभ्यनन्दन्। स तु शास्त्राध्यापकान् पप्रच्छ, १६
एतैः किं विवदध्वे? तदा जननिवहमध्यात्त्वर एकः प्रतिबभाषे, १७
गुरो, भवत्समीपमहं स्वपुत्रमानीतवान् स मूकेनात्मनाविष्टः। स १८
चात्मा यत्र तमाक्रामयति तत्र तं कर्षति स च फेनमुद्गमयति
दन्तैश्च दन्तान् घर्षति यष्टिवत् कठिनो जायते च। भवतः शिष्या
यत् तं निःसारयेयुस्तदर्थमहं तेभ्यो न्यवेदयं ते तु नाशक्नुवन्। स तदा १९
तान् प्रतिभाषमाणो जगाद, रे विश्वासहीन वंश युष्मत्समीपं मया
कियत्कालमवस्थातव्यम्? कियत्कालं यूयं मया सोढव्याः? स
मदन्तिकमानीयताम्। ततस्तस्मिंस्तदन्तिकमानीते तं दृष्ट्वैव स २०
आत्मा तं बालं कर्षन् चोभयामास स च भूमौ निपत्य फेनमुद्ग-
मयन्नलुठत्। तदा स तत्पितरं पप्रच्छ, कियत्कालमेतत् तस्य २१
सम्भूतम्? स जगाद, आबाल्यात्। स च बहुकृत्वस्तं नाशयितुकामो २२
वह्नौ तोये च निचिप्तवान्। भवता तु यदि किमपि शक्यं तर्ह्य-
स्माननुकम्प्योपकरोतु। यीशुस्तु तमब्रवीत् यदि शक्यमिति कथं २३
वदसि? सर्व्वमेव शक्यं विश्वसता। ततस्तस्य बालकस्य पिता २४

तत्क्षणमुच्चैःस्वरेण साश्रुनेत्रो जगाद विश्वसिमि प्रभो भवान्
२५ ममाविश्वासमुपकरोतु। तदा यीशु र्जननिवहं समाद्रवन्तं दृष्ट्वा
तमशुचिमात्मानं तर्जयन् बभाषे, रे मूक बधिर आत्मन् त्वामहमा-
२६ ज्ञापयामि, अस्मान्निःसर मैव पुनरिममाविश। तदा स क्रोशित्वा
भृशं तं कम्पिला च निःससार। स बालस्तु मृतकल्पो बभूव तेन
२७ बहवोऽवादिषुः स मृतः। यीशुस्तु तस्य हस्तं धृत्वा तमुत्थापयामास
२८ ततः स उत्तस्थौ। ततः परं तस्मिन् गृहं प्रविष्टे तस्य शिष्या
२९ निर्जनं तं पप्रच्छुः, कथं वयं तमात्मानं निःसारयितुं नाशक्नुम? स
तान् जगाद, जातिरस्या निःसारणं नान्येन केनाप्युपायेन सिध्यति,
केवलं प्रार्थनोपवासाभ्याम्।

यीशोः स्वमरणमधि द्वितीयवारं कथाकथनम्।

३० स्थानात् तस्मात् प्रस्थाय ते गालीलदेशेन प्रागच्छन्, तत्तु
३१ केनापि ज्ञायेत तत् स नैच्छत्, यतः स स्वशिष्यान् शिक्षयन्न-
कथयत्, मनुष्यपुत्रो मनुष्याणां हस्तेषु समर्पयिष्यते ते चाघानिष्यते
३२ च, हतस्तु स तृतीये दिने पुनरुत्थास्यति। ते तु तद् वचनं
नाबुध्यन्त तं प्रष्टुमबिभयुश्च।

तत्त्वतः को महान् धर्म्मपथे विघ्नप्राप्तेः किं फलम् एतेऽधि शिक्षा च।

३३ ततः परं ते कफरनाहूमम् आजग्मुः। गृहं प्रविष्टश्च स तान्
३४ पप्रच्छ पथि किमधि मिथो वादानुवादावकुरुत? ते तु मौनिनो
बभूवु र्यतः को महत्तम एतदधि ते पथि मिथो वादानुवादौ
३५ कृतवन्तः। स चोपविश्य द्वादश शिष्यानाहूय जगाद, यदि कश्चित्
प्रथमो भवितुं वाञ्छति तर्हि स सर्व्वेषामन्त्यः सर्व्वेषां परिचारकश्च
३६ भवतु। अपि च स बालकमेकमादाय तेषां मध्ये स्थापयामास तं
३७ क्रोडे गृहीत्वा च तान् अब्रवीत् यः कश्चिदीदृशमेकं बालकं मम

नाम्ना गृह्णाति स मां गृह्णाति, माञ्च यो गृह्णाति स न माम्
अपि तु मत्प्रेरकमेव गृह्णाति।

तदा योहनस्तं प्रतिबभाषे, गुरो, भवतो नाम्ना यो भूतान् ३८
निःसारयत्यस्मांस्तु नानुगच्छति, तादृशो नरः कश्चिदस्माभि र्दृष्टः,
स त्वस्मान् नानुगच्छतीतिहेतो र्वयं तं न्यवारयाम। यीशुस्तु जगाद ३९
मैव तं निवारयत, यतो नास्ति कोऽपि तादृशो यो मन्नाम्ना प्रभा-
वसिद्धं कर्म्म कृत्वा सहसा मां निन्दितुं शक्नुयात्। यतो योऽस्माकं ४०
विपक्षो नास्ति सोऽस्माकं स्वपक्षः।

यूयं ख्रीष्टस्येति हेतो र्मम नाम्ना यः कश्चिद् युष्मान् चषकमेकं ४१
तोयं पाययति, युष्मान् सत्यं ब्रवीमि, स कथञ्चन स्वपारितोषिकेण
नापवञ्चिष्यते। यः कश्चित्तु मयि विश्वसतामेतेषां क्षुद्राणामेकं ४२
स्खालयति तत्कण्ठे बृहत्पेषणीबन्धनं समुद्रे च तस्य निपातनं श्रेयः।
तव हस्तश्च चेत् तव स्खलनहेतु र्भवेत् तर्हि तं छिन्धि। त्वदर्थमिदं ४३
श्रेयो यत् त्वं हीनाङ्गो जीवनं प्रविशेः, न त्विदं यद् द्विहस्तो
नरकमनिर्व्वाणञ्च वह्निं गच्छेः यत्र निवासिनां कीटो न म्रियते ४४
वह्निश्च न निर्वायति। तव चरणो वा चेत् तव स्खलनहेतु र्भवेत् ४५
तर्हि तं छिन्धि। त्वदर्थमिदं श्रेयो यत् त्वं खञ्जो जीवनं प्रविशेः,
न त्विदं यद् द्विचरणो नरके वह्नौ चानिर्व्वाणे निक्षिप्येथा यत्र
निवासिनां कीटो न म्रियते वह्निश्च न निर्वायति। तव नेत्रं ४६
वा चेत् तव स्खलनहेतु र्भवेत् तर्हि तदुत्पाटय। त्वदर्थमिदं श्रेयो ४७
यत् त्वमेकनेत्र ईश्वरराज्यं प्रविशेः, न त्विदं यद् द्विनेत्रो वह्निमये
नरके निक्षिप्येथा यत्र निवासिनां कीटो न म्रियते वह्निश्च न ४८
निर्वायति। वास्तवमेकैको नरो वह्निरूपेण लवणेन मिश्रयिष्यते, ४९
एकैको यज्ञीयोपहारश्च लवणेन मिश्रयिष्यते। लवणं भद्रं। लवणन्तु

५० यदि लवणत्वहीनं जायते तर्हि केनोपायेन तत् स्वादुयुक्तं करिष्यथ ?
स्वान्तरे लवणं रचत मिथ ऐक्यमाचरत च ॥ ९ ॥

स्त्रीत्यागमधि शिक्षा।

१० १ तस्मात् स्थानात् प्रस्थाय स यिहूदियाया यर्द्दनपारस्थप्रदेशस्य
च सीमायामुपतस्थे पुनश्च जननिवहास्तदन्तिकं समाजग्मुः। स च
स्वरीत्यनुसारेण पुनस्तानशिक्षयत्।
२ तदा फिरूशिन उपागत्य परीक्षमाणास्तं पप्रच्छुः, भार्य्यात्यागः
३ किं भर्त्तु र्विधेयः? स तान् प्रतिबभाषे, मोशिर्युष्मान् किमादिष्ट-
४ वान्? तेऽवदन् त्यागपत्रं लिखित्वा तां विस्रष्टुं मोशिरनुजज्ञे। तदा
५ यीशुस्तान् प्रत्यवादीत्, युष्माकं हृत्काठिन्यमवेत्य मोशि र्युष्मदर्थ-
६ मिममादेशं लिखितवान्। सृष्टेरादौ त्वीश्वरो नरं नारीञ्च तौ
७ निर्म्मितवान्। "एतद्धेतो र्मनुष्यः पितरं मातरञ्च परित्यज्य स्वजा-
८ यायामासंक्ष्यते तावुभौ चैकाङ्गीभविष्यतः।" अनेन तौ पुन र्न द्वौ
९ स्तः, तावेकाङ्गीभूतौ। अतो यदीश्वरेण संयोजितं तन्मनुष्येण मा
१० वियोज्यतां। ततः परं गृहे शिष्याः पुनस्तां कथां पप्रच्छुः।
११ तदा स तान् जगाद, यः कश्चित् स्वभार्य्यां त्यक्त्वापरामुद्वहति स
१२ तस्या विरुद्धं व्यभिचारं करोति, या च जाया स्वपतिं त्यक्त्वान्येनो-
दुह्यते सा व्यभिचारं करोति।

शिशुविषयिणी शिक्षा।

१३ ततः परं शिशवः केचित् तस्यान्तिकमानीयन्त यत् स तान्
१४ स्पृशेत्। शिष्यास्तु तदानेतॄन् अभर्त्सयन्। तद् दृष्ट्वा यीशुः क्रुद्धा
तान् जगाद, मत्समीपमागमिष्यतः शिशून् अनुमन्यध्वं मा वारयत
१५ यतः स्वर्गराज्यमीदृशानामेव। युष्मानहं सत्यं ब्रवीमि यः कश्चिन्
१६ शिशुरिव स्वर्गराज्यं गृह्णाति स न कथञ्चन तत् प्रवेक्ष्यति।

ततः परं स तान् शिशून् क्रोडे गृहीत्वा तेषु हस्तावर्पयित्वा
चाशिषं बभाषे।

धर्म्माचरणविषयणी शिक्षा।

अनन्तर तस्मिंस्तु गृहाद् वहिः पन्थानं गते कश्चिद् द्रुतगमनेनागत्य १७
जानुनी पातयित्वा च तं पप्रच्छ, भो सद्गुरो अनन्तजीवनस्याधिकारी
यद् भवेयं तदर्थं मया किं कर्त्तव्यं? यीशुस्तं जगाद, कथं मां सन्तं १८
वदसि? सदेक एवेश्वरो नापरः कोऽपि। त्वमाज्ञा जानासि,
व्यभिचारं मा कुरु, नरहत्यां मा कुरु, चौर्य्यं मा कुरु, मृषासाक्ष्यं १९
मा देहि, वञ्चनां मा कुरु, स्वपितरं स्वमातरञ्च सम्मन्यस्वेति। स तं
प्रत्युवाच, गुरो बाल्याद् अहं सर्व्वमेतदाबाल्यात्। तदा यीशुस्तं २०
समालोक्य तस्मिन् स्नेहमनुभूय च तं जगाद, त्वं गुणैकहीनोऽसि, गत्वा २१
सर्व्वं तव यद्यदस्ति तद् विक्रयी दरिद्रेभ्यो देहि, तथा कृते स्वर्गे तव
धनं स्थास्यति, तत परमेहि क्रुशमादाय मामनुगच्छ। वचनेऽस्मिन्
विषादं गत्वा स शोचन् प्रतस्थे यतस्तस्य वसूनि प्रचुराण्यासन्। २२
तदा यीशुः परितो दृक्पातं कृत्वा स्वशिष्यान् अब्रवीत्, २३
वसूनां स्वामिनः कियतायासेनेश्वरराज्यं प्रवेक्ष्यन्ति? तस्यैतेषु २४
वाक्येषु शिष्याश्चमत्कारं मेनिरे। पुनश्च यीशुः प्रतिभाषमाणस्तान्
जगाद, वत्साः, वित्तेषु विश्वसतामीश्वरराज्यप्रवेशः कियदायासयुक्तः! २५
धनवत ईश्वरराज्यप्रवेशात् सूचीच्छिद्रेणोष्ट्रगमनं सुसाध्यं। अनेन २६
तेऽत्यन्तमाश्चर्य्यं मन्यमाना मिथोऽवदन्, कस्तर्हि परित्रातुं शक्नुयात्?
यीशुस्तदा समालोक्य तानब्रवीत्, तदसाध्यं मनुष्याणां न त्वीश्वरस्य। २७
सर्व्वं हि साध्यमीश्वरस्य।

तदा पितरस्तमिदं वक्तुं प्रावर्त्तत, पश्यतु वयं सर्व्वं त्यक्त्वा भवन्त- २८
मनुगामिनो जाताः। यीशुः प्रतिबभाषे, युष्मानहं यथार्थं ब्रवीमि, २९

मदर्थं सुसंवादार्थञ्च गृहं भ्रातृन् वा भगिनी र्वा पितरं वा मातरं
३० वा भार्य्यां वा सन्तानान् वा क्षेत्राणि वा त्यक्त्वा स इदानीमस्मिन्
युग उपद्रवैः सार्द्धं शतगुणं गृहाणि भ्रातृन् भगिनी र्मातृन् सन्ता-
नान् क्षेत्राणि च भावियुगेऽनन्तं जीवनञ्च न लप्स्यते तादृशः कोऽपि
३१ नास्ति। बहवः प्रथमास्त्वन्त्या भविष्यन्त्यन्त्याश्च प्रथमाः।

यीशोः स्वमरणमधि तृतीयवारं कथाकथनम्।

३२ तदा ते यिरूशालेमं गच्छन्ति, वर्त्मन्यासन् यीशुस्तेषामग्रेऽगमत्
ते च विस्मिता आसन् तमनुगच्छन्तोऽबिभयुश्च। ततः स पुनस्तान्
द्वादश शिष्यान् स्वसमीपं गृहीत्वा स्वं प्रति यद्यत् सम्भविष्यति तत्
३३ तेभ्यः कथयितुमारेभे, यथा, पश्यत वयं यिरूशालेमं गच्छामो
मनुष्यपुत्रश्च मुख्ययाजकेषु शास्त्राध्यापकेषु च समर्पयिष्यते। ते च
विचारेण तस्य प्राणदण्डमादेक्ष्यन्ति परजातीयानां करेषु तं
३४ समर्पयिष्यन्ति च, ते पुनस्तमुपहसिष्यन्ति, कशाभिः प्रहरिष्यन्ति,
तद्वपुषि निष्ठीविष्यन्ति, तं घातयिष्यन्ति च। तृतीये दिवसे तु स
पुनरुत्थास्यति।

ईश्वरराज्ये महान् कः, एतदधि शिक्षा।

३५ तदा सिवदियसुतौ याकोबयोहनौ तस्यान्तिकमागत्य जगदतुः,
गुरो आवां यद् याचिष्यावहे भवान् अस्मदर्थं तत् करोत्विति
३६ वाञ्छावः। स तौ पप्रच्छ युष्मदर्थं मया कर्त्तव्यं किं वाञ्छथः? तौ
३७ तं जगदतुः, भवतः प्रताप आवयोरेकतरो भवतो दक्षिणेऽन्यतरो
भवतो वामे समुपविशत्विमं वरमावाभ्यां दातुमर्हति। यीशुस्तौ
३८ प्रत्यवादीत्, युवां यद् याचेथे तन्न जानीथः। येन पानपात्रेणाहं
पास्यामि तेन किं युवां पातुं शक्नुथः? येन च स्नापनेनाहं स्नास्ये तेन
३९ स्नातुं किं युवाभ्यां शक्यं? तौ तमूचतुः, शक्यं। यीशुस्तावब्रवीत्,

येनाहं पास्यामि तेन पानपात्रेण युवां पास्यथः, येनाहं स्नास्ये तेन
स्नापनेन स्नास्येथे च, परन्तु मम दक्षिणे वामे वोपवेशनाधिकारस्य
दानं मया न विधेयं, स येषां कृते निरूपितस्तेभ्य एव दातव्यः। ४०
श्रुत्वैतदन्ये दश शिष्या याकोबे योहने च रौद्र्यमापन्नाः। यीशुस्तु ४१
तान् स्वसमीपमाहूयोवाच, यूयं जानीथ, ये परजातीयानां शास्तारः ४२
प्रतिभान्ति ते तेषामुपरि तीक्ष्णप्रभुत्वं कुर्वते, महान्तश्च तेषां
तीक्ष्णकर्तृत्वं कुर्वते। न भवन्तु तादृशं युष्माकं मध्ये। प्रत्युत ४३
युष्मन्मध्ये यो महान् भवितुमिच्छति स युष्माकं परिचारको
भविष्यति, यश्च युष्मन्मध्ये प्रथमो भवितुमिच्छति स सर्व्वेषां दासो ४४
भविष्यति। यतो मनुष्यपुत्रोऽप्यागतो न परिचर्य्यां भोक्तुम् अपि तु ४५
परिचरितुं दातुञ्च स्वप्राणान् निष्क्रयमूल्यं बहूनां विनिमयेन।

यीशो र्यिरूशालेमगमनं उपदेशदानञ्च।

अन्धवरतीमयाय चक्षुर्दानम्।

अनन्तरं ते यिरीहोमागताः। ततः परं तस्य तच्छिष्याणां ४६
महतो जननिवहस्य च यिरीहोतो निर्गमनकाले तीमयस्य पुत्रो
वरतीमय इति नामकोऽन्धो भिक्षमाणः पथपार्श्व उपविष्ट आसीत्।
नासरतीयो यीशुरुपस्थित इति श्रुत्वा स क्रोशन् गदितुमारेभे, ४७
भो दायूदस्य पुत्र यीशो मामनुकम्पताम्। अनेन बहवस्तं भर्त्स- ४८
यन्तो मौनावलम्बनमादिदिशुः। स तु बहुगुणैरधिकमक्रोशत्।
भो दायूदस्य पुत्र मामनुकम्पताम्। यीशुस्तदा तिष्ठंस्तस्यानयन- ४९
माज्ञापयामास। अतस्ते तमन्धमाहूयन्तोऽब्रुवन्, आश्वसिहि,
उत्तिष्ठ, स त्वामाहूयति। तदा स स्ववसनं त्यक्त्वोत्पत्य यीशोर- ५०
न्तिकमागतः। यीशुस्तं सम्बोध्यावादीत्, त्वदर्थं मया कर्त्तव्यं किं ५१
वाञ्छसि ? सोऽन्धस्तं जगाद, भो रब्बोणि, दृष्टिशक्तिं लिप्से। ततो ५२

यीशुस्तमुवाच, याहि तव विश्वासस्त्वां तारयामास । स च तत्क्षणं दृष्टिशक्तिं लेभे मार्गे यीशोरनुगामी बभूव च ॥ १० ॥

यीशो र्यिरूशालेमे प्रवेशः ।

११ १ अनन्तरं तेषु यिरूशालेमस्य समीपमागत्य जैतुनाख्यगिरौ स्थितयो र्बैत्फगी वैथनिया चेत्यभिधग्रामयोरुपस्थितेषु यीशुः
२ शिष्यौ द्वौ प्रेषयन्निदमादिदेश, युवाममुष्य सम्मुखस्थममुं ग्रामं गच्छतं तत्र प्रविश्यैव बद्धमेकं गर्द्दभशावकमासादयिष्यथो यत्पृष्ठं मनुष्यः कोऽपि
३ नारूढवान्, तमेव मुक्त्वानयतं । यदि च कोऽपि युवां पृच्छेत्, किमर्थमिदं कुरुथ इति, तर्हि वदतम्, अनेन प्रभोः प्रयोजनमास्ते
४ इति, ततः स तत्क्षणं तमत्र विस्रक्ष्यति । तदा तौ गत्वा वहिः क्षुद्ररथ्यायाः पार्श्वे गृहद्वारे बद्धं तं गर्द्दभशावकमासाद्य मोक्तुं
५ प्रावर्त्तेतां । तत्र तिष्ठन्तः केचिन्नरास्तु तावनदन्, किमर्थं तं शावकं
६ मुञ्चथः ? तदा यीशु र्यथादिष्टवांस्तथैव ताभ्यां कथिते तौ तैर-
७ नुज्ञातौ । शावकं तस्य यीशोः समीपमानीय तत्पृष्ठे च स्ववा-
८ सांसि निदधाते । ततः स तमारुरोह । बहवस्य मार्गे स्ववसनानि
९ विस्तारयामासुरन्ये च पादपानां पल्लवांश्छित्त्वा पथि व्यस्तारयन्
१० अग्रपश्चाद्गामिनो नराश्चोच्चरवेणाब्रुवन्, जय, प्रभो र्नाम्ना य आयाति स धन्यो भूयात्, प्रभो र्नाम्नास्मत्पितु र्दायूदस्य यद् राज्यमायाति
११ तद् धन्यं भूयात्, ऊर्द्ध्वलोके जयध्वनि र्भवतु । अनन्तरं यीशु र्यिरूशालेमं धर्म्मधाम च प्रविष्टः, परितः सर्व्वं निरीक्ष्य च दिनावसानहेतो र्द्वादशशिष्यैः सार्द्धं वैथनियां प्रतस्थे ।

विश्वासविशिष्टप्रार्थनासम्बन्धि शिक्षा ।

१२ परप्रातःकाले तेषु वैथनियातः प्रस्थितेषु सोऽक्षुध्यत् दूराच्च
१३ सपत्रमेकम् उडुम्बरवृक्षं निरीक्ष्य तत्र किमपि फलं लप्स्यते न वेति

द्रष्टुं तदन्तिकं जगाम। समीपमुपस्थाय तु पत्रेभ्योऽन्यत् किमपि १४
नाप्राप्यामास। यतस्तदोडुम्बरफलानां समयो नासीत्। अतो
यीशुस्तं समबोध्यावादीत्, इतः परं कदापि कोऽपि त्वत्तः फलं
न भक्षयतु। तस्य शिष्याश्च तद् वचनमश्रौषुः। ततः परं ते १५
यिरूशालेम उपतस्थिरे, यीशुश्च धर्म्मधाम प्रविश्य तत्र धर्म्मधाम्नि १६
क्रयविक्रयकारिणो बहिष्कर्त्तुमारेभे, वणिजां मुद्रासनानि कपोत-
विक्रेतॄणामासनानि च न्युब्जयामास धर्म्मधाम्नो मध्येन च कस्यापि १७
पात्रवहनं नानुमेने, शिक्षयंश्च तान् जगाद, किं न लिखितमास्ते,
. ख्यास्यते सर्व्वजातीनां प्रार्थनाधाम मद्गृहम्।
तत्तु युष्माभिरकारि दस्यूनां गह्वरः। तच्छ्रुत्वा शास्त्राध्यापका १८
मुख्ययाजकाश्च तं हन्तुमयतन्त। वास्तवं ते तस्मादबिभयु र्यतः १९
कृत्स्नो जननिवहस्तस्य शिक्षायां चमत्कारममन्यत।
सन्ध्यायान्तु जातायां स नगराद्निर्जगाम। प्रातःकाले च मार्गेण २०
गच्छन्तस्ते तमुडुम्बरवृक्षं समूलं शुष्कीभूतं ददृशुः। तदा पितरः २१
स्मरंस्तं जगाद, रब्बिन् पश्यतु भवताभिशप्तः पादपोऽसौ शुष्कीभूतः।
यीशुः प्रतिभाषमाणस्तानब्रवीत्, ईश्वरे विश्वासं कृत्वावतिष्ठध्वम्। २२
युष्मानहं सत्यं ब्रवीमि, त्वमुत्पत्य समुद्रे निपतेति गिरिमिममुक्त्वा २३
यः कश्चित् मनसा न संशयानः स्वोक्ता कथा सिध्यतीति विश्वसिति
स यत् कथितवान् तदवाप्स्यति। ततो युष्मानहं वदामि, यूयं प्रार्थ- २४
यमाना यद्यद् याचध्वे तत्तदवश्यं प्राप्स्यथ इति विश्वसित तर्हि तदवाप्स्यथ।
यदा च प्रार्थयमानास्तिष्ठथ तदा क्षमध्वं, यदि मनसि कस्यचिद् २५
विरुद्धा कथा विद्यते। तथा कृते युष्माकं स्वर्गस्थः पितापि युष्माकं
दोषान् क्षमिष्यते। यूयन्तु यदि न क्षमध्वे, तर्हि युष्माकं पितापि २६
युष्माकं दोषान् न क्षमिष्यते।

यीशोः क्षमताविषयिणी शिक्षा।

२७ ततस्ते पुन र्यिरूशालेमं प्रविष्टाः। स च यदा धर्म्मधाम्नि
२८ व्यहरत्, तदा मुख्ययाजकाः शास्त्राध्यापकाः प्राचीनाश्च तमभ्येत्य
पप्रच्छुः, केनाधिकारेण करोषि त्वं कर्म्माण्येतानि? को वा त्वयै-
२९ तानि कारयितुं त्वमधिकारं तुभ्यं दत्तवान्? यीशुस्तु तान् प्रत्य-
ब्रवीत्, युष्मानहमपि कथामेकां प्रक्ष्यामि, मह्यं चेत् तदुत्तरं
दत्थ, तर्हि केनाधिकारेण सर्व्वमेतत् करोमि तदहमपि युष्मान्
३० वदिष्यामि। योहनस्य स्नापनं किं स्वर्गादुत्पन्नमुत मनुष्येभ्यः वा?
३१ एतस्योत्तरं मह्यं दत्त। ते तदा परस्परं विचारयन्तोऽवदन्, तत्
स्वर्गोत्पन्नमित्युक्ते सोऽस्मान् प्रक्ष्यति, यूयं तर्हि तस्मिन् किमर्थं
३२ न विश्वसितवन्तः? तत्तु मनुष्येभ्य उत्पन्नमिति कथं वदेम? वास्तवं
ते जनेभ्यो बिभ्युः, यतो योहनः प्रकृतो भाववाद्यासीदिति सर्व्वै-
३३ रन्वभूयत। ततस्ते यीशुं प्रत्यवदन्, न जानीमः। यीशुस्तदा तान्
प्रतिबभाषे, नाहमपि युष्मान् ज्ञापयामि, करोम्यहं सर्व्वमेतत्
केनाधिकारेणेति॥ ११॥

दुष्टकृषकाणां दृष्टान्तः।

१२ १ तदा स उपमाभिस्तेभ्यः कथयितुमारेभे, नरः कश्चिद् द्राक्षा-
लता रोपयन् द्राक्षोद्यानं कृत्वा वृत्या परिवार्य्य तन्मध्ये द्राक्षा-
मर्द्दनार्थककुण्डं खनित्वाट्टालं निर्म्माय च कृषकेषु करदायिषु तत्
२ समर्प्य देशान्तरं जगाम। ततः परं फलकाले कृषकेभ्यो द्राक्षोद्यानस्य
२ फलानामंशमादातुं स कृषकाणां समीपं दासमेकं प्राहिणोत्। ते
३ तु तं धृत्वा ताडयामासुरिक्तहस्तं विससृजुश्च। ततः स पुनस्तेषां
४ समीपमन्यमेकं दासं प्रेषयामास। ते प्रस्तरक्षेपणेन तस्यापि मूर्द्धा-
५ नमाजघ्नुर्न्यक्कृत्य विससृजुश्च। ततः परमन्यस्मिन् प्रहिते तेन ते

तं घातयामासुः। अपरांश्चानेकान् अहिंसिषुः, कांश्चित् प्रहारेण
कांश्चिद् वा वधेन। तदैक एव तस्य प्रियः पुत्रोऽवशिष्टः। अतो ६
मत्पुत्रं प्रति ते त्रपिता भविष्यन्तीति बुद्ध्वा शेषे स तमपि तेषां
समीपं प्राहिणोत्। ते कृषकास्तु परस्परमब्रुवन्, दायहरोऽसौ, ७
तदागच्छत वयमसुं हनिष्यामस्तेन दायांशोऽस्माकं भविष्यति।
अनेन ते तं धृत्वा जघ्नु द्राक्षोद्यानाद् वहि र्निचिक्षिपुश्च। अतस्त- ८
स्योद्यानस्य स्वामी किं करिष्यति? स आगत्य तान् कृषकान् ९
विनाशयिष्यति, द्राक्षोद्यानञ्चान्येषु समर्पयिष्यति। युष्माभिः कदापि १०
किं शास्त्रोक्तिरियं न पठिता, यथा,

गृहनिर्म्मातृभि र्लोकै र्यः पाषाणो निराकृतः।
स एव गृहकोणस्थः प्रमुख्यः प्रस्तरोऽभवत्।
परमेशस्य कर्म्मेदम् अस्मद्दृष्टौ तदद्भुतम्॥ ११

शासनकर्तॄन् प्रति कर्त्तव्यकर्म्माधि शिक्षा।

ते तदा तं धर्त्तुमयतन्त जननिवहात्त्वबिभयुः। यतस्तैरबोधि १२
यत् स तानधि तां दृष्टान्तकथामवदत्। तं त्यक्त्वा तु ते प्रस्थिताः।
ततः परं वाक्पाशेन तं निबद्धुमिच्छन्तस्ते कांश्चित् फरीशिनो १३
हेरोदीयांश्च तस्यान्तिकं प्रेषयामासुः। त उपागत्य तमूचुः भो गुरो १४
वयं जानीमो यद् भवान् सत्यवान् कस्मादपि न बिभेति यतो
भवान् मनुष्याणां मुखापेक्षां न करोत्यपि तु सत्येनेश्वरस्य पन्थानं
शिक्षयति। कैसराय करदानं विधेयं न वेति? दास्यामोऽथवा न १५
दास्यामः किं? स तु तेषां कापट्यं बुद्ध्वा तान् जगाद, कथं मां
परीक्षध्वे? मुद्रापादमेकमानयताहं तं निरीक्षिष्ये। तस्मिंस्तैरानीते १६
स तान् पप्रच्छ कस्येयं मूर्त्तिरिदं लेखनञ्च? ते तं वदन्ति
कैसरस्य। तदा यीशुस्तान् प्रतिभाषे, दत्त कैसराय यद्यत् १७

कैसरस्य, दत्त चेश्वराय यद्यदीश्वरस्य। अनेन ते तस्मिन्नाश्चर्य्यं मेनिरे।

परकालविषयिणी शिक्षा।

१८ तदा पुनरुत्थानमनङ्गीकुर्व्वाणाः सद्दूकिनस्तस्यान्तिकमागत्य तं
१९ पप्रच्छुः, गुरो, मोशिरस्मदर्थमिममादेशं लिखितवान्, यस्य भ्राता
भार्य्यां विहाय निःसन्तानो म्रियेत, स तां भ्रातृभार्य्यामुदुह्य स्वभ्रातृ
२० वंशमुत्पादयत्विति। आसंस्तु सप्त भ्रातरः। प्रथमः योषितमुदुह्य
२१ निःसन्तानो ममार द्वितीयस्तदा तामुदुवाह, सोऽपि निःसन्तानो
२२ ममार। तृतीयस्य तादृश्येव गति र्बभूव। इत्थं ते सप्त तामुदूह्य
निःसन्ताना ममुः। सर्व्वेषां पश्चात् सा योषिदपि ममार। अतः पुन-
२३ रुत्थान उत्थितानां तेषां कस्य भार्य्या सा भविष्यति? यतस्ते सप्तैव
२४ तामुदूढवन्तः। यीशुस्तदा तान् प्रत्यवादीत्, यूयं किं न हेतोरतो
भ्राम्यथ यच्छास्त्राणीश्वरस्य शक्तिञ्च न जानीथ? यतः पुनरुत्थानात्
२५ परं ते नोद्वहन्ति नोदुह्यन्ते वापि तु स्वर्गनिवासिनो दूता इव
२६ वर्त्तन्ते। मृतानधि, ते यदुत्तिष्ठन्त्येतदधि किं न पठितं युष्माभि
र्मोशे ग्रंन्थे स्तम्बवृत्तान्ते तं प्रति कथितमीश्वरस्येदं वाक्यं, यथा, अब्रा-
हामस्येश्वर इस्हाकस्य चेश्वरो याकोबस्य चेश्वरोऽहमिति। ईश्वरो
२७ न मृतानाम् अपि तु जीवतामीश्वरोऽस्ति, अतो यूयं बाढं भ्राम्यथ।

सर्वप्रधानादेशमधि शिक्षा।

२८ शास्त्राध्यापक एकस्तेषां तं विवादं श्रुत्वा, स तेभ्य उत्तमं प्रत्यु-
त्तरं दत्तवानिति बुद्ध्वा चोपागत्य तं पप्रच्छ, सर्व्वप्रथमाज्ञा का?
२९ यीशुस्तं प्रत्यवादीत् सर्व्वाज्ञानामियं प्रथमा, भो इस्रायेल, शृणु,
३० अस्माकमीश्वरः प्रभुरेकः प्रभुरेव। त्वञ्च सर्व्वान्तःकरणेन, सर्व्वप्राणैः,
सर्व्वचित्तेन, सर्व्वशक्त्या च स्वेश्वरे प्रभौ प्रेम कुर्व्वितीयं प्रथमाज्ञा।

द्वितीया चाज्ञा: सदृशी, यथा, त्वं स्वनिकटस्थ आत्मवत् प्रेम ३१
कुर्व्विति । एतयो र्महत्तरापराज्ञा नास्ति । स शास्त्राध्यापकस्तदा ३२
तं जगाद, वाढं, गुरो, सत्यमुक्तं भवता, यत ईश्वर एक एव तदन्यो
नास्ति, सर्व्वान्तःकरणेन सर्व्वबुद्ध्या सर्व्वप्राणैः सर्व्वशक्त्या च तस्मिन् ३३
प्रेमाचरणं निकटस्थ आत्मवत् प्रेमाचरणञ्च सर्व्वहव्येभ्यः सर्व्वयज्ञेभ्य-
श्चाधिकम् । स च सविवेचनमुत्तरं कृतवानिति दृष्ट्वा यीशुस्तमुवाच, ३४
ईश्वरराज्यात् त्वं न दूरवर्त्तीति । ततः परं नाभवदन्यस्य कस्यापि
साहसं तं किमपि प्रष्टुं ।

ततः परं यीशुः प्रतिभाषमाणो धर्म्मधाम्नि शिक्षयन्नब्रवीत्, ३५
शास्त्राध्यापकाः कथं वदन्ति ख्रीष्टो दायूदस्य पुत्र इति । स्वयं ३६
दायूदस्तु पवित्रस्यात्मन आदेशादिदं कथितवान्,

मम प्रभुमिदं वाक्यं बभाषे परमेश्वरः ।
त्वच्छत्रून् पादपीठं ते यावन्नहि करोम्यहं ।
अवतिष्ठस्व तावत् त्वम् आसीनो मम दक्षिणे ॥

अनेन स्वयं दायूदस्तं प्रभुं वदति, कथं तर्हि स तस्य पुत्रो भवेत् ?। ३७
तदा समागतो महाजननिवहः सानन्दं तस्य वाक्यान्याकर्णयत् ।

चमत्कारदानशीलताविषयिणी शिक्षा ।

स्वशिक्षायाञ्च स तान् जगाद, यूयं शास्त्राध्यापकेभ्यः सावधाना ३८
भवत, आकाङ्क्षन्ति ते महापरिच्छदै र्विहारं हट्टेष्वभिनन्दनानि
समाजगृहेषु श्रेष्ठासनानि भोज्येषु च श्रेष्ठस्थानानि । ते विधवानां ३९
गृहाणि ग्रसन्ति छलाच्च सुदीर्घं प्रार्थयन्ते । विचारे ते घोरतरं ४०
दण्डं लप्स्यन्ते ।

तदा यीशु र्धनागारस्य सम्मुखमुपविश्य तत्र धनागारे जनैः ४१
कथं मुद्रा निक्षिप्यन्ते तन्निरैक्षत । बहवो धनिनस्तु बहुमुद्रा न्यक्षि-

४२ पन्। विधवा तु काचिद् दरिद्रागत्य चोधिष्ठमुद्राद्वयं न्यचिपत्
४३ तत् तावसुद्रापादेन समं। यीशुस्तदा स्वशिष्यान् अन्तिकमाहूया-
वादीत्, युष्मानहं सत्यं ब्रवीमि, यावन्तोऽत्र धनागारे मुद्रा निचि-
प्तवन्तस्तावतां मध्येऽधिकतमं विधवासौ दरिद्रा निचिप्तवती। यतः
४४ सर्व्वे प्रयोजनातिरिक्तं किञ्चिन्निचिप्तवन्तः, सा तु प्रयोजनीयस्याभावे-
ऽपि सर्व्वस्वं निचिप्तवती जीविकां कृत्स्नामेव॥ १२॥

यिरूशालेमस्य विनाशः यीशोः पुनरागमनमधि शिक्षा।

१३ १ स यदा धर्म्मधामतो निर्गच्छत् तदा तच्छिष्याणामेकस्तं
जगाद, गुरो पश्यतु, कीदृशा प्रस्तराः कीदृशानि हर्म्याणि च।
२ यीशुस्तदा तं प्रतिजगाद, त्वमेतानि महान्ति हर्म्याणि किं पश्यसि?
अत्र प्रस्तरोपरि प्रस्तर एकोऽप्यनिपातयितव्यो न विहायिष्यते।
३ ततः परं यदा स जैतुनपर्व्वते धर्म्मधाम्नः सम्मुखासीन आसीत्,
तदा पितरो याकोबो योहन आन्द्रियश्च निर्जनं तस्मै निवेदया-
४ मासुः, वक्तुमर्हत्यस्मान् भवान्, कदा सर्व्वं तत् सम्भविष्यति? किं
५ वाभिज्ञानं यदा सर्व्वं तत् सिद्धिमवाप्स्यति? तदा यीशुः प्रतिभाष-
माणस्तेभ्यः कथयितुमारेभे, सावधानास्तिष्ठत, युष्मान् कोऽपि मा
६ प्रतारयतु, यतो बहवो मम नामधेयेन आगत्य वदिष्यन्त्यहं स इति
७ प्रतारयिष्यन्ति च बहून्। कथासु युद्धानां युद्धस्य किंवदन्तीषु
श्रुतासु मैवोद्विजध्वं, यत एतेन भवितव्यं, परिणामस्तु नापि तदा।
८ वस्तुतो जाति र्जातेर्विरुद्धं राज्यञ्च राज्यस्य विरुद्धमुत्थास्यति।
भविष्यन्ति च स्थाने स्थाने भूकम्पाः। पुनः पुन र्दुर्भिक्षमुपप्लवश्चापि
सम्भविष्यतः। उपक्रमो यातनानां सर्व्वमेतत्।
९ यूयन्तु स्वेषु सतर्का भवत, यतो मानवा युष्मान् विचारसभासु
समर्पयिष्यन्ति यूयञ्च समाजेषु प्रहारिष्यध्वे मदर्थञ्च देशाध्यक्षाणां

राज्ञाञ्च समक्षं स्थापयिष्यध्वे तेभ्यः साक्ष्यदानार्थम्। प्रथमञ्च सर्व्व- १०
जातिषु सुसंवादो घोषयितव्यः। मानवास्तु यदा युष्मान् समर्पयि- ११
ष्यन्तो नेष्यन्ति तदा किं वक्तव्यमिति मालोचयत मा चिन्ताकुला
भवत वा। तस्मिन् दण्डे तु युष्मभ्यं यद् दायिष्यते तदेव कथयत,
यतो न यूयं वक्तारः, वक्ता तु पवित्र आत्मा। भ्राता पुन र्भ्रातरं १२
जनकश्च सुतं मृत्यवे समर्पयिष्यति, सन्तानाश्च पित्रोः प्रातिकूल्ये-
नोत्थाय तौ घातयिष्यन्ति। मम नाम्नो हेतुना च यूयं सर्व्वै
र्दूयिष्यध्वे। यस्त्वन्तं यावत् स्थिरः स्थास्यति स एव तरिष्यति। १३

अतो यूयं यदा भाववादिना दानीयेलेन कथितं ध्वंसकारि १४
घृणार्हवस्त्वनुपयुक्ते स्थाने संस्थितं द्रक्ष्यथ — पाठको बुध्यतां — तदा ते
पलाय्य गिरीनाश्रयन्तां ये यिहूदियायां विद्यन्ते, यश्च गृहपृष्ठे विद्यते
स गृहं मावरोहतु स्वगृहात् किमप्यादातुं वा तत्र मा प्रविशतु। १५
यश्च क्षेत्रे विद्यते स स्ववस्त्रमादातुं मा प्रत्यावर्त्ततां। भविष्यन्ति च १६
दिनेषु तेषु गर्भधारिण्यः स्तन्यदायिन्यश्च सन्तापभाजनानि। तथा १७
च प्रार्थयध्वं युष्माकं पलायनं यथा शीतकाले न भवेत्। यतस्तेषु १८
दिनेषु क्लेशो यादृशः सम्भविष्यति न सम्भूतस्तादृश ईश्वरकृतसृष्टेरा १९
रम्भाद् अद्य यावत्, नापि सम्भविष्यति पुनः। दिनानि तानि च
प्रभुना चेन्न न्यूनकारिष्यन्त मर्त्त्यः कोऽपि तर्हि नातरिष्यत्। स तु २०
यान् वरितवान् तेषां वरितजनानां कृते तानि दिनानि न्यूनीचकार।

तदा चं मा विश्वसित यूयमुक्ता अपि केनचित् पश्य ख्रीष्टोऽत्र २१
वामुत्र विद्यते। यतो कूटख्रीष्टाः कूटभाववादिनश्चोत्थास्यन्ति २२
प्रदर्शयिष्यन्ति च तेऽभिज्ञानान्यद्भुतलक्षणानि च तादृशानि यैः
साध्ये सति ते वरितानपि मनुष्यान् पथभ्रष्टान् करिष्यन्ति। यूयन्तु २३
सावधानास्तिष्ठत, पश्यत युष्मानहं सर्व्वं पूर्व्वमेवोक्तवान्।

२४ तेषु दिनेषु तस्मात् क्लेशात् परं सूर्य्यः सान्धकारो भविष्यति,
२५ चन्द्रश्च स्वज्योत्स्नां न प्रदास्यति, नक्षत्राणि च नभसः पतिष्यन्ति
२६ गगनस्थबलानि च विचलिष्यन्ति। मानवाश्च निरीक्षिष्यन्ते महाप-
२७ राक्रमप्रतापाभ्यां परीतं मेघरथेनागच्छन्तं मनुष्यपुत्रम्। तदा स च-
स्वदूतान् प्रहित्य मेदिनीप्रान्तमारभ्य गगनप्रान्तं यावच्चतुर्भ्यो वायुभ्यो
मनुष्यान् स्ववरितान् सङ्ग्रहीष्यति।

२८ उडुम्बरवृक्षाद् दृष्टान्तं शिक्षितुमर्हथ। स्पष्टं यदा तस्य शाखा
जायते कोमला पत्राणि च प्रकाशन्ते जानीथ यूयमासन्नस्तदा
२९ ग्रीष्मकाल इति। तथैव यूयं यदा दृक्षथ यत् सर्व्वमेतत् सम्भवति
३० ज्ञास्यथ तदा स समीपस्थो द्वार उपस्थितश्चेति। युष्मानहं सत्यं ब्रवीमि,
यावत् सर्व्वमेतन्न सम्भवति तावन्न व्यत्येष्यन्ति मानवा एतत्कालिकाः।
३१ द्यावापृथिव्यावत्येष्यतः, मम वाक्यानि तु नैवात्येष्यन्ति।

३२ दिनस्य तस्य तु दण्डस्य च तस्य तत्त्वं केनापि न ज्ञायते,
३३ नापि स्वर्गस्थदूतै नापि पुत्रेण, केवलः पिता तज्जानाति। यूय
सावधानास्तिष्ठत, जागृत प्रार्थयध्वञ्च यतो न जानीथ समयः
३४ कदोपतिष्ठते। युष्मत्प्रभु र्देशान्तरगतेन नरेण सदृशो यः स्वगृहं
त्यक्त्वा स्वदासेषु विषयमेकैकस्मिंश्च स्वं स्वं कर्म्म समर्पितवान् प्रति-
३५ हारिणञ्च जागरणमादिष्टवान्। अतो जागृत यतो युयं न जानीथ
गृहस्वामी कदायाति, सायम् अर्द्धरात्रे वा कुक्कुटरावकाले वा प्रात
३६ र्वा। अकस्मादागत्य स यथा युष्मान् सुप्तान् नासादयेत् तत् चिन्त-
३७ यत। युष्मांस्तु यद् ब्रवीमि तत् सर्व्वानेव ब्रवीमि, जागृतेति॥ १३॥

यीशोः शेषदुःखभोगः मृत्युश्च।

१४ १ दिनद्वयात् परं निस्तारपर्व्वणा निष्किण्वपूपानां समयेन
चोपस्थातव्यमितिकाले मुख्ययाजकाः शास्त्राध्यापकाश्चायतन्त यथा

तं छलेन धृत्वा हन्युः। ते त्ववदन्, नैव पर्व्वणि, चेत् तथा भविष्यति २
कलहो जनानां मध्ये।

यीशोरभिषेकः।

वैथनियायान्तु तस्मिन् विद्यमाने शिमोनस्य कुष्ठिनो गेहे ३
भोजनायासीने च योषिदेका श्वेतोपलभाजनेन बहुमूल्यं प्रशस्तं
जटामांसीरसयुक्तं सुगन्धितैलमानीय श्वेतोपलभाजनं तद् भित्त्वा
तस्य शिरसि तैलं स्रावयामास। तत्रोपस्थितास्तु केचिद् अन्तरे ४
रोषापन्ना जगदुः, किमर्थं तैलस्यायमपव्ययः सम्भूतः? तस्मिन् ५
विक्रीते त्रिशतमुद्रापादेभ्योऽधिकं मूल्यं लब्धं दरिद्रेभ्यो दातुञ्चा-
शक्यत। एवं ते तस्यामधैर्य्यमकुर्व्वन्। यीशुस्तूवाच, इमां त्यजत, ६
कुरुथ कथं दुःखितामिमाम्? कृतवतीयं मयि कर्म्म सत्। यतो
दरिद्राः सततं युष्मत्सङ्गिनः, यदा चेच्छथ तदैव तानुपकर्त्तुं शक्नुथ, ७
अहन्तु न सततं युष्मत्सङ्गी। यत् साध्यमनया तदकारि। समयात् ८
प्रागियं मम देहं सुगन्धितैलाक्तं कृतवती मत्समाध्यर्थम्।
युष्मानहं सत्यं ब्रवीमि, कृत्स्नस्य जगतो यत्र कुत्रचिद् घोषयिष्यते ९
सुसंवादोऽयं तत्र कुत्रचित् कथयिष्यते कर्म्माप्येतत् कृतमनया
स्मरणार्थमस्याः।

ततो द्वादशानां मध्ये गणित ईष्करियोतीयो यिहूदा मुख्य- १०
याजकानां समीपं जगाम तेष्वेव तं समर्पयितुकामः। तच्छ्रुत्वा ते ११
हर्षं गत्वा तस्मै रूप्यं दातुम् अङ्गीचक्रिरे स च सुसमये तं समर्प-
यितुम् अयतत।

निस्तारपर्व्वपालनं प्रभोर्भोज्यस्थापनञ्च।

अनन्तरं निष्किण्वपूपानां प्रथमे दिनेऽर्थतो निस्तारपर्व्वीयमे- १२
षशावकहत्यादिने शिष्यास्तं जगदुः; भवत इच्छातः कुत्रास्माभि

१३ गत्वोपकल्पयितव्यं भवदर्थं भोज्यं निस्तारपार्व्वणम्? तदा स शिष्यौ
द्वौ प्रेषयन् जगाद, नगरं यातं तत्र मनुष्य एको जलपूर्णं कुम्भं वहन्
युष्मत्सम्मुखवर्त्ती भविष्यति, तमेवानुगच्छतं स च यत्र प्रवेक्ष्यति तत्र
१४ गृहस्वामिनं ब्रूतं, गुरु र्वक्ति कुत्र सातिथिशाला यत्र शिष्यैः सार्द्धं
१५ मया भोज्यं निस्तारपार्व्वणं सम्पालयितव्यमिति। स च वां भूमित
ऊर्द्धस्थामासनादिसज्जया सज्जितां वृहतीमेकां शालां दर्शयिष्यति
१६ तत्रैवास्मदर्थमुपकल्पयतम्। अतः शिष्यौ तौ प्रस्थाय नगरमागत्य तेन
यदुक्तं तदनुरूपं स्थानं प्राप्य निस्तारपर्व्वीयभोज्यमुपकल्पयामासतुः।
१७ सन्ध्यायान्तु जातायां स द्वादशभिः सार्द्धमाजगाम। तेषु तूप-
विश्य भक्षमाणेषु यीशुर्व्वभाषे, युष्मानहं सत्यं ब्रवीमि, युष्माकमेको
१८ मां समर्पयिष्यति यो मत्सहभोजी। अनेन ते शोचितुमारभ्य प्रत्येकं
१९ तं पप्रच्छुः, स किमहं? स किमहं? स तु प्रतिभाषमाणस्तानाह,
२० द्वादशानामेको यो मया सार्द्धं सूपपात्रे हस्तं मज्जयति, स एव।
२१ मनुष्यपुत्रमधि यथा लिखितमास्ते स तथैव प्रयाति। नरेण येन
तु मनुष्यपुत्रः समर्प्यते स सन्तापपात्रं। तस्य नरस्य जन्म चेन्नाभ-
विष्यत् तर्हि तेनैव तस्य क्षेमम् अभविष्यत्।
२२ अतस्तेषां भोजनकाले यीशुः पूपमादायाशीर्व्वादं कृत्वा तं
भङ्क्त्वा तेभ्यो ददौ बभाषे च, गृह्णीत भुंग्ध्वम्, एतन्मम शरीरं।
२३ ततः परं स पानपात्रमादाय धन्यवादं कृत्वा तेभ्यो ददौ सर्व्वे च
२४ तेन पपुः। स च तानाह, एतन्मम शोणितं बहूनां कृते विस्रा-
२५ व्यमाणं नूतननियमस्यैव शोणितं। युष्मानहं सत्यं ब्रवीमि, गोस्त-
नीलतोत्पन्नोऽयं रसो दिने यस्मिन् ईश्वरस्य राज्ये नवीनो मया
२६ पायिष्यते तद्दिनं यावत् स मया पुन र्न पायिष्यते। ततस्ते स्तोत्रं
गीत्वा जैतुनपर्व्वतं जग्मुः।

यीशुस्तांस्तदा जगाद, रात्रावस्यां सर्व्वे यूयं मयि स्खलिष्यथ, यतो २७
लिखितमास्ते, "अहं व्रजरक्षकमाहनिष्यामि मेषाश्च विकीर्णा
भविष्यन्ति।" परन्तु ममोत्थानात् परमहं युष्मदग्रे गालीलं २८
यास्यामि। पित्रस्तु तं जगाद, सर्व्वेऽपि चेत् स्खलेयुस्तथाप्यहं न स्खलि- २९
ष्यामि। यीशुस्तदा तमाह, त्वामहं सत्यं ब्रवीमि, अद्यैव रात्रावस्यां ३०
कुक्कुटस्य द्वितीयरवात् प्राक् त्वं मां त्रिःकृत्वः प्रत्याख्यास्यसि। स तु ३१
दृढतरमवोचत्, यद्यपि भवता सार्द्धं मम मरणम् अवश्यं स्यात्,
तथाप्यहं भवन्तं नैव प्रत्याख्यास्यामि। एवमेव सर्व्वेऽप्यभाषन्त।

गेतशिमानीत्यभिधे उद्याने यीशोमर्म्मान्तिकदुःखम्।

ततः परमुपस्थितेषु तेषु गेतशिमानीत्यभिधे स्थाने स स्वशि- ३२
ष्यान् जगाद, यूयमत्रोपविशत यावदहं प्रार्थनां कुर्व्वे। अनन्तरं स ३३
पित्रं याकोबं योहनञ्च सङ्गिनः कृत्वा क्षोब्धुं विषत्तुञ्चारेभे तांश्च
जगाद, प्राणा मम मृत्यवे शोकापन्नाः, यूयमत्रावतिष्ठमाना ३४
जाग्रत। ततः स किञ्चिदग्रं गत्वा भूमौ निपत्येदं प्रार्थयाञ्चक्रे, ३५
साध्ये सति यथा सा घटिका तस्मादपगच्छेत्। स चाब्रवीत्, आब्बा ३६
तात, सर्व्वं साध्यं भवता, पानीयपात्रमिदं मत्तोऽपसारयतु। तथापि
न मया, अपि तु त्वया यद् वाञ्छ्यते तदेव भवतु। अनन्तरं स ३७
आगत्य तान् निद्राणान् दृष्ट्वा पित्रं जगाद, शिमोन निद्रासि किम्? ३८
घटिकामेकां जागर्त्तुं किं नाशक्नोः? यूयं जाग्रत प्रार्थयध्वञ्च नो ३९
चेत् परीक्षां निवेक्ष्यध्वे, यत आत्मोद्यतः शरीरन्तु दुर्ब्बलम्।
द्वितीयवारं गत्वा स वाक्यं तदेव व्याहरन् प्रार्थयाञ्चक्रे। प्रत्यावृत्य ४०
तु तान् पुन र्निद्राणान् ददर्श, यतस्तेषां नेत्राण्यवशान्यासन् तस्मै च
किमुत्तरं दातव्यं तत् ते नाबुध्यन्त। तृतीयवारं पुनरागत्य स तान् ४१
जगाद, एवमेव यूयं निद्राणा विश्रामं सेवध्वे किम्? अलमनेन।

उपस्थितः स दण्डः । पश्यत मनुष्यपुत्रः पापिनां करेषु समर्प्यते ।
४२ उत्तिष्ठत । वयं गच्छामः । पश्यत मम समर्पयिता समीपमागतः ।

यीशोः शत्रुहस्ते समर्पणम् ।

४३ तथैव तस्मिन् भाषमाणे द्वादशानां मध्ये गणितो यिहूदा
उपतस्थे, तेन सार्द्धञ्च मुख्ययाजकानां शास्त्राध्यापकानां प्राचीनानाञ्च
४४ सकाशाद् असियष्टिधारी महान् जननिवहः । स समर्पयिता
तेभ्यः सङ्केतं दत्तवान्, यथा, अहं यं चुम्बिष्यामि स एव सोऽस्ति,
४५ यूयं तमेव धृत्वा यत्नेन रक्षन्तोऽपनयत । अतः स आगत्य तूर्णं
४६ तदन्तिकमुपस्थाय रब्बिब्बित्युक्त्वा तं चुचुम्ब । तदा ते तस्मिन्
४७ हस्तार्पणं कृत्वा तं दध्रुः । नराणान्तु तत्र तिष्ठतामेकः कोषादसिं
४८ निष्कृष्य महायाजकस्य दासमाहत्य तस्य कर्णं परिचिच्छेद । यीशुस्तु
प्रतिभाषमाणस्तान् जगाद, दस्युमिव मां धर्त्तुम् असीन् यष्टींश्चा-
४९ दाय किं यूयं बहिरागताः ? अहन्तु प्रत्यहं धर्म्मधाम्नि शिक्षयन्
युष्मत्सकाशमासं, यूयं तदा न मां धृतवन्तः । परन्तु शास्त्रीयो-
५० क्तिभिः सिद्धिर्गन्तव्या । तदा सर्व्वे तं त्यक्त्वा पलायाञ्चक्रिरे । युवा
५१ कश्चित् तु नग्नकाये सूक्ष्मं वस्त्रं परिधाय तमन्वगच्छत् । युवभि-
५२ र्ध्रियमाणस्तु स तत् सूक्ष्मं वस्त्रं विहाय नग्नः पलायाञ्चक्रे ।

महायाजकसमक्षं यीशोर्विचारः ।

५३ यीशुस्तु महायाजकस्यान्तिकमानीतः । तदर्थञ्च सर्व्वे मुख्य-
५४ याजकाः प्राचीनाः शास्त्राध्यापकाश्च समाजग्मुः । पितरश्च दूरान्म-
हायाजकीयहर्म्यस्याभ्यन्तरं यावत् तमनुगत्य पदातिभिः सार्द्धमुप-
५५ विश्याग्नितापमसेवत । मुख्ययाजकाः कृत्स्ना महासभा च यीशुं
५६ हन्तुकामास्तस्य प्रतिकूलं साक्ष्यममृगयन्त, न तु लेभिरे । बहव-
स्तद्विरुद्धं मृषासाक्ष्यमकथयन्, तेषां वाक्यानि तु समानानि नाभ-

वन्। तदा केचिदुत्थाय तस्य विरुद्धं मृषासाक्ष्यं कथयन्तोऽवदन्, ५७
अस्य मुखादस्माभि र्वाक्यमिदमश्रावि यथा, हस्तकृतमिदं मन्दिरं ५८
भङ्क्त्वाहं दिनत्रयेऽपरमेकमहस्तकृतं निर्म्मास्ये। इत्थमपि तेषां साक्ष्यं ५९
समानं नाभवत्। अनेन महायाजको मध्यस्थान उत्थाय यीशुं ६०
पप्रच्छ किमपि त्वं किं न प्रतिभाषसे? इमे तव प्रतिकूलं किं
साक्ष्यं ददति? स तु मौनमवलम्ब्यातिष्ठत्, किमपि न प्रत्यवदत्।
महायाजकः पुनस्तं पृच्छन्नवादीत्, त्वं किं परमधन्यस्य पुत्र ६१
ख्रीष्टः? यीशुस्तदा जगाद, सोऽहमस्मि। यूयञ्च मनुष्यपुत्रं ६२
प्रभावस्य दक्षिण आसीनम् आकाशीयमेघरथेनागच्छन्तञ्च वीक्षि-
ष्यध्वे। महायाजकस्तदा स्ववासांसि विदीर्य्य बभाषे, साक्षिणामधि- ६३
कानां किं प्रयोजनम्? अश्रावि युष्माभिरीश्वरनिन्दा। युष्माभिः किं ६४
मन्यते? तदा सर्व्वे तं प्राणदण्डार्हमुक्त्वा दोषिणं चक्रुः। ततः केचित् ६५
तद्वपुषि निष्ठीवितुं तन्मुखमाच्छाद्य मुष्टिभिराहन्तुम् इदं वक्तुञ्चा-
रेभिरे, भावोक्तिं व्याहरेति। अनन्तरं पदातिनः प्रहारैस्तं जघ्नुः।

पितरेण यीशुः त्रिकृत्वः अस्वीकृतः।

पित्रस्तु यदाधः प्राङ्गणेऽविद्यत, तदा महायाजकस्यैका दास्या- ६६
गत्य तापसेवने निविष्टं पित्रं दृष्ट्वा सुनिरीक्ष्य च बभाषे त्वमपि ६७
नासरतीययीशोः सङ्ग्यासीः। अनेन सोऽनङ्गीकुर्व्वन् जगाद, न ६८
ज्ञायते न बुध्यते वा मया त्वया किं गद्यते। ततः स बहिः-
प्राङ्गणं जगाम तदैव कुक्कुटो रुराव च। तत्रत्या दासी च तं दृष्ट्वा ६९
पुनः समीपे संस्थितान् जनान् वक्तुमारेभे, असौ तेषामेकः। स
तु पुनर्व्वारमनङ्गीचकार। क्षणात् परं समीपे संस्थिता जनाः पुन- ७०
र्व्वारं पित्रमूचुः, सत्यं त्वं तेषामेकतमः, त्वं हि गालीलीयोऽसि तव
भाषापि तादृशी प्रतिभाति।' तदा सोऽनिष्टं प्रार्थयितुं शप्तुञ्चारभ्य ७१

७१ व्याजहार, न जानेऽहं तं नरं यो युष्माभिरभिधीयते। तदा
द्वितीयवारं कुक्कुटो रुराव। अनन्तरं कुक्कुटस्य द्वितीयरवात् प्राक्
त्वं मां त्रिः प्रत्याख्यास्यसीति वाक्यं यत् स यीशुनोक्तस्तत्
स्मृत्वा पितरश्चिन्ताकुलो भूत्वा क्रन्दितुं प्रवृत्तः ॥ १४ ॥

देशाध्यक्षस्य समक्षं यीशोर्विचारः।

१५ १ जाते पुनः प्रातःकाले प्राचीनैः शास्त्राध्यापकैश्च सार्द्धं
मुख्ययाजकाः कृत्स्ना महासभा च तूर्णं मन्त्रणां चक्रु र्बद्ध्वा च
२ यीशुमपनीय पीलाते समर्पयामासुः। पीलातस्तदा तं पप्रच्छ, त्वं
३ किं यिहूदीयानां राजा? स तं प्रत्यवादीत्, भवान् व्याहरति।
४ मुख्ययाजकाश्च बहुषु तस्याभियोगमकुर्व्वन्। पीलातस्तदा पुनस्तं
पप्रच्छ, त्वं किं किमपि न प्रतिभाषसे? पश्य तव विरुद्धममी
५ साक्ष्यवचांसि कति वदन्ति। यीशुस्तु ततः प्रभृति किमपि न
प्रत्यभाषत, पीलातश्च तेनाश्चर्य्यं मेने।

६ तस्मिन् पर्व्वणि तु प्रतिवर्षं स तेषां कृते तैर्याचितं नरमेकं
कारागुप्तममोचयत्। तदा च ये रुपप्लवकारिभिरुपप्लवे नरहत्याकारि
७ तैः सार्द्धं बारब्बा इतिनामको नर एकः कारावद्ध आसीत्।
८ अतः स तान् प्रति नित्यं यादृशमकरोत् जननिवह उच्चैःस्वरेण
९ क्रोशंस्तादृशमनुग्रहं याचितुमारेभे। पीलातस्तदा तान् प्रत्यवादीत्,
१० युष्मदर्थमहं यद् यिहूदीयानां राजानं मोचयेयं तत् किं वाञ्छथ।
११ यतस्तेनाज्ञायत स यन्मात्सर्य्यान्मुख्ययाजकैः समर्पितः। यथा तु बरं
१२ बारब्बास्तेन मोच्येत तदर्थं मुख्ययाजका जननिवहं प्राचोदयन्।
१३ पीलातस्तदा प्रतिभाषमाणः पुनस्तानब्रवीत्, यूयं यं यिहूदीयानां
राजानं वदथ तं प्रति तर्हि मया कर्त्तव्यं किमिच्छथ? ते पुनः
१४ क्रोशन्त ऊचुः, स क्रुशमारोप्यतां भवता। पीलातस्तान् जगाद, किं

नु तेनापराद्धम्? ते त्वधिकं क्रोशन्तोऽवदन् स क्रुशमारोप्यतां
भवता। पीलातस्तदा जननिवहस्य प्रीतिजनकं कर्म्म कर्त्तुमभिरोच्य १५
तेषामिच्छातो बरब्बां मोचयामास, यीशुन्तु कशाभिः प्रहार्य्य
क्रुशारोपणार्थं तेषु समर्पयामास।

यीशोः क्रुशारोपणं मृत्युः समाधिश्च।

सैनिकनरास्तदा तं हर्म्यस्यार्थतो राजभवनस्याभ्यन्तरं नीत्वा १६
सैन्यदलं कृत्स्नमेकत्राहूय च कृष्णलोहितं वस्त्रं परिधापयामासुः १७
कण्टकैश्च स्रजं निर्म्माय तस्य शिरसि निदधुस्तमित्थमभिवादयितु-
ञ्चारेभिरे, यिहूदीयानां राजन् प्रणामः। नलेन तस्य शिरस्या- १८
ताडयन् तस्य वपुषि न्यष्ठीवन् जानुपातं कुर्व्वन्तस्तं प्राणमन्, १९
इत्थं तमुपहस्य तत् कृष्णलोहितवर्णं वस्त्रं मोचयित्वा तस्य स्ववा- २०
सांसि परिधाप्य च क्रुशमारोपयितुं तं बहि र्निन्युः।

तेन मार्गेण तदा सिकन्दर-रूफयोः पिता शिमोननामा नर २१
एकः कुरीणीयो ग्रामत आगच्छत्, तमेव ते दध्नुः क्रुशं तस्य वोढुं
वेतनं विना। इत्थञ्च तं गल्गथानामकं स्थलं निन्युः। नाम्नोऽस्यार्थः २२
कपालस्थलमिति। तत्र ते पानीयार्थं तस्मै गन्धरसमिश्रितं २३
द्राक्षारसं दातुमुपचक्रमिरे स तु तं न जग्राह। अनन्तरं ते तं २४
क्रुशम् आरोप्य तस्य वासांसि मिथो विभजमानाः केन किं लभ्यं
तज्ज्ञातुं गुटिकापातमकार्षुः। प्रथमे प्रहरे स तैः क्रुशमारोपया- २५
ञ्चक्रे। तस्येदमभियोगपत्रञ्च लिखितमासीत्, यिहूदीयानां राजेति। २६
तेन सार्द्धञ्च ते द्वौ दस्यू क्रुशे आरोप्येताम्, एकतरस्तस्य दक्षिणे २७
वामे चान्यतरः। इत्थं शास्त्रोक्तिरियं सिद्धिं गता,

दुष्क्रियाकारिणां मध्य एकः स गणितोऽभवत्। २८

अनन्तरं ये मनुष्या मार्गेण तेनाव्रजंस्ते शिरांसि चालयन्तस्त- २९

मित्यमनिन्दन्, यथा, हा मन्दिरभञ्जक दिनत्रये च तन्निर्म्मातरा-
३० त्मानं तारय क्रुशादवरोह च। शास्त्राध्यापकैः सार्द्धं मुख्ययाजका
३१ अपीदृशमेव मिथो रहस्यं कुर्व्वन्तोऽवदन्, सोऽपरानतारयत्, आत्मानं
३२ तारयितुं न शक्नोति। इस्रायेलस्य राजा ख्रीष्ट इदानीं क्रुशा-
द्वरोहतु, तथा कृते वयं दृष्ट्वा विश्वसिष्यामः। तेन सार्द्धं क्रुशा-
रोपितौ तौ द्वौ नरावपि तमपावदताम्।

३३ आमध्याह्नात्तु तृतीयप्रहरं यावत् कृत्स्ने भूतलेऽन्धकारोऽभूत्।
३४ तृतीये प्रहरे च यीशुरुच्चैरवेण बभाषे, एली एली,
लामा शवक्तानीति, अस्यार्थोऽयम्,

हे मदीश मदीश त्वं मां परित्यक्तवान् कुतः।

३५ तच्छ्रुत्वा तत्र स्थितानां नराः केचिदवदन्, पश्यायमेलियमाह्वयति।
३६ एकस्य द्रुत्वा स्पञ्जमम्लरसेन पूरयित्वा नलाग्रे बद्धा च तमपीप्यत्
प्राह च, निवर्त्तध्वम्, अमुमवरोहयितुम् एलिय आगच्छति न
वेत्यस्माभि र्दृश्यताम्।

३७ ततः परं यीशुरुच्चैरवमुदीर्य्य प्राणांस्तत्याज। तदा मन्दिरस्य
३८ तिरस्करिण्यूर्द्धतोऽधो यावद् विदीर्णा द्विखण्डा बभूव। स चेद्मुच्चैर्न्
३९ प्राणांस्तत्याजेति दृष्ट्वा तत्सम्मुखं संस्थितः शतपतिरवादीत्, सत्यं
नरोऽयमीश्वरस्य पुत्र आसीत्।

४० अपि च योषितः काश्चिद् दूरादवलोकमानास्तत्राविद्यन्त
४१ तासां मध्ये मग्दलीनी मरियम् कनिष्ठयाकोबस्य योसेश्च माता
मरियम् शालोमी चासन्, स यदा गालील आसीत् तदाप्येतास्त-
मनुगतवत्यः परिचरितवत्यश्च। तेन सार्द्धं यिरूशालेममागता
बह्व्योऽपरा अप्युपस्थिता आसन्।

४२ तदा सन्ध्या सम्भूता। तद्दिनञ्च सब्बीकरणदिनमर्थतो विश्राम-

वारस्य पूर्व्वदिनम्, अतोऽरिमाथियानिवासी योषेफ इति नामको ४३
यः सुशीलो मन्त्रीश्वरराज्यं प्रत्यैक्षत स उपस्थाय पुरुषत्वमवलम्ब्य
पीलातस्य गृहं प्रविवेश तस्य यीशो र्देहं ययाचे। तस्याशुमरणे ४४
पीलात आश्चर्य्यं मत्वा तं शतपतिमाहूय पप्रच्छ स दीर्घकालं मृतो
न वेति। शतपते र्मुखात् ज्ञातव्यमवगत्य स विनामूल्येन योषेफाय ४५
देहं ददौ। स च सूक्ष्मं वस्त्रं क्रीत्वा तमवरोह्य तेन वस्त्रेण वेष्टयामास ४६
शैलमध्ये तक्षिते श्मशाने निदधे च, प्रस्तरमेकं लोठयित्वा च
तच्छवागारमुखं रुरोध। स तु कुत्र निधीयते तन्मग्दलीनी मरियम् ४७
योसि र्माता चान्यतरा मरियम् ददृशतुः॥ १५॥

यीशोः पुनरुत्थानं स्वर्गारोहणञ्च।

व्यतीते तु विश्रामदिने मग्दलीनी मरियम् याकोबस्य १६ १
माता मरियम् शालोमी च सुगन्धिद्रव्याणि चिक्रियु र्यतस्ता गत्वा तं
संलेपयितुमैच्छन्। ततः सप्ताहस्य प्रथमदिवसस्य प्रत्यूषे ताः सूर्य्योदयात् २
परं श्मशानस्यान्तिकमागच्छन्त्यो मिथोऽवदन्, श्मशानस्य द्वारात्
कोऽस्मदर्थं तं प्रस्तरं लोठयिष्यतीति। तत् ऊर्द्ध्वदृष्टिं कृत्वा ताभिः स ३
प्रस्तरो द्वाराल्लोठितो लक्षितो यतः सोऽतीव महानासीत्। अनन्तरं ४
ताः श्मशानं प्रविश्य सितप्रावारपरिहितमेकं युवानं दक्षिणपार्श्वे
उपविष्टं ददृशुश्चुक्षुभिरे च। स तु ता जगाद, मा क्षुभ्यत। यूयं ५
क्रुशारोपितं नासरतीयं यीशुम् अन्विष्यथ। पुनरुत्थितः स नात्र ६
विद्यते। पश्यतेदं तत् स्थानं यत्र स शायितः। प्रत्युत यूयं गत्वा ७
तस्य शिष्यान् पितरञ्च ब्रूत, स युष्मदग्रतो गालीलं याति, यूयं तेन
यथोक्तास्तदनुरूपं तत्र तं द्रक्ष्यथेति। ततस्ता निर्गत्य सत्वरं श्मशानात् ८
पलायाञ्चक्रिरे, कम्पविस्मयाभ्यामाक्रान्तास्तु कमपि किमपि नावदन्
यतस्ता अबिभयुः।

९ सप्ताहस्य प्रथमे दिवसे प्रत्यूषे पुनरुत्थितो यीशुः प्रथमं मग्दलीनी
१० मरियमे दर्शनं ददौ यस्याः स सप्त भूतान् निःसारितवान्। सा च
११ गत्वा शोचद्भ्यो रुदद्भ्यश्च तस्य सङ्गिभ्यः संवादं ददौ। स तु जीवति
१२ तयादर्शि चेति श्रुत्वा ते न व्यश्वसिषुः। ततः परं स रूपान्तरमादाय
१३ तेषां द्वयोः पदव्रजेन ग्रामं गच्छतोः प्रत्यक्षीबभूव। तौ च
गत्वान्येभ्यः संवादं ददतुः। तयो र्वाक्येष्वपि ते न व्यश्वसिषुः।
१४ शेष एकादशसु भोजनायोपविष्टेषु स तेषामेव प्रत्यक्षीबभूव,
ये च तं पुनरुत्थितं दृष्टवन्तस्तेषां वाक्येषु तै र्विश्वासो नाकारीति
हेतोः स तेषाम् अविश्वासं मनःकाठिन्यञ्च निनिन्द।
१५ अपि च स तान् जगाद, यूयं कृत्स्नं जगद् गत्वा कृत्स्नसृष्टे
१६ र्ज्ञानार्थं सुसंवादं घोषयत। यो विश्वस्य स्नापयिष्यते स तारयिष्यते,
१७ यस्तु न विश्वसिष्यति स विचारे दण्डपात्रं भविष्यति। ये च विश्वसिष्यन्ति,
अभिज्ञानानीमानि ताननुवर्त्तिष्यन्ते। मम नाम्ना ते भूतान्
निःसारयिष्यन्ति। नूतना भाषा वदिष्यन्ति। सर्पान् उपादास्यन्ते।
१८ पीतमपि तैः प्राणान्तकं पानीयं तान् नैव हिंसिष्यति। कृते तैः
पीडितेषु हस्तार्पणे त आरोग्यं लप्स्यन्ते।
१९ तैः संलपनात् परं प्रभुः स्वर्गमारोहित ईश्वरस्य दक्षिण
२० उपविष्टश्च। ते तु प्रस्थाय सर्व्वत्र सुसंवादमघोषयन् प्रभुश्च सहकर्म्माभूत्,
अनुवर्त्तमानैरभिज्ञानैश्च वाक्यं सप्रमाणमकरोत्॥ १६ ॥

# लूकलिखितः सुसंवादः।

आभाषः। योहनस्नापकस्य जन्माधि आगमसंवादः।

आदितो ये साक्षिणो वाक्यस्य सेवकाश्चासंस्तैरस्मासु यथा १ १
समर्पितं तथैवास्मन्मध्ये दृढप्रत्ययेन गृहीतानाम् इतिवृत्तानां २
कथाप्रबन्धं रचयितुम् अनेक उपचक्रमिरे। अत एव, भो महामहिम ३
थियफिल,- सूक्ष्मानुसन्धानेनारम्भात् सर्व्वमनुगतोऽहमपि भवदर्थं-
मानुपूर्व्येण लेखितुं मतिमकार्षं, तेन भवान् याः कथाः शिक्षित- ४
स्तासाम् अमोघतामनुभविष्यति।

यिहूदियाया राज्ञो हेरोदस्य कालेऽबियस्य श्रेण्यां नियुक्तः ५
सखरियनामा याजक आसीत्। तस्य भार्य्या हारोणवंशोद्भवा,
नाम तस्या इलीशावेता। उभौ तावीश्वरस्य समक्षं धार्म्मिका- ६
वास्ताम् अनिन्दनीयौ च प्रभोः सर्व्वा आज्ञा विधींश्च समाचरताम्।
सन्तानस्तु तयो र्नासीत्, यत इलीशावेता बन्ध्या तावुभौ च ७
वयोवृद्धौ जातौ। एकदा तु यदा स याजकत्वस्य नियमात् ८
स्वश्रेण्याः पर्य्यायहेतोरीश्वरस्य समक्षं याजकत्वम् अन्वतिष्ठत्, तदा ९
गुटिकापातकृतनिरूपणात् स धूपदाहं कर्त्तुं प्रभो र्मन्दिरं प्रविष्ट- १०
वान्। धूपदाहकाले च कृत्स्नो जननिवहो बहिः प्रार्थयत। तदा ११
धूपवेद्या दक्षिणे तिष्ठन् प्रभोरेको दूतस्तस्मै दर्शनं ददौ। तं दृष्ट्वा १२
सखरिय उद्विज्य भयक्रान्तोऽभूत्। स दूतस्तु तं जगाद, मा भैषीः १३
सखरिय, यतस्तव प्रार्थनाश्रावि, तव भार्य्येलीशावेता च त्वदर्थं
पुत्रं प्रसोष्यते, त्वञ्च तस्य नाम योहन इति करिष्यसि। तव हर्षं १४

१५ उल्लासश्च जनिष्यते बहवश्च तस्य जन्मन्यानन्दिष्यन्ति । यतः स
प्रभोः समक्षं महान् भविष्यति; द्राक्षारसं मद्यं वा न पास्यति,
१६ आमातृगर्भादेव पवित्रेणात्मना पूरयिष्यत इस्रायेलस्य सन्तानानाम्
१७ अनेकांस्तेषामीश्वरं प्रभुं प्रति प्रत्यावर्त्तयिष्यति च । तस्याग्रतः स
एलियस्यात्मना प्रभावेन च व्रजन् सन्तानान् प्रति पितॄणां हृदयानि
प्रत्यावर्त्तयिष्यत्याज्ञात्यागिनश्च धार्म्मिकाणां मतौ प्रवर्त्त्य प्रभोः कृते
१८ सज्जितं प्रजावृन्दमुपकल्पयिष्यति । सखरियस्तदा तं दूतमब्रवीत्,
कथमेतज्ज्ञास्यामि ? अहं हि स्थविरो मम भार्य्यापि वयोवृद्धा ।
१९ दूतस्तं प्रतिबभाषे, ईश्वरस्य समक्षं स्थातुं नियुक्तो गाब्रीयेलोऽहं
२० त्वामालपितुमिमं मङ्गलसंवादं तुभ्यं दातुञ्च प्रेषितः । पश्य च
यस्मिन् दिन एतत् सेत्स्यति तद्दिनं यावत् त्वं मौनी भाषितुम-
समर्थश्च स्थास्यसि । यतो मम वचःसु त्वया प्रत्ययो नाकारि,
२१ स्वसमये तु तानि सेत्स्यन्ति । एतावत्कालं प्रजाजनः सखरियं
२२ प्रत्यैक्षत मन्दिरे तस्य विलम्बने व्यस्मयत च । बहिरागतस्तु स तैः
संलपितुं नाशक्नोत्, मन्दिरे तेन दर्शनं लब्धमिति तैरबोधि च ।
२३ स तु तेषां ज्ञानार्थमिङ्गितान्यकरोन्मूकोऽवातिष्ठत च । तदीयो-
२४ पासनानुष्ठानस्य काले सम्पूर्णे स स्वगृहं प्रत्याजगाम । तस्मात् कालात्
परं तस्य भार्य्येलीशावेता गर्भवती बभूव पञ्च मासान् प्रच्छन्ना
२५ तस्थौ च, यतः सावदत्, प्रभु र्यस्मिन् काले जनेषु ममापयशो
हन्तुं दृक्पातं कृतवान्, तस्मिन् काले मां प्रतीत्थमाचरितवान् ।

यीशुख्रीष्टस्य जन्माधि आगमसंवादः ।

२६ षष्ठे मासे पुन र्गाब्रीयेलो दूतो गालीलस्थं नासरताख्यं नगरं
२७ दायूदकुलोद्भवाय योषेफाभिधाय पुरुषाय वाग्दत्तामेकां कुमारीं
२८ प्रतीश्वरेण प्रहितः । तस्याः कुमार्य्या नाम मरियमिति । दूतो

गृहं प्रविश्य तां जगाद, मङ्गलं ते भूयात्, अनुगृहीते, प्रभुस्तव
सहायः, नारीषु त्वं धन्या। एवं दृष्ट्वा सा तस्य कथायामुद्विग्ना २९
समालोचयत् कीदृशोऽयं मङ्गलवाद इति। दूतस्तदा तामवादीत्, ३०
मा भैषी मरियम्, यतस्त्वमीश्वरस्यानुग्रहपात्री, पश्य च त्वं गर्भिणी ३१
भूत्वा पुत्रं प्रसोष्यसे तस्य नाम यीशुरिति करिष्यसि च। स ३२
महान् भविष्यति परात्परस्य पुत्र इत्यभिधायिष्यते च, ईश्वरः
प्रभुस्तस्मै तत्पितुर्दायूदस्य सिंहासनं दास्यति च, स च सर्व्वयुगानि ३३
यावद् याकोबकुलस्य राजा स्थास्यति तद्राज्यस्यान्तः कदापि न
भविष्यति च।

मरियम् तदा दूतमवादीत् कथमेतत् सम्भविष्यति? पुरुषं ३४
हि न जानेऽहं। दूतस्तां प्रतिबभाषे, पवित्र आत्मा त्वामधिष्ठास्यति ३५
परात्परस्य प्रभावस्तवोपरि छायां दास्यति च। एतत्कारणादेव
तव तत् पवित्रं गर्भफलमीश्वरस्य पुत्र इत्यभिधायिष्यते। पश्य च ३६
तव ज्ञातिरिलीशेवेतापि वार्द्धक्ये गर्भिणी जाता, सर्व्वै र्बन्ध्येत्य-
भिहितायाश्च तस्याः षष्ठो मासोऽयं यत ईश्वरस्यासाध्यं वाक्यं किमपि ३७
नास्ति। मरियम् तदाब्रवीत् पश्याहं प्रभो र्दासी। यथोक्तं भवता ३८
तथैव मम गति र्भूयात्। अनन्तरं दूतस्तस्याः समीपात् प्रतस्थे।

तस्मिन् काले मरियम् उत्थाय सत्वरं पर्व्वतमयप्रदेशस्थं यूदा- ३९
नगरं जगाम सखरियस्य गृहं प्रविश्य चेलीशेवेतां मङ्गलवादेना- ४०
भिबभाषे। इलीशेवेता च यदा मरियमो मङ्गलवादमश्रौषीत् ४१
तदैव तस्या जठरे शिशु र्ननर्त्त। इलीशेवेता च पवित्रेणात्मना ४२
पूर्णोच्चरवेणेमां वाचमुदीरयामास, धन्या त्वं नारीषु धन्यश्च तव
गर्भफलं। कथन्तु जातं ममेदं सौभाग्यं यन्मत्प्रभो र्जननी मदन्ति- ४३
कमागता? पश्य त्वदीयमङ्गलवादस्य रवे मम कर्णौ प्रविष्टवत्येव ४४

४५ गतन्ते शिशुरुल्लासान्ममोदरे। धन्यैव त्वं विश्वासकारिणि यत्
प्रभोरादेशात् त्वं यद्यदुक्ता तत्सिद्धि र्भविष्यति। तदा मरियम् बभाषे,

४६ कीर्त्तयन्ति मम प्राणा महिमानं महाप्रभोः।
४७ ममात्मा च प्रहृष्टोऽभूद् ईश्वरे तारके मम॥
४८ स्वदास्या दीनतायां स दृक्पातं कृतवान् यतः।
पश्चाद्यारभ्य वक्ष्यन्ति धन्यां मां सार्व्वकालिकाः॥
४९ मदर्थं गुरुकर्म्माणि कृतवान् सर्व्वशक्तिमान्।
नामधेयञ्च यत् तस्य तत् पवित्रं स्मृतं किल॥
५० तस्माद् भीता मनुष्या ये तेषामेव कृते स्थिरा।
पुत्रपौत्रादिभि र्भाग्या करुणा तस्य वर्त्तते॥
५१ कर्म्म विक्रमसिद्धं स कृतवान् स्वीयबाहुना।
उद्धतांश्चित्तसङ्कल्पै र्मनुष्यान् स विकीर्णवान्॥
५२ स कर्तृत्वविशिष्टांश्च कृतवान् आसनच्युतान्।
ये च नीचा मनुष्यांस्तान् चकारोच्चपदान्वितान्॥
५३ क्षुधितान् पूरयामास स द्रव्यैरुत्तमैः पुनः।
धनिनस्तु मनुष्यान् स रिक्तहस्तान् विसृष्टवान्॥
५४ इस्रायेलं स्वदासञ्चोपाकार्षीत् स सहायवत्।
दयां स्मर्त्तुं यथा प्रोक्तास्तेनास्मत्पूर्व्वपूरुषाः।
५५ अब्राहामे फलिष्यन्तीं तद्वंशे च युगक्रमात्॥

५६ अनन्तरं मरियम् प्रायेण मासत्रयं तस्याः सन्निधाववस्थाय स्वगृहं
प्रतिजगाम।

योहनस्य जन्म।

५७ इलीशावेतायास्तु प्रसवकाले सम्पूर्णे सति सा पुत्रं प्रासोष्ट।
५८ तदा तां प्रति प्रभुना महती दयाकारीति श्रुत्वा तस्याः समीप-

वासिनो ज्ञातिजनाश्च तथा सार्द्धमाननन्दुः। अष्टमे दिने च ते ५९
शिशोस्त्वक्छेदनार्थमागत्य पितु र्नामेव तस्यापि सखरिय इति
नाम कर्त्तुं प्रावर्त्तन्त। तस्य जननी तु प्रतिजगाद, नैवम्, अस्य ६०
नाम योहन इत्यभिधायिष्यते। अनेन ते तामूचुः, एतन्नाम्ना ६१
ख्यातस्तव ज्ञातिजनेषु कोऽपि नास्ति। ततस्त इङ्गितैस्तस्य पितरं ६२
पप्रच्छुः, भवदिच्छातोऽस्य किं नाम कर्त्तव्यम्? ततः स फलकमेकं ६३
याचित्वा लिलेख, अस्य नाम योहन इति। अनेन सर्व्वे विस्मयं
मेनिरे। तत्क्षणमेव तस्य वक्त्रं जिह्वा च मोचिते, स च भाषमाण ६४
ईश्वरस्य धन्यवादं कर्त्तुं प्रवृत्तः। तयोः समीपवासिनश्च सर्व्वे ६५
भयाक्रान्ताः। यिहूदियायाः पर्व्वतमयप्रदेशस्य च सर्व्वत्रैतासां ६६
सर्व्वकथानां प्रसङ्गो व्यानशे, यावन्तश्च ता अश्रौषंस्ते हृदयेषु ता
निधायावदन्, किं नु भवितव्यं शिशुनामुनेति। प्रभो र्हस्तश्च
तस्य सहाय आसीत्।

तस्य पिता सखरियश्च पवित्रेणात्मना पूर्णो भाववाक्यमिदं ६७
व्याजहार,

धन्यः स्यादीस्रयेलीयजनानामीश्वरः प्रभुः। ६८
अवेक्ष्य स्वप्रजानां स मोचनं कृतवान् यतः॥
शृङ्गञ्चोत्पादयामासास्मदर्थं त्राणसाधकं। ६९
उद्भूतं स्वीयदासस्य दायूदस्तैव वंशतः।
यथा प्राग्दादिकालीनैः पवित्रै र्भाववादिभिः॥ ७०
परित्राणार्थमस्माकं परिपन्थिसमूहतः।
उद्धाराय च सर्व्वेषाम् अस्मद्विद्वेषिणां करात्॥ ७१
करुणां कर्त्तुकामोऽस्ति सोऽस्मदीयपितॄन् प्रति। ७२
नियमं स्मर्त्तुकामश्च पवित्रं स्वकृतं पुरा।

७३ अस्मत्पित्रेऽब्राहामाय शप्त्वा दत्तश्च तं वरं ॥

७४ निर्भया येन शत्रूणामः शत्रुहस्तेभ्य उद्धृताः।

७५ साधुत्वधार्म्मिकत्वाभ्यां तत्साक्षात् तं समर्च्चितुं।
सकलान् दिवसान् यावदस्माकं परमायुषः ॥

७६ शिशो परात्परस्य त्वं भाववाद्यभिधास्यसे।
प्रभो र्मार्गान् हि संस्कर्त्तुं तदग्रे त्वं प्रजिष्यसि ॥

७७ प्रजाभ्यस्तस्य दातव्यं ज्ञानं त्राणस्य च त्वया।
पापानां मार्जने तासां कारुण्येनास्मदीशितुः ॥

७८ तत्स्नेहादूर्द्ध्वलोकीयास्मान् ऊषा प्रत्यवैक्षत।

७९ ध्वान्ते मृत्युतमिस्रे चासीनान् द्योतयितुं नरान्।
अस्मत्पादान् यथा कुर्य्याच्छान्तिमार्गावलम्बिनः ॥

८० अथ स शिशुरवर्द्धतात्मना च बलवान् अजायत। इस्रायेलाय तु तत्प्रदर्शनस्य दिनं यावदनुपस्थितं तावत् स निर्जनस्थानेष्ववर्त्तत ॥ १ ॥

यीशुख्रीष्टस्य जन्म बाल्यकालश्च।

२ १ तस्मिन् काल औगस्तकैसरस्य सकाशादिदं शासनं प्रचचार, यत्
२ साम्राज्यस्य सर्व्वजनैः स्वनाम्नां लेख्यारोपणं कर्त्तव्यं। नाम्नां तल्लेख्यारोपणं सुरियाप्रदेशाधिपतेः कुरीणीयस्याधिकारकालस्य प्रथम-
३ मासीत्। अतो नामानि लेख्यमारोपयितुं सर्व्वजनः प्रत्येकं स्वनगरं
४ जगाम। योषेफोऽपि गालीलस्थान्नासरताख्यनगराद् यिहूदियादेशस्थं बैतलेहमाभिधं दायूदस्य नगरं जगाम, यतः स दायूदस्य कुले
५ गोष्ठ्याञ्च जातः। स आत्मने वाग्दत्तया स्वजायया मरियमा सार्द्धं
६ नाम्नो लेख्यारोपणार्थं जगाम। सा तु गर्भिण्यासीत्। तयोस्त्र
७ तत्र वर्त्तमानयोस्तस्याः प्रसूतिकाल उपतस्थे। अतः सा निजं

प्रथमजातं पुत्रं प्रासोष्ट, वस्त्रखण्डे वेंष्टयित्वा च पशुशालास्थगवा-
दन्यां तं शाययामास, यतः प्रवासगृहे तेषां कृते स्थानं नासीत्।
तस्मिन् प्रदेशे वर्त्तमानाः केचिन्मेषरक्षकाः प्रान्तरे रात्रिं ८
यापयन्तः पर्य्यायक्रमेण यामिन्यां स्वव्रजम् अरक्षन्। पश्य च ९
प्रभोरेको दूतस्तेषामन्तिकम् उपतस्थे प्रभोः प्रतापश्च तेषां परितो
विरेजे। अनेन ते महाभयेनाक्रान्ताः। स दूतस्तु तान् जगाद, १०
मा भैष्ट। पश्यताहं युष्मभ्यं महानन्दस्य सुसंवादं ददामि, स
आनन्दः कृत्स्नेन प्रजाजनेन भोग्यः। यतो युष्मदर्थमद्य दायूदस्य ११
नगरे परित्राताजनि, स हि ख्रीष्टः प्रभुः। इदञ्च युष्मदर्थं १२
तदभिज्ञानं, वस्त्रखण्डे वेंष्टितः शिशु र्गवादन्यां शयानो युष्माभि-
रासादयिष्यत इति। अकस्माच्च वहुतरा स्वर्गीयसेना तस्य दूतस्य १३
सङ्गिनी भूत्वेश्वरस्य स्तवं गायन्ती व्याजहार,

ईश्वरायोर्द्ध्वलोकेषु भूयान्माहात्म्यकीर्त्तनं। १४
शान्ति र्भूयात् पृथिव्याञ्च प्रीतिपात्राणि मानवाः॥

तेषु दूतेषु तेभ्यः स्वर्गं प्रस्थितेषु मेषरक्षकास्ते मनुष्याः परस्पर- १५
मूचुः, गम्यतामस्माभि र्बैतलेहमम्, अवलोक्यताञ्च तदितिवृत्तं यत्
प्रभुरस्मान् ज्ञापयामास। अतस्ते सत्वरं गत्वा मरियमं योषेफञ्च १६
गवादन्यां शयानं शिशुञ्चासादयामासुः। दृष्ट्वा च ज्ञापयामासुस्तं १७
शिशुमधि तां कथां यां ते प्रोक्ताः, श्रोतारश्च सर्व्वे मेषरक्षकैः १८
कथितेषु वचःस्वाश्चर्य्यं मेनिरे। मरियमपि चित्ते विचारयन्ती १९
तानि सर्व्वाणि वचांस्यरक्षत्। ते मेषरक्षकास्तु यथोक्तास्तथैव यच्- २०
छ्रुतवन्तो दृष्टवन्तश्च, तन्निमित्तमीश्वरं महयन्तस्तुवन्तश्च प्रत्याजग्मुः।
अष्टमे दिने तूपस्थिते शिशोस्त्वक्छेदकाले तस्य नाम यीशु- २१
रित्यकारि। गर्भावस्थात् प्रागेव तस्य तन्नाम दूतेनोदाहृतम्।

शिशुयीशुमधि हान्नाशिमियोनयोः कथा।

२२ मोशे र्व्यवस्थानुसारेण च तस्याः शुचीभवनकाल उपस्थिते तौ
प्रभोः समक्षं शिशुमुपस्थापयितुं यिरूशालेमं निन्यतुः, यतः प्रभो
२३ र्व्यवस्थायामित्थं लिखितमास्ते, गर्भाशयोद्घाटकः सर्व्वपुंसन्तानः प्रभोः
२४ कृते पवित्रोऽभिधायिष्यते। पुनश्च प्रभो र्व्यवस्थायां यत् कथितमास्ते
तदनुसारेण यज्ञीयोपहारार्थं कपोतयुग्मं पारावतशावकद्वयं वा तयो
र्दातव्यमासीत्।

२५ पश्य च यिरूशालेमे शिमियोननामको नर एकोऽविद्यत, स
धार्म्मिकः श्रद्धाशील इस्रायेलस्य सान्त्वनां प्रतीक्षमाणः पवित्रेणात्म-
२६ नाधिष्ठितश्चासीत्। पवित्रेणात्मना तस्मै चेदं प्रत्यश्रावि यत् प्रभो-
२७ रभिषिक्तं नररत्नं (ख्रीष्टं) न दृष्ट्वा स मृत्युं नास्वादिष्यति।
पवित्रस्यात्मन आवेशात् स धर्म्मधाम आगतवान्। यदा च शिशो
र्यीशोः पितरौ व्यवस्थानिरूपितरीतिमाचरितुं तमभ्यन्तरमानयतां,
२८ तदा सोऽपि तं क्रोडेऽग्रहीत्, ईश्वरस्य धन्यवादं कुर्व्वंश्चावादीत्,
२९ इदानीं भवता स्वीयः किङ्करोऽयं विसृज्यते।
भो मत्स्वामिन् सकल्याणं भवद्वाक्यानुसारतः॥
३० सम्मेचाभ्यां यतोऽदर्शि त्राणोपायस्त्वया कृतः।
समक्षं सर्व्वजातीनां भवतैवोपकल्पितः॥
३१ दीपः स परजातीनां तासां प्रद्योतनार्थकः।
३२ लज्जनस्तु य इस्रायेल् तस्य भास्कर एव सः॥
३३ शिशुमधि यद्यद् अकथ्यत तत्र योषिफस्तस्य माता चाश्चर्य्यममन्येतां।
३४ शिमियोनश्च ताभ्यामाशिषं ददौ तस्य मातरं मरियमं जगाद च,
पश्येस्रायेलस्य मध्ये बहूनां पतनोत्थानयो र्हेतु र्विसंवादान्वितम-

भिन्नानश्च भवितुमयं नियुक्तः। तव निजप्राणा अप्यसिना ३५
व्यत्स्यन्ते। इत्थं बहुहृदयेभ्य उद्गतैस्तर्कैः प्रकटीभवितव्यमिति।

तदानीमाशेरवंशोद्भवा पनूयेलसुता हान्नेतिनामिका भाववा- ३६
दिन्यासीत्, सातीव वयोवृद्धा, कौमार्य्यात् परं सप्तवत्सरान् भर्त्रा
सार्द्धमुषित्वा प्रायेण चतुरशीतिवर्षीया विधवा जाता। सा धर्म्म- ३७
धामतो न निरगच्छत् नक्तं दिवा चोपवासप्रार्थनाभिरुपासनाम-
कुरुत। सापि तस्मिन् दण्ड उपस्थाय प्रभो र्माहात्म्यं स्वीकुर्व्वाणा ३८
यिरूशालेमे ये मोचनं प्रत्यैचन्त तेभ्यः सर्व्वेभ्यस्तस्य कथामकथयत्।

प्रभो र्व्यवस्थयादिष्टानि सर्व्वकर्म्माणि सम्पाद्य तौ स्वनगरं ३९
गालीलस्थं नासरतं प्रतिजग्मतुः।

बालकयीशोर्यिरूशालेमयात्रा।

स शिशुश्चावर्धतात्मना बलवान् ज्ञानपूर्णश्चाभवत्, ईश्वरस्यानु- ४०
ग्रहेणाधिष्ठितश्चासीत्।

अथ तस्य पितरौ प्रतिवर्षं निस्तारपर्व्वणि यिरूशालेममगच्छ- ४१
ताम्। अतस्तस्मिन् द्वादशवर्षवयस्के सति पार्व्वणरीत्यनुसारेण ४२
तौ यिरूशालेमं गत्वा पार्व्वणदिनानि यापयित्वा च यदा प्रत्या-
वर्त्तेतां तदा बालको यीशु र्यिरूशालेमेऽतिष्ठत्। योषेफस्तु तस्य ४३
माता च तन्नाजानीताम्, अपि तु स कुत्रचित् सहयात्रिकाणां ४४
मध्येऽस्तीत्यनुमाय तौ दिनैकगम्यं मार्गं जग्मतुः, ततः परं ज्ञाति-
जनेषु बन्धुषु च तम् अन्वगयेताम्। अनासाद्य तु तमन्विष्यन्तौ ४५
यिरूशालेमं प्रत्याजग्मतुः। दिनत्रयात् परञ्च धर्म्मधाम्नि तमासा- ४६
दयामासतुः। स गुरूणां मध्य आसीनस्तेषां वचांस्यशृणोत् तांश्च
प्रश्नानपृच्छत्। यावन्तश्च तस्य वाक्यान्यशृण्वन् ते सर्व्वे तस्य बुद्ध्यां ४७
प्रत्युत्तरेषु चाश्चर्य्यममन्यन्त। तं दृष्ट्वा तौ विस्मयापन्नौ। तस्य माता ४८

स तं जगाद, वत्स, आवां प्रति त्वयेदं किमकारि? पश्य तव
४९ पिताहञ्च शोचन्तौ त्वाम् अन्वैच्छाव। स तु ताववादीत् किमर्थं
मामन्वैच्छतम्? किं नाजानीतं यन्मत्पितु र्विषयेष्ववस्थानं मयि
५० युज्यते? इदं यद् वचनं स ताववादीत्, तत् ताभ्यां नाबोधि।
५१ ततः परं स। ताभ्यां सार्द्धं यात्रां कृत्वा नासरतमाजगाम तयो
५२ र्वशवर्त्ती तस्थौ च। तस्य माता चैताः सर्व्वकथाश्चित्तेऽरक्षत्। यीशुस्तु
ज्ञाने वयसीश्वरस्य मनुष्याणाञ्चानुग्रहे च वर्धिष्णुरासीत्॥ २॥

योहनस्नापकस्य कर्म्माणि। यीशोः स्नानम्।

३ १ अथ तिबिरियकैसरस्य राजत्वस्य पञ्चदशे वत्सरे यदा पन्तीयः
पीलातो यिहूदियायाः शास्ता, चतुर्थांशाधिपतीनां मध्ये च
हेरोदो गालीलस्य, तदीयभ्राता फिलिपो यितूरिया-त्राखो-
नीत्याख्ययोः प्रदेशयो र्लुषाणियस्त्वाबिलीन्या राजान आसन्, यदा
२ च हाननः कायाफाश्च महायाजकावास्तां, तदा मरुभूमावीश्वरस्य
३ वाक्यं सखरियसुतं योहनं प्रति प्रादुरभूत्। ततः स यर्द्दनसमी-
पस्थस्य जनपदस्य सर्व्वत्रोपस्थाय पापमोचनार्थं मनःप्रत्यावर्त्तनसू-
४ चकम् स्नापनमघोषयत्; भाववादिनो यिशायाहस्योक्तीनां ग्रन्थे
यथा लिखितमास्ते,

मरौ घोषयतः प्रोच्चैरस्यायं कस्यचिद्रवः।
प्रभोः संस्कुरुताध्वानं विधद्ध्वं तत्सृती ऋजूः॥
सर्व्वाण्यापूरयिष्यन्ते निम्नस्थानानि यत्नतः।
कारिष्यन्ते पुन र्निम्नाः सर्व्वे भूधरपर्व्वताः॥
सरलानि भविष्यन्ति कुटिलानि स्थलान्यपि।
यानि वर्त्मानि दुःखानि तान्याप्स्यन्ति समानतां
द्रक्ष्यते सर्व्वमर्त्त्यैश्च त्राणमीश्वरसाधितं॥

ततो ये जननिवहास्तेन स्नापनार्थं वहिरगच्छंस्तान् सोऽवदत्, अरे ७
सर्पवंशाः, यूयं भाविक्रोधात् पलायितुं केनादिष्टाः ? अतो मनःप्रत्या- ८
वर्त्तनस्य योग्यानि फलानि फलत । अस्माकं पिताब्राहामो विद्यत इति
वाक्यं वान्तरे प्रयोक्तुं मा प्रवर्त्तध्वं, यतोऽहं युष्मान् ब्रवीमि, एतेभ्यः
प्रस्तरेभ्योऽब्राहामस्य कृते सन्तानानुत्पादयितुम् ईश्वरः शक्तिमान् ।
परन्त्वधुनैव पादपानां मूलेषु कुठारो लगन्नास्ते, अतो यः कश्चित् ९
पादपः सत्फलं न फलति स उच्छिद्यते वह्नौ निक्षिप्यते च ।

जननिवहास्तदा तं पप्रच्छुः, तर्हि किं कर्त्तव्यमस्माभिः ? स १०
प्रतिभाषमाणस्तान् जगाद, यस्याङ्गरक्षके द्वे वस्त्रे स्तः स वस्त्रही- ११
नायैकतरं ददातु । खाद्यद्रव्याणि वा यस्य विद्यन्ते स तथैव
करोतु । स्नापनार्थमागताः केचित्करादायिनोऽपि तं जगदुः, १२
गुरो किं कर्त्तव्यमस्माभिः ? स तान् जगाद, युष्मदर्थं यदादिष्टं १३
ततोऽधिकं माहरयत । केचिद् योद्धारोऽपि तं पप्रच्छुरस्माभि १४
र्वा किं कर्त्तव्यं ? स तान् जगाद, कमपि मा पीडयत, मृषादोषं
वा कस्मिन्नपि मारोपयत, स्वभृतौ सन्तुष्य तिष्ठत च ।

प्रजाजनस्तु प्रतीक्षत सर्व्वे च योहनमधि मनःखित्यम् अतर्कयन्, १५
असौ किं ख्रीष्टः स्यादिति ? अतो योहनः प्रतिभाषमाणः सर्व्वान् १६
जगाद, अहं युष्मांस्तोये स्नापयामि, मत्पश्चात्तु मत्तो बलवत्तरो नर
आगच्छति, तदीयोपानहो बन्धन्यौ मोक्तुमप्यहं न योग्यः । स युष्मान्
पवित्र आत्मनि वह्नौ च स्नापयिष्यति । तस्य हस्ते सूर्पो विद्यते,
स च स्वीयखलं सम्यक् संशोधयिष्यति, निजगोधूमान् कुशूले १७
सङ्ग्रहीष्यति च, तुषांस्त्वनिर्व्वाणवह्निना दाहयिष्यतीति । एतदन्येन १८
प्रचुरेणोपदेशेनापि स प्रजाजनं सुसंवादमज्ञापयत् ।

ततः परं हेरोदः फिलिपनामकस्य स्वभ्रातुर्भार्य्यां हेरोदियामधि १९

२० स्वकृतान्यपराणि सर्व्वाणि दुष्कर्म्माण्यधि च योहनेन भर्त्सितः। अतः
स तं दोषराशिमनेनापि वर्धयामास यद् योहनं कारायां रुरोध।
२१ यदा तु कृत्स्नः प्रजाजनोऽस्नाप्यत, तदा यीशावपि स्नापिते
२२ प्रार्थयमाने च स्वर्ग उद्घाटितः पवित्र आत्मा च दैहिक आकारे
कपोत इव तस्योपर्य्यावततार, स्वर्गाच्चेयं वाणी समभूत्, मम प्रियः
पुत्रस्त्वं त्वय्यहं प्रीतः।

### यीशुख्रीष्टस्य वंशावलि पत्रम्।

२३ स्वकार्य्यमारभमाणो यीशुः प्रायेण त्रिंशद्वर्षवयस्क आसीत्।
२४ लौकिकज्ञाने स योषेफस्य सुतः, स पुनरेलेः सुतः, स मत्ततस्य सुतः,
स लेवेः सुतः, स मल्केः सुतः, स यान्नस्य सुतः, स योषेफस्य सुतः,
२५ स मत्तथियस्य सुतः, स आमोषस्य सुतः, स नहूमस्य सुतः,
२६ स इष्लेः सुतः, स नगेः सुतः, स माटस्य सुतः, स मत्तथियस्य सुतः,
स शिमियेः सुतः, स योषेफस्य सुतः, स यूदाः सुतः, स योहनाः
२७ सुतः, स रीषाः सुतः, स सरुब्बाबिलस्य सुतः, स शल्टीयेलस्य
२८ सुतः, स नेरेः सुतः स मल्केः सुतः, स आद्देः सुतः, स कोषमस्य सुतः,
स इल्मोदमस्य सुतः, स एरेः सुतः, स योषेः सुतः, स इलीयेषरस्य
२९ सुतः, स योरीमस्य सुतः, स मत्ततस्य सुतः, स लेवेः सुतः, स
३० शिमियोनस्य सुतः, स यूदाः सुतः, स योषेफस्य सुतः, स योननस्य
३१ सुतः, स इलियाकीमस्य सुतः, स मिलेयाः सुतः, स मैननस्य सुतः,
३२ स मत्तत्तस्य सुतः, स नाथनस्य सुतः, स दायूदस्य सुतः, स यिशयस्य
सुतः, स ओबेदस्य सुतः, स बोयसस्य सुतः, स सल्मोनस्य सुतः, स
३३ नहशोनस्य सुतः, स अम्मीनादबस्य सुतः, सोऽरामस्य सुतः, स
३४ हिष्रोणस्य सुतः, स पेरसस्य सुतः, स यिहूदाः सुतः, स याकोबस्य
सुतः, स इस्हाकस्य सुतः, सोऽब्राहामस्य सुतः, स तेरहस्य सुतः, स

नाहोरस्य सुतः, स सिरूगस्य सुतः, स रियोः सुतः, स पेलगस्य सुतः, ३५
स एबरस्य सुतः, स शेलहस्य सुतः, स कैननस्य सुतः, सोऽर्फक्षदस्य ३६
सुतः, स शेमस्य सुतः, स नोहस्य सुतः, स लेमकस्य सुतः, स ३७
मथूशेलहस्य सुतः, स हनोकस्य सुतः, स येरदस्य सुतः, स
महललेलस्य सुतः, स कैननस्य सुतः, स इनोशस्य सुतः, स ३८
शेथस्य सुतः, स आदमस्य सुतः, स ईश्वरस्य सुतः ॥ ३ ॥

यीशोः परीक्षा ।

अथ यीशुः पवित्रेणात्मना पूर्णो यर्द्दनतः प्रत्यावृत्त आत्मना ४ १
च मरुं नीतश्चत्वारिंशद्दिनानि दियावलेन परीक्षितश्च। तेषु दिनेषु २
स निरशनस्तस्थौ । तेषु व्यतीतेषु स चुक्षोद । ततो दियावलस्त- ३
माह, भवांश्चेदीश्वरस्य पुत्रस्तर्हि प्रस्तरोऽसौ यथा पूपो भवेत्
तथाज्ञापयतु । यीशुस्तं प्रतिजगाद, लिखितमास्ते, न केवलेन ४
पूपेन मनुष्यो जीविष्यत्यपि त्वीश्वरस्य येन केनचिद् वचनेन । ततः ५
परं दियावलस्तमुच्चमेकं गिरिशिखरं नीत्वा निमिषैकमध्ये भूम-
ण्डलस्य निखिलराज्यानि दर्शयन्नवादीत्, कृत्स्नमिदं कर्त्तृत्वमेतेषां ६
प्रतापञ्चाहं तुभ्यं दास्यामि, यतस्तत् सर्व्वं मयि समर्पितं, यस्मै च
तद् दातुमिच्छामि तस्मै तद् ददामि, अतस्त्वं चेन्मम समक्षं ७
प्रणिपतेस्तर्हि तत् सर्व्वं तवैव भविष्यति । यीशुस्तं प्रतिबभाषे ८
अपसर शैतान, यतो लिखितमास्ते, निजेश्वरस्य प्रभो र्भजना त्वया
कर्त्तव्या, एकश्च स एव त्वयाराधयितव्यः । पुनश्च स तं यिरूशालेमं ९
नीत्वा धर्म्मधाम्नः शिखरे स्थापयित्वा च जगाद, भवांश्चेदीश्वरस्य
पुत्रस्तर्ह्यस्मात् स्थानाद् अधस्तात् प्रपततु, यतो लिखितमास्ते, १०

त्वदर्थं निजदूतान् स तवादेक्ष्यति रक्षणं ।

यस्माद्धन्याः पदं शैले न तत् त्वां वक्ष्यन्ति ते करैः ॥ ११

१२ यीशुस्तं प्रतिजगाद, उक्तमास्ते, त्वं स्वेश्वरस्य प्रभोः परीक्षां
१३ माकार्षीः । इत्थं कृत्स्नां परीक्षां समाप्य दियावल उपयुक्तं समयं
यावत् तस्मात् प्रतस्थे ।

नासरतनगरे यीशोरुपदेशः ।

१४ यीशुरात्मनः प्रभावेन गालीलं प्रत्यावृत्तस्तस्य ख्यातिश्च तं कृत्स्नं
१५ प्रदेशं व्यानशे । स च तेषां समाजगृहेषूपादिशत् सर्व्वैश्च प्राशस्यत ।
१६ इत्थं पुरा यत्र स पोषितस्तन्नासरतनगरमाजगाम, स्वरीत्यनु-
१७ सारेण च विश्रामदिने समाजगृहं प्रविश्य पाठार्थमुत्तस्थौ । तदा
भाववादिनो यिशायाहस्य ग्रन्थे तस्मै दत्ते स ग्रन्थं विस्तार्य्य तत्
स्थानमवाप यत्र लिखितमासीत्,

१८ आस्ते मयि प्रभोरात्मा यतो मां सोऽभिषिक्तवान् ।
ज्ञापयेयं सुसंवादं दरिद्रान् मानवान् यथा ॥
तेनाहं प्रहितः कर्त्तुं भग्नचित्तान् निरामयान् ।
वन्दीनां घोषितुं मुक्तिं दृक्शक्तिञ्च विचक्षुषाम् ॥
अप्यनुज्ञाय विस्रष्टुं मनुष्यान् परिपीडितान् ।
१९ प्रभो र्घोषयितुञ्चापि प्रसादावहवत्सरम् ॥

२० ततः परं स तं ग्रन्थं बद्ध्वा भृत्ये प्रत्यर्प्यासन उपविवेश । समाजस्थाः
२१ सर्व्वे चैकदृष्ट्या तं निरीक्ष्य तस्थुः । तदा स तानिदं वक्तुमारेभे,
२२ शास्त्रीयवचनमिदमद्य युष्मत्कर्णगोचरे पूर्णतां गतम् । सर्व्वे च तस्य
पक्षे साक्ष्यमददुस्तन्मुखान्निःसरत्सु प्रीतिजनकेषु वचःस्वाश्चर्य्यममन्यन्त
२३ च । ते पुनरवदन्, किं न योषेफस्य पुत्रोऽसौ ? ततः स तान्
जगाद, यूयमवश्यं मामिमं प्रवादं वक्ष्यथ, चिकित्सक, आत्मचिकित्सां
कुरु, कफरनाहूमि सिद्धानां येषां कर्म्मणां किंवदन्त्यस्माभिरश्रावि,
२४ तादृशान्यत्र स्वदेशेऽपि कुर्व्विति । स पुन र्जगाद, कोऽपि भाववादी

२५ स्वदेशे नानुगृह्यते। युष्मानहं सत्यं ब्रवीमि, एलियस्य काले यदा
त्रीन् वत्सरान् षण्मासांश्च यावदाकाशो रुद्धोऽतिष्ठत् कृत्स्ने देशे
महादुर्भिक्षञ्चाभूत् इस्रायेले तदा बह्व्यो विधवा अविद्यन्त, एलियस्तु
२६ तासां कामपि प्रति न प्रहितः, केवलं सीदोनदेशस्थं सारिफन्नगरं
२७ काञ्चिद्विधवां योषितं प्रति प्रहितः। तथा भाववादिन इलीशायस्य
काले इस्रायेले बहवः कुष्ठिनोऽविद्यन्त, तेषान्तु कोऽपि न शुचीकृतः,
२८ केवलः सुरीयो नामानः शुचीकृत इति। इदं श्रुत्वा समाजस्थाः सर्व्वे
२९ रोषेण पूर्णा उत्थाय तं नगराद् वहिश्चक्रुः। यत्र पर्व्वते च तेषां नगरं
३० निर्म्मितमासीत् तदग्रभागं नीत्वा तं निपातयितुमैच्छन्। स तु
तेषां मध्येन व्रजन् प्रतस्थे।

### यीशोर्नानालौकिककर्म्माणि।

यीशुना बहुभ्यः पीड़ितभूतग्रस्तलोकेभ्यः आरोग्यदानम्।

३१ अनन्तरं स कफरनाहूमाख्यं गालीलस्थं नगरमवततार।
३२ विश्रामवारे च यदा जनानशिक्षयत् तदा ते तस्य शिक्षायामा-
३३ श्चर्य्यम् अमन्यन्त, यतस्तस्य वाक्यं सामर्थ्यविशिष्टमासीत्। तत्र
समाजे चाशुचिभूतस्यात्मनाधिष्ठित एको नरोऽविद्यत, स उच्चैः-
३४ स्वरेणोत्क्रोशन् जगाद, निवर्त्ततां, भो नासरतीय यीशो, अस्माकं
भवतश्च किम्? भवान् किमस्मान् नाशयितुमागतः? भवान् कस्तदहं
३५ जानामि, ईश्वरस्य पवित्रो नरो भवानिति। यीशुस्तु तं निर्भर्त्सयन्
बभाषे, मौनी भव, अस्माच्च निःसर। ततः स भूतस्तं मध्यस्थाने
निक्षिप्य किमपि न हिंसित्वा तस्मान्निःसृतः, सर्व्वे च विस्मयेनापन्नाः
परस्परं संलपन्तश्चावादिषुः, वाक्यमिदं कीदृशम्? यतोऽसौ
३६ सामर्थ्येन प्रभावेन चाशुचीनात्मनोऽप्याज्ञापयति ते च निःसरन्ति।
३७ अनन्तरं तदीयकिंवदन्ती परितःस्थस्य जनपदस्य सर्व्वत्र व्यानशे।

३८ अनन्तरं स उत्थाय समाजात् शिमोनस्य गृहं प्रविवेश।
शिमोनस्य श्वश्रूस्तदा प्रबलेन ज्वरेणापीड्यत, ते च तस्या उपका-
३९ रार्थं तं प्रसादयामासुः। ततः स तस्या ऊर्द्ध्वे तिष्ठन् ज्वरं तर्जयामास,
ज्वरस्त्र तां तत्याज, सा च तत्क्षणमुत्थाय तान् पर्य्यचरत्।
४० ततः परमस्तं गच्छति सूर्य्ये विविधव्याधिग्रस्ता अस्वस्था जना
येषामासंस्ते सर्व्वे तान् तस्यान्तिकमानिन्युः। स च तेषामेकैकस्मिन्
४१ हस्तावर्पयंस्तान् निरामयांश्चकार। बहुभ्यस्च भूता निःसरन्त उच्चैः-
स्वरेणावदन्, भवानीश्वरस्य पुत्रः ख्रीष्टः। ततः स तान् भर्त्सयन्
४२ भाषितुं नान्वमन्यत, यतः स ख्रीष्ट इति तेऽजानन्। जाते पुनः
प्रातःकाले स निर्गत्य किञ्चन निर्जनं स्थानं ययौ, जननिवहास्तु
तं मृगयाञ्चक्रिरे तस्यान्तिकमागत्य च तेषां सन्निधितस्तस्य प्रस्थानं
४३ निवारयितुं तमधरन्। स तु तानब्रवीत्, अन्येष्वपि नगरेष्वीश्वर-
४४ राज्यस्य सुसंवादो मया घोषयितव्यः, यतस्तदर्थमहं प्रहितः। ततः
परं स गालीलस्य समाजगृहेष्वघोषयत्॥ ४॥

जाले बहुमत्स्योत्थानम्।

५ १ एकदेश्वरस्य वाक्यं श्रोतुं जननिवहस्तमाकुलयत् स च गिनेष-
२ रताख्यह्रदस्य तीरेऽतिष्ठत्। तदा स ह्रदकूलेऽवस्थिते द्वे नावौ
३ ददर्श, ताभ्यां निर्गता धीवरा जालानि प्राक्षालयन्। अतस्तयो
र्या शिमोनस्यासीत् स तां प्रविश्य शिमोनमब्रवीत् त्वं स्थलात्
किञ्चिद् दूरं तां वाहयितुमर्हसीति। अनन्तरं स नाव्युपविश्य
४ जननिवहान् अशिक्षयत्। यदा च कथनाद्विरराम तदा शिमोनं
जगाद, गभीरं स्थानं यावन्नावं वाहय, तत्रैव मत्स्यधरणार्थं
५ युष्माभि र्जालानि निक्षिप्यन्तां। शिमोनस्तं प्रत्यब्रवीत्, नाथ,
कृत्स्नां यामिनीं परिश्रमं कृत्वास्माभिः किमपि न धृतं, भवत

आज्ञायान्वहं जालं निक्षेप्स्यामि। तदनुरूपं कृत्वा च ते महान् ६
मत्स्यनिवहो निबद्धः। ततो विशीर्य्यमाणे तेषां जाले त उप- ७
कारायागमनार्थम् अन्यतरस्यां नावि स्थितान् स्वसङ्गिन आजुहुवु-
स्तेषु चागतेषूभे नावौ मग्नकल्पे कुर्व्वन्तः पूरयामासुः। तद् ८
विलोक्य पित्रो यीशो र्जानुनोः प्रणिपत्य व्याजहार, मत्तोऽपसरतु
प्रभो, यतः पापिष्ठो नरोऽहमिति। यतस्तैः सन्धृतान्मत्स्ययूथात् स ९
तत्सङ्गिनश्च सर्व्वे विस्मयाक्रान्ताः, शिमोनस्य सहभागिनोः सिबदिय- १०
सुतयो र्याकोब-योहनयोरपि सैव दशा सम्भूता। यीशुस्तु
शिमोनमब्रवीत्, मा भैषीरद्यारभ्य त्वं नरधारी भविष्यसि। अनन्तरं ११
नावौ स्थलं नीत्वा ते सर्व्वं विहाय तमनुजग्मुः।

यीशुना जनैककुष्ठिने पक्षाघातिने च आरोग्यदानम्।

अथ स यदा कस्मिंश्चिन्नगर आसीत्, तदा कुष्ठपूर्णो नर एक १२
उपतस्थे। यीशुं दृष्ट्वा सोऽधोमुखं पतित्वा तं प्रसादयन् जगाद,
प्रभो, भवान् यदीच्छति तर्हि मां शुचीकर्त्तुं शक्नोति। ततः स १३
हस्तं प्रसार्य्य तं स्पृष्ट्वा जगाद, इच्छामि, शुचि र्भव। तत्क्षणाच्च १४
कुष्ठं तस्मादपससार। यीशुस्तु तमाज्ञापयामास, कमप्येतन्मा वद।
अपि तु गत्वा याजकमात्मानं दर्शय, तव शुचित्वलाभनिमित्तञ्च
मोशिना यथादिष्टं तथैव तेभ्यः साक्ष्यदानार्थमुपहारं देहि।
तथापि तदीयकिंवदन्त्यधिकं देशं व्याप्नोत्, महान्तो जननिवहाश्च १५
तस्य वाक्यानि श्रोतुं तेन व्याधिमुक्तिं लब्धुञ्च समागच्छन्। स तु १६
शून्यं गत्वा निर्जनेषु स्थानेष्ववर्त्तत प्रार्थयत च।

अथ कस्मिंश्चिद् दिवसे यदा सोऽशिक्षयत् तदा गालीलस्य १७
सर्व्वग्रामेभ्यो यिहूदियादेशाद् यिरूशालेमाच्चागताः फरीशिनो
व्यवस्थावेत्तारश्च समासीना आसन् तेन व्याधिप्रतीकाराय च प्रभोः

१८ प्रभावः सतेजा आसीत्। पश्य च केचिन्नराः खट्वायां शयानमेक-
मवशाङ्गं मनुष्यमभ्यन्तरं नेतुं तस्य समक्षं स्थापयितुञ्चायतन्त।
१९ जनताकारणात्तु तदानयनार्थं मार्गमप्राप्य ते गृहपृष्ठमारुह्य फल-
काकाराः कतिपया इष्टका अपसार्य्य तेन छिद्रेण तं सखट्वं गृहमध्ये
२० यीशोः सम्मुखमवरोहयामासुः। स च तेषां विश्वासं दृष्ट्वा तं
जगाद, भो मानव, तव पापानि मोचितानि। तदा ते शास्त्रा-
२१ ध्यापकाः फरीशिनश्च मिथ इत्थं तर्कयितुमारेभिरे, कोऽसौ य
ईश्वरनिन्दककथा व्याहरति? एकस्मादीश्वरादन्यः कः पापानि
२२ क्षमितुं शक्नोति? यीशुस्तु तेषां तर्कान् विज्ञाय प्रतिभाषमाण-
२३ स्तानब्रवीत्, युष्माभि र्मनःसु किं तर्क्यते? ब्रूत, तव पापानि
मोचितानीति वा त्वमुत्थाय परिव्रजेत्येतयोः कथनयोः कतरम्
२४ अनायासम्? पृथिव्यान्तु पापानि मोचयितुं मनुष्यपुत्रस्य सामर्थ्य-
मस्तीति यथा युष्माभि र्ज्ञायेत, तदर्थं—तमवशाङ्गमभिभाष्य स
उवाच—त्वामहमाज्ञापयामि, उत्थाय स्वखट्वामादाय स्वगेहं याहि।
२५ स तु तत्क्षणं सर्व्वेषां समक्षमुत्थाय स्वशय्यामादाय चेश्वरं स्तुवन्
२६ स्वगृहं जगाम। ततः सर्व्वे विस्मयापन्ना ईश्वरमस्तुवन् भयपूर्णाश्चा-
वदन्, अद्भुतानीतिवृत्तान्यद्यास्माभि र्दृष्टानि।

### यीशोर्नानाविधोपदेशनम्।

लेव्याह्वानम्। यीशोस्तद्विषयकशिक्षा।

२७ ततः परं स बहि र्गत्वा शुल्कादायस्थान उपविष्टं लेविनामकं
२८ शुल्कादायिनं निरीक्ष्य जगाद, मामनुगच्छ। स च सर्व्वं त्यक्त्वो-
२९ त्थाय तमनुजगाम। स लेविस्तु तस्य कृते निजगृहे महाभोज्यं
चकार, तत्र भोक्तुमुपविष्टा बहवः शुल्कादायिनस्तेषां सङ्गिनो-
३० ऽन्यजनाश्चाविशन्त। अतस्तेषां शास्त्राध्यापकाः फरीशिनश्च तस्य

शिष्यान् सम्बोध्य सामर्षमवादिषुः, किमर्थं भुंग्ध्वे शुल्कादायिभिः
पापिभिश्च सार्द्धम्? यीशुस्तु प्रतिभाषमाणस्तान् जगाद, चिकित्सको ३१
न स्वस्थानाम् अपि त्वस्वस्थानाम् आवश्यकः। न धार्म्मिकान्, अपि ३२
तु मनःपरावर्त्तनाय पापिन आह्वातुमहमागतः।

ते पुनस्तमूचुः, किमर्थं योहनस्य शिष्या भूय उपवसन्ति प्रार्थयन्ते ३३
च फरीशिनां शिष्या अपि तथैव कुर्व्वन्ति, तव शिष्यास्तश्नन्ति
पिबन्ति च? तदा स तानब्रवीत्, वरो यावद् वरसखैः सार्द्धं ३४
वर्त्तते तावत् किं तान् उपवासयितुं शक्नुथ? दिनानि तावदुप- ३५
स्थास्यन्ति यदा वरस्तेभ्योऽपहारिष्यते, तेष्वेव दिनेषु त उपवत्स्यन्ति।
स तानिमाम् उपमाकथामपि जगाद, जीर्णवसने न कोऽपि ३६
नूतनवसनस्य खण्डं सीव्यति, यतस्तथा कृते तन्नूतनमपि तेन
छिद्यते पुरातने च न युज्यते नूतनादुद्धृतः स खण्डः। नापि नवो ३७
द्राक्षारसः केनापि जीर्णकुतूषु निधीयते; यतस्तथा कृते नवो
द्राक्षारसः कुतू विदारयति तेन स च विस्तोष्यति कुतवश्च नंक्ष्यन्ति।
प्रत्युत नवद्राक्षारसो नवकुतूषु निधातव्यस्तेनोभयो रक्षा सम्भवति। ३८
पुरातनं पीत्वा तु कोऽपि सहसा नवं नाभिवाञ्छति, यतः स ३९
ब्रूते, पुरातनः सुस्वादुतरः॥ ५॥

विश्रामवारमधि यीशोरुपदेशः।

द्वितीय आद्यविश्रामवारे तु शस्यक्षेत्रेण तस्मिन् व्रजति तस्य ६ १
शिष्या मञ्जरी भँक्त्वा पाणिभि र्मर्द्दन्तोऽभुञ्जत। फरीशिनः केचित् २
तदा तानवदन्, विश्रामदिने यन्न विधेयं तत् कर्म्म कथं कुरुथ?
ततो यीशुः प्रतिभाषमाणस्तान् जगाद, न किं पठितं भो ३
दायूदस्तस्य सङ्गिनश्च यदाक्षुध्यंस्तदा स किमकार्षीत्? स ह्रीश्वरस्य ४
गेहं प्रविश्य तानेव दर्शनीयपूपान् आदायाभुङ्क्त स्वसङ्गिभ्यश्च प्रादात्,

५ यान् भोक्तुं याजकैः केवलै विधेयम्। पुनः स तान् जगाद, प्रभु
र्हि मनुष्यपुत्रो विश्रामवारस्यापि।

६ अन्यस्मिन्नपि विश्रामवारे स तेषां समाजं प्रविश्य यदोपादि-
७ शत् तदासीत् तत्र नर एको यस्य दक्षिणो हस्तः शुष्कः। स तु
विश्रामवारे रोगप्रतीकारं करोति न वेति जिज्ञासवः शास्त्रा-
८ ध्यापकाः फरीशिनश्च तदभियोगस्य सूत्रं गवेषयन्तस्तमवैक्षन्त। स
तु तेषां तर्कान् ज्ञात्वा तं शुष्कहस्तं मनुष्यं जगाद, उत्थाय
९ मध्यस्थाने तिष्ठ। ततः स उत्थायातिष्ठत्। यीशुस्तदा तान्
जगाद, युष्मानहं पृच्छामि, विश्रामवारे किं विधेयं, हिताचरण-
१० मथवा हिंसाचरणम्? प्राणरक्षाथवा प्राणनाशः? अनन्तरं स
परितस्तान् सर्व्वान् निरीक्ष्य तं नरं जगाद, तव हस्तं प्रसारय।
११ ततस्तेन तथा कृते स करोऽन्यतर इव स्वस्थो जातः। ते तु तमः-
पूर्णा बभूवु यीशुं प्रति किं कर्त्तव्यं तदधि संभाषन्त च।

प्रेरितानां नियोगः। यीशोरुपदेशः।

१२ तेषु दिनेषु यीशुरेकदा प्रार्थयितुं पर्व्वतं गत्वेश्वरमुद्दिश्य
१३ प्रार्थयमानः कृत्स्नां रात्रिमयापयत्। दिवसे तूपस्थिते स शिष्या-
न्याहूय तेषां मध्ये पश्चान्निर्द्दिष्टान् द्वादश नरान् वरयामास
१४ तेषाञ्च प्रेरितवर्ग इत्यभिधानं चकार। ते शिमोनो यस्तेन पित्र
इत्यभिहितस्तस्य भ्रातान्द्रियस्च याकोबो योहनस्च फिलिपो
१५ बर्थलमयस्च मथिस्थोमास्च, आल्फेयसुतो याकोब उद्योगीत्यभिधः
१६ शिमोनस्च, याकोबस्य (भ्राता) यिहूदा स चेष्करियोतीयो यिहूदा
यः पश्चात् समर्पयिता बभूव।

१७ ततः परं स तैः सार्द्धमवरुह्य कस्मिंश्चित् समस्थले तस्थौ।
उपतस्थिरे च तत्र तच्छिष्यवृन्दं कृत्स्नयिहूदियातो यिरूशालेमात्

सोरसीदोनयोः समुद्रतीरस्थप्रदेशाच्चागतो महान् जननिवहश्च।
इमे तस्य वाक्यं श्रोतुं रोगमुक्तिं प्राप्तुञ्च तस्यान्तिकमागतवन्तः, १८
भूताविष्टाश्चाशुच्यात्मभ्यो मुक्तिम् अलभन्त, कृत्स्नो जननिवहश्च तं १९
स्प्रष्टुमयतत, यतः प्रभावस्तस्मान्निर्गच्छन् सर्व्वेषामारोग्यमसाधयत्।

अनन्तरं स स्वशिष्याणुद्दिश्योर्द्धदृष्टिं भूत्वा व्याजहार, धन्या २०
दीना यूयं, यत ईश्वरराज्यं युष्माकमेव। धन्या अधुना क्षुधार्त्ता २१
यूयं यतः परितर्प्स्यथ। धन्या अधुना रुदन्तो यूयं, यतो हसि-
ष्यथ। धन्या यूयं यदा जना मनुष्यपुत्रस्य हेतो र्युष्मभ्यम् द्विषन्ति, २२
यदा युष्मान् पृथक् कुर्व्वन्ति न्यक्कुर्व्वन्ति अधममिव युष्मन्नाम
निराकुर्व्वन्ति च। तस्मिन् दिन आनन्दत नृत्यत च। यतः २३
पश्यत सञ्चितं स्वर्गे युष्माकं प्रचुरं पारितोषिकं। वास्तवं तेषां
पूर्व्वपुरुषा भाववादिनः प्रति तथैवाचरितवन्तः। प्रत्युत धनिनो २४
यूयं सन्तापपात्राणि, यतो यूयं स्वसान्त्वनां लब्धवन्तः। परितृप्ता २५
यूयं सन्तापपात्राणि यतः क्षोत्स्यथ। अधुना हसन्तो यूयं सन्ता- २६
पपात्राणि, यतः शोचिष्यथ रोदिष्यथ च। यूयं सन्तापपात्राणि
यदा मनुष्याः सर्व्वे युष्माकं सुख्यातिं कुर्व्वन्ति। वास्तवं तेषां
पूर्व्वपुरुषाः कूटभाववादिनः प्रति तथैवाचरितवन्तः।

परन्तु भो श्रोतारः, युष्मानहं ब्रवीमि, स्वशत्रून् प्रति प्रेम २७
कुरुत, ये युष्मान् द्विषन्ति तेषां हितं कुरुथ, ये युष्मान् शपन्ति २८
तेभ्य आशिषं दत्त, ये युष्मान् अपवदन्ति तेषां हितं प्रार्थयध्वं।
यस्त्वेकतरस्मिन् कपोले कराघातं करोति तं प्रत्यन्यतरं कपोल- २९
ऽपि व्याघोटय। यस्य तव प्रावारं हरति, तवाङ्गाच्छादकमपि
हर्त्तुं तं मा वारय। यः कश्चित् त्वां याचते तस्मै देहि। यश्च ३०
तव द्रव्याणि हरति तं तत्प्रतिदानं मा याचस्व। अपि युष्मान् ३१

प्रति मनुष्याणां यादृशमाचारं यूयमभिवाञ्छथ, यूयमपि तान्
३१ प्रति तादृशमाचरत। यदि तु युष्मत्प्रेमकारिणः प्रति प्रेम कुरुथ,
कस्तर्हि युष्माकं साधुवादः? यतः पापिनोऽपि स्वप्रेमकारिणः प्रति
३३ प्रेम कुर्व्वन्ति। यदि च स्वहितकारिणः प्रति हिताचारं कुरुथ,
कस्तर्हि युष्माकं साधुवादः? यतः पापिनोऽपि तदेव कुर्व्वन्ति।
३४ येभ्यः प्रत्यादानस्याशा युष्माकमस्ति तेषु चेदृणं समर्पयथ, कस्तर्हि
युष्माकं साधुवादः? यतः समानप्रत्यादानार्थं पापिनोऽपि पापि
३५ भ्यृणं समर्पयन्ति। प्रत्युत यूयं स्वशत्रून् प्रति प्रेम कुरुत प्रत्यादानस्य
प्रत्याशाभावेऽपि हिताचारमृणदानञ्च कुरुत। तथा कृते युष्माकं
प्रचुरं पारितोषिकं भविष्यति यूयञ्च परात्परस्य पुत्रा भविष्यथ।
३६ स ह्यकृतज्ञान् दुर्जनांश्च प्रति सुशीलः। अतो युष्माकं पिता यथा
कृपावान्, यूयमपि तथैव कृपावन्तो भवत।
३७ विचारं वा मा कुरुत, तेन युष्माकं विचारो न कारिष्यते।
परं मा दोषीकुरुत, तेन यूयं न दोषीकारिष्यध्वे। क्षमध्वं तेन
३८ क्षमां लप्स्यध्वे। दत्त, तेन युष्मभ्यं दायिष्यते, उत्तमं निपीडितं
सञ्चालितम् अतिपूर्णं परिमाणपात्रं युष्मत्क्रोडे दायिष्यते। येन
परिमाणेन यूयं मिमीध्वे तेनैव युष्मदर्थं पुन र्मायिष्यते।
३९ अथ स तेभ्य उपमां कथयामास, अन्धः किमन्धं नेतुं शक्नोति?
४० किं न तावुभौ गर्त्ते पतिष्यतः? नास्ति शिष्यो गुरुतः श्रेष्ठः।
४१ परिपक्वस्तु यः कश्चित् स स्वगुरुणा तुल्यः। त्वञ्च कुतः स्वभ्रातुश्चक्षुःस्थं
४२ शूककणं निरीक्षसे, तव चक्षुःस्थन्तु गेहकाष्ठं नावधारयसि? तव
चक्षुःस्थं गेहकाष्ठमदृष्ट्वा त्वं कथं वा स्वभ्रातरं गदितुं शक्नोषि,
भ्रातस्तव चक्षुःस्थशूककणस्य मयोद्धरणमनुमन्यस्वेति। कपटिन्,
प्रथमं स्वचक्षुषस्तद् गेहकाष्ठमुद्धर, ततः स्वभ्रातुश्चक्षुषः शूककण-

स्योद्धरणार्थं स्पष्टं द्रक्ष्यसि। नास्ति हि सुवृक्षः कुफलोत्पादकः ४३
नास्ति वा कुवृक्षः सुफलोत्पादकः, यत एकैको वृक्षः स्वफलेना-
भिज्ञायते। नैव कण्टकेभ्य उडुम्बरफलानि सञ्चीयन्ते नैव स्तम्बाद् ४४
वा द्राक्षाफलानि सङ्गृह्यन्ते। सुजनो सुधनपूर्णाद्धृदयात् सुद्रव्यं ४५
निःसारयति, कुजनस्तु कुधनपूर्णाद्धृदयात् कुद्रव्यं निःसारयति,
यतो हृदयस्यातिपूरणमेव वक्त्रं व्याहरति।

किमर्थं वा यूयं मां प्रभो प्रभो इत्यभिभाषध्वे न तु मद्वा- ४६
क्यानुरूपमाचरणं कुरुथ? यः कश्चिन्मदन्तिकमागत्य मम वाक्यानि ४७
शृणोति समाचरति च स केन सदृशस्तदहं युष्मान् ज्ञापयिष्यामि। ४८
सगृहनिर्म्माणे नियुक्तेन नरेण सदृशो यो गभीरं खनित्वा पाषाणे
गृहमूलं स्थापयामास। ततः परं वन्यायामुपस्थितायां स्रोतस्तद्
गृहमाजघान विचालयितुन्तु नाशक्नोत्, यतस्तत् पाषाणोपरि
संस्थापितं। यस्तु श्रुत्वा न समाचरति स तेन नरेण सदृशो येन ४९
भित्तिमूलं विना गृहं मृत्तिकोपरि निर्म्मितं। स्रोतसाहन्यमानं
तत् सहसा पपात, तस्य गृहस्य भङ्गो घोरतरो बभूव च॥ ६ ॥

यीशुना पीड़ितस्य आरोग्यकरणं मृताय जीवनदानञ्च।

जनानां कर्णगोचरे सर्व्वाणि तानि वाक्यानि समाप्य स ७ १
कफरनाहूमं प्रविवेश। कस्यचिच्छतपते र्व्याधिग्रस्तो दासस्तदा २
मृतकल्प आसीत्, स स्वामिनो बहुमतः। अतः स यीशोः संवादं ३
श्रुत्वा यिहूदीयानां प्राचीनान् तस्यान्तिकं प्रहित्य तं याचयामास
स यथागत्य तस्य दासं तारयेत्। ते च यीशोः समीपमुपस्थाय ४
सयत्नं प्रसादयन्तस्तमूचुः भवान् यदित्थं तमुपकुर्य्यात् स तस्य ५
योग्यपात्रं, यतोऽस्मज्जातिं प्रति स प्रेम करोति, स एव चास्माकं ६
समाजगृहं निर्म्मापितवान्। अतो यीशुस्तैः सार्द्धमव्रजत्। तद्गृहा-

दनतिदूरन्तूपस्थिते तस्मिन् स शतपतिः कतिपयान् बन्धून् तदन्तिकं
प्रहित्य तमब्रवीत्, प्रभो, मा श्राम्यतु नाहमर्हामि यद् भवान्
७ मम वेश्म प्रविशेत्। ततोहेतोरेवाहं स्वयं भवत्समीपं गन्तुमा-
त्मानमयोग्यममन्ये। प्रत्युत भवान् वाक्यं व्याहरतु तेनैव मम किङ्करो
८ निरामयो भविष्यति। यतोऽहमपि क्षमताया वशीभूतो मनुष्यः,
ममाधीनाश्च सैनिकाः सन्ति। तेषामेको गच्छेति मया कथिते
गच्छति, अपरस्मायाहीति कथिते समायाति, मम दासस्येदं
९ कुर्व्विति कथिते तत् करोति। इदं श्रुत्वा यीशुस्तस्मिन्नाश्चर्य्यं
मन्यमानो मुखं प्रत्यावर्त्त्यानुगामिनं जननिवहं जगाद, युष्मानहं
१० ब्रवीमि इस्रायेलेऽपि मयेदृग्दृढो विश्वासो न लब्धः। तदनन्तरं
ते प्रहिता जनास्तद् गृहं परावृत्य तं रोगिणं दासं स्वस्थं ददृशुः।
११ परदिवसे स नायिनाख्यमेकं नगरमगच्छत् तेन सार्द्धञ्च तस्य
१२ बहवः शिष्या महान् जननिवहश्चाव्रजन्। पश्य च नगरद्वारसमीप-
मुपस्थिते तस्मिन् कश्चिन्मृतः समाध्यर्थं वहिरुह्यते, स निजमातुरे-
कजातः सापि विधवा। नगरस्य महान् जननिवहस्तया सार्द्धमासीत्।
१३ तां दृष्ट्वा प्रभुरनुकम्प्य जगाद, मा रोदीः। ततः परं स समीप-
१४ मागत्य शवयानं पस्पर्श। वाहकेषु तदा तिष्ठत्सु स जगाद, भो
१५ युवन्नुत्तिष्ठेति त्वामादिशामि। अनेन स मृत ऊर्द्ध्वो भूत्वोपविवेश
१६ भाषितुमारेभे च। ततः परं स तं तन्मातरि समर्पयामास। सर्व्वे
च भयाक्रान्ता ईश्वरं तुष्टुवुरूचुश्च, उत्पन्नोऽस्मन्मध्ये महान् भविष्यद्वा-
१७ दीतीश्वरः स्वप्रजा अवेक्षितवानिति च। तमधि सा किंवदन्ती च
कृत्स्नां यिहूदियां परितःस्थं कृत्स्नं जनपदञ्च व्यानशे।

योहनस्य प्रश्नः यीशोरुत्तरञ्च।

१८ योहनस्य शिष्यास्तस्मै तद्वार्त्ताः सर्व्वकथा निवेदयामासुः। ततो

योहनः स्वशिष्याणां द्वौ समीपमाहूय यीशुं प्रति प्रहित्य पप्रच्छ, १९
येनागन्तव्यं स किं भवान्, वान्यः कश्चिदस्माभिः प्रतीक्षितव्यः?
अतस्तौ नरौ तस्यान्तिकमागत्य जगदतुः, स्नापको योहन २०
आवां भवत्समीपं प्रहित्य पृच्छति, येनागन्तव्यं स किं भवान्, वान्यः
कश्चिदस्माभिः प्रतीक्षितव्य इति। तस्मिन् दण्डे तु स बहून् व्याधितो २१
यातनातो दुष्टात्मभ्यश्च मोचितवान् बहुभ्योऽन्धेभ्यो दृक्शक्तिं
दत्तवांश्च। अतो यीशुः प्रतिभाषमाणस्तौ जगाद, युवाभ्यां यद्यद्दृष्टं २२
श्रुतञ्च गत्वा तद् योहनाय निवेद्यतां। अन्धा दृष्टिं लभन्ते, खञ्जाः
परिचरन्ति, कुष्ठिनः शुचीभूयन्ते, बधिराः शृण्वन्ति, मृता उत्था-
प्यन्ते, दरिद्राश्च सुसंवादं ज्ञाप्यन्ते, यश्च मयि न स्खलति स धन्यः। २३
योहनस्य दूतयोरपगतयो र्यीशु र्जननिवहेभ्यो योहनमधीदं २४
कथयितुमारेभे, किं निरीक्षितुं यूयं मरुं निर्गतवन्तः? किं वायुना
चाल्यमानं नलं? किमथवा द्रष्टुं यूयं निर्गतवन्तः? किं सूक्ष्मवे- २५
शपरिहितं मनुष्यं? पश्यत ये शुभ्रं परिच्छदं सुखभोगञ्च सेवन्ते
ते राजभवनेषु विद्यन्ते। किमथवा द्रष्टुं यूयं निर्गतवन्तः? किं २६
भाववादिनं? तथैव, युष्मांस्त्वहं ब्रवीमि, भाववादिनोऽपि श्रेष्ठतरं
नरम्। असौ स यमधीदं लिखितमास्ते, २७

पश्य त्वदग्रे स्वदूतं प्रहिणोम्यहं।
गन्तव्यं तव मार्गं स त्वदग्रे संस्करिष्यति॥

यतो युष्मानहं ब्रवीमि, नारीप्रसूतेषु स्नापकाद् योहनान्महान् २८
भाववादी नास्ति। ईश्वरराज्ये तु यः क्षोदीयान् स तस्मादपि
महत्तरः। कृत्स्नं हि जनवृन्दं शुल्कादायिनश्च श्रुत्वा योहनस्य २९
स्नानेन स्नापिता ईश्वरं धार्म्मिकं मत्वा प्रतिपेदिरे, फरीशिनस्तु ३०
शास्त्राध्यापकाश्च 'तेन स्नानमस्वीकृत्येश्वरस्य मन्त्रणामात्मोद्देशे

३१ व्यर्थीचक्रिरे। तदेतत्कालीया मनुष्या मया केरुपमेयाः? ते हट्ट
३२ उपविष्टैस्तैर्बालकैः सदृशा येषामेकेऽन्यानाह्वयन्तो वदन्ति, युष्मत्कृते
वयं वंशीरवादयाम यूयन्तु नानृत्यत, युष्मत्कृते वयं व्यलपाम
३३ यूयन्तु नारुदित। योहनो हि न पूपभोजनं न द्राक्षारसपानं
३४ वा सेवमान आगतः युष्माभिरुच्यते, स भूताविष्टः। मनुष्य-
पुत्रो भोजनं पानञ्च सेवमान आगतः, युष्माभिरुच्यते, पश्यासौ
३५ भोक्ता मद्यपश्च मनुष्यः, शुल्कादायिनां पापिनाञ्च बन्धुः। प्रज्ञा
तु स्वसर्व्वसन्तानानां स्वभावेन निर्द्दोषीकृता।

अनुतापिनीं स्त्रियम् प्रति यीशोर्दया।

३६ अथ कश्चित् फरीशी स्वेन सह भोजनार्थं तं निमन्त्रयामास,
३७ ततः स तस्य फरीशिनो गृहं प्रविश्य भोजनार्थमुपविवेश। पश्य च
तन्नगरनिवासिनी काचित् पापिष्ठा योषित् तस्य फरीशिनो गृहे
भोजनार्थं तदुपवेशनस्य संवादं श्रुत्वा सुगन्धितैलपूर्णं श्वेतोपलपा-
३८ त्रमादाय पश्चात् तच्चरणयोः सन्निधौ तिष्ठन्ती रुदती च नेत्राम्बुना
तस्य चरणौ निषेक्तुमारेभे, पुनः स्वशिरसः कचैर्मार्ष्टा तौ चरणा-
३९ वचुम्बत् तैलेनामर्द्दयच्च। तद्दृष्ट्वा तन्निमन्त्रयिता फरीशी स्वान्तरे-
ऽवादीत्, असौ चेद् भाववाद्यभविष्यत्, तर्ह्यज्ञास्यत्, का कीदृशी च
४० सा योषिद् या तं स्पृशति, यतः सा पापिष्ठा। ततो यीशुः
प्रतिभाषमाणस्तमुवाच, शिमोन, तुभ्यं कथयितव्यं मम किञ्चिदास्ते।
४१ स उवाच, गुरो, कथयतु। एकस्योत्तमर्णस्य द्वावधमर्णावास्तां,
४२ तयोरेकः पञ्चशतान्यन्यतरश्च पञ्चाशत् मुद्रापादानधारयत्। तयोस्तु
प्रतिदानस्योपायाभावात् स उभयोरृणचक्षमे। तद् वद, कतरस्तं
४३ प्रत्यधिकं प्रेम करिष्यति? शिमोनः प्रत्युवाच, मन्ये यस्याधिकमृणं
चक्षमे। स तमब्रवीत्, यथार्थो विचारोऽकारि त्वया। ततः परं

स तां योषितं प्रति मुखं प्रत्यावर्त्त्य जगाद, योषितममूं किं ४४
पश्यसि? मयि तव गृहं प्रविष्टे त्वं मत्पादप्रक्षालनार्थं तोयं नादाः,
असौ तु स्वनेत्राम्बुना मम पादौ निषिक्तवती, स्वशिरसः कचै
र्मार्ज्जितवती च। त्वं मां नाचुम्बीः असौ त्वत्र मत्प्रवेशकालमारभ्य ४५
मम पादौ चुम्बितुं न निवृत्ता। त्वं तैलेन मम शिरो नाममर्द्दीः, ४६
असौ तु सुगन्धितैलेन मम पादौ मर्द्दितवती। अतो हेतोस्त्वां ४७
ब्रवीमि, अमुष्याः पापानि यानि बहूनि तेषां क्षमाकारि, यतः
(पश्य) सा बहुप्रेम चकार। यस्य तु स्तोकं क्षम्यते स स्तोकं प्रेम
करोति। ततः परं स तां जगाद, तव पापानां क्षमाकारि। ४८
तदा सहभोजिनः स्वेषु वक्तुमारेभिरे, कोऽसौ यः पापक्षमामपि ४९
करोति? स तु तां योषितं जगाद, तव विश्वासस्त्वां तारयामास, ५०
क्षेमेण याहि॥ ७॥

तदनन्तरं स देशं परिभ्राम्यन् नगरेषु ग्रामेषु चेश्वरस्य राज्य- ८ १
मघोषयत् तत्सुसंवादञ्च जनानज्ञापयत्। आसंस्तु तेन सार्द्धं पूर्व्वोक्ता २
द्वादश नरा दुष्टात्मभ्यो व्याधिभ्यश्च तेन मुक्ताः कश्चिद् योषितो-
ऽर्थतो यस्याः सप्त भूता निःसृताः सा मग्दलीन्यभिधा मरियम्
हेरोदस्य विषयाध्यक्षस्य कूषाः पत्नी योहाना शोशन्ना बह्व्यश्चान्याः, ३
द्रमाः स्वत्रसुभिस्तं पर्य्यचरन्।

बीजवापकस्य दृष्टान्तः।

अथ महति जननिवहे समागच्छति मनुष्येषु च नगरेभ्यस्त- ४
स्यान्तिकं व्रजत्सु स दृष्टान्तकथयेदं व्याजहार, वप्ता स्वबीजानि वप्तुं ५
निर्जगाम, वपनकाले तु पथपार्श्वे कतिपयानि पतितानि, तत-
स्तानि पादतलै र्दलितानि खेचरपक्षिभिः खादितानि च। पति- ६
तानि चापराणि पाषाणे, तानि प्ररुह्य रसाभावाच्छोषितानि। पति- ७

तान्यपराणि तु कण्टकानां मध्ये तान्येकत्र वर्द्धमानैः कण्टकैः सम्पीडि-
८ तानि। अपराणि तूत्तममृत्तिकायां पतित्वा प्ररुह्य शतगुणं फलं
फेलुः। इदमुक्त्वा स उच्चैर्व्याजहार, शृणोतु यस्य श्रोतुं श्रोत्रे स्तः।
९ ततः परं तस्य शिष्यास्तं पप्रच्छुः, अस्या दृष्टान्तकथायास्तात्पर्य्यं
१० किं स्यात्? स तान् जगाद, युष्मभ्यम् ईश्वरराज्यस्य निगूढानां
विषयाणां ज्ञानमदायि, अपरेभ्यस्तु दृष्टान्तच्छलेन (शिक्षा दीयते),
११ ते यथा दृष्ट्वापि न पश्येयुः श्रुत्वापि च न बुध्येरन्। सा दृष्टान्त-
१२ कथा त्वेवम्भूता। बीजमीश्वरस्य वाक्यं। पथपार्श्वस्थास्ते ये शृण्वन्ति
ततः परं यथा ते विश्वस्य परित्राणं न प्राप्नुयुस्तदर्थं दियावल
१३ आगत्य तेषां हृदयतो वाक्यमपहरति। पाषाणोपरिस्थास्ते ते ये
श्रवणकाले सहसा सानन्दं वाक्यं गृह्णन्ति, ते तु मूलहीनाः
१४ स्वल्पकालं विश्वसन्ति। परीक्षाकाले चापक्रामन्ति। कण्टकेषु पति-
तानि बीजानि च ते ये श्रुत्वा चिन्ताभि र्वसुभि र्जीवनसम्बन्धीय-
सुखभोगेन च भाराक्रान्तास्सन्तो निपीड्यन्ते पक्वफलहीनास्तिष्ठन्ति
१५ च। उत्तममृत्तिकायां पतितानि बीजानि च ते ये भद्रेण साधुना
च हृदयेन वाक्यं श्रुत्वा रक्षन्ति स्थैर्य्येण फलं फलन्ति च।
१६ दीपिकां प्रज्वाल्य मनुष्यस्तां न पात्रेणाच्छादयति नापि
खट्वाया अधो निदधाति, अपि तु दीपाधारस्योपरि स्थापयति यथा
१७ प्रविशन्तः सर्व्वे दीप्तिं पश्येयुः। यतो नास्ति किमपि तादृशं
तिरोहितं यन्नाविर्हितं भविष्यति, नापि तादृशं निगूढं यन्न
१८ ज्ञायिष्यते प्रकाशताञ्च यास्यति। अतो युष्माभिः कथं श्रूयते
तदालोच्यतां। यतो यस्यास्ति तस्मै दायिष्यते, यस्य तु नास्ति स
यत् स्वं मन्यते तदपि तस्मादपहारिष्यते।
१९ अथ तस्य माता भ्रातरश्च तत्समीपमागमन्, जनताहेतोस्तु

तेन सह मिलितुं नाशक्नुवन्। ततः केचित् तस्मै निवेदयामासुः, २०
भवतो माता भ्रातरश्च भवन्तं द्रष्टुमिच्छन्तो वहिस्तिष्ठन्ति। स तु २१
तान् प्रतिजगाद, मम माता भ्रातरश्च ते य ईश्वरस्य वाक्यं शृण्वन्ति
समाचरन्ति च।

यीशोर्नानाविधालौकिककर्म्माणि।

यीशोर्भञ्झानिवारणम्।

कस्मिंश्चिद् दिने स स्वशिष्यैः सह नावमारुह्य तान् जगाद, २२
ह्रदस्य पारं गम्यतां। ततस्ते नावं मुक्त्वा प्रस्थिताः। गमनकाले तु २३
सन्यद्रात्। तदा झञ्भरा ह्रदमाचक्राम नावि तोयेन पूर्य्यमाणायां
तेषां प्राणसंशयो बभूव च। ततस्ते समीपं गत्वा तं जागरयित्वा २४
जगदुः नाथ नश्यामो वयं। तदा स उत्थाय वायुं तोयभङ्गञ्च
तर्जयामास तौ च निवृत्तौ शान्तिश्च सञ्जाता। तांस्तु सोऽब्रवीत्, २५
युष्माकं विश्वासः क्व? अनेन ते भीता विस्मिताश्च परस्परमाहुः, को
न्वसौ यत् स वायून् अपश्चाप्याज्ञापयति तैश्च तस्यादेशो गृह्यते?

यीशुना भूतग्रस्तस्यारोग्यकरणम्।

ततः परं नावा वह्मानास्ते गालीलस्य सम्मुखस्थं गादारीयाणां २६
देशं प्रापुः। तत्र स्थलमवतीर्णे तस्मिन् नगरस्य कश्चिन्मनुष्यस्तस्य २७
सम्मुखमुपतस्थे, य आ बहुवत्सरेभ्यो भूतैराविष्टः। स न वस्त्रं पर्य्यधत्त,
नापि गृहेऽवसत्, अपि तु शवागारेषु। यीशुं दृष्ट्वैव स प्रणिपत्य २८
क्रुष्ट्वा प्रोच्चै र्व्याजहार, भो परात्परस्येश्वरस्य पुत्र यीशो भवता सह
मम कः सम्बन्धः? नार्हति भवान् मां यातयितुं। यतः स तम- २९
शुचिमात्मानं तस्मान्मनुष्यान्निर्गन्तुमादिशत्। यत आ दीर्घकालात्
स तेनाक्रान्तः, यदा च शृङ्खलैर्निगडैश्च बद्धोऽरक्ष्यत तदा बन्धनानि
विदारयन् भूतेन निर्जनानि स्थानान्यपानीयत। यीशुस्तं पप्रच्छ, ३०

तव किं नाम? स व्याजहार वाहिनीति, यतः स बहुभूतैराविष्टः।
३१ ते सानुनयं तमूचुः, अस्मान् अगाधस्थानं गन्तुं मैवाज्ञापयतु। तत्र तु
बहुसङ्ख्यकशूकरव्रजो गिरावचरत्। अतस्ते यीशुं ययाचिरे, अमून्
३२ शूकरान् प्रवेष्टुमस्माननुजानातु। ततः स तान् अनुजज्ञौ। ते भूतास्तदा
३३ तस्मान्मनुष्यान्निःसृत्य तान् शूकरान् प्रविविशुस्ततः कृत्स्नो व्रजो
३४ धावन् पतित्वा शैलाग्रतो ह्रदे मज्जनं जगाम। ये च तमचारयंस्ते
३५ तदितिवृत्तं दृष्ट्वा पलाय्य नगरे ग्रामेषु च तज्ज्ञापयामासुः। यद्
वृत्तं जनास्तदा तद् द्रष्टुं बहिराजग्मुः, यीशोः समीपमुपस्थाय च
ददृशुः, भूतास्ते यस्मान्निर्गताः स मनुष्यो वस्त्रान्वितः सुबुद्धिश्च
३६ यीशोश्चरणयोरुपविष्टोऽस्तीति, ततस्ते बिभ्युः। भूताविष्टः स नरश्च
३७ कथं तारितस्तत् साक्षिभिस्तेभ्यो निवेदयाञ्चक्रे। ततो गादारीय-
प्रदेशनिवासिनां कृत्स्नो जनौघो महात्रासापन्नत्वात् तमाह, भवान-
३८ स्मत्सन्निधितोऽपगन्तुमर्हतु। ततः स नावमारुह्य प्रत्याववृते। ते
भूतास्तु यस्मान्निःसृता स मनुष्यस्तं प्रार्थयाञ्चक्रे, भवत्समीपमवस्थातुं
मामनुमन्यतां। यीशुस्तु तं विसृज्याब्रवीत्, त्वं स्वगृहं प्रत्यावर्त्तस्व,
३९ त्वदर्थमीश्वरो यद्यत् कृतवांस्तत्कथां कथय च। स तदा प्रस्थाय
तदर्थं यीशु र्यद्यत् कृतवान्, नगरस्य सर्व्वत्र तत्कथामघोषयत्।

यीशुना प्रदररोगिण्या आरोग्यकरणम्

मृतकन्यायै जीवनदानञ्च।

४० प्रत्यावृत्ते तु यीशौ जननिवहस्तमनुजग्राह, यतः सर्व्वे तं प्रत्यैक्षन्त।
४१ पश्य च यायीर इत्यभिध एको नर उपतस्थे, स सभाजाध्यक्ष
आसीत्। स यीशोश्चरणयोः प्रणिपत्य स्वगृहप्रवेशार्थं तं प्रसाद-
४२ यामास, यतः प्रायेण द्वादशवर्षीया तस्यैकजाता या दुहिता सा

मरणोद्यतासीत्। गमनकाले तु जनता तमपीडयत्। अनन्तरं ४३
द्वादशवर्षान् यावद् रक्तस्रावातुरा काचिन्नारी या चिकित्सकैः
सेवनार्थं सर्व्वस्वं व्ययितवती, तथापि कस्मादप्यारोग्यं लब्धुं नाशक्नोत्,
सा पश्चाद्दिश्युपागत्य तदीयवस्त्रस्य प्रलम्बकं पस्पर्श, तत्क्षणाच्च तस्या ४४
रक्तस्रावो विरराम। यीशुस्तदा पप्रच्छ, को मां स्पृष्टवान्? अनङ्गी- ४५
कुर्व्वत्सु तु सर्व्वेषु पितरस्तत्सङ्गिनश्चोचुः, नाथ, भवान् जनतया परि-
वार्य्यते पीड्यते च, पुनः पृच्छति, को मां स्पृष्टवानिति। यीशुरुवाच, ४६
कश्चिन्मां पस्पर्श, यतः प्रभावो मत्तो निःसृत इत्यज्ञायि मया। ततः ४७
सा योषित् प्रच्छन्ना स्थातुं न शक्नोतीति बुद्ध्वा वेपमानोपाजगाम,
तस्यान्तिकं प्रणिपत्य च तत्स्पर्शनस्य कारणं सद्य आरोग्यलाभस्य
कथाञ्च सर्व्वजनानां समक्षं निवेदयामास। स तदा तामब्रवीत्, ४८
आश्वसिहि, वत्से, तव विश्वासस्त्वां तारयामास, क्षेमेण याहि।

इदं भाषमाणे तस्मिन् समाजाध्यक्षस्य गृहात् कश्चिदागत्य ४९
तमाह, भवतो दुहिता ममार, गुरुं मा क्लिश्नातु। यीशुस्तच्छ्रुत्वा ५०
प्रतिभाषमाणस्तं जगाद, मा भैषीः, केवलं विश्वसिहि, तेन सा
तरिष्यते। ततः परं स तद् भवनमागत्य नान्यं कमपि प्रवेष्टुमनु- ५१
जज्ञौ, केवलं पितरं याकोबं योहनञ्च बालाया मातापितरौ च।
जनाः सर्व्वे लहदंस्तस्याः कृते वक्षांस्यताडयंश्च। स तानाह, मा ५२
रुदित, न मृता सापि तु निद्राणा। सा तु मृतवतीति ज्ञात्वा ते ५३
तमुपाहसन्। स तदा तान् सर्व्वान् वहिष्कृत्य तस्या हस्तं धृत्वा प्रोच्चै ५४
र्व्याजहार, बालिके उत्तिष्ठेति। तस्याः प्राणास्तदा प्रत्याजग्मुः, सा च ५५
तत्क्षणमुत्तस्थौ। ततः परं यीशुस्तस्यै भक्ष्यदानमादिदेश, तस्या ५६
जनकौ च विस्मयापन्नौ। स तु तावाज्ञापयामास, इदं यद् वृत्तं
युवां तत् कमपि ज्ञापयितुं नार्हथः॥ ८॥

यीशोरादेशशिक्षाकर्म्माणि च।

यीशुना घोषयितुं द्वादशशिष्याः प्रेषिताः।

९ १ अथ स शिष्यान् द्वादश निजानेकत्राहूय तेभ्यः सर्व्वभूतानां (दमनार्थं) प्रभावं कर्त्तृत्वञ्च रोगप्रतीकारस्य सामर्थ्यञ्च ददौ,
२ तांश्चेश्वरस्य राज्यं घोषयितुमस्वस्थान् निरामयान् कर्त्तुञ्च प्रेषया-
३ मास। तान् जगाद च, गमनार्थं यष्टिं चेलसम्पुटकं वा पूपं वा रूप्यं
४ वा किमपि माददध्वं, युष्माकञ्च कस्याप्यङ्गरचे द्वे मास्तां। यद् गृहं
५ प्रविशथ च तत्र तिष्ठत, तस्माच्च प्रतिष्ठध्वं। यस्य नगरस्य जनास्तु युष्मान् न गृह्णन्ति, तस्मान्नगरान्निर्गच्छन्तः स्वचरणेभ्यो धूलिमप्य-
६ वधूनुत तेषां विरुद्धं साक्ष्यार्थम्। ततस्ते प्रस्थाय ग्रामं ग्रामं पर्य्यटन्तः सर्व्वत्र सुसंवादमघोषयन् व्याधिप्रतीकारमकुर्व्वंश्च।
७ तेन तुं यद्यदक्रियत तत्कथां चतुर्थांशपति र्हेरोदः शुश्राव अस्थिरो बभूव च, यतः कैश्चिदूचे, योहनो मृतेभ्य उत्थापित इति,
८ अपरैः कैश्चित्, एलियो दर्शनं ददाविति, अपरैः पुनः, प्राचीनानां
९ भाववादिनामेक उत्तस्थाविति। हेरोदस्तदाब्रवीत्, योहनस्य शिरश्छेदनं कृतं मया, कः पुनरसौ यमधीदृशीः कथाः शृणोमि? स च तं द्रष्टुमयतत।

यीशुना पञ्चसहस्रलोकेभ्यो भोजनदानम्।

१० ततः परं प्रेरिताः प्रत्यावृत्य यद्यत् तैः कृतं तस्मै तन्निवेदयामासुः। स तदा तान् सङ्गिनः कृत्वा गुप्तं बैत्सैदाख्यनगरसमी-
११ पस्थं किञ्चन निर्जनं स्थानं जगाम। जननिवहास्तु तदनुभूय तमनुजग्मुः, स च तान् गृहीत्वेश्वरस्य राज्यमधि तैः संललाप
१२ रोगप्रतीकारार्थिनश्च निरामयांश्चकार। दिनावसाने त्वागच्छति ते द्वादश शिष्या उपागत्य तमूचुः, विसृज्यन्तां भवता जननिवहा

यथामी परितःस्थाः पल्लीर्ग्रामांश्च गत्वा रात्रिं यापयेयुः खाद्या-
न्याप्नुयुश्च, वयं ह्यत्र निर्जने स्थाने विद्यामहे। स तानब्रवीत्, १३
यूयमेव तेभ्यो भक्ष्याणि दत्त। तेऽवादिषुः, पूपान् पञ्च मीनौ च
द्वावपहायास्माकं किमपि नास्ति, तदेतेषां सर्व्वजनानां कृते
खाद्यानि क्रेतुमस्माभि र्गन्तव्यं किं? यतः प्रायेण पुरुषाः पञ्चस- १४
हस्राण्यासन्। स तदा शिष्यान् जगाद, यूयं पञ्चाशतं पञ्चाशतं,
जनानेकत्र कृत्वा सर्व्वान् पङ्क्तिभिरुपवेशयत। ते तदेव कृत्वा सर्व्वान् १५
उपवेशयामासुः। स तदा तान् पूपान् पञ्च मीनौ च द्वावादाय १६
स्वर्गं प्रत्युद्दृष्टिं कृत्वा तेभ्य आशिषं ददौ भङ्क्त्वा च जनानां कृते
परिवेषणार्थं शिष्येभ्यस्तानददात्। भुक्त्वा च सर्व्वे तृप्युः। १७
भग्नानामंशानां शेषेण पूर्णा द्वादश डल्लकाश्च जनैरादद्रिरे।

यीशोः स्वमरणपुनरुत्थानमधि च कथाकथनम्।

एकदा स यदा निभृतं प्रार्थयत तदा तस्य शिष्यास्तेन १८
सार्द्धमासन्। स च तान् पप्रच्छ, जना मां कं वदन्ति? ते प्रत्यूचुः, १९
स्नापकं योहनमिति। केचित्तु वदन्ति, भवान् एलिय इति।
अन्ये पुनः, प्राचीनानां भाववादिनामेक उत्तस्थाविति। स तदा
तान् पप्रच्छ, यूयं तु मां कं वदथ? पितरः प्रतिभाषमाणोऽब्रवीत्, २०
ईश्वरस्य खीष्टं। ततः स तांस्तर्जयन् जगाद, यूयमिदं कमपि मा २१
ज्ञापयत। स पुनरब्रवीत्, मनुष्यपुत्रस्यावश्यम्भावि यत् स बहुदुःखं २२
भोक्ष्यते प्राचीनै र्मुख्ययाजकैः शास्त्राध्यापकैश्च निराकारिष्यते
घातयिष्यते च, तृतीये दिवसे तु पुनरुत्थापयिष्यते।

स पुनः सर्व्वानुवाच, कश्चिच्चेन्मामनुगन्तुमिच्छति स तर्ह्यात्मानं २३
प्रत्याख्यातु प्रत्यहं स्वक्रुशमादाय मामनुव्रजतु च। यतो यः २४
कश्चित् स्वप्राणान् रिरक्षिषति स तान् हारयिष्यति, यस्तु मदर्थं

२५ स्वप्राणान् हारयति स एव तान् रक्षिष्यति, यतो मनुष्यः कृत्स्नं
जगल्लब्ध्वा यद्यात्मानं हारयति वात्महानिं कुरुते, तर्हि तस्य हितं
२६ वा किं भवति? यतो यः कश्चिन्मत्तो मदीयवाक्येभ्यश्चापत्रपते,
मनुष्यपुत्रो यदा स्वप्रतापेन स्वपितुः पवित्रदूतानाञ्च प्रतापेन
२७ चागमिष्यति तदा सोऽपि तस्मादपत्रपिष्यते। युष्मांस्त्वहं सत्यं
ब्रवीमि, अत्र ये तिष्ठन्ति तेषां केचिद् यावदीश्वरस्य राज्यं न
द्रक्ष्यन्ति तावन्मृत्योरास्वादं न लप्स्यन्ते।

यीशोरुज्ज्वलमूर्त्तिधारणम्।

२८ एताभ्यः कथाभ्यः परं व्यतीतेषु प्रायेणाष्टसु दिनेषु स पितरं
२९ याकोबं योहनञ्च सङ्गिनः कृत्वा प्रार्थयितुं पर्व्वतमारुरोह। प्रार्थ-
यमाने च तस्मिंस्तदीयवदनस्याकृतिरन्यरूपा परिच्छदश्च सित
३० उज्ज्वलश्च बभूव। पश्य च द्वौ नरौ तेन समलपतां, तौ मोशि-
३१ एलियश्च। इमौ सप्रतापं दर्शनं दत्त्वा यिरूशालेमे साधयितव्यां
३२ तस्य प्रेषगतिमकथयतां। पितरस्तत्सङ्गिनौ च निद्राभारेणाक्रान्ता
आसन्। तथापि कथञ्चिज्जागरित्वा तस्य प्रतापं तेन सार्द्धं तिष्ठन्तौ
३३ तौ नरौ च ददृशुः। तयोस्तु तस्मात् प्रस्थानकाले पितरो यीशुं
जगाद, नाथ भद्रमस्माकमत्रावस्थानम्, अतोऽस्माभिरुटजानि त्रीणि
निर्म्मीयन्ताम्, एकं भवदर्थम्, एकं मोशेरर्थम्, एकमेलियार्थम्।
३४ स तु यदभाषत तन्नाबुध्यत। तस्मिंस्त्थं ब्रुवाणे मेघ एक आगत्य
३५ तेषामुपरि छायां ददौ। तस्मिन मेघे तयोः प्रवेशकाले ते बिभ्युः।
मेघस्य मध्याच्च वाणीयमुद्भूत्, अयं मम प्रियः पुत्रः, अस्य वचांसि
३६ युष्माभिः श्रूयन्तामिति। सम्भूतायामेतस्यां वाण्यां यीशुरेकाकी
विद्यत। ते च मौनमवलम्बिरे यच्च दृष्टवन्तस्तदधि तेषु दिनेषु
कमपि किमपि न जगदुः।

यीशुना बालकस्यारोग्यकरणम्।

परदिने तेषु गिरितोऽवरूढेषु महान् जननिवहस्तत्सम्मुखमुप- ३७
तस्थे। पश्य च जनताया नर एक उच्चैःस्वरेणोवाच, गुरो, मम ३८
पुत्रं प्रति भवान् दृक्पातं कर्त्तुमर्हति, यतः स ममैकजातः।
पश्यतु च कश्चिदात्मा तं धरति सहसा चोत्क्रोशयति फेनमुद्गम- ३९
यंस्तदीयाङ्गानि कर्षति तस्य चूर्णयन्निव कष्टेन तस्मादपसरति।
भवतः शिष्याश्च मया तस्य निःसारणं याचिताः, ते तु नाशक्नुवन्। ४०
यीशुस्तदा प्रतिभाषमाणोऽब्रवीत्, रे अविश्वासिन्नुन्मार्गगामिंश्च वंश, ४१
कियन्तं कालं स्थातव्यं मया युष्माभिः सार्द्धं यूयञ्च सोढव्या मया ?
तव पुत्रमत्रानय। स तु यदागच्छत्, तदा स भूतस्तमाक्रम्याकर्षत्। ४२
यीशुस्तदा तमशुचिमात्मानं भर्त्सयामास बालकञ्च स्वस्थं कृत्वा तस्य
पितरि समर्पयामास। तदेश्वरस्य माहात्म्यतः सर्व्वे विस्मयापन्नाः। ४३
यीशुना कृतेषु सर्व्वकर्म्मसु यदा सर्व्वे आश्चर्य्यममन्यन्त, तदा ४४
स स्वशिष्यानब्रवीत्, सर्व्वा इमाः कथा युष्मत्कर्णे गृह्यन्तां, यतो
मनुष्यपुत्रो मनुष्याणां हस्तेषु समर्पयिष्यत इति। तद् वाक्यन्तु ते ४५
न बुबुधे यथा च ते नानुभूयेत तथा तेभ्यः प्रच्छन्नमासीत्। तद्
वाक्यमधि तं किमपि प्रष्टुं तेऽबिभयुश्च।

अथ तर्क एषस्तान् प्रविवेश, तेषां कः श्रेष्ठ इति। यीशुस्तु ४६
तेषां हृद्गतं तर्कं दृष्ट्वा बालकमेकं गृहीत्वा स्वपार्श्वे स्थापयित्वा च ४७
तान् उवाच, यः कश्चिन्मम नाम्नेमं बालकं गृह्णाति स मां गृह्णाति,
माञ्च यो गृह्णाति स मत्प्रेषयितारं गृह्णाति। यतो युष्मासु यः ४८
सर्व्वेषां चोधिष्ठः स महान् भविष्यति।

ततो योहनः प्रतिभाषमाणोऽब्रवीत्, नाथ, भवतो नाम्ना यो ४९
भूतान् निःसारयति तादृशः कश्चिदस्माभि र्लक्षितः, स त्वस्माभिः

५० सार्द्धं नानुगच्छति तन्निमित्तं सोऽस्माभि र्निवारितः। यीशुस्तमुवाच,
तं मा निवारयत, यस्माद् यो न युष्मद्विपक्षः स युष्मत्स्वपक्षः।

यीशो र्यिरूशालेमे शेषगमनम्।

५१ अथ स यदा स्वर्गमारोहयितव्यस्तस्मिन् काले पूर्य्यमाणे स
५२ स्थिरचेता यिरूशालेमं गन्तुमुन्मुखो बभूव। ततः स स्वस्याग्रतो
दूतान् प्राहिणोत्। ते च प्रस्थाय तदर्थं प्रयोज्यद्रव्याणि सञ्चीकर्त्तु-
५३ मिच्छन्तः शमरीयाणां कश्चिद् ग्रामं प्रविविशुः। स तु यिरूशालेमं
५४ गन्तुमुन्मुखस्ततो हेतो र्जनास्तं न जगृहुः। तद् दृष्ट्वा याकोबो
योहनश्चेतिनामानौ तस्य शिष्यौ पप्रच्छतुः, प्रभो, एलियेनापि
यथाकारि तथैवावां किं वह्निमादेक्ष्यावो यत् स्वर्गादवरुह्य तान्
५५ संहरेत्? इदं किं भवतोऽभिरुचितम्? स तु मुखं प्रत्यावर्त्त्य तौ
५६ भर्त्सयन् जगाद, युवां कीदृशस्यात्मनस्तन्न जानीथः। मनुष्यपुत्रो
हि न मनुष्याणां प्राणान् नाशयितुमागतोऽपि तु तारयितुम्।
ततस्तेऽपरं ग्रामं जग्मुः।

५७ अथ तेषां गमनकाले कश्चित् पथि तं जगाद, प्रभो यत्र
५८ कुत्रचिद् भवता गन्तव्यं तत्राहमपि भवन्तमनुगमिष्यामि। यीशुस्तं
जगाद, सन्ति गर्त्तानि शृगालानां नीडाश्च विहायसो विहङ्गमानां,
५९ न स्थानं मनुष्यपुत्रस्य तु शिरः शाययितुं। अपरमेकं नरं सोऽब्रवीत्
६० मामनुगच्छ। स तु प्रतिजगाद, प्रभो, प्रथमं गत्वा स्वपितुः सत्कारं
कर्त्तुं मामनुमन्यताम्। यीशुस्तु तं जगाद, मृतानेव मृतानां
स्वकीयानां सत्कारायानुजानीहि, त्वन्तु ईश्वरराज्यस्य संवादं
६१ प्रचारय। अपरः कश्चिदुवाच, प्रभो, अहं भवन्तमनुयास्यामि,
६२ प्रथमन्तु मदीयगृहे ये विद्यन्ते तानाप्रष्टुं मामनुजानातु। यीशुस्तु

तमब्रवीत्, लाङ्गले हस्तमर्पयित्वा येन पश्चाद्दिशि दृक्पातः क्रियते तादृशः कोऽपीश्वरराज्यार्थमुपयोगी नास्ति॥ ९॥

यीशोः सप्ततिजनानां प्रेरणं विविधशिक्षादानञ्च।

ततः परं प्रभुरन्यान् सप्ततिजनानपि निरूप्यामास, स स्वयं १० १
यद्यन्नगरं स्थानं वा गमिष्यति तत्र स्वस्याग्रतस्तान् द्वौ द्वौ प्रेषया-
माम। तान् जगाद च, प्रचुराणि शस्यानि कर्त्तनीयं कार्य्यकारिण- २
स्त्वल्पे, तत् तदेव प्रार्थयध्वं शस्यक्षेत्रस्य स्वामिनं यत् स स्वक्षेत्रे
कार्य्यकारिणः प्रेरयेत्। यात, पश्यत वृकाणां मध्ये शिशुमेषानिव ३
युष्मान् प्रहिणोमि। मुद्राधारं चेलसम्पुटकं वोपानहौ वा मा वहत, ४
पथि च कमपि मङ्गलवादं मा वदत। यदा च किञ्चन गृहं ५
प्रविशथ तदा प्रथमं वदत, गृहस्यास्य शान्ति र्भूयात्। ततो यदि ६
तत्र शान्तेः पात्रं विद्यते तर्हि युष्मदुक्ता शान्तिस्तं नरमाश्रयिष्यति
नो चेत् पुन र्युष्मासु वर्त्तिष्यते। यूयं तस्मिन् गृहे चावतिष्ठध्वं भुंध्वं ७
पिबत च यद्यत् तत्रत्येभ्यो लप्स्यध्वे। यतः कार्य्यकारी स्ववेतनमर्हति।
गृहाद् गृहं मा गच्छत। किञ्चन नगरं प्रविष्टा यूयं यदि जनै ८
र्गृह्यध्वे, तर्हि युष्मदर्थं यद्यत् परिवेषयिष्यते तद् भुंध्वं, तत्रत्यान्
अस्वस्थान् निरामयान् कुरुत, जनांश्च वदत, ईश्वरस्य राज्यं युष्मत्स ९
मीपमुपस्थितं। किञ्चन नगरं प्रविष्टास्तु यदि जनै र्न गृह्यध्वे, तर्हि १०
वहिस्तदीयचत्वराणि गत्वा वदत, युष्मदीयनगरस्य या धूलिरस्मासु ११
लग्ना तामपि युष्मदर्थमवधूनुमः। तथापि युष्माभिरिदं ज्ञायतां
यदीश्वरस्य राज्यं युष्मत्समीपमुपस्थितम्। युष्मांस्त्वहं ब्रवीमि, दिने- १२
ऽमुष्मिन् सदोमस्य दशा तस्य नगरस्य दशातः सह्यतरा भविष्यति।

हा कोराषिन्, हा बैत्सैदे, युवां सन्तापार्हे, यतो युवयो र्मध्ये १३
कृतानि यानि प्रभावसिद्धानि कर्म्माणि, तानि चेत् सोरे सीदोने

घाकारिष्यन्त, प्रागेव तन्निवासिनस्तर्हि शाणं परिधाय भस्मन्युपविश्य
१४ च मनांसि परावर्त्तयिष्यन्। अपि तु विचारे युवयो र्दशातः
१५ सोरस्य सीदोनस्य च दशा सह्यतरा भविष्यति। लञ्च हा स्वर्गं
यावदुन्नमिते कफरनाहूमपुरि, पातालं यावदवरोहयिष्यसे।
१६ यो युष्माकं वाक्यानि गृह्लाति स मम वाक्यानि गृह्लाति।
यस्य युष्मान् निराकरोति स मां निराकरोति। यस्य मां निरा-
करोति स मत्प्रेरकं निराकरोति।
१७ ततः परं सप्ततिस्ते सानन्दं प्रत्यागत्य जगदुः, प्रभो भवतो
१८ नाम्ना भूता अप्यस्माकं वशीभवन्ति। स तु तानवादीत्, अहं
१९ विद्युतमिव शैतानं स्वर्गात् पतन्तमवलोकयं। पश्यत युष्मभ्यमहमिदं
सामर्थ्यं दत्तवान्, तद् यूयं सर्पान् वृश्चिकांश्च रिपोः कृत्स्नं बलञ्च
२० चरणै र्मर्द्दयिष्यथ। किमप्येत्र युष्मान् न हिंसिष्यति। अपि तु मैवे-
तस्मिन्नानन्दत यदात्मानो युष्माकं वशीभवन्ति, प्रत्युतैतस्मिन्
यद्युष्मन्नामानि स्वर्गे लिखितानि विद्यन्ते।
२१ तस्मिन् दण्डे यीशुरात्मन्युल्लासमनुभूय बभाषे, भो स्वर्गमर्त्त्ययोः
स्वामिन् पितः, त्वामहं साधुं वदामि यतस्त्वया विज्ञेभ्यस्तीक्ष्णबुद्धि-
भ्यश्चेमानि निगुह्य शिशूनामाविष्कृतानि। अतः किं पितः, यदित्थं
२२ तव दृष्टौ यत् प्रीतिकरं तदेव सिद्धं। ततः परं स शिष्यान् प्रति
परावृत्योवाच, मम पित्रा मयि सर्व्वमेव समर्पितं, अपि च पुत्रः
कस्तत् पितरं विनापरः कोऽपि न जानाति, पिता वा कस्तत् पुत्रं
विनापरः कोऽपि न जानाति, यस्मै च तत् प्रकाशयितुं पुत्राय
रोचते सोऽपि तज्जानाति।
२३ ततः परं स स्वशिष्यान् प्रति प्रत्यावृत्य विजनेऽवादीत्, धन्यानि
२४ तानि नेत्राणि यानि पश्यन्ति यद्यद् यूयं पश्यथ। वस्तुतोऽहं युष्मान्

ब्रवीमि, बहवो भाववादिनो राजानश्च द्रष्टुं वाञ्छितवन्तो युष्माभि
र्यद्यद्दृश्यते श्रोतुञ्च युष्माभि र्यद्यच्छ्रूयते, न तु तानि दृष्टवन्तो न
वा श्रुतवन्तः।

किं सर्व्वप्रधानाज्ञा एतद्विषयकशिक्षा।

पश्य च, व्यवस्थावेत्ता कश्चिदुत्थाय तं परीक्षमाणोऽब्रवीत्, गुरो, २५
किं कृत्वा मयानन्तजीवनस्याधिकारो लप्स्यते? स तं जगाद, २६
व्यवस्थायां किं लिखितमास्ते? कीदृक् पठसि? स प्रतिबभाषे, त्वं २७
कृत्स्नान्तःकरणेन कृत्स्नप्राणैः कृत्स्नशक्त्या कृत्स्नचित्तेन च स्वेश्वरं प्रभुं
प्रति, स्ववच्च स्वनिकटस्थं प्रति प्रेम कुर्व्विति। स तमाह, यथार्थं २८
प्रत्युक्तं त्वया, तदेवाचर तर्हि जीविष्यसि। स त्वात्मानं निर्द्दोषो- २९
कर्त्तुमिच्छन् यीशुमब्रवीत्, वाढं, मम निकटस्थः कः? यीशुरुदा ३०
प्रतिभाषमाणः कथयामास, कश्चिन्मनुष्यो यिरूशालेमाद् यिरीहो-
मवारोहन् दस्युभिरासादितः, ते तं विवस्त्रीकृत्यास्त्तैराजघ्नु र्मृत-
प्रायञ्च त्यक्त्वा प्रतस्थिरे। सङ्गत्या याजकः कश्चित् तेन मार्गेणा- ३१
वारोहत्, स तं दृष्ट्वापरपार्श्वेनापजगाम। तथैव लेवीयः कश्चित् ३२
तस्मिंस्थान उपस्थायोपागत्य दृष्ट्वा चापरपार्श्वेनापजगाम। तदन्तिक- ३३
मुपस्थितः शमरीयः कश्चित् पथिकस्तु तं दृष्ट्वानुचकम्पे, समीपं ३४
गत्वा च तैलं द्राक्षारसञ्च निषिच्य तत्क्षतानि बबन्ध, निजवाहन-
मारोह्य च तं पान्थशालां निनायाशुश्रूषत च। परदिने च निर्गत्य ३५
मुद्रापाददयं गृहीत्वा पान्थशालाध्यक्षाय ददौ तञ्चाह, शुश्रूषस्वामुं,
यदि चाधिकं व्ययेस्तर्ह्यहं प्रत्यागमनकाले तुभ्यं तत् प्रतिदास्या-
मीति। अत्र त्वं किं मन्यसे? त्रयाणां तेषां को दस्युभिरासादि- ३६
तस्य तस्य निकटस्थो जातः? सोऽब्रवीत् यस्तं प्रति दयां चकार
स एव। ततो यीशुस्तमुवाच, याहि त्वमपि तथैवाचर। ३७

३८ अथ तेषां गमनकाले स कश्चिद् ग्रामं प्रविवेश। मार्था नाम्नी
३९ योषिच्च स्वगृहे तस्यातिथ्यं चकार। तस्या मरियमभिधा भगि-
४० न्यासीत्, सा यीशोश्चरणयोरुपविश्य तस्य वाक्यमाकर्णयत्। मार्था
तु बहुविधपरिचर्य्यायां व्याकुलाभूत्, उपागत्य चावोचत्, प्रभो,
भवानत्र किमुदासीनो यन्मद्भगिनी मां त्यक्त्वैकस्यां मयि परिचर्य्यां
समर्पितवती? तदादिशतु तां यथा सा मम साहाय्यं कुर्य्यात्।
४१ यीशुस्तु प्रतिभाषमाणस्तामाह, मार्थे, मार्थे, बहून्यधि चिन्तयसि
४२ व्यग्रा भवसि च, एकमेव तु प्रयोज्यं। मरियम् हि तमुत्तममंशं
वरितवती यस्तस्या नैवापहारिष्यते॥ १०॥

विविधमधि यीशोरुपदेशः।

प्रार्थनामधि शिक्षा।

११ १ अथ कस्मिंश्चित् स्थानेऽवस्थितिकाले स प्रार्थयत, यदा च
विरराम तदा तच्छिष्याणामेकस्तमाह, प्रभो, शिक्षयत्वस्मान् प्रार्थयितुं
२ योहनोऽपि यथा स्वशिष्यान् शिक्षितवान्। ततः स तानवादीत्,
यदा प्रार्थयध्वे तदा वदत, अस्माकं स्वर्गस्थ पितः, तव नाम पवित्रं
पूज्यतां। तव राज्यमायातु। यथा स्वर्गे तथा मेदिन्यामपि तवेच्छा
३ सिध्यतु। अस्माकं श्वस्तनं भक्ष्यं प्रत्यहमस्मभ्यं देहि। अस्माकं
४ पापानि क्षमस्व च, यतो वयमप्यस्मदपराधिनामेकैकस्य क्षमामहे।
अस्मांश्च परीक्षां मा नय, अपि तु दुरात्मत उद्धर।
५ पुनश्च स तानवादीत्, युष्मासु यस्य बन्धुरास्ते स यद्यर्द्धरात्रे
६ तदन्तिकं गत्वा तं वदति, मित्र, पूपत्रयं मह्यमृणं देहि, यतो
मम बन्धुः पथिक एको मद्गृहमागतस्तं परिवेषयितुं मम किमपि
७ नास्ति, गृहाभ्यन्तरस्थः स प्रतिभाषमाणस्तर्हि किं वदिष्यति, मां
मा क्लिशान, रुद्धं हि सम्प्रति द्वारं, मम बालकाश्च मया सार्द्धं

शयने विद्यन्ते, तुभ्यं दानार्थमुत्थातुं न शक्नोमीति। युष्मानहं ८
ब्रवीमि, स मित्रमितिहेतोरुत्थाय तस्मै दातुमसम्मतः सन्नपि स
तदीयाग्रहकारणादेवोत्थाय तस्मै यति पूपाः प्रयोज्यास्तति दास्यति।
अहमपि युष्मान् ब्रवीमि, याचध्वं तेन युष्मभ्यं दायिष्यते, अन्वि- ९
ष्यत तेनासादयिष्यथ। द्वारमाहत तेन युष्मभ्यमुद्घाटयिष्यते। यतो १०
यः कश्चिद् याचते स लभते, यश्चान्विष्यति स आसादयति, यश्च
द्वारमाहन्ति तदर्थमुद्घाट्यते। युष्मासु कः पिता स्वपुत्रेण पूपं ११
याचितस्तस्मै प्रस्तरं दास्यति? मीनं वा याचितः स किं मीनस्य
परिवर्त्तनं तस्मै सर्पं दास्यति? अण्डं वा याचितः किं तस्मै १२
वृश्चिकं दास्यति? तद् दुर्जना अपि यूयं चेत् स्वसन्तानेभ्यो १३
हितदानानि वितरितुं जानीथ, तर्हि किमधिकं स स्वर्गस्थः पिता
स्वयाचकेभ्यः पवित्रमात्मानं वितरिष्यति।

भूतानामधि शिक्षा।

अथैकदा स भूतं निरसारयत्, स भूतश्च मूकः। निःसृते च १४
भूते स मूकोऽभाषत, ततो जननिवहा आश्चर्यं मेनिरे। तेषां १५
केचित् त्ववदन्, निःसारयत्यसौ भूतान् भूतराज्यस्य बेल्सबूबस्य
साहाय्येन। अपरे च परीक्षमाणास्तं गगनादभिज्ञानस्य प्रदर्शनं १६
ययाचिरे। स तु तेषां चिन्ता विज्ञाय तान् जगाद, उत्सीदति १७
सकलं तद् राज्यं यद् भिन्नं स्वविरुद्धं, कुलस्योपरि कुलं पतति
च। शैतानोऽपि चेत् स्वविरुद्धं भिन्नो जातस्तस्य राज्यं तर्हि १८
कथमवस्थास्यते? यूयं हि वदथ यदहं बेल्सबूबस्य नाम्ना भूतान्
निःसारयामि। तदहं यदि बेल्सबूबबलेन भूतान् निःसारयामि, १९
युष्माकं पुत्रास्तर्हि केन निःसारयन्ति? अतस्ते युष्माकं विचारयि-
तारो भविष्यन्ति। यदि त्वीश्वरस्याङ्गुल्याहं भूतान् निःसारयामि २०

२१ तदीश्वरस्य राज्यं नूनं युष्मत्समीपमुपस्थितं। स बलिष्ठो यावद्
रणसज्जान्वितः स्वप्रासादं रक्षति तावत् तस्य वस्तूनि निरुपद्रवाणि
२२ तिष्ठन्ति। तस्माद् बलवत्तरो नरस्तूपागत्य यदा तं पराजेष्यति,
तदा तस्य विश्वासभूमिं सर्व्वाङ्गरक्षिकां रणसज्जामपहरिष्यति
२३ तदीयलोप्त्राणि विभक्ष्यति च। यो न मम सहायः स मम
विरोधी, यश्च मया सार्द्धं न सञ्चिनोति स विकिरति।
२४ अशुचिरात्मा मनुष्यान्निर्यानात् परं निरुदकानि स्थानानि
पर्य्यटन् विश्रामं मृगयते। तत्त्वप्राप्य स वदति, निर्गतोऽहं माम-
२५ काद् गेहाद् यस्मात् तत् पुनर्गच्छामि। तत्रोपस्थाय तं स तन्मा-
२६ र्जितं शोभितञ्च पश्यति। गत्वा च स तदापरान् स्वतो दुष्टतरान्
सप्तात्मनः स्वसङ्गिनः करोति, सर्व्वे ते च तत्र प्रविश्य निवसन्ति।
अनेन मनुष्यस्य तस्यान्तिमदशादिदशातो निकृष्टा भवति।
२७ स यदैतान्यकथयत् तदा जनतामध्यात् कापि योषिदुच्चरवेण
तमाह, धन्यः स जठरो यो भवन्तं धारितवान् धन्यश्च तत् स्तन-
२८ द्वयं यद् भवता दोहितं। स तूवाच, भवतु, धन्यास्तु ते यैरीश्वरस्य
वाक्यं श्रूयते रक्ष्यते च।

### ऋजुतामधि शिक्षा।

२९ समागच्छत्सु तु जननिवहेषु स वक्तुमारेभे, वंशोऽयं दुष्टः,
सोऽभिज्ञानमनुसन्धत्ते, तस्मै तु भाववादिनो योनाहस्याभिज्ञाना-
३० दन्यदभिज्ञानं न दायिष्यते। यतो योनाहो यथा नीनवीयानां
निमित्तमभिज्ञानमभूत्, तथा मनुष्यपुत्रोऽप्यस्य वंशस्य निमित्तम-
३१ भिज्ञानं भविष्यति। दक्षिणदिशो राज्ञी विचारेऽस्य वंशस्य नरैः
सार्द्धमुत्थापयिष्यते तान् दोषीकरिष्यति च, यतः सा श्लोमनो
विज्ञानोक्तीः श्रोतुं पृथिव्याः प्रान्तेभ्य आगतवती, पश्य त्वत्र श्लोमनो

महत्तरेण केनाप्युपस्थितं । नीनवीयनरा विचारे वंशेनैतेन सार्द्ध- ३२
मुत्थास्यन्ति तं दोषीकरिष्यन्ति च, यतो योनाहस्य घोषणे ते मनांसि
परावर्त्तितानि, पश्य त्वत्र योनाहान्महत्तरेण केनाप्युपस्थितं ।

मनुष्यो दीपिकां प्रज्वाल्य न गृहाधःस्थायां गुप्त्यां द्रोणस्या- ३३
धस्ताद् वा' अपि तु दीपाधारस्योपरि स्थापयति, प्रवेशिनो यथा
दीप्तिं पश्येयुः । देहस्य दीपिका चक्षुः । अतस्तव चक्षुषि सरले सति ३४
तव कृत्स्नो देहो दीप्तिमयोऽस्ति, तस्मिंस्तु दुष्टे जाते तव देहोऽपि
तिमिरमयो भवति । ततो हेतोस्तथावलोकय तवान्तर्ज्योति र्यथा ३५
न तिमिरमयं भवेत् । तद् यदि तव कृत्स्नो देहो दीप्तिमयो ३६
भवेत्, तस्य कोऽप्यंशस्तिमिरमयो न भवेत्, तर्हि तत्सर्व्वाङ्गं
दीप्तिमयं भविष्यति, स्वप्रभया त्वां द्योतयन्ती दीपिकेव ।

आन्तरिकशुचितावश्यकत्वविषयकशिक्षा ।

स यदाभाषत तदा फरीशी कश्चित् तं निमन्त्रयामास यथा ३७
स पूर्व्वाह्निकाहारार्थं तद्गृहमागच्छेत् । ततः स प्रविश्य भोजनार्थ-
मुपविवेश । तद् दृष्ट्वा स फरीशी विस्मयं जगाम यतो भोजनात् ३८
प्राक् स नास्नायत । प्रभुस्तु तमवादीत्, इदानीं फरीशिनो ३९
यूयं पानपात्रस्य स्थालस्य च वहिर्देशं शुचीकुरुथ, युष्मदन्तर्देशस्तु
परस्वापहारेण दुष्टतया च परिपूर्णोऽस्ति । भो निर्ब्बोधाः, वहि- ४०
र्देशो येन रचितस्तेन किं नान्तर्देशोऽपि रचितः ? अपि तु यद्यद- ४१
न्तःस्थं तद् भिक्षां दत्त, पश्यत च युष्मदर्थं सर्व्वमेव शुचीभूतं ।
फरीशिनो यूयं सन्तापभाजनानि, यतो यूयं पोदिनायाः पीगना- ४२
ख्यतृणस्य सर्व्वशाकानाञ्च दशमांशानुपहरथ, परिहरथ तु विचार-
मीश्वरस्य प्रेम च । इयमेतदासीद् युष्माभिरनुष्ठातव्यम् अमी च न
त्यक्तव्याः । फरीशिनो यूयं सन्तापभाजनानि, यतः समाजगृहेषु ४३

४४ श्रेष्ठासनानि हट्टेषु चाभिवन्दनान्याकाङ्क्षथ। अरे कपटिनः शास्त्रा-
ध्यापकाः फरीशिनश्च, यूयं सन्तापभाजनानि, यतो यूयं प्रच्छन्नैः
शवागारैः सदृशा येषामुपरि मनुष्या अज्ञात्वा विहरन्ति।
४५ तदा व्यवस्थावेत्तॄणां कश्चित् प्रतिभाषमाणस्तमवादीत्, गुरो,
४६ वचांसीमानि व्याहरंस्त्वमस्मानपि न्यक्करोषि। स ठुवाच, रे
व्यवस्थावेत्तारः यूयमपि सन्तापभाजनानि, यतो यूयं दुर्वहैर्भारै
र्मनुष्यान् भारिणः कुरुथ, स्वयं लेकाङ्गुल्यापि तान् भारान् न
स्पृशथ। यूयं सन्तापभाजनानि, यतो यूयं भाववादिनां शवागा-
४७ राणि निर्म्मिमीध्वे, युष्माकं पूर्व्वपुरुषास्तु तान् हतवन्तः। सुतरां
४८ युष्मत्पूर्व्वपुरुषाणां कर्म्माणि सप्रमाणानि कुरुथ तेष्वनुमोदध्वे च।
ते हि तान् हतवन्तो यूयञ्च तेषां शवागाराणि निर्म्मिमीध्वे।
४९ अतो हेतोरीश्वरस्य प्रज्ञापि व्याजहार, तेषामन्तिकमहं भाव-
वादिनः प्रेरितांश्च प्रहेष्यामि, तेषां मध्यात् केचित् तै र्घानि-
ष्यन्ते प्रद्रावयिष्यन्ते च, इत्यमाजगत्संस्थापनाद् विस्रावितं सर्व्वेषां
५० भाववादिनां यच्छोणितं, हेबलस्य शोणितमारभ्य निकेतनवेद्यो-
५१ रन्तराले नष्टस्य सखरियस्य शोणितं यावत् तत्सर्व्वस्य शोधो
जनेभ्योऽधुनातनेभ्य आहारयिष्यते। युष्मानहं निश्चितं ब्रवीमि,
५२ जनेभ्योऽधुनातनेभ्यस्तच्छोध आहारयिष्यते। रे व्यवस्थावेत्तारः,
यूयं सन्तापभाजनानि, यतो यूयं ज्ञानस्य कुञ्चिकामपहृतवन्तः।
यूयमपि न प्रविष्टाः प्रविशन्तोऽपि युष्माभि र्निवारिताः।
५३ तेनैतान्युच्यमानाः शास्त्राध्यापकाः फरीशिनश्च गाढं व्यग्रीभूय
५४ तद्विरुद्धं मन्त्रयमाणा अभियोगसूचकलिप्सया तन्मुखनिःसृतं किमपि
धर्त्तुं यतमानाश्च तं बहुप्रश्नानामाकस्मिकं प्रत्युत्तरं याचितुमा-
रेभिरे॥ ११॥

कापट्यलोभादयोरधि च यीशोरुपदेशः।

इतोमध्ये जननिवहा अयुतशः समागत्य परस्परं पादै मर्द्द- १२ १
यितुं प्रावर्त्तन्त। तदा स स्वशिष्यान् वक्तुमारेभे, यूयं प्रथमतः
स्वरक्षार्थं फरीशिनां किण्वतः सावधानास्तिष्ठत। तद्धि कापट्यं।
नास्ति तु किमपि तादृशं तिरोहितं यन्नाविर्हितं भविष्यति, २
नापि तादृशं निगूढं यन्न ज्ञायिष्यते। अतो यूयं तिमिरे यद्य- ३
दुक्तवन्तस्तद् दीप्तौ श्राविष्यते, अन्तरागारेषु च कर्णकुहरे यद्यद्
व्याहृतवन्तस्तद् गृहपृष्ठेषु घोषयिष्यते। मदीयबन्धून् युष्मांस्त्वहं ४
ब्रवीमि, मा भैष्ट तेभ्यो ये देहं घ्नन्ति तदुत्तरन्त्वधिकं किमपि
कर्त्तुं न शक्नुवन्ति। कस्मात्तु भेतव्यं तदहं युष्मान् बोधयिष्यामि। ५
बिभीत तस्माद् यो हत्वा तदुत्तरं नरके निक्षेप्तुं सामर्थ्यविशिष्टः।
युष्मानहं निश्चितं वदामि, तस्मादेव बिभीत। चटकाः पञ्च किं ६
न ताम्रखण्डद्वयेन विक्रीयन्ते? ईश्वरस्य समक्षन्तु तेषां नैकोऽप्यस्मृतः।
सन्ति च गणिताः सर्व्वेऽपि युष्मच्छिरसां कचाः। अतो मा बिभीत, ७
यूयं बहुभ्यश्चटकेभ्यो विशिष्यध्वे। युष्मांस्त्वहं ब्रवीमि, यः कश्चिन्म- ८
नुष्याणां समक्षं मामङ्गीकुरुते, तं मनुष्यपुत्रोऽपीश्वरस्य दूतानां
समक्षमङ्गीकरिष्यते। यस्तु मनुष्याणां समक्षं मां प्रत्याख्याति, स ९
ईश्वरस्य दूतानां समक्षं प्रत्याख्यायिष्यते। यः कश्चिच्च मनुष्यपुत्रस्य १०
प्रतिकूलं वाक्यं व्याहरति तस्य क्षमिष्यते, यस्तु पवित्रमात्मानं परि-
निन्दति तस्य नैव क्षमिष्यते। यदा तु जनैः समाजानां शास्तृणां ११
कर्तृणाञ्च समक्षं नायिष्यध्वे, कथं किं वा तदा प्रतिवदिष्यथ कथ-
यिष्यथ वा, तच्चिन्तया माकुलीभवत। यतो यद् वक्तव्यं तत् १२
तस्मिन्नेव दण्डे पवित्र आत्मा युष्मान् शिक्षयिष्यति।
अथ जनताया मध्यात् कश्चित् तं जगाद, गुरो, मम भ्रातरं १३

१४ तथादिशतु यथा स मया सार्द्धं रिक्थं विभजेत् । स तु तमब्रवीत्,
हे मनुष्य, युवयोः प्राड्विवाकं विभक्तारं वा मां कोऽधिकृतवान्?
१५ ततः स जनानवादीत्, सतर्का भवत सावधानाश्च सर्व्वस्माद्धनलो-
१६ भात्, यतो धनाढ्यस्य जीवनं न तद्वित्तनिष्ठं । स तेभ्यो दृष्टान्त-
कथामपि कथयामास, यथा, मनुष्यस्य कस्यचिद् धनिनो भूमिः
१७ प्रचुरशस्यादीनि द्रव्याण्युदपीपदत् । तदा स मनसा व्यतर्कयत् किं
करवाणि ? यतो मम भूम्युत्पन्नद्रव्याणि सञ्चेतुं मम स्थानं नास्ति ।
१८ स पुनरब्रवीत्, इदं करिष्यामि, मम कुशूलान् भङ्क्त्वा महत्तरान्
निर्म्माय तत्रैव मम सर्व्वाणि भूम्युत्पन्नद्रव्याणि वित्तानि च सञ्चे-
१९ ष्यामि, मत्प्राणांश्च वदिष्यामि, भो प्राणाः, सन्ति वः प्रचुरवित्तानि
बहुवर्षार्थं सञ्चितानि । विश्रामः क्रियतां भुज्यतां पीयताम् आमोदः
२० सेव्यतां । ईश्वरस्तु तमाह, रे निर्ब्बोध, रात्रावस्यां त्वं प्राणानां
प्रत्यर्पणमाज्ञापयिष्यसे । कस्यतर्हि भविष्यति सर्व्वं तद् यत् सञ्चीकृतं
२१ त्वया ? ईदृश्येव गतिस्तस्य य आत्मार्थं धनसञ्चयकारी न त्वीश्व-
रार्थं धनवान् ।

२२ स्वशिष्यांस्तु स जगाद, ततो हेतोरहं युष्मान् ब्रवीमि, किं
भक्षिष्याम इति विचिन्त्य स्वप्राणानधि, किं वसिष्यामहे इति
२३ विचिन्त्य स्वदेहमधि वा माकुलीभवत । भक्ष्यात् प्राणा हि श्रेष्ठा
२४ वसनाच्च देहः श्रेष्ठः । वायसानालोचयत, ते नोप्यते नापि कृत्यते,
भाण्डागारं कुशूलो वा तेषां नास्ति, तथापीश्वरस्तान् पुष्णाति ।
२५ विहङ्गमेभ्यो यूयं कतिगुणमधिकं विशिष्यध्वे ? चिन्तयित्वा वा
२६ युष्माकं केन स्ववयो हस्तमेकं वर्द्धयितुं शक्यते ? तद् यदि लघिष्ठ-
मपि युष्माकमशक्यं, कथं तदन्यान्यधि चिन्ताकुला भवथ ? शूश-
२७ नाख्यानि क्षेत्रपुष्पाणि पर्य्यालोचयत, कथं तानि वर्द्धन्ते ? न तानि

श्रमं कुर्व्वते नापि सूत्राणि तन्वन्ति। युष्मांस्त्वहं ब्रवीमि, सुलेमापि
स्वकृत्स्नप्रतापे तेषामेकमिव न पर्य्यधीयत। यदि लद्य चेत्रे वर्त्त- २८
मानं श्वश्चुल्ल्यां निक्षेप्स्यं तृणमीदृशमीश्वरः परिधापयति, तर्हि भो
स्तोकविश्वासिनः स कतिगुणमधिकं युष्मान् परिधापयिष्यति। अतो २९
यूयं किं भक्षिष्यथ किं पास्यथ वा तन्मानुमन्ध्वं संशयारूढा वा
मा भवत। जगतिस्थाः परजातीयजना हि सर्व्वाण्येतान्यनुसन्द-
धते। युष्मत्पिता तु जानीते यदिमानि सर्व्वाणि युष्माकमावश्य-
कानि। ईश्वरस्य राज्यमेवान्विष्यत, तथा कृते सर्व्वाणीमान्यपि ३१
युष्मभ्यं प्रदायिष्यन्ते। मा भैषीः क्षुद्र मेषव्रज, यतो युष्मभ्यं राज्यं ३२
दातुं युष्मत्पिता रोचितवान्। युष्माकं यद्यदास्ते तद् विक्रीय
भिक्षां दत्त। सज्जीकुरुत स्वार्थमजरान् मुद्राधारान् अक्षयं धनं ३३
स्वर्गे सञ्चितं, यत्र न चौर उपसर्पति न कीटो वा क्षिणोति।
यतो युष्माकं यत्र वित्तं तत्र युष्माकं चित्तमपि स्थास्यति। ३४
युष्माकं कटयो बद्धा दीपिकाश्चोज्ज्वलास्तिष्ठन्तु, यूयञ्च भवत ३५
सदृशास्ते जनै र्ये विवाहोत्सवात् स्वप्रभोः प्रस्थानकालमाकाङ्क्षन्त- ३६
स्तथा तं प्रतीक्ष्यावतिष्ठन्ते, यथा तस्मिन्नायाते द्वारं ताडयति च
तत्क्षणं तदर्थं द्वारमुद्घाटयेयुः। धन्यास्ते दासाः प्रभुरागत्य यान् ३७
जाग्रत आसादयिष्यति। युष्मानहं सत्यं ब्रवीमि स कटिं बद्धा तान्
भोजनायोपवेशयिष्यत्युपागत्य च परिचरिष्यति। स द्वितीये यामे ३८
तृतीये यामे वागत्य यानेवम्भूतान् आसादयिष्यति, त एव दासा
धन्याः। जानीत परन्त्विदं यद् यदि गृहस्वाम्यज्ञास्यद् आयाति ३९
चौरः कस्मिन् दण्ड इति, स तर्ह्यजागरिष्यत् कुड्यभेदञ्च स्वगेहस्य
नासहिष्यत। तद् यूयमपि ससज्जास्तिष्ठत, यत आयाति मनुष्य- ४०
पुत्रस्तस्मिन्नेव दण्डे दण्डो यो युष्माभि र्नानुभूयते।

४१ पितरस्तदा तं पप्रच्छ, प्रभो, दृष्टान्तोऽयं भवतास्मभ्यं कथ्यते
४२ किंवा सर्व्वेभ्य एव? प्रभुरब्रवीत् को नु खलु स विश्वस्तो बुद्धिमांश्च
धनाध्यक्षो यो यथासमये निरूपितभक्ष्यवितरणाय स्वामिना
४३ स्वभृत्येष्वधिक्रियते? धन्यः स दासः स्वामी यमागमनकाले तथै-
४४ वाचरन्तमासादयिष्यति। अहं युष्मान् सत्यं ब्रवीमि, स तं कृत्स्ने
४५ सर्व्वस्वेऽधिकरिष्यति। मम स्वामी त्वागन्तुं विलम्बत इति मनसि
ध्यात्वा दासः स यदि दासान् दासीश्च ताडयितुं, भोक्तुं पातुं
४६ प्रमत्तो भवितुञ्च प्रवर्त्तते, स तर्हि दिने यस्मिन् नापेक्षते दण्डञ्च
यं स न जानाति, तदैव दासस्य स्वामी तत्रोपस्थाय तं द्विधा-
४७ करिष्यति भागञ्च तस्याविश्वासिभिः सार्द्धं निरूपयिष्यति। यो
दासस्तु स्वामिनोऽभीष्टं विज्ञाय न सज्जोऽभूत् न वा तदभीष्टा-
४८ नुरूपमाचरितवान् स प्रभूतं प्रहारिष्यते। यस्तु न विज्ञाय प्रहार-
योग्यमाचारं कृतवान् स स्तोकं प्रहारिष्यते। अपि च यस्मै
कस्मैचिद् बहु दत्तं बहु तत्सन्निधावनुसन्धायिष्यते, यस्मिंश्च बहु
समर्पितं, जनैः सोऽधिकतरं याचिष्यते।

४९ मेदिन्यामग्निं निक्षेप्तुमहमागतः, स चेदधुना प्रज्वलितस्तर्ह्यपरं
५० किं वाञ्छामि? स्नानेन केनचित्तु मया स्नातव्यं तच्च यावद्-
५१ सिद्धं तावत् कीदृक् सङ्कोच्ये! युष्माभिः किमनुमीयते यदहं
पृथिव्यामैक्यं निधातुमागतः? युष्मानहं ब्रवीमि, न तथापि
५२ तु विभेदमेव। यतोऽद्यप्रभृत्येकस्मिन् गृहे पञ्च जना विभिन्ना
५३ भविष्यन्ति, त्रयो द्वयो र्द्वौ च त्रयाणां विरुद्धं। विभिन्ना हि
भविष्यन्ति पिता पुत्रस्य, पुत्रः पितु र्विरुद्धं, माता दुहितु र्दुहिता
मातु र्विरुद्धं, श्वश्रूः पुत्रवध्वाः पुत्रवधूः श्वश्र्वाश्च विरुद्धम्।

५४ अपि च स जननिवहान् जगाद, पश्चिमदिशि उद्गच्छन्तं मेघं

दृष्ट्वैव यूयं वदथ, वृष्टिरायातीति, तथैव जायते च। दक्षिणवायु ५५
र्वातीति निरूप्य च वदथ, ग्रीष्मो भविष्यतीति, तच्च जायते। रे ५६
कपटिनः, यूयं भूतलस्याकाशस्य च रूपं निर्णेतुं जानीथ, कथं तर्हि
कालमिमं न निर्णयथ? कथञ्च स्वयमेव यथार्थं विचारं न कुरुथ? ५७
शास्तुः समीपं गच्छंस्त्वं यावत् स्वप्रतिपक्षेण सार्द्धं व्रजसि, तावत् ५८
पथि तस्मादुद्धारं साधयितुं यतस्व, नोचेत् स त्वां बलेन प्राड्वि-
वाकस्यान्तिकं नेष्यति, प्राड्विवाकश्च त्वां पदातौ समर्पयिष्यति,
पदातिश्च त्वां कारायां चेष्यति। त्वामहं ब्रवीमि, शेषोऽपि कपर्द्दको ५९
यावत् त्वया न शोधितस्तावत् तत्स्थानान्न निर्गमिष्यते ॥१२॥

यीशो र्नानाविधशिक्षाकर्म्माणि च।
मनःपरिवर्त्तयितुमावश्यकत्वमधि शिक्षा।

तस्मिन् काले केचिदुपस्थाय तस्मै तेषां गालीलीयानां १३ १
संवादं दद्रु र्येषां निजशोणितं यज्ञीयेन सार्द्धं पीलातेन मिश्रितं। २
यीशुस्तदा प्रतिभाषमाणस्तान् अब्रवीत्, यूयं किं मन्यध्वे यत् तेन
दुर्भगत्वेन ते गालीलीयाः सर्व्वेभ्यो गालीलीयेभ्योऽधिकपापिनः
प्रतिपन्नाः? युष्मानहं ब्रवीमि, न तथा। प्रत्युत यदि न प्रत्याव- ३
र्त्तध्वे सर्व्वे तर्हि तथैव विनंक्ष्यथ। अथवा शीलोहस्थेनोच्चगृहेण ४
पतता ये हतास्तेऽष्टादशजना यिरूशालेमनिवासिभ्यः सर्व्वमनुष्येभ्यो-
ऽपराधिनः प्रतिपन्ना इति किं मन्यध्वे? युष्मानहं ब्रवीमि, न ५
तथा, प्रत्युत यदि न प्रत्यावर्त्तध्वे, सर्व्वे तर्हि तथैव विनंक्ष्यथ।

अनन्तरं स दृष्टान्तकथामिमां कथयामास, कस्यचित् स्वद्राक्षा- ६
क्षेत्रे रोपित उडुम्बरवृक्ष आसीत्, स चागत्य तस्मिन् फलमन्वैच्छत्,
न तु प्राप। ततः स द्राक्षाक्षेत्ररक्षकं जगाद, पश्य त्रीन् वर्षानहं- ७
मागत्यास्मिन्नुडुम्बरवृक्षे फलमन्वेच्छामि न तु प्राप्नोमि, त्वमेनमु-

८ छिन्धि, किमर्थमयं भूमिमपि विकारयति? स तु तं प्रत्यब्रवीत्,
प्रभो, वर्षमेनममीमं स्थातुमनुजानातु, अहं तावत् तत्परितः
९ खनित्वाम्यालवालं स्थापयिष्यामि च, किंश्चित् स फलं फलिष्यति,
नोचेत् ततः परं स भवतोच्छेत्स्यते ।

विश्रामवारप्रतिपालनाय शिक्षा ।

१० अथ स विश्रामवारे कस्मिंश्चित् समाजगृहे उपादिशत् । पश्य
११ च तत्राष्टादशवर्षान् यावद् दौर्बल्यजनकात्मनाविष्टा काचिद् योषि-
१२ दासीत् । सा भुग्ना सम्पूर्णरूपमृजू र्भवितुं नाशक्नोत् । यीशुस्तां
१३ दृष्ट्वाजुहाव जगाद च, नारि, तव दौर्बल्यात् त्वं मुक्ता । इत्युक्त्वा
१४ स तस्यां हस्तावर्पयामास । ततः सा तत्क्षणमृजूर्भूत्वेश्वरं तुष्टुवे च ।
समाजाध्यक्षस्तु विश्रामवारे यीशुनारोग्यसाधने क्रुद्धो जननिवहं
जगाद, परिश्रमो येषु विधेयस्तादृशानि षट् दिनानि सन्ति,
१५ आरोग्यलाभाय तेष्वेवागच्छत, न तु विश्रामवारे । ततः प्रभुः
प्रतिभाषमाणस्तमाह, रे कपटिनः, किं न युष्माकमेकैको विश्राम-
वारे स्वगां स्वगर्द्दभं वा गवादनीतो मुक्त्वा तोयं पाययितुं नयति?
१६ इयन्त्वब्राहामस्य या तनयाष्टादशवर्षान् यावत् शैतानेन बद्धा,
१७ एतस्या विश्रामवारे बन्धनादस्मान्मोचनं किं न विधेयम्? तस्मि-
न्नेतत् कथितवति तद्विपक्षाः सर्व्वे लज्जापन्नाः कृत्स्नो जननिवहस्तु
तेन साधितेषु यशस्विषु कर्म्मस्वाननन्द ।

सर्षपबीजकिण्वयोर्दृष्टान्तौ ।

१८ अथ स बभाषे, ईश्वरस्य राज्यं केन सदृशं? केन वा तदुप-
१९ मास्ये? तत् सर्षपबीजेन तेन सदृशं यदादाय कश्चिन्मनुष्यः स्वोद्यान
उवाप । तच्च वृद्धा महातरु र्बभूव, विहायसो विहङ्गमास्तस्य
२० शाखासु न्यवसन् । पुनरपि स जगाद, ईश्वरस्य राज्यं केनोपमास्ये?

तत् किण्वेन तेन सदृशं यत् कयाचिद् योषितादाय गोधूमचूर्णानां २१
द्रोणत्रयपरिमितानां मध्ये निक्षुतं येन च परिणामे सञ्जातं
तत्साकल्यं किण्वभावितं ।

परित्रातुम् प्राणपणकरणमधि शिक्षा ।

अथ स नगरान्नगरं ग्रामाच्च ग्रामं गत्वोपादिशन् यिरूशालेम- २२
मुद्दिश्य यात्रामकरोत् । एकदा कश्चित् तम् अप्राक्षीत्, प्रभो, २३
त्राणपात्राणि किमल्पानि ? स तं जगाद, सङ्कीर्णेन गोपुरेण प्रवेष्टुं २४
प्राणपणेन चेष्टध्वं, यतोऽहं युष्मान् ब्रवीमि, बहवः प्रवेष्टुं यतिष्यन्ते,
न तु शक्ष्यन्ति । गृहस्वामिनोत्थाय द्वारे बद्धे वहिस्तिष्ठन्तो यूयं २५
द्वारमाहन्तुमारभ्य यदा वक्ष्यथ, प्रभो प्रभो, अस्मदर्थं द्वारं मुञ्च-
त्विति, तेन लिदं प्रतिवक्ष्यध्वे, कुत्रत्या यूयं तन्न जानामीति,
तदा यूयमिदं वक्तुं प्रवर्त्तिष्यध्वे, भवतः समक्षं वयं भोजनपाने २६
कृतवन्तोऽस्मदीयचत्वरेषु च भवानुपदिष्टवानिति । स तु व्याहरि- २७
ष्यति, युष्मानहं ब्रवीमि, कुत्रत्या यूयं तन्न जानामि, मत्तोऽपसृत्य
तिष्ठत रे अधर्म्माचारिणः सर्व्वे इति । तत्र रोदनं दन्तैर्दन्तघर्षणञ्च २८
भविष्यते युष्माकं वीक्षमाणानाम् अब्राहामम् इस्‌हाकं याकोबञ्च
भाववादिनश्च सर्व्वान् ईश्वरस्य राज्ये (सुखासीनान्), युष्मांस्तु
वहिर्निक्षिप्तान् । अपरञ्च पूर्व्वपश्चिमोत्तरदक्षिणदिग्भ्यो जना आग- २९
त्येश्वरस्य राज्ये भोजनायोपवेक्ष्यन्ति । पश्यत चान्त्यैः कैश्चित् प्रथमै ३०
र्भवितव्यम् प्रथमैश्च कैश्चिदन्त्यैः ।

तस्मिन् दिने फरीशिनः केचित् तदन्तिकमागत्य तमब्रुवन्, ३१
प्रस्थाय दूरं याहि, यतो हेरोदस्त्वां जिघांसति । स तु तान् ३२
जगाद, यूयं गत्वा तं भूरिमायं वदत, पश्याहमद्य श्वश्च भूतान्
निःसारयाम्यारोग्यदानानि साधयामि च, तृतीये दिने च सिद्ध-

३३ कर्म्मा भविष्यामि। प्रत्युताद्य श्वश्च परश्वश्च मया यात्रा कर्त्तव्या।
३४ यतो यिरूशालेमाद् वहि र्भाववादिनो विनाशो न सम्भवति। हा
यिरूशालेम, हा यिरूशालेम, हा भाववादिनां हन्त्रि नराणाञ्च
त्वत्समीपं प्रहितानां प्रस्तराघातिनि पुरि, पक्षयोरधः स्वशावकान्
सङ्गृह्णती कुक्कुटीवाहं कतिकृत्वस्तव शावकान् सङ्ग्रहीतुं वाञ्छित-
३५ वान्, यूयन्तु न सम्मताः। पश्यत युष्माकं भवनं युष्मत्कृत उत्सन्नं
विहीयते। युष्मांश्चाहं सत्यं ब्रवीमि, धन्यः स यः प्रभो र्नाम्नाया-
तीति यदा यूयं वक्ष्यत, स कालो यावदनुपस्थितस्तावन्मां पुन र्न
द्रक्ष्यथ॥ १३॥

भोजनसमये दत्तोपदेशः।

**१४** १ अथ कस्मिंश्चिद् विश्रामवारे तेन भोजनार्थं कस्यचिन्मुख्य-
२ फरीशिनो गृहं प्रविष्टे ते तमवेक्ष्यातिष्ठन्। पश्य च नर एक
३ उदकोदरी तस्य सम्मुखमविद्यत। यीशुस्तदा प्रतिभाषमाणो व्यव-
स्थावेत्तॄन् फरीशिनश्चाह, विश्रामवारे रोगप्रतीकारः किं विधेयः?
४ अनेन ते मौनीभूताः। स तु तं नरं स्पृशन् निरामयं कृत्वा
५ विससर्ज, ततः परं प्रतिभाषमाणस्तानवादीत्, युष्माकं मध्ये कः
कूपे पतितं स्वगर्द्दभं स्वगां वा तत्क्षणं विश्रामवारे नोद्धरति?
६ अस्य वचनस्य प्रत्युत्तरं कर्त्तुं ते नाशक्यत।
७ ततः परं स निमन्त्रितेभ्यो जनेभ्यो दृष्टान्तकथामकथयत्,
८ यतस्ते कथं श्रेष्ठस्थानानि वरयन्ति तत् तेनालक्ष्यत। स तानुवाच,
केनचिद् विवाहोत्सवार्थं त्वं निमन्त्रणे कृते मैव श्रेष्ठस्थान उपविश,
९ किंश्चित् त्वत्तो बहुमतः कश्चित् तेन निमन्त्रितः, तथा सति तव
तस्य च निमन्त्रयितोपागम्य त्वां वक्ष्यति, अमुष्मै स्थानं देहीति,
१० त्वञ्च तदा लज्जितोऽन्यस्थानमाश्रयितुं प्रवर्त्तिष्यसे। प्रत्युत कृते

तव निमन्त्रणे गत्वाम्यस्थान उपविश, यथा त्वन्निमन्त्रयितागमन-
काले त्वां वदेत् बन्धो त्वमुच्चतरं स्थानं गन्तुमर्हसि। तदा हि
सहभोजिनां समक्षं तव गौरवं जनिष्यते। यतो यः कश्चिदात्मा- ११
नमुच्चीकरोति स नीचीकारिष्यते, यश्चात्मानं नीचीकरोति स
उच्चीकारिष्यते।

अथ यस्तं निमन्त्रितवान्, तस्मै स कथयामास, त्वं यदा पूर्व्वा- १२
ह्णिकमपराह्णिकं वा भोज्यं करोषि, तदा स्वबन्धून् स्वभ्रातॄन् वा
स्वकुटुम्बिनो वा स्वसमीपवासिनो धनिनो वा मा निमन्त्रय, किञ्चित्
तैरपि तव निमन्त्रणे कृते तव प्रतिदानं भविष्यति। प्रत्युत यदा
महाभोज्यं करोषि, तदा दरिद्रान्, हीनाङ्गान्, खञ्जान्, अन्धान् १३
निमन्त्रय, तर्हि धन्यो भविष्यसि, यतस्तुभ्यं प्रतिदानस्योपायस्तेषां १४
नास्ति, धार्म्मिकाणां पुनरुत्थाने तु तुभ्यं प्रतिदानं विधायिष्यते।

कथा एताः श्रुत्वा सहभोजिनामेकस्तमब्रवीत्, धन्यः स य ईश्वरस्य १५
राज्ये भक्ष्यभागी भविष्यति। स तु तमुवाच, कश्चिन्मनुष्योऽपराह्णिकं १६
महाभोज्यं चक्रे बहून् निमन्त्रयामास च। भोज्यस्य दण्डे च स्वदासं १७
प्रहित्य तानवादीत्, आयात, यतः सर्व्वमेवेदानीं सज्जीभूतं। ते
सर्व्वे लेकमत्यानुज्ञां याचितुं प्रवृत्तिरे। प्रथमस्तमुवाच, क्षेत्रं क्रीतं १८
मया तद्दर्शनार्थमवश्यं वहिर्गन्तव्यं। त्वां प्रार्थये, मामनुज्ञातं मन्यस्व।
द्वितीय आह, गोयुग्मानि पञ्च क्रीतानि मया, तानि परीक्षितुं
गच्छामि, त्वां प्रार्थये, मामनुज्ञातं मन्यस्व। अपर एको जगाद, १९
दारा उदूढा मया, ततो गन्तुं न शक्यते। ततः परं स दास २०
उपस्थाय स्वप्रभवे तत् सर्व्वं निवेदयामास। गृहस्वामी तदा क्रुद्धः २१
स्वदासमाह, सत्वरं नगरस्य चत्वराणि रथ्याश्च गत्वा दरिद्रान्,
हीनाङ्गान्, खञ्जान्, अन्धांश्चात्र समानय। ततः परं तेन दासेनोक्तं, २२

प्रभो, भवता यथादिष्टं तथैवाकारि, स्थानञ्चिदानीमपि शिष्यते।
२३ प्रभुस्तदा दासमाह, त्वं वर्त्मराजमार्गान् वृक्षतलानि च गत्वा तथा-
ग्रहं विधाय जनान् समानय यथा मम गृहं परिपूर्य्येत। यतोऽहं
२४ युष्मान् ब्रवीमि, नराणां तेषां निमन्त्रितानां कोऽपि मम भोज्यं
नास्वादिष्यति।

२५ अथ महत्सु जननिवहेषु तेन सार्द्धं व्रजत्सु स प्रत्यावृत्य तान्
२६ जगाद, यो मदन्तिकमायाति स यदि स्वपितरं स्वमातरञ्च प्रति
भार्य्यां सन्तानान् भ्रातॄन् भगिनीश्च प्रत्यपि च स्वप्राणान् प्रति न
२७ विरज्यते तर्हि मम शिष्यो भवितुं न शक्नोति। यः कश्चित् स्वक्रुशं
२८ वहन् मां नानुगच्छति स मम शिष्यो भवितुं न शक्नोति। यत
उच्चगृहं निर्म्मातुमिच्छु युष्माकं को न प्रथममुपविश्य व्ययं गणयन्
२९ कार्य्यसिद्धेरुपायस्तस्यास्ति न वेति विचारयति? नोचेत् स्थापिते
गृहमूले यदि समाप्तिस्तस्याशक्या जायते, तर्हि ये तद् द्रक्ष्यन्ति
३० ते सर्व्वे तमुपहसितुं प्रवृत्ता वदिष्यन्ति, नरोऽसौ गृहनिर्म्माणमा-
३१ रेभे समापयितुन्तु न शशाकेति। अथवापरेण राज्ञा सार्द्धं सम्पा-
तार्थं युद्धयात्रां चिकीर्षुः को राजा न प्रथममुपविश्य मन्त्रयते,
विंशतिसहस्रैः वृतो यो मद्विरुद्धमायाति, तं किं दशसहस्रैः वृतोऽहं
३२ प्रतिरोद्धुं शक्ष्यामीति। यद्यशक्यं प्रतिभाति, तर्हि यावदन्यतरो
दूरे स्थितस्तावत् स दौत्यं प्रहित्य सन्धेः सम्भवं प्रार्थयिष्यते।
३३ तथैव युष्माकं यः कश्चित् सर्व्वस्वाय जलाञ्जलिं न ददाति स मम
३४ शिष्यो भवितुं न शक्नोति। लवणं हि भद्रं, लवणन्तु यदि विस्वादं
३५ जायते, तर्हि तत् केनोपायेन स्वादयुक्तं कारिष्यते? ततःप्रभृति
तन्न मृत्तिकायां नावकरराशौ वा युज्यते, वहिरेव निक्षिप्यते।
शृणोतु यस्य श्रोतुं श्रोत्रे स्तः॥ १४॥

हारितमेषहारितमुद्रापादहारितपुत्राणाञ्च एतत्त्रयोदृष्टान्ताः।

अथ शुल्कादायिषु पापिषु च सर्व्वेषु तस्य वाक्यानि श्रोतुं १५
तदन्तिकमागच्छत्सु फिरीशिनः शास्त्राध्यापकाश्चासन्तुष्यावदन्, पापि- २
नोऽनुगृह्लात्यसौ तैः सार्द्धमश्नाति च। स तु तेभ्यो दृष्टान्तकथा- ३
मिमां कथयामास. युष्माकं को नरः शतमेषाणां स्वामी? तेषामेक- ४
स्मिन् हारिते स किं नैकोनशतं प्रान्तरे परित्यज्य तमेकं हारितं
यावन्न प्राप्नोति तावदनुसरति? प्राप्य च तं हृष्टः स्कन्धदेशमारो- ५
पयति गृहमागत्य च बन्धून् समीपवासिनश्चाहूय वदति, मया ६
सार्द्धमानन्दत, यतो मम हारितो मेषो मया पुनर्लब्धः। युष्मानहं ७
ब्रवीमि, तथैव पापिन्येकस्मिन् मनः परावर्त्तयति स्वर्गे आनन्दो
भविष्यति। न भविष्यति तादृश एकोनशतधार्म्मिकेष्वपि येषां मनः-
परावर्त्तनमप्रयोज्यम्।

यस्या दशमुद्रापादाः सन्ति तादृशी का योषित् एकस्मिन् ८
मुद्रापादे हारिते न दीपिकां प्रज्वालयति यावच्च तं न प्राप्नोति
तावद् गृहं परिमार्ज्जन्ती सयत्नं गवेषयति? तस्मिन्नासादिते च सा ९
सखीः प्रतिवेशिनीश्च समाहूय वदति, मया सार्द्धमानन्दत, यतः स
हारितो मुद्रापादो मया पुनर्लब्धः। युष्मानहं ब्रवीमि, तथैवैकस्मिन् १०
पापिनि मनः परावर्त्तयतीश्वरस्य दूतानां समक्षमानन्दः सम्भवति।

स पुनः कथयामास, नरस्य कस्यचिद् द्वौ पुत्रावास्तां। ११
तयोः कनिष्ठः पितरमाह, पितः देहि मह्यं रिक्थस्य तमंशं यो १२
मया प्राप्तव्यः। ततः स तयोः कृते रिक्थं विबभाज। अनधिक- १३
दिवसेभ्यः परं स कनिष्ठः सर्व्वं सङ्गृह्य दूरदेशं प्रतस्थे तत्र च
लाम्पट्येन जीवनं यापयन् स्ववित्तं प्राकारीत्। व्ययिते तु तेन १४
सर्व्वस्वे तस्मिन् देशे घोरतरं दुर्भिक्षं सञ्जातं, स च कष्टभागी

१५ भवितुमारेभे। तदा स गत्वा तत्प्रदेशस्थे कस्मिंश्चित् पौरे समज्जे,
१६ स च तं शूकरचारणार्थं स्वग्रामान्तीयक्षेत्राणि प्रेषयामास। तत्र स
शूकराणां भोज्यै र्वन्यमाषकोषैरुदरं परिपूरयितुमवाञ्छत्, कोऽपि
१७ तु तस्मै नाददात्। ततः परं स चेतनां लब्ध्वा बभाषे, मत्पितुः
कति वेतनजीविनः पूपैरतितृप्ता भवन्ति, अहन्त्वत्र क्षुधया नश्यामि।
१८ अहमुत्थाय मत्पितरमभियास्यामि, तञ्च वदिष्यामि, पितः, स्वर्गस्य
१९ विरुद्धं भवतः समक्षञ्च पापं कृतं मया, भवतः पुत्र इति नाम
मयि पुन र्न युज्यते, भवान् मां स्ववेतनजीविनामेकेन समानं
२० करोतु। अनन्तरं स उत्थाय स्वपितरमभिजगाम। तन्तु दूरे
स्थितमेव पिता लक्षयामासानुकम्प्य च धावित्वा तस्य कण्ठं धृत्वा
२१ चुचुम्ब। पुत्रस्तदा तमवादीत्, पितः, स्वर्गस्य विरुद्धं भवतः समक्षञ्च
पापं कृतं मया, भवतः पुत्र इति नाम मयि पुन र्न युज्यते।
२२ तस्य पिता तु स्वदासानाह, सत्वरं सर्व्वोत्तमं प्रावारं वहिरानीयेमं
परिधापयत, अस्य हस्ते चाङ्गुरीयकं चरणयोश्चोपानहावर्पयत,
२३ अस्मत्पोषितं गोवत्समानीय मारयत च, अस्माभि र्भुज्यतां हर्षः
२४ सेव्यताञ्च, यतो ममायं पुत्रो मृत आसीत् पुनर्जीवितश्चाभूत्,
हारित आसीत् पुनर्लब्धश्चाभूत्। ततस्ते हर्षं सेवितुमारेभिरे।
२५ तस्य ज्येष्ठः पुत्रस्तु तदा क्षेत्र आसीत्। आगमनकाले स यदा
२६ गृहान्तिकमुपातिष्ठत्, तदा वाद्यनृत्यानां शब्दमश्रौषीत्। ततः स
२७ दासानामेकं समीपमाहूय पप्रच्छ, किमर्थमेतत्? स तमवादीत्,
भवतो भ्रातागतः, भवतः पिता च तं स्वस्थं लब्धवांस्तद्धेतोः पोषितं
२८ गोवत्सं मारयामास। ततः स कुपित्वा प्रवेष्टुमनङ्गीचक्रे। तस्य पिता
२९ तदा वहिरागत्य तं प्रासादयत्। स तु प्रतिभाषमाणः पितरमाह,
पश्यैतावतो वत्सरानहं त्वां परिचरामि, कदापि तवाज्ञां न लङ्घामि

स्म, मह्यं हि त्वं कदापि मित्रैः सार्द्धं हर्षसेवनार्थं छागशावकं
नाददाः। यस्तु वेश्याभिः सार्द्धं तव जीविकां ग्रस्तवां स्तव तस्मिन् पुत्रे- ३०
ऽमुष्मिन्नागतवत्येव तदर्थं पोषितं गोवत्सममारयः। स तु तमब्रवीत्, ३१
वत्स, त्वं सततं मया सार्द्धं वर्त्तसे, मम च यद्यदस्ति तत् सर्व्वं तव।
प्रत्युत हर्षसेवनमाह्लादनञ्चास्मासु युज्येते स्म, यतस्तव भ्रातायं मृत ३२
आसीत् पुनर्जीवितश्चाभूत्, हारित आसीत् पुनर्लब्धश्चाभूत्॥ १५॥

धनादिविषयकयीशोरुपदेशः।

अथ स स्वशिष्येभ्योऽपि कथयामास, नरस्य कस्यचिद् धनिनो १६ १
धनाध्यक्ष आसीत्, स तस्य वित्तानि प्रकिरतीति तत्समीपं पर्य्यु-
दितः। ततः स तमाहूय जगाद, किमेतद् यच्छ्रूयते मया २
त्वामधि? त्वं स्वधनाध्यक्षत्वस्य गणनां देहि, यत इतःप्रभृति त्वं
धनाध्यक्षः स्थातुं न शक्ष्यसि। स धनाध्यक्षस्तदा स्वान्तरेऽचिन्तयत्, ३
किं करवाणि? यतः मम स्वामी धनाध्यक्षत्वपदं मत्तोऽपहरति।
खनितुं मम बलं नास्ति, भिक्षितुं लज्जे। किं कर्त्तव्यं तन्मया बुद्धं, ४
जना यथाध्यक्षत्वाच्च्यावितं मां स्वगृहेषु गृह्णीयुः। ततः स स्वप्र- ५
भोरेकैकमधमर्णमाहूय प्रथमं पप्रच्छ, त्वं मम स्वामिनः कति
धारयसि? स जगाद, तैलस्य शतं कुड्वः। ततः स तमादिशत्, तव ६
पत्रमादायोपविश्य च तूर्णं पञ्चाशतं लिख। ततः परं सोऽन्यमेकं ७
पप्रच्छ, त्वञ्च कति धारयसि? सोऽब्रवीत्, गोधूमानां शतं द्रोणान्।
स तमादिशत्, तव पत्रमादायाशीतिं लिख। अनन्तरं स्वामी ८
तमयाथार्थिकं धनाध्यक्षं सुबुद्ध्याचारिणं मत्वा प्रशशंस, यतो दीप्तिः
सन्तानेभ्य एतद्युगस्य सन्तानाः स्वजातिमुद्दिश्य बुद्धिमत्तराः। अह- ९
मपि युष्मान् ब्रवीमि, यूयमयथार्थेन धनेन मित्रलाभं साधयत, तथा
कृते यदा हीनस्वा भविष्यथ, तदा मित्रैरनन्तेष्वावासेषु ग्राहिष्यध्वे।

१० यो लघिष्ठे विश्वस्तः स प्रभूतेऽपि विश्वस्तः। यस्तु लघिष्ठेऽयाथा-
११ र्थिकः स प्रभूतेऽप्ययाथार्थिकः। अतो यूयमयथार्थे धने चेदविश्वस्ता
१२ जाताः कस्तर्हि विश्वस्य युष्मासु परमार्थं निक्षेप्स्यति? परकीये च
चेन्न विश्वस्ता जाताः कस्तर्हि युष्मदीयं युष्मभ्यं दास्यति? द्वयोः
१३ स्वामिनो दास्यं कर्त्तुं केनापि दासेन न शक्यं। यतः स एकतरं
द्विषन्नन्यतरस्मिन् प्रेष्यते, न चेदेकतरस्मिन्नासज्जमानोऽन्यतरमवमं-
स्यते। ईश्वरस्य धनस्य चोभयो र्दास्यं कर्त्तुं युष्माभि र्न शक्यते।
१४ धनलोभिनः फरीशिनोऽपि सर्व्वाण्येतान्यशृण्वन् तमुपाहसंश्च,
स तु तानवादीत्, यूयमेव मनुष्याणां समक्षं स्वान् धार्म्मिकीकुरुथ,
१५ ईश्वरस्तु युष्माकं चित्तानि जानाति। यतो मनुष्येषु यदुच्चमीश्वरस्य
१६ समक्षं तज्जघन्यं। व्यवस्था भाववादिनश्च योहनपर्य्यन्ताः। तं काल-
मारभ्येश्वरराज्यस्य सुसंवादो घोष्यते, नराश्च प्रत्येकं व्यग्रत्वेन तत्
१७ प्रविशन्ति। व्यवस्थाया एकस्य बिन्दोरपायाद् द्यावापृथिव्योरपायः
१८ सुसाध्यः। यः कश्चित् स्वभार्य्यां त्यक्त्वान्यामुद्वहति स व्यभिचारं करोति,
यश्च कश्चित् स्वामित्यक्तां स्त्रियमुद्वहति स व्यभिचारं करोति।
१९ धनाढ्यः कश्चिन्नर आसीत्, स कृष्णलोहितानि सूक्ष्माणि च
२० वसनानि पर्य्यधत्त प्रत्यहञ्च सप्रतापं सुखभोगमसेवत। अपि च
लासाराभिध एको दरिद्र आसीत्, स तस्य गोपुरान्तिकं शयानो
२१ व्रणयुक्तश्च तस्य धनिनो भोज्यमञ्चाद् भ्रंशन्तीभि र्भक्ष्यफेलीभि-
स्तृप्तुमैच्छत्। प्रत्युत श्वानोऽप्यागत्य तस्य व्रणान्यलिहन्।
२२ ततः परं स दरिद्रो ममार स्वर्गदूतैश्चोह्यमानोऽब्राहामस्य क्रोडं
२३ निन्ये। स धनवानपि ममार शवागारे निदधे च। पाताले तूर्द्ध्वं
निरीक्ष्य यन्त्रणास्थाने विद्यमानो दूरादब्राहामं तत्क्रोडस्थं लासा-
२४ रञ्च ददर्श। ततः स प्रोच्चैराह, भो पितरब्राहाम्, मामनुकम्पतां

लासारश्च प्रहिणोतु स यथाङ्गुल्या अग्रभागं तोये मज्जयित्वा मम
जिह्वां शीतलीकुर्य्यात्, यतोऽहमग्निशिखायां यातनां सहे। २५
अब्राहामस्त्वब्रवीत्, वत्स, स्मर यत् त्वं स्वजीवने तव सुखमभजः,
लासारश्च तथैव दुःखमभजत्। इदानीन्तु तस्मात् सान्त्वना तव च
यातना जायते। सर्व्वमेतदपहाय त्वस्माकं युष्माकञ्चान्तराले २६
वृहच्छून्यस्थलं तथा दृढीकृतं, यथास्मात् स्थानाद् युष्मदन्तिकं
जिगमिषवस्तरितुं न शक्नुयुः, नामुष्मात् स्थानादागन्तुकामा वास्म-
दन्तिकं तरेयुः। स तदा जगाद, भवन्तं प्रार्थये, पितः, भवांस्तं
मत्पितृगृहं प्रहिणोतु, यतो मम पञ्च भ्रातरः सन्ति, तेऽपि यथेदं २७
यातनास्थानं नागच्छेयुस्तथा स तेभ्यो दृढं साक्ष्यं ददातु। अब्राहा- २८
मस्तमाह, मोशि भाववादिनश्च तेषां (शिक्षकाः) सन्ति, तेषां २९
वचांसि तैः श्रूयन्तां। स उवाच, न तथा, पितरब्राहाम। प्रत्युत ३०
मृतानां समीपतो यदि कश्चित् तेषां समीपं गच्छेत्, तर्हि ते
मनांसि परावर्त्तयिष्यन्ति। स तु तमवादीत्, ते यदि मोशे ३१
भाववादिनाञ्च वचांसि न शृण्वन्ति, तर्हि मृतानां मध्यादुत्थितेऽपि
कस्मिंश्चिन्न प्रत्येष्यन्ति॥ १६॥

क्षमाद्यधि उपदेशः।

अथ स स्वशिष्यानब्रवीत्, स्खलनहेतवो यन्न भविष्यन्ति १७ १
तदसम्भवं, ते तु येनायान्ति स सन्तापपात्रं। तत्कण्ठे वृहत्पेषणी- २
बन्धनं समुद्रे च तस्य निक्षेपणं श्रेयः, न चैतेषां क्षुद्राणामेकस्य
स्खालनं। यूयमात्मार्थं सावधानास्तिष्ठत। तव भ्राता यदि त्वद्वि- ३
रुद्धं पापं करोति, तर्हि तं भर्त्सय, यदि त्वनुतप्यते तर्हि तस्य
क्षमस्व। एकस्मिन् दिने सप्तकृत्वस्त्वद्विरुद्धं पापं कृत्वा यदि स ४
एकस्मिन् दिने सप्तकृत्वस्त्वां प्रति परावृत्य वदति, अनुतप्य इति,

५ तर्हि तस्य चमिष्यसे। प्रेरितास्तदा प्रभुमूचुः, अस्माकं विश्वासं
६ वर्द्धयतु। प्रभुस्तु तान् जगाद, सति विश्वासे युष्माकं सर्षपबीजमिते
यूयं चेदेनमुडुम्बरवृचं वदथ, त्वमुन्मूलितो भूत्वा समुद्रे रोपितो
भवेति, तर्हि स युष्माकमाज्ञां ग्रहीष्यति।
७ युष्माकं कस्यचिद्धलधरः पशुचारको वा दासो यदा चेत्राद्
गृहं प्रविशति, तदा स किं तं वदिष्यति, इदानीमेवोपागत्य
८ भोजनार्थमुपविशेति। स तं किं नेदं वदिष्यति, ममापराह्णिका-
हारार्थं सर्व्वं सज्जीकुरु, यावच्चाहमश्नामि पिबामि च तावद्
९ बद्धकटिः स्थितो मां परिचर, ततः परं त्वमप्यशिष्यसि पास्यसि
चेति। स दास आदिष्टानि कर्म्माणि कृतवानितिहेतोः स किं तं
१० प्रति कृतज्ञतां स्वीकरिष्यति? मन्येऽहं न तथा। तथैव यूयमपि
यद्यदादिष्टास्तत्समापनात् परं ब्रूत, अनुपयोगिनो दासा वयं,
अस्माभि र्यद्यद् चणशोध इव कर्त्तव्यमासीत् तदेवाकारि।

यीशोर्दशकुष्ठिनां स्वास्थ्यकरणम्।

११ अथ स यदा यिरूशालेममगच्छत् तदा शमरियागालीलयो
१२ र्मध्येनागच्छत्। प्रविष्टे च तेन कस्मिंश्चिद् ग्रामे कुष्ठिनो दश
१३ नरास्तस्य सम्मुखीबभूवुः, ते दूरे तिष्ठन्तः प्रोच्चैरवदन्, यीशो नाथ,
१४ अस्माननुकम्पतां। तद् दृष्ट्वा स तानब्रवीत्, यूयं गत्वा याजकेभ्यः
१५ स्वान् दर्शयत। ततस्तेषां याचाकाले ते शूचीभूताः। तेषामेक-
१६ स्तदात्मानं प्राप्तारोग्यं दृष्ट्वोच्चरवेणेश्वरं स्तुवन् प्रत्यावृत्ते तस्य
चरणयोरधोमुखं प्रणिपत्य च तं प्रति कृतज्ञतामङ्गीचकार। स
१७ नरः शमरीयः। यीशुस्तदा प्रतिभाषमाणो जगाद, किं न दश ते
१८ शुचीकृताः? ते नव तर्हि कुत्र? ईश्वरं स्तोतुं प्रत्यावृत्ता अस्माद्

विजातीयादन्ये केऽपि किं न लब्धिताः ? ततः परं स तमुवाच, १९
उत्थाय याहि, तव विश्वासस्त्वां तारयामास।

यीशोर्नानाविधशिक्षा।

ईश्वरराज्ये आगन्तुमुद्दिश्य शिक्षा।

अथेश्वरस्य राज्यं कदायातीति फरीशिभिः पृष्टः स प्रतिभाष- २०
माणस्तानवादीत्, नायातीश्वरस्य राज्यं प्रत्यक्षतया सद्दितं, जनाश्च
न वदिष्यन्ति, पश्यात्रेति, पश्यामुत्रेति वा। यतः पश्यत, ईश्वरस्य २१
राज्यं युष्मदन्तःस्थम्।

अथ स स्वशिष्यानुवाच, आयाति स कालो यदा यूयं मनुष्य- २२
पुत्रस्य दिनानामेकं दिदृक्षिष्यथ न तु द्रक्ष्यथ। जनाश्च युष्मान् २३
वदिष्यन्ति, पश्यात्रेति, पश्यामुत्रेति वा। मैवापगच्छत, मैवानुधावत
वा। यतः प्रकाशमाना विद्युद् यथाकाशस्याधोदेशमारभ्याकाशस्या- २४
धोदेशं यावद् विराजते, तथैव मनुष्यपुत्रोऽपि स्वदिवसे प्रतिभा-
स्यति। अपि तु प्रथमं तेन बहु दुःखं भोक्तव्यम्, एतत्कालिकै २५
र्मनुष्यैश्च तस्य निराकरणमवश्यम्भावि। अपि च नोहस्य काले यथा २६
सम्भूतं, तथैव मनुष्यपुत्रस्य कालेऽपि सम्भविष्यति। पोते नोहस्य २७
प्रवेशदिनं यावन्मनुष्या आश्नन्नपिबन्नुदवहन्नुदौह्यन्त च, तदा तु
वन्योपस्थाय सर्व्वान् नाशयामास। तथैव लोटस्य कालेऽपि सम्भूतं। २८
मनुष्या आश्नन्नपिबन्नक्रीणन् व्यक्रीणन्नरोपयन् गृहनिर्म्माणमकुर्व्वंश्च।
यस्मिन् दिने तु लोटः सदोमान्निर्ययौ, तस्मिन्नाकाशाद् वर्षन्तौ २९
वह्निगन्धकौ सर्व्वान् नाशयामासतुः। मनुष्यपुत्रो यस्मिन् दिने ३०
प्रकाशिष्यते, तस्मिंस्तथैव भविष्यति। तस्मिन् दिने यो गृहपृष्ठे ३१
विद्यते तस्य द्रव्येषु गृहमध्ये स्थितेषु मावरोहतु स तान्यादातुं।
तथैव यः क्षेत्रे विद्यते स मा परावर्त्ततां। लोटस्य भार्य्यां स्मरत। ३२

३३ यः कश्चित् स्वप्राणान् रक्षितुं यतिष्यते स तान् हारयिष्यति, यश्च
३४ तान् हारयिष्यति स तान् जीवयिष्यति। युष्मानहं ब्रवीमि, तस्यां
रात्रावेकस्यां खट्वायां शयानयो र्द्वयो र्नरयोरेकतरो ग्राहीष्यते-
३५ ऽन्यतरः परित्यक्ष्यते। योषितो र्द्वयोरेकत्र पेषणीनियुक्तयोरेकतरा
३६ ग्राहीष्यतेऽन्यतरा परित्यक्ष्यते। नरयो र्द्वयोः क्षेत्रे स्थितयोरेक-
३७ तरो ग्राहीष्यतेऽन्यतरः परित्यक्ष्यते। तदा ते प्रतिभाषमाणास्तं
पप्रच्छुः, कुत्र, प्रभो? स तानवादीत्, यत्र कुणपं तत्रैव गृध्राः
समागमिष्यन्ति ॥ १७॥

प्रार्थनाविषयकशिक्षा।

१८ १ अथ सर्व्वदा प्रार्थना कर्त्तव्या, निरुत्साहः परिहर्त्तव्य एतदधि
२ स तेभ्यो दृष्टान्तकथामपि कथयन् बभाषे, कस्मिंश्चिन्नगरे प्राड्वि-
वाक एक आसीत्, स ईश्वरान्नाबिभेत्, मनुष्यमपि नामानयत्।
३ तस्मिन्नेव नगरे विधवा काचिदासीत्, सा तस्य समीपमुपस्थाय
४ तमवदत्, अन्यायं प्रतीकृत्य मत्प्रतिपक्षान्मामुद्धर। अत्र स दीर्घ-
कालमसम्मतोऽतिष्ठत्। ततः परन्तु मनस्यवदत्, यद्यपीश्वरान्न
५ बिभेमि मनुष्यमपि न मानयामि, तथापीयं विधवा मां क्लिश्ना-
तीतिहेतोरन्यायं प्रतीकृत्येमामुद्धरिष्यामि नोचेदियं चरममागत्य
६ मुष्ट्याघातेन मां कलङ्कयिष्यति। प्रभुः पुन र्बभाषे, तेनायाथा-
७ र्थिकेन प्राड्विवाकेन यदुच्यते तद् युष्माभिः श्रूयतां। ईश्वरेण तर्हि
किं नोद्धारिष्यन्तेऽन्यायं प्रतीकृत्य तस्यात्मवरितनरा ये दिवारात्रं
तमुद्दिश्य क्रोशन्ति? स किमुदासीनत्वात् तान् प्रति सहनशीलः?
८ युष्मानहं ब्रवीमि, स सत्वरमन्यायं प्रतीकृत्य तानुद्धरिष्यति। प्रत्युत
मनुष्यपुत्र आगमनकाले किं मेदिन्यां विश्वासमवाप्स्यति?

पापक्षमाविषयकशिक्षा।

अथ धार्म्मिका वयमित्यात्मनिष्ठा येऽपरान् तुच्छीकुर्व्वन्ति, ९
तादृशान् कांश्चिन्मनुष्यानुद्दिश्य स दृष्टान्तकथामिमां कथयामास,
नरौ द्वौ प्रार्थयितुं धर्म्मधाम जग्मतुः। तयोरेकतरः फरीशी, अन्य- १०
तरः शुल्कादायी। फरीशी स्थित्वा स्वगतमित्थं प्रार्थयत, भो ११
ईश्वर, त्वां स्तौमि, यतो नाहमपरे मनुष्या इव परस्वापहारी
अन्यायाचारी व्यभिचारी वा इव शुल्कादायी वा। १२ प्रत्येकसप्ताहमहं वारद्वयम् उपवसामि मदीयसर्व्वायस्य
दशमांशं ददामि च। स शुल्कादायी तु दूरे तिष्ठन् स्वर्गं प्रत्यूर्द्ध्वं १३
निरीक्षितुमपि नैच्छन् अपि तु वक्षःस्थलमाहत्य व्याहरत्, भो
ईश्वर, प्रसीद मे पापिनः। युष्मानहं ब्रवीमि, अमुमपहायेतरो १४
धार्म्मिकीकृतः स्वगृहमवततार। यतो यः कश्चिदात्मानमुन्नीकरोति
स नीचीकारिष्यते, यस्त्वात्मानं नीचीकरोति स उच्चीकारिष्यते।

शिशूनामधि शिक्षा।

अथ शिशवोऽपि तस्यान्तिकमानिन्यिरे यत् तेन स्पृश्येरन्। १५
तद् दृष्ट्वा शिष्यास्तानभर्त्सयन्। यीशुस्तु तान् समीपमाहूय बभाषे, १६
मत्समीपमागमिष्यतः शिशूननुमन्यध्वं मा वारयत, यत ईश्वरस्य
राज्यमीदृशानामेव। युष्मानहं सत्यं ब्रवीमि, यः कश्चिन्न शिशुरि- १७
वेश्वरस्य राज्यं गृह्णाति स तत्र नैव प्रवेक्ष्यति।

धनासक्तिविषयकशिक्षा।

अथ कश्चिदध्यक्षस्तं पप्रच्छ, भो सद्गुरो, किं कृत्वाहमनन्तजी- १८
वनस्याधिकारी भविष्यामि? यीशुस्तु तमब्रवीत्, किमर्थं मां सन्तं १९
वदसि? सत् कोऽप्यन्यो नास्ति, केवल ईश्वरः। त्वमाज्ञा जानासि, २०
व्यभिचारं मा कुरु, नरहत्यां मा कुरु, चौर्य्यं मा कुरु, मृषासाक्ष्यं
मा देहि, स्वपितरं स्वमातरञ्च सम्मन्यस्व। स जगाद, पालितं मया २१

२२ सर्व्वमेतदाबाल्यात्। तच्छ्रुत्वा यीशुस्तमब्रवीत्, अधुनापि तवासम्पूर्णं
किञ्चिदस्ति। सर्व्वं तव यद्यदस्ति देहि विक्रीय दरिद्रेभ्यः, तथा
२३ कृते स्वर्गे तव धनं स्थास्यति, ततः परमागत्य मामनुव्रज। एतच्छ्रुत्वा
२४ स शोकार्त्तो बभूव, यतः सोऽतीव धनवानासीत्। यीशुस्तु तं
शोकार्त्तीभूतं दृष्ट्वा बभाषे, वित्तानां स्वामिनः कीदृगायासेनेश्वरस्य
२५ राज्यं प्रवेक्ष्यन्ति। सुसाध्यं हि धनवत ईश्वरराज्यप्रवेशात् सूची-
२६ च्छिद्रेणोष्ट्रगमनं। श्रोतारस्तदा जगदुः, कस्तर्हि तरितुं शक्नोति?
२७ सोऽब्रवीत्, मनुष्याणां यद्यदसाध्यं तदीश्वरस्य साध्यं। पितरस्तदा
२८ व्याजहार, पश्यतु, वयं सर्व्वं त्यक्त्वा भवन्तमनुव्रजितवन्तः। स तान्
२९ जगाद, युष्मानहं सत्यं ब्रवीमि, ईश्वरराज्यस्य कृते गृहं जनकौ वा
भ्रातॄन् वा जायां वा सन्तानान् वा त्यक्त्वा य इहकाले तदृक्गुणम्
३० आगामियुगे चानन्तं जीवनं न लप्स्यते तादृशः कोऽपि नास्ति।

३१ अथ स द्वादशशिष्यान् स्वान्तिकमानीयाब्रवीत्, पश्यत वयं
यिरूशालेमं गच्छामः, भाववादिभिश्च मनुष्यपुत्रमधि यद्यल्लिखितं
३२ तत् सर्व्वं सेत्स्यति। यतः स परजातीयेभ्यः समर्पयिष्यत उपहा-
३३ सिष्यते न्यक्कारिष्यतेऽवनिष्ठीविष्यते च, ते च कशाभिराहत्य तं
३४ घातयिष्यन्ति, तृतीये दिने च स पुनरुत्थास्यतीति। तैस्त्वेतासां
कथानां किमपि नाबोधि तद् वचनञ्च तेभ्यस्तिरोहितमासीत्,
यद्यदकथ्यत च तत् ते नाज्ञायि।

यिरूशालेमे यीशोः शेषगमनम्।

अन्धाय नेत्रदानम्।

३५ अथ तस्मिन् यिरीहोः समीपम् उपस्थिते कश्चिदन्धो भिक्ष-
३६ माणः पथपार्श्व उपविष्ट आसीत्। स सन्निध्या गच्छतो जननिवहस्य
३७ शब्दं श्रुत्वा पप्रच्छ: किं भूतमिति। जनास्तमूचुः, नासरतीयो

यीशुरनेन मार्गेण गच्छति। ततः स क्रोशन् जगाद, भो दायूदस्य ३८
पुत्र यीशो, मामनुकम्पतां। अनेनाग्रगामिनस्तं तर्जयन्तोऽवादिषुः ३९
मौनी भव, स तु बहुगुणाधिकमुच्चैरवदत्, भो दायूदस्य पुत्र,
मामनुकम्पतां। यीशुस्तदा स्थित्वा स्वसमीपं तस्यानयनमादिदेश। ४०
ततः परं तस्मिन्नुपागते स तं पप्रच्छ, त्वदर्थं मया कर्त्तव्यं किं ४१
वाञ्छसि? स जगाद, प्रभो, दृक्शक्तिं यथा प्राप्नुयां। ततो ४२
यीशुस्तमाह, दृक्शक्तिं गृहाण, तव विश्वासस्त्वां तारयामास। स ४३
तत्क्षणं दृक्शक्तिं लेभे, ईश्वरञ्च प्रशंसंस्तमनुजगाम। कृत्स्नो जननि-
वहश्च तद् दृष्ट्वेश्वरं तुष्टुवे॥ १८॥

### सक्केयस्य मनःपरिवर्त्तनम्।

ततः परं स यिरीहूं प्रविश्य तन्मध्येनागच्छत्। पश्य च १९ १
सक्केयनामा कश्चिन्नरस्तत्रासीत्। स मुख्यः शुल्कादायी धनी २
चासीत्। को यीशुस्तन्निश्चेतुमिच्छन् स तं द्रष्टुम् अयतत जनता- ३
कारणात्तु नाशक्नोत्, यतः स ह्रस्वकाय आसीत्। ततः सोऽग्रे ४
धावित्वा तद्दिदृक्षयोडुम्बरवृक्षमारुरोह, यतस्तत्रैव तेन गन्तव्यं। ततः ५
परं यीशुस्तत् स्थानं प्राप्योर्द्ध्वदृष्टिं कृत्वा तं निरीक्ष्य जगाद, सक्केय,
शीघ्रमवतर, यतस्तव गृहे मयाद्य वस्तव्यं। स तदा त्वरयावरुह्य ६
सानन्दं तं जग्राह। तद् दृष्ट्वा सर्व्वेऽसन्तुष्य प्राहुः, स रात्रियाप- ७
नार्थं पापिष्ठनरस्य गृहं प्रविष्टः। सक्केयस्तु स्थित्वा प्रभुमब्रवीत्, ८
पश्यतु प्रभो, मदीयसर्व्वस्वस्यार्द्धमहं दरिद्रेभ्यो वितरामि, यदि च
मृषादोषमारोप्य कस्यचित् किमपि मयापहृतं, तर्हि तच्चतुर्गुणं
प्रत्यर्पयामि। यीशुस्तदा तमाह, अद्य गृहेऽस्मिन् परित्राणं वर्त्तते, ९
यतोऽयमप्यब्राहामस्य सन्तानः। मनुष्यपुत्रो हि हारितमन्वेषितुं १०
तारयितुञ्चागतः।

दशस्वर्णमुद्राया दृष्टान्तः।

११ तेष्वेतच्छृण्वत्सु स दृष्टान्तकथामपि कथयामास, यतः स यिरू-
शालेमस्य सन्निधावासीत् तैश्चान्वमीयत यदीश्वरस्य राज्यं सहसा
१२ प्रकाशिष्यते। अतः स व्याजहार, नरः कश्चित् कुलीनो दूरदेशं
१३ प्रतस्थे, स स्वार्थं राजत्वं ग्रहीतुं प्रत्यायातुञ्चैच्छत्। स स्वदासान्
दश समाहूय दश स्वर्णमुद्रास्तेषु समर्प्य च तान् जगाद, ममागमनं
१४ यावद् व्यापारं कुरुतेति। तदीयपुरवासिनस्तु तमद्विषुस्तत्पश्चाच्च
१५ दौत्यं प्रहित्य निवेदयामासुः, नरोऽसौ यदस्माकं राजा भवेत्
तन्नाभिमतमस्माभिः। स तु यदा राजत्वं लब्ध्वा पुनरागमत् तदा
केन व्यापारं कृत्वा किमुपार्जितं तज्जिज्ञासुः स तेषां दासाना-
१६ माह्वानमादिदेश येष्वर्थमर्पितवान्। ततः प्रथम उपस्थाय जगाद,
१७ प्रभो, भवतो मुद्रयापरा दश मुद्रा उपार्जिताः। स तमाह, साधु,
भद्र दास, त्वं क्षोधिष्ठे विश्वस्त आसीस्ततो दशानां नगराणामाधि
१८ पत्यविशिष्टो भव। अनन्तरं द्वितीय आगत्य जगाद, प्रभो, भवतो
१९ मुद्रया पञ्च मुद्रा उपार्जिताः। स तमप्याह, त्वं पञ्चसु नगरेष्वधि-
२० कृतो भव। ततः परमन्य एक आगत्याब्रवीत्, प्रभो, पश्यत्वियं भवतो
२१ मुद्रा। स्वेदहरवस्त्रे निधाय सा मया रक्षिता भवतो भयात्।
यतो भवान् कठोरो नरः, यन्न निहितवांस्तदादत्ते, बीजान्यनुप्त्वा
२२ च शस्यं कृन्तति। स तु तमवादीत्, तव मुखाद् यन्निःसृतं, रे
२३ दुष्ट दास, तेनैव तव विचारं करिष्यामि। त्वयेदं भो अज्ञायि
यदहं कठोरो नरः, न निधाय द्रव्यमाददे, बीजान्यनुप्त्वा च शस्यं
कृन्तामि। कथं तर्हि ममार्थस्त्वया न वणिजां हस्ते निक्षिप्तः? तथा
२४ कृतेऽहमागमनकाले कुसीदेन सार्द्धं तं प्रत्यपत्स्ये। निकटे तिष्ठतो
जनांश्च स उवाच, तां स्वर्णमुद्रामस्मादपहृत्यामुष्मै दत्त यस्य दश

मुद्राः सन्ति। ते प्रोचुः, प्रभो, सन्ति तस्य दश मुद्राः। युष्मानहं २५
ब्रवीमि, यस्य कस्यचिदास्ते तस्मै दायिष्यते, यस्य तु नास्ते तस्य २६
यदस्ति तदपि तस्मादपहारिष्यते। किन्त्वानयतात्र मत्समक्षं घातयत २७
च मम तान् शत्रून् ये स्वेषामुपरि मम राजत्वम् अस्वीकृतवन्तः।

यीशोर्यिरूशालेमे प्रवेशः।

सर्व्वमेतत् कथयित्वा स पुरस्ताद् व्रजन् यिरूशालेमं गन्तुं २८
प्रववृते। यदा च स बैतफगया बैथनियायाश्च निकटे जैतुनाख्य- २९
गिरेः पार्श्व उपातिष्ठत, तदा स्वशिष्याणां द्वौ प्रेषयन्नब्रवीत्, सम्मु- ३०
खस्थममुं ग्रामं गच्छतं, तत्र प्रविश्यैव तादृशमेकं बद्धं गर्द्दभवत्समा-
सादयिष्यथो यस्य पृष्ठे मनुष्यः कोऽपि कदापि नोपविष्टवान्, तं
मुक्त्वानयतं। यदि तु कश्चिद् वां पृच्छति, कुतो मुञ्चथ इति तर्हि ३१
ब्रूतं, अनेन प्रभोः प्रयोजनमस्तीति। ततस्तौ प्रेरितौ गत्वा तेन ३२
यत् कथितं तदनुरूपं प्रापतुः। तौ तु यदा तं गर्द्दभवत्सममुञ्चतां ३३
तदा तत्स्वामिन ऊचुः, कुतो गर्द्दभवत्सं मुञ्चथ? तौ प्राहतुः, अनेन ३४
प्रभोः प्रयोजनमस्ति। ततः परं तौ तं गर्द्दभवत्सं यीशोः समीपं ३५
निन्यतुस्तत्पृष्ठे च स्ववासांसि निक्षिप्य यीशुं तदुपर्य्युपवेशयामासतुः।
तस्य यात्राकाले च जनाः स्ववस्त्राणि मार्गे तस्तरुः। ततः परं ३६
यदा स जैतुनपर्व्वतादवरोहणमार्गस्य सन्निधावुपातिष्ठत, तदा कृत्स्नः ३७
शिष्यनिवहः सानन्दं पूर्व्वदृष्टानां सर्व्वेषां प्रभावसिद्धकर्म्मणां कार-
णादीश्वरस्य स्तवं कीर्त्तयितुमारभ्य बभाषे, धन्यो राजासौ यः प्रभो ३८
र्नाम्नायाति, स्वर्गे शान्तिरूर्द्ध्वलोके च माहात्म्यकीर्त्तनं भूयात्।
जनताया मध्यात् तदा केचित् फरीशिनस्तमवादिषुः, गुरो, ३९
स्वशिष्यान् तर्जयतु। स तु प्रतिभाषमाणस्तान् जगाद, युष्मानहं ४०
ब्रवीमि, अमौ यदि तूष्णीम्भवन्ति, प्रस्तरास्तर्हि प्रक्रोक्ष्यन्ति।

४१ ततः परं स यदा निकटस्थोऽभूत् तदा पुरीं निरीक्ष्य तामु-
४२ द्दिश्य क्रन्दन्नब्रवीत्, यत् तव शान्तिजनकं कथं तन्न त्वयाप्यनुभूतं ?
अस्मिन् त्वदीयदिवस एव कथं नानुभूतं? तत् त्वधुना तव दृष्टितः
४३ प्रच्छन्नं। यत उपस्थास्यन्ति त्वां तानि दिनानि येषु तव शत्रवस्त्व-
४४ त्वरितः प्राकारं रचयित्वा त्वां वेष्टयिष्यन्ति समन्ताद्रोत्स्यन्ति च,
त्वां त्वदन्तःस्थान् तव शिशूंश्च भूमिसात् करिष्यन्ति, त्वन्मध्ये प्रस्तर-
स्योपरि प्रस्तरं नैकमपि शेषयिष्यन्ति च, यतो हेतोस्त्वदीयतत्त्वा-
४५ वलोकनस्य समयस्त्वया नानुभूतः। अथ स धर्म्मधाम प्रविश्य तत्र
४६ क्रयविक्रयकारिणो बहिष्कर्त्तुं प्रववृते, तांश्चाब्रवीत्, लिखितमास्ते,

मद्गृहं यन्नामकीनं तद् भविता प्रार्थनागृहं।

तत्तु युष्माभिरकारि दस्यूनां गह्वरः।

४७ ततः प्रभृति स प्रत्यहं धर्म्मधामन्युपादिशत्। मुख्ययाजकास्तु
४८ शास्त्राध्यापकाः प्रजानां प्रधानाश्च तं नाशयितुमयतन्त, तथापि किं
कर्त्तव्यं तन्निर्णेतुं नाशक्नुवन्, यतः सर्व्वजनस्तदुपदेशश्रवण आसक्त
आसीत्॥ १९॥

यिरूशालेमे यीशोरुपदेशनम्।

यीशोः क्षमताविषयिणी शिक्षा।

२० १ तत्कालस्य कस्मिंश्चिद्दिवसे स यदा धर्म्मधाम्नि जनानशिक्षयत्
सुसंवादमज्ञापयच्च, तदा मुख्ययाजकाः शास्त्राध्यापकाः प्राचीनाश्च
२ तमुपस्थाय जगदुः, अस्मान् वद, केनाधिकारेण करोषि त्वं कर्म्मा-
३ ण्येतानि? को वा तुभ्यं तमधिकारं दत्तवान्? यीशुस्तु प्रतिभाष-
माणस्तानवादीत्, युष्मानहमपि कथामेकां पृच्छामि, मह्यं तदुत्तरं
४ दत्त। योहनस्य स्नापनं किं स्वर्गोत्पन्नमासीदुत मनुष्योत्पन्नं? ते
५ तदा मिथो विचारयन्तोऽवदन्, तत स्वर्गोत्पन्नमित्युक्ते सोऽस्मान्

प्रत्येति, यूयं तर्हि तस्मिन् किमर्थं न विश्वसितवन्तः? तत्तु मनु- ६
ष्योत्पन्नमित्युक्ते सर्व्वजनोऽस्मान् प्रस्तरैराहत्य मारयिष्यति, यतो
योहनो यद् भाववादी तत् सर्व्वै र्दृढं प्रतीयते। तत् ते प्रत्यवदन् ७
तत् कुत उत्पन्नं तन्न जानीमः। यीशुरनेन तानवादीत्, नाहमपि ८
युष्मान् ज्ञापयामि, करोम्यहं सर्व्वमेतत् केनाधिकारेण।

गृहस्वामीकृषकाणां दृष्टान्तः।

ततः स जनेभ्यो दृष्टान्तकथामिमां कथयितुं प्रववृते, नरः ९
कश्चिद् द्राक्षालता रोपयन् द्राक्षोद्यानं चकार, कृषकेषु करदायिषु
तत् समर्प्य च दीर्घकालार्थं देशान्तरं जगाम। फलकाले च कृषका १०
यद् द्राक्षोद्यानोत्पन्नफलानामंशं तस्मै दद्युस्तदर्थं स तेषां समीपं
दासमेकं प्राहिणोत्, कृषकास्तु तं प्रहृत्य रिक्तहस्तं विसस्रुजुः। पुनः ११
सोऽपरमेकं दासं प्राहिणोत्, ते तु तमपि प्रहृत्य न्यक्कृत्य च
रिक्तहस्तं विसस्रुजुः। पुनः स तृतीयमेकं प्रेषयामास, ते तु तमप्य- १२
क्षतैराहत्य बहि र्निचिक्षिपुः। उद्यानस्य स्वामी तदा बभाषे, किं १३
करवाणि? मम प्रियं पुत्रं प्रहेष्यामि, किंस्वित् तं दृष्ट्वा त
आदरिष्यन्ते। कृषकास्तु तं दृष्ट्वा परस्परं तर्कयन्तोऽवदन्, असावु- १४
त्तराधिकारी, समायात, हन्यताममसावस्माभिस्तेन रिक्थमस्माकं १५
भविष्यति। ततः परं स तै र्द्राक्षोद्यानाद् बहि र्निचिक्षिप्तो हतश्च।
तदोद्यानस्य, स्वामी, तान् प्रति किं करिष्यति? स आगत्य तान् १६
कृषकान् संहरिष्यति, द्राक्षोद्यानमन्येषु समर्पयिष्यति च। तच्छ्रुत्वा १७
जना अवदन्, मैवं भवतु। स तु तान् अवलोक्य व्याजहार, किं
तर्ह्येतद् यल्लिखितमास्ते,

गृहनिर्म्मातृभिर्लोकै र्यः पाषाणो निराकृतः।
स एव गृहकोणस्थः प्रमुख्यः प्रस्तरोऽभवत्॥

१८ प्रस्तरे तस्मिन् यः कश्चित् पतिष्यति स खण्डशो भग्नो भविष्यति,
१९ प्रस्तरस्य स यस्मिन् पतिष्यति तं सञ्चूर्णयिष्यति। मुख्ययाजकाः शास्त्रा-
ध्यापकाश्च तस्मिन्नेव दण्डे तस्मिन् हस्तार्पणं कर्त्तुमयतन्त, जनेभ्यस्त्व-
बिभयुः, यतः स तानुद्दिश्यामुं दृष्टान्तं कथितवानिति तैरबोधि ।

### शासनकर्त्तृन् प्रति कर्त्तव्यविषयिणी शिक्षा ।

२० अथ शास्तु र्हस्ते देशाध्यक्षस्याधिकारे च तं समर्पयितुमिच्छवस्ते
समालोच्य वाक्पाशेन यत् तं धरेयुस्तदर्थं कपटधार्म्मिकवेशान्
२१ कतिपयान् प्रणिधीन् प्रेषयामासुः। ते तं पप्रच्छुः, भो गुरो, वयं
जानीमो यद् भवान् ऋजु भाषते उपदिशति च, मुखापेक्षां न
२२ कुरुतेऽपि तु सत्येनेश्वरस्य मार्गं शिक्षयति। अस्माभिः कैसराय
२३ करदानं विधेयं न वेति ? स तु तेषां धूर्त्ततां बुद्ध्वा तान् जगाद,
२४ किमर्थं मां परीक्षध्वे ? मुद्रामेकां दीनाराख्यां मां दर्शयत। अत्र
२५ कस्य मूर्त्ति र्लेखनञ्च भातः ? ते प्रत्यूचुः, कैसरस्य। तदा स
तानब्रवीत्, दत्त तर्हि कैसराय यद्यत् कैसरस्य, दत्त चेश्वराय
२६ यद्यदीश्वरस्य। ततस्ते जनानां समक्षं वाक्पाशेन तं धर्त्तुं नाशक्नुवन्,
तस्य प्रत्युत्तरे विस्मिता मौनीबभूवुश्च ।

### परकालविषयिणी शिक्षा ।

२७ अथ पुनरुत्थानमनङ्गीकुर्व्वाणाः केचित् सद्दूकिनो निकटमागत्य
२८ तं पप्रच्छुः, भो गुरो, मोशिरस्मदर्थं लिखितवान्, कस्यचित् कृत-
दारो भ्राता यदि निःसन्तानो म्रियते, तर्हि तस्य भ्राता तां
२९ जायामुद्वह्य स्वभ्रातु र्वंशमुत्पादयिष्यतीति। वाढं, सप्त भ्रातर
३० आसन्। प्रथमस्य विवाहं कृत्वा निःसन्तानो ममार। द्वितीयस्तदा
३१ तस्य जायां लेभे, सोऽपि निःसन्तानो ममार। ततस्तृतीयस्तां लेभे।
३२ इत्थमेव ते सप्त नराः सन्तानानत्यक्त्वा ममुः। सर्व्वेषां पश्चात् सा

योषिदपि ममार। अतः पुनरुत्थाने सा तेषां कस्य भार्य्या भवेत्? ३३
यतस्ते सप्त तामुदूढवन्तः। यीशुस्तदा तान् प्रत्यवादीत्, एतद्युगस्य ३४
सन्ताना उद्वहन्त्युद्ह्यन्ते च, ये त्वमुष्य युगस्य मृतोत्थानस्य च ३५
भागित्वमर्हन्तीति प्रतिपन्नास्ते नोद्वहन्ति नोद्ह्यन्ते वा, न शक्यं
हि तैः पुन र्मर्त्तुमपि। वास्तवं स्वर्गदूतैस्तुल्यास्त ईश्वरस्य सन्तानाश्च ३६
जाताः, यतस्ते पुनरुत्थानस्य सन्तानाः। मृतास्तु यदुत्थाप्यन्ते तत् ३७
स्तम्बवृत्तान्ते मोशिनापि सूचयाञ्चक्रे, यतस्तेन प्रभुरब्राहामस्येश्वर
इस्हाकस्य चेश्वरो याकोबस्य चेश्वर इत्यभिधीयते। ईश्वरो न ३८
मृतानामपि तु जीवतामीश्वरोऽस्ति, यतस्तस्मै सर्व्वे जीवन्ति। ३९
शास्त्राध्यापकानां केचित् तदा प्रत्यूचुः, भो गुरो, सम्यगुक्तं भवता। ४०
ततः प्रभृति पुनस्तं किमपि प्रष्टुं ते नोत्सेहिरे।

यीशुना शत्रूणां निरुत्तरकरणम्।

स तु तानवादीत्, जनाः ख्रीष्टं कथं दायूदस्य पुत्रं वदन्ति? ४१
गीतग्रन्थे हि स्वयं दायूद इत्थं व्याहरति, ४२

मम प्रभुमिदं वाक्यं बभाषे परमेश्वरः।
त्वच्छत्रून् पादपीठं ते यावन्न हि करोम्यहं। ४३
अवतिष्ठस्व तावत् त्वमासीनो मम दक्षिणे॥

अतएव स दायूदेन प्रभुरित्यभिधीयते, कथं तर्हि स तस्य ४४
पुत्रो भवेत्?

ततः परं स कृत्स्नस्य प्रजावृन्दस्य कर्णगोचरे स्वशिष्यानाह, यूयं ४५
शास्त्राध्यापकेभ्यः सावधाना भवत, रोचयन्ति ते महापरिच्छदे ४६
विहारम्, आकाङ्क्षन्ति च हट्टेष्वभिवन्दनानि समाजगृहेषु श्रेष्ठासनानि
भोज्येषु च श्रेष्ठस्थानानि। ते विधवानां गृहाणि ग्रसन्ति, छलाच्च ४७
सुदीर्घं प्रार्थयन्ते। विचारे ते घोरतरं दण्डं लप्स्यन्ते॥ २०॥

दानशीलताविषयिणी शिक्षा ।

२१ १ अथ स ऊर्द्ध्वदृष्टिं कृत्वा धनागार उपहारान् निक्षिपतो
२ धनिनो ददर्श विधवाञ्चैकां दरिद्रां ददर्श या चोधिष्ठमुद्राद्वयं
३ तत्र न्यक्षेप्सीत् । ततः स उवाच, युष्मानहं सत्यं ब्रवीमि, दरिद्रेयं
४ विधवा सर्व्वेभ्योऽधिकं निक्षिप्तवती, यतः सर्व्वे प्रयोजनातिरिक्तं
किञ्चिदीश्वरोद्देश्योपहारेषु निक्षिप्तवन्तः, इयन्तु प्रयोजनीयस्याभा-
वेऽपि सर्व्वस्वं निक्षिप्तवती, जीविकां कृत्स्नामेव ।

यिरूशालेमस्य विनाशः यीशोः पुनरागमनमधि शिक्षा ।

५ अथ धर्म्मधाम रुचिरैः प्रस्तरैरुत्सृष्टद्रव्यैश्च शोभितमिति कैश्चित्
६ कथिते स व्याजहार, अत्र युष्माभि र्यद्यद्दृश्यते तन्मध्ये यदा प्रस्तरोपरि
प्रस्तर एकोऽप्यनिपातयितव्यो न विहायिष्यते, तादृशानि दिना-
७ न्यायास्यन्ति । ते तदा तं पप्रच्छुः, गुरो, वाढं, कदा तत् सम्भ-
८ विष्यति ? किं वाभिज्ञानं तत्सम्भवकालस्य ? स उवाच, सावधाना-
स्तिष्ठत, मा भ्राम्यत, यतो बहवो मन्नामध्वजिन आगत्य वदिष्यन्त्यहं
९ सः, समयश्च निकटमागत इति । तद्यूयं तान् मानुगच्छत । यदा
च युद्धानामुपप्लवानाञ्च किंवदन्तीं श्रोष्यथ तदा मा त्रस्यत, यत
एतानि प्रथममवश्यम्भावीनि, न त्वापाततः परिणामो भविष्यति ।
१० स तदा तान् जगाद, जाति र्जाते र्विरुद्धं राज्यञ्च राज्यस्य
११ विरुद्धमुत्थास्यति, स्थाने स्थाने च महाभूकम्पा दुर्भिक्षाणि मार्य्यश्च
भविष्यन्ति, गगनाच्च महान्ति भीषणान्यभिज्ञानानि च सम्भवि-
१२ ष्यन्ति । सर्व्वस्मादेतस्मात् प्राक् तु मनुष्या युष्मासु हस्तानर्पयिष्यन्ति
समाजगृहेषु कारासु च निधास्यन्त उपद्रोष्यन्ति च युष्मान् राज्ञां
१३ शास्तॄणाञ्च समक्षं नेतव्यान् मन्नामकारणात् । तत्तु युष्मत्पक्षीयसा-
१४ क्ष्येण परिणतं भविष्यति । तत्तो यूयं मनःस्विदं निश्चिनुत यत्

स्वपक्षवादार्थं युष्माभिः प्राक् न चिन्तयितव्यं। यतो युष्माकं सर्व्वेऽपि १५
विपक्षा यस्य प्रतिकूलवादं प्रतिरोधं वा कर्त्तुं न शक्ष्यन्ति, तादृशं
वक्तृं ज्ञानञ्च मयैव युष्मभ्यं दायिष्येते। यूयन्तु पितृभ्यामपि भ्रातृभि १६
र्ज्ञातिभि र्बन्धुभिश्च समर्पयिष्यध्वे, युष्माकं केचिच्च घानिष्यन्ते। यूयञ्च १७
सर्व्वेषां द्वेषपात्राणि भविष्यथ मन्नामकारणात्। न तु विनंक्ष्यति १८
युष्माकमेकोऽपि शिरोरुहः। स्वधैर्य्येण यूयं स्वप्राणान् अर्जयिष्यथ। १९

यदा तु यिरूशालेमपुरीं पृतनाभिर्वेष्टितां द्रक्ष्यथ, तदा तस्या २०
उच्छित्ति र्निकटमागता तज्जानीत्। तदा यिहूदियानिवासिनः २१
पलाय्य पर्व्वतानाश्रयन्तु मनुष्याश्च पुर्य्या मध्ये वर्त्तमाना निर्गच्छन्तु
ग्रामेषु वर्त्तमानाश्च तां मा प्रविशन्तु। यतो यद्यल्लिखितमास्ते २२
तत्सर्व्वस्य सिद्धये तान्यधर्म्मप्रतीकारस्य दिनानि भविष्यन्ति। भवि- २३
ष्यन्ति च दिनेषु तेषु गर्भिण्यः स्तन्यदायिन्यश्च सन्तापभाजनानि।
यतो मेदिन्यां महादुर्गति र्भविष्यति कोपश्च जातिमिमां प्रति।
जना असिग्रस्ताः पतिष्यन्ति बन्दीकृताः सर्व्वजातिषु (विक्रायिष्यन्ते) २४
च। परजातीनां कालश्च यावदपूर्णः स्थास्यति, तावद् यिरूशालेमं
नित्यं परजातीनां चरणै र्मर्द्दयिष्यते। सूर्य्ये चन्द्रे नक्षत्रेषु चाभि- २५
ज्ञानानि भविष्यन्ति, भूतलेऽपि जातीनां सङ्कोचो व्याकुलानां २६
समुद्रस्य नादचलनयो र्मनुष्येषु च प्राणत्यागिषु भयाद् भूमण्डल-
माक्रमिष्यन्तीनां (विपदां) प्रतीक्षणाच्च, यतो गगनस्य बलानि
विचलिष्यन्ति। तदा च महासामर्थ्यप्रतापाभ्यां सार्द्धं मेघरथेना- २७
गच्छन् मनुष्यपुत्रस्तै र्लक्षयिष्यते। एतत्सम्भवस्यारम्भे तु यूयमूर्द्ध्वी- २८
भूय शिरांस्युच्चीकुरुत, यतो युष्माकं मुक्तिरासन्ना।

पुनः स तेभ्यो दृष्टान्तं कथयामास, उडुम्बराः सर्व्वे वृक्षाश्च २९
युष्माभिरालोच्यन्तां, ते स्पष्टं पल्लवानुत्पादयन्तीति दृष्ट्वा स्वयं ३०

३१ जानीथ यूयमासन्नः ग्रीष्मकाल इति। तथैव यूयमपि यदैतत्सर्व्वस्य
३२ सम्भवं द्रक्ष्यथ ज्ञास्यथ तदा यदीश्वरस्य राज्यं समीपस्थं। युष्मानहं
सत्यं ब्रवीमि, यावत् सर्व्वमेतन्न सम्भवति तावन्न व्यत्येष्यन्ति मानवा
३३ एतत्कालिकाः। द्यावापृथिव्यावत्येष्यतः, मम वाक्यानि तु नैवा-
३४ त्येष्यन्ति। यूयन्तु स्वार्थं सावधाना भवत, नोचेत् युष्मच्चित्तानि
मद्यभारेण मत्ततया जीविकाजन्यचिन्ताभि र्वा जडीभविष्यन्ति,
३५ तथा सति स दिवसः सहसा युष्मानुपस्थास्यति। यतः कूटपाशवत्
३६ स भूतलस्य सर्व्वचासीनानां सर्व्वेषामुपरि वर्त्तिष्यते। अतो यूयं
जाग्रतः स्थित्वा सर्व्वकाले तथा प्रार्थयध्वं यथा विचार इदं निश्ची-
येत यत् सर्व्वाण्येतानि भाविदुःखानि तरितुं मनुष्यपुत्रस्य समक्षं
स्थातुञ्च यूयमर्हथ।

३७ तदा स प्रत्यहं धर्म्मधामन्युपदिशन् दिवसमयापयत्, जैतुना-
३८ ख्यगिरिं निर्गत्य च तत्र रात्रिमयापयत्। प्रत्यूषे च सर्व्वजनो
धर्म्मधाम्नि तस्य वाक्यान्याकर्णयितुं तस्य समीपमागच्छत्॥ २१॥

यीशोः शेषदुःखभोगः मृत्युश्च।

२२ १ किण्वशून्यपूपानां पर्व्व तदासन्नमासीत्, तस्य नामान्तरं
२ पास्खेति। मुख्ययाजकाः शास्त्राध्यापकाश्च यीशो र्व्यापादनस्योपा-
यमगवेषयन्, यतस्ते जनेभ्यो भीता आसन्।

ईष्करियोतीययिहूदा इत्यभिधो नरस्य विश्वासघातित्वम्।

३ अथ शैतानो द्वादशानां श्रेण्यां गणितमीष्करियोतीयाभिधं
४ यिहूदाम् आविवेश। स च मुख्ययाजकानां सेनापतीनाञ्च समीपं
५ गत्वा तेषु तत्समर्पणस्योपायमधि तैः संललाप। ततस्ते हृष्टं गत्वा
६ तस्मै रूप्यं दातुमङ्गीचक्रुः। सोऽपि सम्मतो बभूव, जनताव्यतिरे-
केण तेषु तत्समर्पणार्थमवकाशं प्राप्नुमयतत च।

निस्तारपर्व्वपालनं प्रभोर्भोज्यस्थापनञ्च।

ततः परं निष्किण्वपूपानां दिनमुपस्थिते यदा निस्तारोत्सवीयो ७
मेषो घातयितव्यः। यीशुस्तदा पितरं योहनञ्चेदमादिशन् प्राहि- ८
णोत्, युवां गत्वास्मदर्थं निस्तारोत्सवीयं भोज्यं सज्जीकुरुतं तद्-
स्माभि र्यथा भुज्येत। तौ तं पप्रच्छतुः, भवदिच्छातः कुत्रावाभ्यां ९
सज्जीकर्त्तव्यं? स तावावादीत्, पश्यतं युवयो र्नगरं प्रविष्टयो र्जल- १०
पूर्णं कलसं वहन् कश्चिन्नरो युवत्सम्मुखमुपस्थास्यति, स यद् गृहं
प्रवेक्ष्यति, तदभ्यन्तरं यावद् तमनुगच्छतं, गृहस्वामिनञ्च वदतं, गुरु ११
र्भवन्तं पृच्छति, कुत्र तदतिथिगृहं यत्राहं स्वशिष्यैः सार्द्धं निस्तारो-
त्सवीयं भोज्यं भोक्ष्ये? स तदा वां भूमित उच्चतरामासनैः सज्जितां १२
बृहतीं शालां दर्शयिष्यति। तत्रैवोपकल्पयतं। ततस्तौ गत्वा तेन १३
यत् कथितं तदनुरूपं दृष्ट्वा निस्तारोत्सवीयं भोज्यं सज्जीचक्रतुः।

समये तूपस्थिते स भोक्तुमुपविवेश द्वादश प्रेरिताश्च तेन सार्द्ध- १४
मासन्। स तदा तानुवाच, दृढाकाङ्क्षयेदं मया प्रत्याकाङ्क्षितं १५
यन्मम दुःखभोगात् प्राग् युष्माभिः सार्द्धमिदं निस्तारोत्सवीयं भोज्यं
भुञ्जीय। युष्मानहं ब्रवीमि, तद् यावदीश्वरस्य राज्ये सिद्धं न १६
भविष्यति तावन्मया नेव भोक्ष्यते पुनः। ततः परं स पानपात्रं १७
गृहीत्वा धन्यवादं कृत्वा जगाद, गृह्णीतेतन्मिथो विभजध्वं च। यतो १८
युष्मान् ब्रवीमि, इतः परं यावदीश्वरस्य राज्यं नोपस्थास्यते तावद्
गोस्तनीलतोत्पन्नो रसो मया न पायिष्यते। ततः परं स पूपमा- १९
दाय धन्यवादं कृत्वा च तं भङ्क्त्वा तेभ्यो ददौ बभाषे च, एतन्मम
शरीरं यद् युष्मदर्थं दीयते। मम स्मरणार्थमिदं कुरुत। भोजनात् २०
परञ्च स तथैव पानपात्रमादाय बभाषे, पानपात्रमेतन्मम शोणितेन
स्थापितो नूतनो नियमः, युष्मदर्थं तद् विस्राव्यते।

२१ अपि च पश्यत, मत्समर्पयितु र्हस्तो मया सार्द्धं भोजनमञ्चे
२२ वर्त्तते। यथा निरूपितं यथैव मनुष्यपुत्रः प्रयाति, नरेण येन तु
२३ स समर्प्यते स सन्तापपात्रं। ततस्तेषां कस्तत् करिष्यत्येतदधि ते
मिथो विचारयितुमारेभिरे।
२४ पुनस्तेषां को महान् मान्यः, एतदधि तेषु वादानुवाद उत्पेदे।
२५ स तु तान् जगाद, परजातीयानां राजानस्तेषामुपरि प्रभुत्वं कुर्वते,
२६ तेषां कर्त्तृत्वकारिणश्च हितकरा इत्यभिधीयन्ते। यूयन्त्वीदृग्भावा
२७ मा भवत। प्रत्युत युष्मन्मध्ये यो महान् स कनिष्ठ इव भवतु, यश्च
२८ नायकः स परिचारक इव भवतु। कतरो हि महान्, भोज्ये य
आसीनोऽस्त्यथवा यः परिचरति? किं न स य आसीनोऽस्ति?
२९ युष्माकं मध्ये त्वहं परिचारक इव वर्त्ते। मत्परीक्षासु तु यूयं
स्थिरभावेन मया सार्द्धमवस्थितास्ततो यथा मम पिता मह्यं दाय-
३० वद् राज्यं दातुमङ्गीकृतवान्, तथाहं युष्मभ्यं दायवदिममधिकारं
दातुमङ्गीकरोमि, यन्मम राज्ये यूयं मया सार्द्धं मम भोजनमञ्चे
भोक्ष्यध्वे पास्यथ च, सिंहासनेष्वासीना इस्रायेलस्य द्वादशानां
वंशानां विचारं करिष्यथ च।
३१ ततः परं प्रभु र्बभाषे, शिमोन, शिमोन, पश्य, शैतानस्तित-
३२ उना शस्यमिव चालयिष्यन् युष्मान् लब्धुं ययाचे, अहन्तु त्वदर्थं
तथा प्रार्थितवान् यथा तव विश्वासो न विलुप्येत। त्वमपि स्वसमये
३३ प्रत्यावृत्तस्तव भ्रातृन् सुस्थिरीकुरु। स तु तमाह, प्रभो, भवता
३४ सार्द्धमहं कारामपि मृत्युमपि च गन्तुमुद्यतोऽस्मि। स उवाच,
पित्र, त्वामहं ब्रवीमि, त्वं यन्मां जानासि तत् त्रिकृत्वो यावन्नान-
ङ्गीकरिष्यसि तावत् कुक्कुटोऽद्य न रविष्यति।
३५ ततः परं स तानुवाच, यदाहं युष्मान् मुद्राधारं चर्म्मसम्पुटक-

सुपानहौ च विना प्राहिणवं, तदा युष्माकं किं कस्याप्यभावो
जातः? ते प्रत्यूचुः, न जातः। स पुनस्तानवादीत्, अधुना तु यस्य ३६
मुद्राधारोऽस्ति स तं गृह्लातु चेलसम्पुटकञ्च तथा। यस्य तु नास्ति ३७
स स्ववस्त्रं विक्रीणालसिञ्च क्रीणातु। यतोऽहं युष्मान् ब्रवीमि,
मामध्येतेनापि सिद्धेन भवितव्यं यल्लिखितमास्ते,

अधर्म्माचारिणां मध्ये सोऽप्येको गणितोऽभवत्॥

यतो मामधि यद्यन्निरूपितं तत्परिणामः सिध्यति। तेऽवादिषुः, ३८
प्रभो, पश्यत्वत्र द्वावसी विद्येते। स तानब्रवीत्, तत् पर्य्याप्तम्।

गेत्शिमान्युद्याने यीशोर्मर्म्मान्तिकदुःखम्।

ततः परं स निर्गत्य स्वरीत्यनुसारेण जैतुनपर्व्वतं ययौ तच्छि- ३९
ष्याश्च तमनुजग्मुः। गन्तव्यं स्थानं प्राप्तश्च स तानवादीत्, यूयं तथा
प्रार्थयध्वं यथा परीक्षां मा प्रविशेत। अनन्तरं स प्रायेण प्रस्तरक्षेप- ४०
स्थानमन्तरं कुर्व्वंस्तेभ्यः पृथग् बभूव जानुनी पातयित्वा चेदं भाष- ४१
माणः प्रार्थयाञ्चक्रे, पितः पानपात्रमिदं मत्तोऽपसारयितुं यदि तव ४२
मति र्भवेत्! तथापि न मम वाञ्छापि तु तवैव वाञ्छा सिध्यतु।
तदा स्वर्गात् तस्मै बलदाता दूत एकस्तस्मै दर्शनं ददौ। स च ४३
प्राणपणेन चेष्टमान एकाग्रतरं प्रार्थयत। तस्य स्वेदश्च बभूव भूमौ ४४
पतद्भिः शोणितविन्दुभिः सदृशः। ततः परं स प्रार्थनात उत्थाय ४५
शिष्याणां समीपं गत्वा तान् शोकान्निद्राणान् ददर्श बभाषे च, किमर्थं
निद्राथ? उत्थाय तथा प्रार्थयध्वं यथा परीक्षां न प्रविशेत। ४६

यीशोः शत्रुहस्ते समर्पणम्।

स यदैतदभाषत, पश्य तदा जनतोपतस्थे, तदग्रे च द्वादशा- ४७
नामेकोऽर्थतो यिहूदा इत्यभिधो नरोऽव्रजत्, यीशुं चुम्बितुञ्च तद-

४८ न्तिकमाजगाम। यीशुस्तु तमाह, रे यिहूदा, चुम्बनेन किं मनुष्यपुत्रं
४९ शत्रुषु समर्पयसि? तदा यद् भवितव्यं तत्सङ्गिभिः कैश्चित् तद् दृष्ट्वा
५० स पृष्टः, प्रभो, अस्माभिः किं कृपाणाघातः कर्त्तव्यः ? तेषामेकस्य
महायाजकस्य दासमाहत्य तस्य दक्षिणं कर्णमवचिच्छेद। यीशुस्तु
५१ प्रत्युवाच, एतद् यावन् मामनुजानीत। इत्युक्त्वा स तस्य कर्णं स्पृष्ट्वा
५२ तं निरामयं चकार। अनन्तरं यीशुः स्वसमीपमभ्यागतान् मुख्य-
याजकान् धर्म्मधामरक्षकान् सेनापतीन् प्राचीनांश्च जगाद, दस्युं
धरिष्यन्त इव यूयं किमसीन् यष्टींश्चादायागताः? अहन्तु प्रत्यहं
५३ धर्म्मधाम्नि युष्माभिः सार्द्धमासं, तदा यूयं मद्विरुद्धं हस्तान् न
प्रासारयत। अपि त्वयं युष्माकं समयोऽन्धकारस्य चाधिपत्यम्।

पितरेण यीशुः त्रिकृत्वोऽस्वीकृतः।

५४ ते तु तं धृत्वापनीय महायाजकस्य गृहं प्रवेशयामासुः, पितरश्च
५५ दूरात् तमन्वगच्छत्। तत्र प्राङ्गणस्य मध्ये जनेषु वह्निं प्रज्वाल्यै-
५६ कत्रोपविष्टेषु पितरस्तेषां मध्य उपविवेश। दासी काचित् तदा तमा-
लोकस्य पुरस्तादुपविष्टं निरीक्ष्य तं प्रत्येकदृष्टिं कुर्व्वन्ती व्याहार्षीत्,
५७ असावपि तेन सार्द्धमासीदिति। स त्वनङ्गीकुर्व्वन्नब्रवीत्, नारि, तं
५८ न जानामि। क्षणात् परमन्यः कश्चित् तं दृष्ट्वा जगाद, त्वमपि
५९ तेषामेक इति। पितरस्तूवाच, नर, नाहमस्मि। ततः परं व्यतीतायां
प्रायेणैकस्यां घटिकायामपरः कश्चिद् दृढतरं व्याहार्षीत्, नूनमसा-
वपि तेन सार्द्धमासीत्, असौ हि गालीलीय इति। पितरस्त्ववादीत्,
६० नर, न जाने त्वया यदुच्यते। तस्मिन्नित्थं भाषमाणे सहसा कुक्कुटो
ररास, प्रभुश्च मुखं परावर्त्त्य पितरं समालोकयामास। पितरस्तदास्मा-
६१ र्षीत् प्रभोस्तद् वाक्यं यत् स तेनोक्तः, यथा, कुक्कुटरावात् प्राक् त्वं
६२ त्रिकृत्वो मां प्रत्याख्यास्यसीति। ततः पितरो बहिर्गत्वा तीव्रं ररोद।

याजकदेशाध्यक्षसमक्षं यीशोर्विचारः।

अथ यीशो रक्षणे नियुक्ता नरा उपहसितुं प्रवृत्तास्तं प्राहरन् ६३
वस्त्रेण तस्य शिर आच्छाद्य चास्यमताडयन् तमपृच्छंश्च, कस्त्वां ६४
ताडितवान्? भावोक्त्या तद् वद। एतदन्यान्यपि निन्दासूचकवचांसि ६५
बहूनि तं प्रति तैरूचिरे।

जाते पुन र्दिवसे जनानां प्राचीनवर्गो मुख्ययाजकाः शास्ता- ६६
ध्यापकाश्च समागत्य स्वीयसभामानाय्य तं जगदुः, त्वं यदि ख्रीष्ट- ६७
स्तर्ह्यस्मान् वद। स तु तानुवाच, मयोक्ता अपि यूयं न विश्वसिष्यथ, ६८
पृष्टाश्चापि मां न प्रतिवदिष्यथ नापि वा मोचयिष्यथ। इतः प्रभृति ६९
मनुष्यपुत्र ईश्वरस्य प्रभावस्य दक्षिण आसीनः स्थास्यति। अनेन सर्व्वे ७०
व्याहार्षुः, त्वं तर्हि किमीश्वरस्य पुत्रः? स तानवादीत्, यूयं (तथ्यं)
व्याहरथ, यतोऽहं सोऽस्मि। तदा ते प्राहुः, साक्ष्येणाधिकेनास्माकं ७१
किं प्रयोजनं? वयमेव तस्य मुखान्निर्गतं वाक्यं श्रुतवन्तः॥ २२॥

ततः परं तेषां कृत्स्नो निकर उत्थाय तं पीलातस्य समी- २३ १
पमनैषीत् तस्य विरुद्धञ्च तेऽभियोगं कुर्व्वन्तो भाषितुमारेभिरे, २
लक्षितोऽयमस्माभि र्यद् राजा ख्रीष्टोऽहमिति व्याहरन्नयं जाति-
मिमामुन्मार्गगामित्वे प्रवर्त्तयति कैसराय करदानं निवारयति च।
पीलातस्तदा तं पप्रच्छ, त्वं किं यिहूदीयानां राजा? स तं प्रति- ३
बभाषे, भवांस्तथ्यं व्याहरति। ततः पीलातो मुख्ययाजकान् जननि- ४
वहांश्च जगाद, नरेऽस्मिन् मया कोऽपि दोषो न लक्ष्यते। ते तु
गाढतरमवदन्, स प्रजा उत्तेजयति, गालीलत आरभ्यैतत् स्थानं ५
यावद् यिहूदियायाः सर्व्वत्रोपदिशति च। इत्थं गालीलस्य नाम ६
श्रुत्वा पीलातः पप्रच्छ, स नरः किं गालीलीयः? ततः स हेरो- ७
दस्य कर्त्तृत्वाधीन इत्यवगम्य स तं हेरोदस्य समीपं प्राहिणोत्,

८ यतस्तेषु दिनेषु सोऽपि यिरूशालेमेऽवर्त्तत। यीशुं दृष्ट्वा हेरोदो-
ऽतीव जहर्ष, यत आदीर्घकालात् स तमदिदृक्षत, यतः स तमधि
बह्वीः कथा अशृणोत्, तेन प्रदर्शितं किञ्चनाभिज्ञानं द्रक्ष्यामीत्या-
९ शापि तस्य सञ्जाता। तस्मात् स तं बहुप्रश्नानपृच्छत्। स तु तं
१० किमपि न प्रत्यभाषत। अपि च तत्र स्थिता मुख्ययाजकाः शास्त्रा-
११ ध्यापकाश्चैकाग्र्यं तस्याभियोगमकुर्व्वन्। हेरोदस्तु स्वसैन्यानां साहा-
य्येन तं परुषीकृत्योपजहास शुभ्रं प्रावारं परिधाप्य च तं पुनः
१२ पीलातस्यान्तिकं प्रेषयामास। तस्मिन् दिने पीलातहेरोदौ परस्परं
प्रणयिनौ बभूवतुः, यतस्तत्पूर्व्वं तौ परस्परं वैरमास्थितौ॥

१३ अथ पीलातो मुख्ययाजकान् नायकान् प्रजाजनांश्च समाहूया-
१४ ब्रवीत्, मनुष्योऽयं प्रजाजनस्य कुप्रवर्त्तक इव युष्माभि र्मदन्तिक-
१५ मानीतः। पश्यत तु यूयमस्मिन् यान् दोषानारोपयथ मया
युष्मत्समक्षं विचारं कुर्व्वतास्मिन् नरे तेषां कोऽपि दोषो न लक्षितः,
हेरोदेनापि न लक्षितः, यतोऽहं युष्मान् तस्यान्तिकं प्रेषितवान्।
१६ पश्यत च नापराद्धमनेन प्राणदण्डहेतुकं किमपि। अतोऽहमिमं
१७ शासित्वा मोचयिष्यामि। प्रतिवत्सरन्तु पर्व्वणि तेषां तोषणार्थमेकस्य
१८ मोचनं तेनावश्यं कर्त्तव्यमासीत्। अतस्तेषां कृत्स्नजनतोत्क्रोशन्ती
१९ जगाद, संहरेमं बारब्बाञ्चास्मदर्थं मोचय। नरः स नगरे सम्भू-
तस्योपप्लवस्य नरहत्यायाश्च कारणात् कारबद्ध आसीत्। पीला-
२० तस्तदा यीशुं मोचयितुमिच्छंस्तान् पुनरुच्चैः सम्बोधयामास। ते
२१ तूच्चै र्जगदुः, क्रुशमारोपयेमं, क्रुशमारोपय। पीलातस्तृतीयवारं
२२ तान् बभाषे, किं न्वपराद्धमनेन? न लक्षितोऽस्मिन् मया प्राण-
२३ दण्डहेतुकः कोऽपि दोषः। तदिमं शासित्वा मोचयिष्यामि। ते तु
महाशब्दैर्दृढतामास्थाय तस्य क्रुशारोपणं ययाचिरे, तेषाञ्च मुख्य-

याजकानाञ्च शब्दाः प्रबभूवुः, पीलातश्च तेषां याच्ञायाः साधनं २४
निश्चिकाय। इत्थमुपप्लवस्य नरहत्यायाश्च कारणात् कारावद्धो २५
यो नरस्ते याचितः स तेषां तोषणार्थं तेन मोचितः, यीशुस्तु
तेषामभिलाषे समर्पितः।

यीशोः क्रुशारोपणं मृत्युश्च।

अथ जना यदा तमपानयंस्तदा ग्रामादागच्छन्तं शिमोनाभिधमेकं २६
कुरीणीयं नरं धृत्वा यीशोः पश्चाद् वहनार्थं तत्स्कन्धे क्रुशमर्पया-
मासुः। महान् जननिवहश्च तमन्वगच्छत् तन्मध्ये योषितोऽप्यासन्, २७
तास्तदर्थं स्ववक्षांस्यताडयन् व्यलपंश्च। यीशुस्तु मुखं परिवर्त्त्य ता २८
अब्रवीत्, भो यिरूशालेमस्य दुहितरः, मदर्थं मा रुदितापि तु स्वार्थं
स्वसन्तानवृन्दार्थञ्च, यतः पश्यतायान्ति तानि दिनानि यदा जनै २९
र्वक्ष्यते, धन्या बन्ध्याः, धन्या जठरा अप्रसूताः, धन्याश्च स्तना
अदोहिताः। तदा मनुष्या गिरीन् सम्बोध्य वदिष्यन्ति, अस्मासु ३०
निपततेति, शैलांश्च वक्ष्यन्ति, अस्मान् प्रच्छादयतेति। यतः सरसं
तरुं प्रति यद्येतत् क्रियते, का तर्हि शुष्कस्य गति र्भविष्यति? ३१
अपि च तेन सार्द्धमपरौ द्वौ दुष्कर्म्मिणौ व्यापादनायापानीयेताम्। ३२

ततः परं ते कपालमित्यभिधं स्थानं प्राप्य तत्रैव तञ्च तौ ३३
दुष्कर्म्मिणौ च क्रुशान्यारोपयामासुरेकतरं तस्य दक्षिणे, वामे
चान्यतरं। यीशुस्तदोवाच, पितः, क्षमस्व तेषां, यतः किं कुर्व्वन्ति ३४
तन्न जानन्ति। अनन्तरं ते तस्य वासांसि विभजमाना गुटिका- ३५
पातमकार्षुः प्रजाजनाश्च निरीक्षमाणा अतिष्ठन्। तैः सार्द्धं नायका
अपि तं न्यक्कुर्व्वन्तोऽवदन्, असावन्यांस्तारयामास, यद्यसावीश्वरस्य
वरितः ख्रीष्टस्तर्ह्यात्मानं तारयतु। सैनिका अपि तमुपहसन्त ३६
उपागत्याम्लरसमुपाहरन्नवदंश्च, त्वं चेद् यिहूदीयानां राजा तर्ह्या- ३७

३८ त्मानं तारय। तस्योर्द्ध्वं च यूनानीयै रोमीयैरिब्रीयैश्चाक्षरै र्लिखि-
तमिदं लेख्यमासीत्, यिहूदीयानां राजायमिति।

३९ तेन सार्द्धमुद्बद्धयो र्दुष्कर्म्मिणोरेकतरोऽपि तं निन्दन्नाह, त्वं यदि
४० खीष्टस्तर्ह्यात्मानमावाञ्च तारय। अन्यतरस्तु तं भर्त्सयन्नवीत्, ईश्वरा-
४१ दपि किं त्वं न बिभेषि तेनैव दण्डेनाक्रान्तः? आवां हि तदर्हौ,
यत आवाभ्यां यद्यदपराद्धं तदुपयुक्तानि फलानि भुज्यन्ते, अयन्त्वयुक्तं
४२ किमपि न कृतवान्। ततः परं स यीशुं जगाद, प्रभो, भवान्
४३ यदा स्वराजत्वेनायास्यति, तदा मां स्मरतु। यीशुश्च तमवादीत्,
त्वामहं सत्यं ब्रवीमि, अद्य त्वं परमदेशे मम सङ्गी भविष्यसि।

४४ तदा प्रायेणोपस्थितायां षष्ठघटिकायां कृत्स्ने भूमण्डलेऽन्धकारः
४५ सञ्जातः, स नवमघटिकां यावद्वतस्थे। सूर्य्यस्तदान्धकारमयो बभूव,
४६ मन्दिरस्य तिरस्करिणी च छिन्ना द्विधा बभूव। यीशुश्चोच्चरवमुदी-
रयन् व्याजहार, पितस्तव हस्तयोर्ममात्मानं समर्पयामि। इदमुक्त्वा
४७ स प्राणांस्तत्याज। तद्दितिवृत्तं दृष्ट्वा शतपतिरीश्वरं स्तुवन्नुवाच,
४८ सत्यं, नरोऽसौ धार्म्मिक आसीत्। तत्कौतुकदर्शनार्थमेकत्रीभूता
जननिवहाश्च सर्व्वं तद्दितिवृत्तं निरीक्ष्य स्ववक्षांसि ताडयन्तः प्रति-
४९ जग्मुः। आसंश्च दूरे तिष्ठन्तस्तत्परिचितजनाः सर्व्वे याश्च गालील-
तस्तेन सार्द्धमनुगतास्तासां काश्चिद् योषितस्तत् सर्व्वं निरीक्षमाणाः।

यीशोः समाधिः।

५० पश्य च यिहूदीयानाम् अरिमाथियानगरान्नर एको यौषेफ-
५१ नामोपतस्थे। स मन्त्री किन्तु भद्रो धार्म्मिकश्च नरोऽमीषां मन्त्र-
५२ णाचाराभ्यामसम्पृक्तश्चासीत् स्वयमपीश्वरस्य राज्यं प्रतैक्षत च। स
५३ एव पीलातस्यान्तिकं गत्वा तं यीशो र्देहं ययाचे। तमवरोह्य च
सूक्ष्मवाससा वेष्टयामास, यत्र श्मे प्राक् कोऽपि कदापि न शयित-

साद्दृशे तचिते शवागारे तं निदधाय। तद्दिनं सज्जनदिनं, विश्रा- ५४
मवारस्यारम्भश्चासन्न आसीत्। गालीलतस्तेन सार्द्धमागता नार्य्यो- ५५
ऽप्यनुगच्छन्त्यस्तच्छवागारमवलोकयामासु र्देहश्च कथं निधीयते तद्
ददृशुः। ततः परं प्रत्यावृत्य सुगन्धीनि द्रव्याणि तैलानि च सज्जीचक्रुः। ५६
तथापि विधानानुसारेण ता विश्रामवारे विश्राममसेवन्त ॥ २३ ॥

यीशोः पुनरुत्थानं स्वर्गारोहणञ्च।

सप्ताहस्य प्रथमे दिने लतीव प्रत्यूषे ताः सज्जीकृतानि सुग २४ १
न्धिद्रव्याणि वहन्त्यः शवागारान्तिकं जग्मुस्ताभिः सार्द्धमन्या अपि
काश्चिन्नार्य्योऽव्रजन्। तदा ताः शवागारद्वारात् प्रस्तरमपसारितं २
लचयामासुः, प्रविश्य तु प्रभो र्यीशो र्देहं न ददृशुः। पश्च चात्र ३
चिन्ताकुलासु तासु दीप्रपरिच्छदवेष्टितौ द्वौ पुरुषौ ता उपतस्थतुः। ४
तासु च भीतासु भूमिं प्रति नतमुखीषु च तौ ता ऊचतुः, कथं ५
मृतानां मध्ये तं जीवितं गवेषयथ? सोऽत्र नास्ति, स उत्थापित ६
एव। पुरा गालीले विद्यमानेन तेन यूयं यदुक्तास्तत् स्मरत। ७
स हि कथितवान्, मनुष्यपुत्रस्येदमवश्यम्भावि, यत् स पापिमनुष्याणां ८
करेषु समर्पयिष्यते, क्रुशमारोपयिष्यते च तृतीये दिने च पुनरु-
त्थास्यति। तदा तास्तस्योक्तीः सस्मरुः।

अनन्तरं ताः शवागारात् प्रत्यावृत्यैकादशभ्यः प्रेरितेभ्योऽन्येभ्यः ९
सर्व्वेभ्यश्च संवादं ददुः। मग्दलीनी मरियम् योहाना याकोबस्य १०
माता मरियम् तासां सङ्गिन्योऽन्यास्चेमा एव प्रेरितेभ्यः सर्व्वमेतत्
कथयामासुः। तेषां दृष्टौ तु तासां कथा प्रलाप एव प्रत्यभात् ११
ते च तासु न व्यश्वसन्। पितरस्तूत्थाय शवागारं प्रति दुद्राव, १२
प्रकस्य केवलं वस्त्रखण्डान् भूमौ विस्तृतान् ददर्श, यच्च वृत्तं तत्र
मनस्याश्चर्य्यं मन्यमानोऽपजगाम।

१३ पश्य च तस्मिन् दिवसे तेषां द्वौ नरौ यिरूशालेमात् क्रोश-
१४ चतुष्टयव्यवहितमिम्मायूनामकं ग्राममगच्छतां। तावेतानि सर्व्वा-
१५ णीतिवृत्तान्यधि मिथः समलपतां। तयोरित्थं संलपत्यो र्विचारय-
१६ त्योश्च स्वयं यीशुः समीपमागत्य ताभ्यां सार्द्धं व्रजितुं प्रववृते। तयो
१७ र्नेत्राणि तु तथा रुद्धान्यासन् यथा तौ तमभिज्ञातुं नाशक्नुतां। स
तदा ताववादीत्, कास्ताः कथा व्रजनकाले या मिथो विचारयथो
१८ विषण्णौ? तदा क्लियपानामा तयोरेकतरः प्रतिभाषमाणस्तमवादीत्,
एको भवान् प्रवासीव यिरूशालेमे वर्त्तमानोऽपि किं नावगतवांस्तत्
१९ सर्व्वं यदेतेषु दिनेषु तत्र वृत्तं? स तौ पप्रच्छ, तत् किं? तौ
तमूचतुः, नासरतीयं यीशुमधि यद् वृत्तं तदेव। स भाववादी
नर आसीत्, ईश्वरस्य सर्व्वजनस्य च समक्षं क्रियया वाचा च
२० शक्तिमान्। स यन्मुख्ययाजकैरस्माकं नायकैश्च प्राणदण्डार्थं समर्पितः
२१ क्रुशमारोपितश्चाभूत्। अस्माकन्त्वियमाशासीत्, यत् स एवेस्रायेलस्य
भावी मोचयिता। तद् यथास्तु तथास्तु, तस्मादितिवृत्तादारभ्याद्य
२२ तृतीयं दिनं स गतः। अपि चास्मत्सङ्गिनीभिः काभिश्चिन्नारीभि
२३ र्वयं चमत्कारिताः। ताः प्रत्यूषे शवागारं गतास्तदीयदेहमप्राप्य
प्रत्यागताश्च, ता अवदन्, वयं स्वर्गदूतयो र्दर्शनं प्राप्तास्ताभ्यामुच्यते
२४ स जीवतीति। ततोऽस्मत्सङ्गिनां केऽपि शवागारं जग्मुः, ते ताभि
२५ र्यथा कथितं तदनुरूपमेव सर्व्वं प्रापुस्तन्तु न ददृशुः। स तदा
तावुवाच, रे निर्व्वोधौ भाववादिभि र्यद्यदुक्तं तत्र विश्वसितुं मन्द-
२६ धियौ च, इत्थं तद् दुःखं भुक्त्वा ख्रीष्टो यत् स्वप्रतापं प्रविशति,
२७ किं न तत् तस्यावश्यकर्त्तव्यमासीत्? ततः परं स मोशितः सर्व्वेभ्यो
भाववादिभ्यश्चारभ्य कृत्स्ने शास्त्रे तमधि यद्यल्लिखितं तद् व्याख्यात्।
२८ इत्थं ते यदा तयो र्गन्तव्यस्य ग्रामस्य समीपमुपातिष्ठन्त स

तदाग्रगमनेच्छाया लक्षणमदर्शयत्। तौ तु साग्रहं प्रसादयन्तौ २९
तमूचतुः, तिष्ठत्वावाभ्यां सार्द्धं, यतः सायंसमय आसन्नो दिनावसानञ्च
प्रतिभाति। ततः स ताभ्यां सार्द्धमवस्थानार्थं गृहं प्रविवेश। ततः ३०
परं ताभ्यां सार्द्धं भोजनायोपविश्य स पूपं गृहीत्वा धन्यवादम-
कार्षीत्, तं भङ्क्त्वा च ताभ्यामददात्। अनेन तयो र्नेत्राणि मुक्तानि ३१
तौ च तमभिजज्ञतुः। स तु तयोः समीपतोऽन्तर्दधे। तौ तदा ३२
परस्परमवादिष्टां, अस्मद्धृदयं किं नाज्वलत् तदास्मदन्तरे यदा स
पथ्यावाभ्यां समलपदस्मदर्थञ्च शास्त्राणि व्याख्यत्?

तस्मिन्नेव दण्डे तावुत्थाय यिरूशालेमं प्रतिजग्मतुः समवेतांश्चै- ३३
कादशप्रेरितांस्तेषां सङ्गिनश्च प्रापतुः। तेऽवदन् सत्यं प्रभुरुत्थापितो ३४
दत्तवांश्च शिमोनाय दर्शनमिति। तावपि पथि यद् वृत्तं पूपभ- ३५
ञ्जने च स यथा ताभ्यामभिज्ञातस्तन्निवेदयामासतुः।

इत्थं तेषां कथनकाले स्वयं यीशुस्तेषां मध्ये तस्थौ तांश्च ३६
जगाद, युष्माकं शान्ति र्भूयात्। ततस्ते क्षुब्धा त्रासं गत्वा चान्व- ३७
मिमत कञ्चिदात्मानं पश्याम इति। स तु तानब्रवीत्, कथमुद्विग्नाः ३८
स्थ? किमर्थञ्च युष्माकं हृदयेषु वितर्का उद्भवन्ति? मम हस्तौ ३९
चरणौ च निरीक्ष्य जानीत यत् स्वयमहं सोऽस्मि। स्पृशत मां
समवलोकयत च। नास्त्यात्मा तादृङ्मांसास्थिविशिष्टो यादृशं मां
पश्यथ। एतद् भाषमाणः स तेभ्यः स्वहस्तौ स्वचरणौ च दर्शया- ४०
मास। तदापि त्वानन्दात् तेषु न विश्वसत्स्वाश्चर्यं मन्यमानेषु च ४१
स तान् पप्रच्छ, युष्माकमत्र किञ्चित् खाद्यं किं विद्यते? तदा ते ४२
तस्मै भृष्टमीनस्य खण्डं मधुकोषस्य खण्डञ्च ददुः, स च तेषां समक्षं ४३
तद् गृहीत्वा बुभुजे। तांश्चोवाच, मोशे र्व्यवस्थायां भाववादिनां ४४
ग्रन्थेषु गीतसंहितायाञ्च मामधि यद्यल्लिखितमास्ते सर्व्वाणि तेन

सिद्धेन भवितव्यमिति याः कथाः पुरा युष्माभिः सार्द्धं ममावस्थिति-
४५ काले यूयं मयोक्तास्तासां फलमेतत्। तदा स तेषां बुद्धिं शास्त्र-
४६ बोधायोद्घाटयामास। तांश्च जगाद, इत्थं लिखितमास्ते इत्थञ्च
ख्रीष्टस्यावश्यङ्कर्त्तव्यमासीत्, यत् तेन दुःखं भोक्तव्यं तृतीये दिने
४७ पुनरुत्थातव्यं, यिरूशालेमादारभ्य च सर्व्वजातिषु तस्य नाम्ना मनः-
४८ परावर्त्तनस्य पापक्षमायाश्च घोषणेन व्याप्तव्यं। यूयञ्च सर्व्वस्यैतस्य
४९ साक्षिणः। पश्यत च मम पित्रा यत् प्रतिश्रुतं तदहं युष्माकमुपरि
प्रेषयिष्यामि। यूयञ्च यावदूर्द्ध्वलोकतः प्रभावेन सज्जिता न भविष्यथ,
तावद् यिरूशालेमपुर्य्यामवतिष्ठध्वम्।

५० अथ स तान् वैथनियां यावद् बहि र्निनाय, स्वकरावूर्द्ध्वीकृत्य च
५१ तेभ्य आशिषं ददौ। आशीर्दानकाले च तेभ्यः पृथग्भूय स्वर्गमारो-
५२ हयाञ्चक्रे। ते च तस्य भजनं कृत्वा महानन्देन यिरूशालेमं प्रतिजग्मुः,
५३ सततं धर्म्मधाम्नि वर्त्तमानाश्चेश्वरमस्तुवन् धन्यमवदंश्च ॥ २४ ॥

# योहनलिखितः सुसंवादः।

**ईश्वरस्य वाक्यं यीशोर्महत्त्वमवतारकथा च।**

आदौ वाद आसीत्, स च वाद ईश्वराभिमुख आसीत्, स १ १
च वाद ईश्वर आसीत्। स आदावीश्वराभिमुख आसीत्। तेन २
सर्व्वमुत्पन्नं, यद्यदुत्पन्नं तन्मध्ये च तं विना न किमप्युत्पन्नं। तस्मिन् ३
जीवनमासीत्, तज्जीवनञ्च मनुष्याणां ज्योतिरासीत्। तज्ज्योति- ४
रन्धकारे राजतेऽन्धकारस्तु तन्न जग्राह। ५

अथेश्वरसकाशात् प्रहितो नर एकः समुद्बभूव, तस्य नाम योहन ६
इति। स साक्ष्यार्थमाजगाम, ज्योतिरधि तेन तथा साक्ष्यं दात- ७
व्यमासीत्, यथा सर्व्वे तेन विश्वासिनो भवेयुः। स ज्योति र्नासीत्, ८
अपि तु ज्योतिषि साक्ष्यदाने नियुक्तः। यत् सर्व्वमनुष्यं द्योतयति ९
तद् यथार्थं ज्योतिरासीज्जगदायातुमुद्यतं। तज्जगत्यासीत्, जगच्च १०
तेन समुद्बभूव, जगत्तु तन्नाजानात्। स ज्योतिःस्वरूपो निजविषय- ११
माजगाम, निजस्वास्तु तं न जगृहुः। यावन्तस्तु तं जगृहुस्तेभ्यः १२
स तत् सामर्थ्यं ददौ येन त ईश्वरस्य सन्ताना भवन्ति यतस्तेऽमुष्य
नाम्नि विश्वसन्ति। न शोणितेभ्यो नापि वा मांसस्याभिलाषान्नापि १३
वा पुरुषस्याभिलाषात् प्रत्युतेश्वरादेव ते जाताः।

स च वादो मांसरूपी बभूव प्रवासीवास्मन्मध्ये वर्त्तते च, वयञ्च १४
पितृसकाशादागतस्यैकजातस्य पुत्रस्य प्रतापमिव तस्य प्रतापं निरी-
क्षितवन्तः। परिपूर्णः स प्रसादेन सत्येन च। योहनस्तस्य साक्षी, स १५

प्रोच्चैरुक्तवान्, अयं स एव यमधि मयोक्तं, मम पश्चाद् य आयाति
१६ स मत्तोऽग्रगण्यो जातः, यतः स मत्तः प्रागासीदिति। तस्य पूर्ण-
१७ तातस्वाखम्भि सर्व्वैरस्माभिः प्रसादात् परं प्रसादः। यतो मोशिद्वारा
१८ व्यवस्थादायि, प्रसादसत्ये तु यीशुख्रीष्टद्वारा समुद्भूते। ईश्वरः कदापि
केनापि नादर्शि, पितृक्रोडस्थ एकजातः पुत्र एव तं व्याचख्यौ।

यीशुविषये योहनस्य साच्यदानम्।

१९ अथ योहनस्य साच्यमिदं। यिहूदीयजना यिरूशालेमाद्
याजकान् लेवीयांश्च प्रहित्य यदा तमप्रच्छयन्, को भवानिति,
२० तदा सोऽङ्गीचकार नैवापजुह्नुवे। सोऽङ्गीचकार, नाहं ख्रीष्टः।
२१ ते तमप्राचुः, तर्हि किं? भवान् किमेलियः? सोऽब्रवीत्, नाहं
सः। तर्हि भवान् किं स भाववादी? स प्रत्यवादीत्, नाहं सः।
२२ ततस्ते तमाहुः, भवान् कस्तद् वदतु, यतो वयं यैः प्रेरितास्तेभ्यो-
ऽस्माभिः प्रत्युत्तरं दातव्यं। आत्मविषये भवान् किं वदति? स
उवाच, भाववादी यिशायाहो यथोक्तवान्, तथैव।

अस्म्यहं कस्यचिद् वाणी प्रोच्चै र्घोषयतो मरौ।
भो युष्माभिः प्रभो र्मार्गः समानीक्रियतामिति॥

२३ प्रहितास्ते जनाः फिरूशिनां श्रेण्यां गणिताः। ते तदा तमिमां
२४ कथामप्राचुः, भवान् यदि न ख्रीष्टो नाप्येलियो वा नापि वा स
२५ भाववादी, किमर्थं तर्हि स्नापयति? योहनः प्रतिभाषमाणस्तानवा-
२६ दीत्, अहं तोयेन स्नापयामि, यूयन्तु यं न जानीथ तादृशो नर
२७ एको युष्माकं मध्ये स्थितवान्स्ते। मत्पश्चादागच्छन् स एव ममाग्रगण्यो
जातः। नार्हाम्यहं तदीयोपानहो बन्धनं मोक्तुमिति। योहनो
२८ यत्रास्नापयत् तत्र यर्द्दनपारस्थायां बैथनियायामिदं समभूत्।
२९ परदिवसे योहनः स्वसमीपमागच्छन्तं यीशुं विलोक्य बभाषे,

पश्यायमीश्वरस्य मेषशावको यो जगतः पापभारं हरति। अयं स ३०
यमधि मयोक्तं, मत्पश्चादर एक आयाति यो ममाग्रगण्यो जातः, यतः
स मत्तः प्रागासीदिति। अहञ्च तं नाजानां, स तु यदिस्रायेलस्य ३१
प्रत्यक्षीक्रियेत तदर्थमहं तोये स्नापयन्नागत इति। अपि च योहनः ३२
साक्ष्यं दत्त्वावादीत्, पवित्र आत्मा कपोत इव स्वर्गादवरोहन् मया
साक्षितः, स चामुष्योपर्य्यवतस्थे। अहमपि तं नाजानां, येन तु तोये ३३
स्नापयितुं प्रहितोऽहं तेनैव मह्यं कथितं, त्वं यस्योपरि पवित्रमात्मा-
नमवरोहन्तमवतिष्ठमानञ्च द्रक्ष्यसि, स एव पवित्र आत्मनि स्नाप-
यिता। अहञ्च दृष्टवान् साक्ष्यं दत्तवांश्च यदयमीश्वरस्य पुत्र इति। ३४

यीशुना शिष्याणां प्रथमाह्वानम्।

तत्परदिवसे पुन र्योहनस्तिष्ठन्नासीत्, तच्छिष्यौ च द्वौ तेन ३५
सार्द्धमास्तां। स तदा यीशुं विहरन्तं निरीक्ष्य बभाषे, पश्यायमी- ३६
श्वरस्य मेषशावकः। तौ द्वौ शिष्यौ च तस्येदं वचनं श्रुत्वा यीशुमनु- ३७
जग्मतुः। यीशुः प्रत्यावृत्य तावनुगच्छन्तौ विलोक्य भाषते, किम- ३८
न्विच्छथः? तौ तमवदतां, भवान् कुत्र वसति, रब्बिन्? भाषान्तरे-
ऽस्यार्थो गुरो। स तौ ब्रवीति, एत्य पश्यतं। ततस्तौ गत्वा स ३९
यत्रावसत् तत् स्थानं ददृशतुस्तद्दिनञ्च तेन सार्द्धमवतस्थाते। तदा
प्रायेण दशमी घटिकासीत्। यौ द्वौ योहनस्य वचनं श्रुत्वा ४०
यीशुमनुगतौ, आन्द्रियनामा शिमोनस्य पित्रस्य भ्राता तयोरेकतर
आसीत्। प्रथमः स निजभ्रातरं शिमोनमन्विष्य प्राप्नोति वदति ४१
च, आसादित आवाभ्यां मशीहः। भाषान्तरेऽस्यार्थः ख्रीष्टः (अभि-
षिक्तः)। इदमुक्त्वा स तं यीशोरन्तिकं निनाय। यीशुस्तदा तं ४२
समालोक्य बभाषे, त्वं योनाः सुतः शिमोनः, त्वं कैफा इत्यभिधा-
यिष्यसे। भाषान्तरेऽस्यार्थः पित्रः (पाषाणः)।

४३ तत्परदिवसे यीशुर् गालीलं प्रस्थातुमैच्छत् । स च फिलिपमा-
४४ साद्य वदति, मामनुगच्छ । आन्द्रियपितरौ यस्य पौरौ, स फिलि-
४५ पोऽपि तस्य वैतसैदाख्यपुरस्य पौर आसीत् । पुनः फिलिपो
नथनेलमासाद्य वदति, मोशि व्यवस्थायां भाववादिनश्च यस्य वर्णनां
लिखितवन्तः सोऽस्माभिः प्राप्तः, स योषेफसुतो नासरतीयो यीशुः ।
४६ नथनेलस्तमब्रवीत्, नासरताद् भद्रं किमपि किं समुद्भवितुं
४७ शक्नोति? फिलिपस्तं ब्रवीति, एत्य पश्य । यीशुः स्वान्तिकमाग-
च्छन्तं नथनेलं निरीक्ष्य तमुद्दिश्य भाषते, पश्यायं सत्येनेस्रायेलीयो
४८ नास्त्यस्मिन् कपटः । नथनेलस्तं ब्रवीति, कथं मां जानाति भवान्?
यीशुः प्रतिभाषमाणस्तमाह, फिलिपेन तवाह्वानात् प्रागुडुम्बरवृक्ष-
४९ स्याधः स्थितस्त्वं मया लक्षितः । नथनेलः प्रतिभाषमाणस्तं वदति,
५० रब्बिन्, भवानीश्वरस्य पुत्रः, भवानिस्रायेलस्य राजा । यीशुः
प्रतिभाषमाणस्तमाह, उडुम्बरस्याधस्तात् त्वं मया लक्षित इत्यहं
त्वामुक्तवांस्तत्कारणात् किं विश्वसिषि? अस्मादपि महत्तराणि
५१ (लक्षणानि) द्रक्ष्यसि । अन्यच्च स तं वक्ति, सत्यं सत्यं, युष्मानहं
ब्रवीमि, उद्घाटितः स्वर्गो मनुष्यपुत्रस्योर्द्ध्वेन चारोहन्तोऽवतरन्तश्च
स्वर्गदूता युष्माभि र्द्रक्ष्यन्ते ॥ १ ॥

### यीशोः प्रकाश्यकार्य्यारम्भः ।

२ १ तृतीये दिने तु गालीलस्थकानायां विवाहः समभूत्, यीशो र्माता
२ च तत्रासीत् । यीशुस्तच्छिष्याश्चापि तस्मै विवाहाय निमन्त्रिता
३ आसन् । जाते तदा द्राक्षारसस्य न्यूनत्वे यीशो र्माता तम-
४ वादीत्, अमीषां द्राक्षारसो नास्ति । यीशुस्तां वदति, नारि,
मया सह तव किं कार्य्यं? मम समय इदानीमप्यनुपस्थितः ।
५ तस्य माता परिचारकान् ब्रवीति, असौ युष्मान् यद्यद् वक्ति तत्

कुरुत। तत्र तु यिहूदीयानां शुचित्वसाधनार्थमुचितानि पाषाण- ६
मयानि षट् महान्ति तोयपात्राण्यासन्, तानि प्रत्येकमाढकद्वय-
माढकत्रयं वाधारयन्। यीशुस्तान् वक्ति, पात्राण्येतानि तोयेन ७
पूरयत। ततस्ते तान्याकर्णं पूरयामासुः। तदा स तान् ब्रवीति, ८
इदानीं किञ्चिदादाय भोज्याध्यक्षस्यान्तिकं वहत। ततस्ते किञ्चि-
दूहुः। स भोज्याध्यक्षो यदा तोयं तद् द्राक्षारसेन परिणतमास्वा- ९
दयत्, तदा तत् कुत आनीतं तन्नाजानात्, येस्तु तदुत्तारितं ते
परिचारका अजानन्। ततः स भोज्याध्यक्षो वरमाहूयाह, सर्व्व- १०
मनुष्यः प्रथममुत्तमं द्राक्षारसं परिवेषयति, जने बाहुल्येन पीते च ११
निकृष्टतरं परिवेषयति। त्वन्त्वेतावत्कालं यावदुत्तमं द्राक्षारसं रक्षित-
वान्। गालीलस्यकान्नायां यीशुनाभिज्ञानानामयमारम्भोऽकारि
स्वप्रतापस्य प्रत्यक्षीचक्रे। तच्छिष्याश्च तस्मिन् व्यश्वसन्।

ततः परं स तस्य माता भ्रातरश्च तस्य शिष्याश्च कफरनाहूम- १२
मवतेरुः, तत्र त्वल्पदिनान्यवतस्थिरे।

यीशो र्यिरूशालेमगमनम्।

आसन्ने पुन र्यिहूदीयानां निस्तारपर्व्वणि यीशु र्यिरूशालेम- १३
मारुरोह। धर्म्मधाम्नि च गोमेषकपोतविक्रेतॄन् मुद्राविनिमय- १४
कारिणश्चासीनान् दृष्ट्वा स दामभिः कशां रचयित्वा सर्व्वांस्तान् १५
मेषान् गाश्च धर्म्मधामतो वहिर्द्रावयामास, वणिजाञ्च मुद्राचयान्
विकीर्य्यासनानि न्युब्जीचकार, कपोतविक्रेतृंश्चोवाच, सर्व्वमेतदतः १६
स्थानादपसारयत, मम पितु र्गृहं मा कार्ष्ट वाणिज्यगृहमिति।
तच्छिष्याश्च सस्मरु र्यल्लिखितमास्ते,

त्वन्निकेतनपक्षीया व्यग्रतां मां ग्रसिष्यति। १७

ततो यिहूदीयाः प्रतिभाषमाणास्तमवादिषुः, एतत् त्वया यत् १८

१९ कर्त्तव्यं तस्य किमभिज्ञानमस्मान् दर्शयसि? यीशुः प्रतिभाषमाण-
स्तानब्रवीत्, मन्दिरमिदं भङ्क्त, त्रिषु दिनेष्वहं तदुत्थापयिष्यामि।
२० यिहूदीयास्तदा जगदुः षट्चत्वारिंशद्वत्सरान् यावन्मन्दिरमिदं
निर्म्मीयते स्म, त्वं कथं त्रिषु दिनेषु तदुत्थापयिष्यसि? स तु
२१ स्वदेहरूपं मन्दिरमुद्दिश्याकथयत्। अतो मृतानां मध्यतस्तस्योत्था-
२२ नात् परं तस्य शिष्याः समस्मरन् ते तेनेदमुक्ताः। तदा ते शास्त्रे
यीशुना कथिते वचने च व्यश्वसिषुः।

२३ निस्तारपर्व्वणि यदा स यिरूशालेमेऽवर्त्तत, तदा तेन क्रिय-
माणान्यभिज्ञानार्थकर्म्माणि विलोक्य बहवस्तस्य नाम्नि व्यश्वसन्।
२४ यीशुस्तु तेष्वात्मसमर्पणं नाकार्षीत्, यतः स सर्व्वानजानात्।
२५ मनुष्ये परस्य साक्ष्येण तस्य प्रयोजनं वा नाभवत्, यतो मनुष्य-
स्यान्तरे यद्विद्यते, तत् स स्वयमजानात्॥ २॥

नवजन्मविश्वाससम्बन्धि च यीशोः शिक्षाज्ञानम्।

३ १ अथ फरीशिनां मध्ये नीकदीमनामा नर आसीत्, स यिहूदीया-
२ नामेको नायकः। स रात्रौ यीशोरन्तिकमागत्य तमवादीत्, रब्बिन्,
वयं जानीमो यद् भवानीश्वरादागतो गुरुः, यतो भवान् यान्यभि-
ज्ञानार्थकर्म्माणि करोति, तानि कर्त्तुं केनापि न शक्यानीश्वरस्य
३ सङ्गित्वं विना। यीशुः प्रतिभाषमाणस्तमब्रवीत्, सत्यं सत्यं, त्वामहं
ब्रवीमि, पुनरादितो न जनित्वा मनुष्य ईश्वरस्य राज्यं द्रष्टुं न
४ शक्नोति। नीकदीमस्तं ब्रूते, वार्द्धक्यप्राप्तो मनुष्यः कथं जनितुं
शक्नुयात्? स किं द्वितीयवारं मातु र्जठरं प्रविश्य जनितुं शक्नोति?
५ यीशुः प्रतिबभाषे, सत्यं सत्यं, त्वामहं ब्रवीमि, तोयात्मभ्यां न जनित्वा
६ मनुष्य ईश्वरस्य राज्यं प्रवेष्टुं न शक्नोति। यन्मांसतो जातं तन्मांसं,
७ यदात्मतो जातं तदात्मा। युष्माभिः पुनरादितो जनितव्यमिति मया

त्वं यदुक्तस्तत्राश्चर्य्यं मा मन्यस्व। आत्मरूपो वायु र्यत्रेच्छति तत्र ८
वाति, तत्स्वनस्य त्वया श्रूयते, न ज्ञायते तु स कुत आयाति कुत्र
याति वा। आत्मतो जातः सर्व्वमनुष्यस्तादृग्भूतः। नीकदीमः प्रति- ९
भाषमाणस्तमवादीत्, सर्व्वमेतत् कथं भवितुं शक्नोति? यीशुः प्रति- १०
भाषमाणस्तमाह, त्वमिस्रायेलस्य गुरुस्तथाप्येतन्न जानासि? सत्यं ११
सत्यं, त्वामहं ब्रवीमि, वयं यज्जानीमस्तत् कथयामः, यच्च दृष्टवन्तस्तत्र
साक्ष्यं दद्मः, तथाप्यस्मत्साक्ष्यं युष्माभि र्न गृह्यते। पार्थिवविषयान् १२
कथितवति मयि यदि यूयं न विश्वसिथ, कथं तर्हि स्वर्गीयविषयान्
कथितवति मयि विश्वसिष्यथ? नापरः कोऽपि स्वर्गमारुरोह, केवलं १३
स्वर्गादवरूढः स्वर्गवासी मनुष्यपुत्रः। अपि च यथा मरौ मोशिना १४
सर्प उच्चीकृतस्तथा मनुष्यपुत्रो यद् उच्चीकारिष्यते तत्तस्यावश्यम्भावि,
तस्मिन् विश्वासी सर्व्वमनुष्यो यथा न विनश्यानन्तं जीवनं लप्स्यते। १५
यत ईश्वरो जगतीत्थं प्रेम चकार, यन्निजमेकजातं पुत्रं ददौ, १६
तस्मिन् विश्वासी सर्व्वमनुष्यो यथा न विनश्यानन्तं जीवनं लप्स्यते।
ईश्वरो हि स्वपुत्रं जगति प्रहितवान् न जगतो विचारसाधनार्थं, १७
प्रत्युत जगद् यत् तेन त्राणं लभेत तदर्थं। यस्तस्मिन् विश्वसिति १८
तस्य विचारो न क्रियते। यो न विश्वसिति तस्य विचारः
सम्भूतः, यतः स ईश्वरस्यैकजातपुत्रस्य नाम्नि न विश्वसितवान्।
विचारस्यायं, यदागतं जगति ज्योतिः, मनुष्यास्तु ज्योतिषस्तिमिरे- १९
ऽधिकमप्रीयन्त, यतस्तेषां कर्म्माणि दुष्टानि। कदाचारवान् सर्व्व- २०
मनुष्यो हि ज्योति र्द्वेष्टि, तदीयकर्म्मणां दोषस्तेन व्यक्तीभविष्यतीति
भयाच्च स ज्योतिषो निकटं नायाति। यस्तु सत्यमाचरति तस्य २१
कर्म्माणीश्वरे साधितानीव प्रत्यक्षीभविष्यन्तीत्याकाङ्क्षया स ज्योतिषो
निकटमायाति।

यीशुविषये योहनस्य साक्ष्यदानम्।

२२ ततः परं यीशुस्तदीयशिष्याश्च यिहूदियायां जनपदं जग्मुः
२३ स च तत्रैव तैः सार्द्धं वर्त्तमानोऽस्नापयत्। योहनोऽपि शालीमान्नि-
कस्थ ऐनोने वर्त्तमानोऽस्नापयत्, यतस्तत्र बह्वाप आसन् मनुष्याश्चो-
२४ पस्थाय स्नापिताः। योहनस्तदापि कारायामनिक्षिप्त आसीत्।
२५ अथ शुचिकर्मसाधनमधि योहनस्य केषाञ्चिच्छिष्याणां कस्यचिद्
२६ यिहूदीयनरस्य च मिथो वादानुवादो बभूव। ते तदा योहनस्य
समीपमागत्य तमवादिषुः, रब्बिन्, यर्द्दनपारे यो भवता सार्द्ध-
मासीत्, भवता च यस्य स्वपक्षं साक्ष्यमदायि, पश्यतु स स्नापयति,
२७ सर्व्वे च तत्समीपमुपतिष्ठन्ते। योहनः प्रतिभाषमाणो जगाद, यस्मै
यत् स्वर्गाद्दायि, तद्भिन्नं किमपि तेन मनुष्येणादातुं न शक्यते।
२८ नाहं ख्रीष्टोऽपि तु तस्याग्रे प्रहितोऽस्मीति मया यदुक्तं तत्र यूयमेव
२९ मम साक्षिणः। यः कन्यां प्राप्नवान् स एव वरः, वरस्य यो बन्धुस्तु
सन्निधौ तिष्ठंस्तस्य वाक्यान्याकर्णयति, स वरस्य वाणीश्रवणादानन्देन
मोदते। नूनं मम स आनन्दः पूर्णो बभूव। अमुना वार्द्धितव्यं,
३० मया तु ह्रसितव्यं। य ऊर्द्ध्वत आगाति स सर्व्वेषामुपरिस्थः। यो
३१ भूम्युत्पन्नो भौमः सः, भौमविषयान् कथयति च। यः स्वर्गा-
३२ दायाति स सर्व्वेषामुपरिस्थः, यच्च दृष्टवान् श्रुतवांश्च तदधि साक्ष्यं
३३ ददाति। तस्य साक्ष्यन्तु केनापि न गृह्यते। तस्य साक्ष्यं येन
गृहीतं, तेनेश्वरः सत्य इति कथा मुद्रयाङ्किता। यतो य ईश्वरेण
३४ प्रहितः स ईश्वरस्योक्तीर्भाषते। ईश्वरो ह्यमितमात्मानं ददाति।
३५ पिता पुत्रे प्रेम करोति, तस्य हस्ते सर्व्वं समर्पयामास च। यः
३६ पुत्रे विश्वसिति तस्यानन्तं जीवनमास्ते, यस्तु पुत्रं न श्रद्धाति स
जीवनं न द्रक्ष्यति प्रत्युतेश्वरस्य क्रोधस्तस्योपर्य्यवतिष्ठते ॥ ३ ॥

शमरीयस्त्रियै यीशोरुपदेशकथा तत्फलञ्च ।

यीशुः स्वयं नास्नापयत्, तस्य शिष्या अस्नापयन् । अतो ४ १
योहनतो यीशुना बहवः शिष्याः क्रियन्ते स्नाप्यन्ते चेति कथा २
फिरूशिभिरश्रावि तज्ज्ञात्वा प्रभु र्यिहूदियां परित्यज्य पुन र्गालीलं ३
प्रतस्थे । शमिरयादेशेन गमनन्तु तस्यावश्यकत्वमासीत् । ततः स ४
शमरियादेशस्य सुखाराभिधं नगरमायाति । पुरा या भूमि ५
र्याकोबेन स्वपुत्राय योषेफाय दत्ता तन्नगरं तत्समीपस्थं । तत्र च ६
याकोबस्य कूप आसीत् । अत यीशुः पथश्रान्तो भूत्वा तथैव
तत्कूपान्तिकमुपविष्टवान् । तदा प्रायेण षष्ठी घटिकासीत् । शमरीया ७
काचिन्नारी तोयमुद्धर्त्तुमायाति । यीशुस्तां ब्रूते, मह्यं पानीयं
देहि । यतस्तस्य शिष्याः खाद्यक्रयार्थं नगरमपगतवन्तः । ततः सा ८
शमरीया नारी तं ब्रवीति, अहं शमरीया नारी, त्वञ्च यिहूदीयः, ९
तत् कथं मां पानीयं याचसे ? यतः शमरीयैः सह यिहूदीयानां
व्यवहारो नास्ति । यीशुः प्रतिभाषमाणस्तामवादीत्, यदि त्वमी- १०
श्वरस्य दानमज्ञास्यः, मह्यं पानीयं देहीति येनोच्यते तस्य तत्त्वञ्च
यद्यज्ञास्यस्तर्हि त्वमेव तमयाचिष्यथाः, स च तुभ्यं जीवि तोयम-
दास्यत् । सा योषित् तं वदति, प्रभो, तोयोद्धारणोपायो भवतो ११
नास्ति, प्रहिश्च गम्भीरः, कुतः पुनस्तज्जीवि तोयं लब्धं भवता ?
कूपोऽयं येनास्मभ्यं दत्तस्तस्मादस्मत्पितामहाद् याकोबाद् भवान् १२
किं महत्तरः ? तेनापि तत्पुत्रैश्च तत्पोषितैः पशुभिश्चैतस्य तोयम-
पीयत । यीशुः प्रतिभाषमाणस्तामवादीत्, तोयमेतद् येन केनचित् १३
पीयते स पुनः पिपासिष्यति, मद्दातव्यं तोयन्तु येन पीयते, १४
सोऽनन्तकालं यावन्न पिपासिष्यति, अपि त्वहं तस्मै यत् तोयं
दास्यामि तत् तस्यान्तरेऽनन्तं जीवनं यावदुत्प्लवमानस्य तोयस्योत्सो

१५ भविष्यति। सा नारी तं ब्रूते, प्रभो, मह्यं तत् तोयं ददातु, अहं
यथा न पिपासामि नापि वा तोयोद्धरणार्थमत्रागच्छामि। यीशुस्तां
१६ वक्ति, याहि, तव पतिमाहूयात्रागच्छ। सा योषित् प्रतिभाषमाणा
१७ तमवादीत्, पतिर्मम नास्ति। यीशुस्तां ब्रूते, पतिर्मम नास्तीति
१८ युक्तं कथितं त्वया, यतः पतयः पञ्च तवासन्, अधुना तु तव
१९ योऽस्ति नास्ति स तव पतिः। सत्यमिदमुक्तं त्वया। सा नारी
२० तं वदति, प्रभो, निरूपयाम्यहं यद् भवान् भाववादी। अस्मत्पिता-
महा अस्मिन् गिरावुपासनम् अकुर्व्वन्, यूयन्तु वदथ, उपासनं
२१ यत्र कर्त्तव्यं, तत् स्थलं यिरूशालमेऽस्तीति। यीशुस्तां ब्रूते, नारि,
मयि विश्वसिहि तत् समयः स आयाति, यदा नास्मिन् गिरौ
२२ नापि वा यिरूशालेमे पितुरुपासनं युष्माभिः कारिष्यते। यूयं
यन्न जानीथ तस्योपासनं कुरुथ। वयं यज्जानीमस्तस्योपासनं कुर्म्मः।
२३ परित्राणं हि यिहूदीयजातिमूलकं। प्रत्युत समयः स आयात्यधुना
प्यस्ति यदा प्रकृता उपासका आत्मना सत्येन च पितुरुपासनं
२४ करिष्यन्ति, यतः पिता स्वोपासकांस्तादृशान् अनुसन्धत्ते। ईश्वर
आत्मा, यैस्तु तस्योपासनं क्रियते आत्मना सत्येन चोपासनं
२५ तैः कर्त्तव्यं। सा स्त्री तं गदति, जानेऽहं मशीहेनार्थतः
ख्रीष्टाभिधेन पुरुषेणागन्तव्यं, स यदायास्यति तदास्मभ्यं सर्व्वं
२६ निवेदयिष्यति। यीशुस्तां ब्रवीति, त्वया सम्भाषमाणो योऽहं
सोऽहमेव सोऽस्मि।

२७ तदैव तस्य शिष्या उपतस्थिरे, नार्य्या सह तस्य सम्भाषणे
आश्चर्य्यं मेनिरे च, तथापि भवान् किमन्विच्छतीति, कथवामुया
२८ सह भवान् किं सम्भाषत इति केनापि नावादि। ततः सा नारी
२९ स्वकलसं विहाय नगरं गत्वा जनान् वदति, आयात, मया यद्यद्-

कारि तत् सर्व्वं मह्यं यः कथितवांस्तादृशं मनुष्यं पश्यत च। स ३०
किं ख्रीष्टः स्यात्? ततस्ते नगरान्निर्गत्य तस्य समीपमगच्छन्।

तस्मिन्नवसरे शिष्याः सानुनयं तमवादिषुः, रब्बिन्, अश्नातु। ३१
स तु तानब्रवीत्, भोजनार्थं युष्मदविदितं भक्ष्यं ममास्ते। अनेन ३२
शिष्या मिथोऽपृच्छन्, केनापि किं तस्य समीपं भक्ष्यमानायि? ३३
यीशुस्तान् ब्रूते, मम भक्ष्यमिदं यन्मत्प्रेषयितुरभीष्टमाचरामि ३४
तदीयकर्म्म साधयामि च। अधुनापि मासचतुष्टयं विद्यते, तदा ३५
शस्यकर्त्तनकाल उपस्थास्यत इति किं युष्माभि र्नोच्यते? पश्यताहं
युष्मान् ब्रवीमि, ऊर्द्ध्वदृष्टिं कृत्वा क्षेत्राण्यवलोकयत, शस्यकर्त्तनार्थं
तान्यधुनैव सितानि प्रतिभान्ति। शस्यच्छेत्ता च वेतनं लभतेऽनन्त- ३६
जीवनाय फलानि सञ्चिनोति च, यथा वप्ता छेत्तारावेकदान-
न्देतां। अत्र हि प्रवादोऽयं सत्यः, वपत्येकः छिनत्यन्य इति। यूयं ३७
यत्र न श्रममनुष्ठितवन्तस्तत्र शस्यकर्त्तनार्थं प्रहिता मया। अन्ये ३८
श्रममनुष्ठितवन्तः, यूयञ्च तेषां श्रमस्थानं प्रविष्टाः।

अथ मया यद्यत्कारि तत् सर्व्वं स मह्यं कथितवानिति ३९
साक्ष्यदायिन्यास्तस्या नार्य्या वचनात् तन्नगरीया बहवः शमरीयम-
नुष्यास्तस्मिन् व्यश्वसिषुः। ततस्ते शमरीया यदा तत्समीपमुपातिष्ठन्त, ४०
तदा तैः सार्द्धमवस्थानं तं प्रार्थयन्त, स च दिनद्वयं तत्रावतस्थे।
बहुगुणाधिकाश्च तस्य वचनाद् व्यश्वसिषुस्तां नारीमवादिषुश्च, ४१
अधुनापि त्वदीयकथनकारणादेव वयं विश्वसिमस्तन्न, यतः स्वयम- ४२
स्माभिः श्रुतमनुभूतश्चेदं यत् सत्यमेवायं जगत्त्राता ख्रीष्टः।

दिनद्वये तस्मिन्नतीते स ततः प्रस्थाय गालीलं जगाम। यीशुः ४३
स्वयं हि साक्ष्यमिदं दत्तवान् यत् स्वदेशे भाववादी सम्मानहीनः। ४४
अतो गालीलम उपस्थितः स गालीलीयैरग्राहि, तत्कारणमिदं ४५

यद् यिरूशालेमे पर्व्वणि तेन यद्यत् कृतं तत् सर्व्वं ते दृष्टवन्तः, यतस्तेऽपि पर्व्वण्युपस्थितवन्तः।

यीशो र्जनैकरोगिण आरोग्यकरणम्।

४६ अत एव यीशु र्यत्र तोयं द्राक्षारसीकृतवांस्तां गालीलस्थकान्नां
पुनराजगाम। तदा कफरनाहूमे यस्य पुत्रो व्याधितस्तादृशो
४७ राजपुरुषः कश्चिदासीत्। स यिहूदियातो गालीले यीशोरागमनस्य संवादं श्रुत्वा तस्यान्तिकं जगाम, स च यत् (कफरनाहूमम्)
अवरुह्य तं पुत्रं निरामयं कुर्य्यात् तत् प्रार्थयाञ्चक्रे, यतः स मृतकल्प
४८ आसीत्। ततो यीशुस्तमुवाच, यूयम् अभिज्ञानान्यद्भुतलक्षणानि
४९ चादृष्ट्वा नैव विश्वसिष्यथ। स राजपुरुषस्तं ब्रूते, प्रभो, मद्बालकस्य
५० मरणात् प्रागवरोहतु। यीशुस्तं ब्रवीति, याहि, तव पुत्रो जीवति।
ततः स नरो यीशुना यदुक्तस्तस्मिन् वाक्ये विश्वस्य यात्रामकुरुत।
५१ तस्य चावरोहणकाल एव तस्य दासास्तत्सम्मुखमुपस्थायेदं निवेद-
५२ यामासुः, भवतः पुत्रो जीवतीति। ततः स तान् पप्रच्छ, कस्मिन्
दण्डे तस्योपशमो जातः? ते तमूचुः, ह्यः सप्तम्यां घटिकायां
ज्वरस्तमत्याक्षीत्। ततः पिताबोधि तत् तस्यामेव घटिकायां
५३ सम्भूतं यदा स यीशुनोक्तस्तव पुत्रो जीवतीति। ततः स तदीय-
५४ गृह्याश्च सर्व्वे व्यश्वसिषुः। इदं पुन र्द्वितीयमभिज्ञानाश्चर्य्यमकारि
यीशुना यिहूदियातो गालीलमागतेन॥ ४ ॥

यीशुना अन्यमेकं रोगिणमारोग्यकरणम्।

तस्मे उपदेशदानञ्च।

५ १ ततः परमुपस्थिते यिहूदीयानामुत्सवे यीशु र्यिरूशालेमं
२ जगाम। यिरूशालेमे मेषद्वाराख्यस्य गोपुरस्य निकटे सर एकमस्ति,
इब्रीयभाषया तस्य नाम बेथेस्देति, तच्च पञ्चभिरालिन्दै र्युक्तं।

तेषु शयाना व्याधिता अन्धाः खञ्जाः शुष्काङ्गा वा बहवो मनुष्या- ३
स्तोयस्य कम्पनं प्रत्यैक्षन्त। यतः समये समये स्वर्गदूत एकस्तत् ४
सरोऽवतरंस्तोयमकम्पयत्। तोयकम्पनात् परञ्च प्रथमो यो मनुष्य-
स्तोयं प्राविशत् स येन केनचिद् व्याधिना व्याधितस्तस्मान्मुक्तो
निरामयश्चाभवत्। तत्र अष्टत्रिंशद्वर्षाणि यावद् व्याधिग्रस्तो नरः ५
कश्चिदतिष्ठत्। यीशुस्तमेव शयानं दृष्ट्वा स आदीर्घकालाद् व्याधि- ६
तस्तज्ज्ञात्वा च पप्रच्छ, त्वं किं निरामयो भवितुं वाञ्छसि? स ७
रोगी तं प्रत्यवादीत्, प्रभो, नास्ति मम जनो यस्तोयकम्पनकाले
मां सरसि निक्षिपेत्, यावच्चाहमुपागच्छामि, तावदपरः कश्चिदग्रतः
प्रागवतरति। यीशुस्तं ब्रवीति, उत्तिष्ठ, तव खट्वामादाय विहर ८
च। ततः स मनुष्यस्तत्क्षणं निरामयो जातः खट्वामादाय च ९
विहर्त्तुं प्रवृत्तः। तद् दिनञ्च विश्रामदिनं। ततो यिहूदीयास्त- १०
मारोग्यप्राप्तं नरं जगदुः, अद्य विश्रामदिनं, तव खट्वावहनमवि-
धेयं। स तान् प्रत्यवादीत्, अहं येन स्वस्थीकृतस्तेनैवोक्तः, तव ११
खट्वामादाय विहरेति। ततस्ते तमपृच्छन्, तव खट्वामादाय विहरेति १२
त्वां येनोक्तः स मनुष्यः कः? स तु कस्तत् तेनारोग्यप्राप्तेन नाज्ञायि, १३
यतस्तत्र जननिवहस्योपस्थितितो यीशुरपसृतः।

ततः परं यीशु र्धर्म्मधाम्नि तमासाद्यावादीत्, पश्य त्वयारो- १४
ग्यमलम्भि, पुनः पापं मा कुरु, मोचेत् तव घोरतरा दुर्गति
र्भविष्यति। स मनुष्यस्तदा गत्वा यिहूदीयान् ज्ञापयामास, यद् १५
यीशुस्तस्यारोग्यकारी। ततो यिहूदीया यीशुमबाधन्त हन्तुम- १६
यतन्त च, तत्कारणमेतदेव यत् स विश्रामवारे एतान्यकरोत्।
यीशुस्तु तान् प्रत्यवादीत्, मम पिताद्य यावत् कर्म्म करोत्यहमपि १७
करोमि। एतत्कारणादेव यिहूदीयास्तं हन्तुमधिकमयतन्त, १८

यतः स न केवलं विश्रामवारमलङ्घयदपि त्वीश्वरं स्वीयपितरमभ्य-
१९ दधात्, इत्यस्मात्मानमीश्वरेण तुल्यमकुरुत। ततो यीशुः प्रति-
भाषमाणस्तानुवाच, सत्यं सत्यं, युष्मानहं ब्रवीमि, पितरं कर्म्म कुर्व्वन्तं
न दृष्ट्वा पुत्रः स्वतः किमपि कर्त्तुं न शक्नोति। स हि यद्यत्
२० करोति, पुत्रोऽपि तथैव तत् करोति। यतः पिता पुत्रे प्रेम कुरुते,
स्वयञ्च यद्यत् करोति पुत्रं तत् सर्व्वं दर्शयति। स च तस्मैतेभ्योऽपि
महत्तराणि कर्म्माणि दर्शयिष्यति, यूयं यथाश्चर्य्यं मंस्यध्वे। यतः
२१ पिता यादृशं मृतानुत्थापयति सञ्जीवयति च, तादृशं पुत्रोऽपि
२२ यान् रोचयति तान् सञ्जीवयति। पिता हि कस्यापि विचारमपि
२३ न करोत्यपि तु कृत्स्नं विचारं पुत्रे समर्पयामास, सर्व्वे यथा
२४ पितरं मानयन्ति तथैव पुत्रं मानयन्त्विति तस्याभिप्रायः। पुत्रो
येन न मान्यते, तत्प्रेषयिता पितापि तेन न मान्यते। सत्यं सत्यं,
युष्मानहं ब्रवीमि, यो मम वाक्यं शृणोति मत्प्रेषयितरि विश्वसिति
च, सोऽनन्तजीवनप्राप्तः, स च विचारं न नेतव्योऽपि तु मृत्युतो
२५ जीवनं प्रत्युत्तीर्णः। सत्यं सत्यं, युष्मानहं ब्रवीमि, समयः स
आयात्यधुना चास्ति, यदा मृता ईश्वरपुत्रस्य गिरं श्रोष्यन्ति, ये
२६ च श्रोष्यन्ति ते जीविष्यन्ति। यतः पिता यादृक् स्वयञ्जीवी
तादृक् पुत्रायापि स्वयञ्जीवित्वं दत्तवान् विचारसाधनस्य सामर्थ्यञ्च
२७ तस्मै दत्तवान्, यतः स मनुष्यपुत्रः। अत्र माश्चर्य्यं मन्यध्वं। यत
२८ आयाति स समयो यदा श्मशानागारस्थाः सर्व्वे तस्य गिरं श्रोष्यन्ति
२९ बहिरायास्यन्ति च कृतसदाचारा जीवनार्थपुनरुत्थानाय, कृतदुरा-
चाराश्च विचारार्थपुनरुत्थानाय। स्वतः किमपि कर्त्तुं मया न
३० शक्यते, यच्छृणोमि तदनुरूपं विचारं करोमि, मम विचारश्च न्याय्यः,
यतोऽहं न मदीयाभीष्टमपि तु मत्प्रेषयितुः पितुरभीष्टमीहे।

यद्यहं स्वार्थे साक्ष्यं ददामि, तर्हि मम साक्ष्यं न सत्यं। अपरो ३१
मयि साक्ष्यं ददाति, अहञ्च जाने यन्मयि दीयमानं तस्य साक्ष्यं ३२
सत्यं। यूयं योहनं प्रति दूतान् प्रहितवन्तः स च सत्यस्य पक्षे ३३
साक्ष्यं दत्तवान्। नाहन्तु मनुष्यात् साक्ष्यं गृह्लामि। यूयं यत् ३४
त्राणमाप्नुयात तदर्थमेतत् कथयामि। स ज्वलन्ती विराजमाना ३५
च दीपकासीत्, यूयञ्च क्षणं यावत् तस्य दीप्त्या मोदितुमरोचयत।
योहनस्य साक्ष्यात्तु महत्तरं साक्ष्यं ममास्ते। येषां कार्य्याणां ३६
साधनार्थं तद्भारः पित्रा मयि समर्पितस्तानि मया क्रियमाणानि
कार्य्याण्येव मदर्थं साक्ष्यं ददति यदहं पित्रा प्रहितः। मत्प्रेषयिता ३७
पितापि स्वयं मामधि साक्ष्यं दत्तवान्। युष्माभिः कदापि तस्य
वाणी न श्रुता नापि वा तस्य रूपं दृष्टं, नापि वा लब्धं तस्य
वाक्यं युष्मदन्तरवतिष्ठमानं। यतस्तेन यः प्रहितस्तस्मिन् युष्माभि ३८
र्न विश्वस्यते। शास्त्राण्यनुमन्यध्वं यूयं हि तेषु स्वान् अनन्तजीवन- ३९
प्राप्तान् मन्यध्वे, तान्येव च मयि साक्ष्यं ददति। तथापि यूयं ४०
जीवनलाभार्थं मदन्तिकमायातुमसम्मताः। मनुष्येभ्योऽहं सम्मानं न ४१
गृह्लामि, युष्मांस्तु जानामि, यन्न लब्धं युष्माभिरीश्वरस्य प्रेम ४२
युष्मदन्तरवतिष्ठमानं। मत्पितुर्नाम्नागतोऽहं युष्माभिर्न गृह्ये। ४३
अपरः कश्चिच्चेत्स्वनाम्नागच्छेत्, स एव तर्हि युष्माभिर्ग्रहीष्यते।
परस्परं सम्मानं गृह्लन्त एकस्मादीश्वराल्लभ्यं सम्मानन्त्वनीहमाना ये ४४
यूयं, कथं विश्वसितुं शक्यते युष्माभिः? मा मन्यध्वं यत् पितुर- ४५
न्तिकमहं युष्माकमभियोक्ता भविष्यामि। अस्ति युष्माकमभियोक्ता
स मोशि यो युष्मदीयाशाभूमिः। यतो यदि मोशौ व्यश्वसिष्यत, ४६
तर्हि मयि व्यश्वसिष्यत, स हि मामधि लिखितवान्। तस्य लेखेषु ४७
तु यदि न विश्वसिथ, कथं तर्हि मम वाक्येषु विश्वसिष्यथ? ॥ ५ ॥

### यीशुरपरे ह्रदे अलौकिकं कार्य्यं तद्विषयक उपदेशश्च।

६ १ ततः परं यीशु र्गालीलस्य तिविरियाख्यह्रदस्य पारं प्रतस्थे।
२ महाजननिवहश्च तमन्वगच्छत्, यतो रोगिषु तेन क्रियमाणान्य-
३ भिज्ञानार्थकर्म्माणि तैरदृश्यन्त। एकदा यीशु र्गिरिमारुह्य स्वशिष्यैः
४ सार्द्धं तत्रोपविष्टवान्। तदा यिहूदीयानां निस्तारोत्सव आसन्न
५ आसीत्। ततो यीशुरूर्द्ध्वदृष्टिं कृत्वा स्वसमीपमागच्छन्तं महान्तं
जननिवहं निरीक्ष्य फिलिपं पप्रच्छ, एतेषां भोजनार्थं कुत्रास्माभिः
६ पूपाः क्रेतव्याः? स तं परीक्षमाण इदमवदत्, यतः स किं
७ कर्त्तुमुद्यत आसीत् तदज्ञानात्। फिलिपस्तं प्रत्यवादीत्, द्विशत-
मुद्रापादमूल्यैः पूपा अप्येतेषां निमित्तं तथा पर्य्याप्ता न भवि-
८ ष्यन्ति यथैतेषामेकैकस्तोकं लप्स्यते। तदीयशिष्याणामेकोऽर्थतः
९ पितरस्य भ्रातान्द्रियस्तं ब्रवीति, अस्त्यत्र क्षुद्र एको बालकः, तत्स-
मीपे पञ्च यावपूपा मीनौ च द्वौ क्षुद्रौ विद्यन्ते। एतावतः प्रति
१० तु तत् किं? यीशुस्तदाब्रवीत्, यूयं तान् मानवान् भोजनायोप-
वेशयत। तत्र प्रभूतं शष्पमासीत्। ये च पुरुषा उपविविशुस्ते
११ संख्यया प्रायेण पञ्च सहस्राणि। ततः परं यीशुस्तान् पूपान्
जग्राह, धन्यवादं कृत्वा च शिष्येभ्यो ददौ, पुनश्च शिष्याः समा-
सीनेभ्यो मनुष्येभ्यो ददुः। तथैव तयो र्मीनयोस्तेभ्यो यथेष्टम-
१२ दीयत। तेषु तु तृप्तेषु स स्वशिष्यान् जगाद, अवशिष्टा भग्नांशा
१३ युष्माभिः सञ्चीयन्तां, किमपि मा विनश्यतु। अतस्ते तेषां पञ्चानां
यावपूपानां भोक्तृभिः शेषितान् भग्नांशान् सञ्चित्य ते द्वादश
१४ डल्लकान् पूरयामासुः। यीशुना कृतं तदभिज्ञानार्थकर्म्म दृष्ट्वा
मनुष्या अवदन्, सत्यम्, अयं स भाववादी येन जगत्युपस्थातव्य-

मिति। अतस्ते मां राजानं चिकीर्षन्तो मां धर्तुमागमिष्यन्तीति १५
ज्ञात्वा यीशुरेकाकी पुन र्गिरिमाशिश्राय।

तस्य शिष्यास्तु सन्ध्यायामुपस्थितायां समुद्रतीरमवरुह्य नावं १६
प्रविश्य समुद्रपारस्थं कफर्नाहूमं गन्तुं प्रवृत्ताश्च। ततः परम् १७
अन्धकारे जातेऽपि यीशुस्तेषां समीपं नागतवान्, समुद्रश्च महा- १८
वायोराघातेनाक्षोभ्यत। इत्थं वहमानास्ते यदा सार्द्धकं क्रोशं १९
क्रोशद्वयं वा गतास्तदा यीशुं समुद्रस्योपरि व्रजन्तं नावो निकट-
मुपस्थितञ्च लक्षयामासुरनेन बिभ्युश्च। स तु तानाह, अयमहं. २०
मा भैष्ट। ततस्ते तं नावि ग्रहीतुमरोचयन्, नौश्च तत्क्षणं तेषां २१
गन्तव्ये स्थल उपतस्थे।

तत्परदिने समुद्रपारे जननिवहस्तिष्ठन्नासीत्। तदीयशिष्यैः २२
प्रविष्टात् पोतादन्यः पोतस्तत्र नासीत्, तदीयशिष्याणां प्रवेशकाले
च सा नौ र्यीशुना न प्रविष्टा केवलं तदीयशिष्यैरेव प्रविष्टेतत्
ते जनैरदर्शि। तत्पश्चात् तिबिरियात आगता अन्या नावस्तत्स्थान- २३
समीपमुपतस्थिरे, यत्र कृते प्रभुना धन्यवादे पूपास्ते भुक्ताः।
अतोऽत्र यीशुर्नास्ति तदीयशिष्याश्च न सन्तीति दृष्ट्वा ते जना २४
अपि नौका आरुह्य यीशुमन्विच्छन्तः कफर्नाहूममाजग्मुः समुद्र- २५
पारे तं प्राप्य च पप्रच्छुः, रब्बिन्, भवानत्र कदोपस्थितवान्?
यीशुस्तान् प्रतिजगाद, सत्यं सत्यं, युष्मानहं ब्रवीमि, यूयमभि- २६
ज्ञानानि दृष्टवन्तो नैतत्कारणान्मामन्विच्छथ, प्रत्युत तान् पूपान्
भुक्त्वा यत् तृप्तवन्तस्तत्कारणादेव। कार्य्यं मा क्रियतां युष्माभिः २७
क्षीयमाणस्य भक्ष्यस्य लिप्सया, किन्त्वनन्तजीवनं यावत्
स्थायिनो भक्ष्यस्य लिप्सया। मनुष्यपुत्रेण तद् युष्मभ्यं दातव्यं। स
हि पितेश्वरेण मुद्राङ्कितः। ततस्ते तमवादिषुः, ईश्वरादिष्टानि २८

२९ कार्य्याणि चिकीर्षुभिरस्माभिः किं कर्त्तव्यं? यीशुः प्रतिभाषमाण-
स्तानुवाच, ईश्वरादिष्टं कार्य्यमिदं, यत् तेन यः प्रहितो युष्माभि-
३० स्तस्मिन् विश्वसितव्यं। ततस्ते तमाहुः, त्वं नु किमभिज्ञानार्थकर्म्म
करोषि यद् दृष्ट्वास्माभिस्त्वयि विश्वसितव्यं। त्वं किं समुपार्ज-
३१ यसि? अस्मत्पूर्व्वपुरुषा मरौ मान्नामभुञ्जत, यतो लिखितमास्ते,
३२ स तेभ्यो भोजनार्थं स्वर्गोत्पन्नं खाद्यं ददाविति। ततो यीशुस्तान्
अवादीत्, सत्यं सत्यं, युष्मानहं ब्रवीमि, मोशि र्युष्मभ्यं स्वर्गोत्पन्नं
खाद्यं न दत्तवान्, मम पिता तु युष्मभ्यं प्रकृतं स्वर्गोत्पन्नं खाद्यं
३३ ददाति। यत ईश्वरीयं खाद्यं तदेव यत् स्वर्गादवतरति जगते
३४ जीवनं ददाति च। ततस्ते तमूचुः, प्रभो, सर्व्वदास्मभ्यं तत्
३५ खाद्यं ददातु। यीशुस्तु तानुवाच, अहमेव जीवनदायि खाद्यं।
मत्समीपं य आगच्छति, स नैव क्षोत्स्यति, मयि यश्च विश्वसिति
३६ स कदापि न तर्षिष्यति। युष्मांस्त्वहमुक्तवान्, यन्मां दृष्ट्वापि न
३७ विश्वसिथ। पिता मह्यं यद्यद्दीयते सर्व्वं तन्मत्समीपमायास्यति।
३८ यश्च मत्समीपमायाति, स मया नैव बहिष्करिष्यते। यतो न
मदीयाभीष्टमपि तु मत्प्रेषयितुरभीष्टं कर्त्तुमहं स्वर्गादवतीर्णः।
३९ मत्प्रेषयितुः पितुरभीष्टञ्चेदं यन्मह्यं तेन यद्यद् दत्तं तस्य किमपि
४० मया न हारयितव्यमपि त्वन्तिमदिने सर्व्वं मयोत्थापयितव्यं।
मत्प्रेषयितुरभीष्टञ्चेदं यत् पुत्रं निरीक्ष्य यः कश्चित् तस्मिन्
विश्वसिति, तेनानन्तं जीवनं प्राप्तव्यमन्तिमदिने च स मयोत्थाप-
यितव्यः।

४१ अथ स्वर्गादवतीर्णं खाद्यमहमिति यीशुना यदुक्तं, तत्कारणाद्
४२ यिहूदीयास्तमधि विवदितुं प्रवृत्ताः। तेऽवदन्, असौ किं न
योषेफस्य पुत्रः स यीशु र्यस्य पितरं मातरञ्च जानीमः? कथं

तर्हि स वदति, स्वर्गादवतीर्णोऽहमिति? यीशुः प्रतिभाषमाण- ४३
स्तानब्रवीत्, मा विवदध्वं मिथः। अपरः कोऽपि मत्समीपमायातुं ४४
न शक्नोति, केवलं स यो मत्प्रेषयित्रा पित्राकृष्यते, स चान्तिम-
दिने मयोत्थापयिष्यते । भाववादिनां ग्रन्थे लिखितमास्ते, ४५

भविष्यन्ति हि ते सर्व्वे ईश्वरेणैव शिक्षिताः ।

अतो यः कश्चित् पितुः सकाशाच्छ्रुत्वा शिक्षितवान्, स मत्समीप-
मायाति। कोऽपि यत् पितरं दृष्टवान्, न तथा, ईश्वरस्य ४६
सकाशाद् योऽस्ति, केवलं स एव पितरं दृष्टवान्। सत्यं सत्यं, ४७
युष्मानहं ब्रवीमि, मयि यो विश्वसिति, तस्यानन्तं जीवनमास्ते। अहं ४८
जीवनदायि खाद्यं। युष्माकं पूर्व्वपुरुषा मरौ मान्नां भुक्तवन्तो ४९
मृतवन्तश्च। इदं स्वर्गादवतीर्णं खाद्यम्, मनुष्येण भोक्तव्यं, भुक्त्वा ५०
च न मर्त्तव्यं। अहं स्वर्गादवतीर्णं जीवनमयं खाद्यं। खाद्यमिदं ५१
येन भुज्यते स शाश्वतं जीविष्यति। यच्च खाद्यमहं दास्यामि
तन्मम मांसं यद्दातव्यं जगतो जीवनार्थं।

ततो यिहूदीया मिथो वाग्युद्धं कुर्व्वन्तोऽवदन्, भोजनार्थ- ५२
मस्मभ्यं स्वमांसं दातुमसुना कथं शक्यं? यीशुस्तदा तानवादीत्, ५३
सत्यं सत्य, युष्मानहं ब्रवीमि, यदि मनुष्यपुत्रस्य मांसं नाश्नीथ
तस्य शोणितं न पिबथ च, तर्हि यूयमन्तरेऽनन्तं जीवनं न
प्राप्स्यन्तः। यो मम मांसमश्नाति मम शोणितं पिबति च, ५४
सोऽनन्तजीवनप्राप्त उत्थापयितव्यश्च मयान्तिमदिने। यतो मम ५५
मांसं सत्यं भक्ष्यं मम शोणितञ्च सत्यं पानीयं। यो मम मांस- ५६
मश्नाति मम शोणितं पिबति च, मयि सोऽवतिष्ठते तस्मिन्न-
हञ्चावतिष्ठे। यथा जीवनमयः पिता मां प्रहितवान् पितु र्गुणादहं ५७
जीवामि च, तथा यो मामश्नाति सोऽपि मम गुणाज्जीविष्यति।

५८ इदमेव स्वर्गादवतीर्णं खाद्यं। नास्तीदं तेन मान्नाख्यद्रव्येण सदृशं,
युष्माकं पूर्व्वपुरुषा यद् भुक्तवन्तो मृतवन्तश्च। खाद्यमिदं येन
५९ भुज्यते स शाश्वतं जीविष्यति। कथा एतास्तेन कफर्नाहूमे समा-
जगृह उपदिशताकथ्यन्त।

६० अथ ताः श्रुत्वा तदीयशिष्याणां बहवोऽवादिषुः, कठिनेयमुक्तिः
केन श्रोतुं शक्या? तदीयशिष्यास्तु यदस्मिन् विषये विवदन्ते,
६१ यीशुरन्तरे तज्ज्ञात्वा तानवादीत्, इदं किं युष्मान् स्खालयति?
६२ तर्हि मनुष्यपुत्रः पुरा यत्रासीत् तत् स्थानमारोहन्तं तं यदा
६३ निरीक्षिष्यध्वे, तदा किमनुमास्यध्वे? आत्मैव जीवनदायी, मांसं
किमपि नोपकरोति। अहं युष्मभ्यं यानि वचांसि कथयामि,
६४ तान्यात्मा जीवनञ्च। सन्ति तु युष्माकं केचिद्, ये न विश्वसन्ति।
यतः के के न विश्वसन्ति को वा तं (शत्रुषु) समर्पयिष्यति तद्
६५ यीशुरादितोऽज्ञायि। स चावदीत्, अतो हेतो र्यूयं मयोक्ताः
अपरः कोऽपि मत्समीपमायातुं न शक्नोति, केवलं स यस्मै पित्रा
शक्तिरदायीति।

६६ ततः प्रभृति तच्छिष्याणां बहवः पराङ्मुखीभूयापक्रान्ताः, स
६७ पुनस्तेन सार्द्धमव्रजन्। तदा यीशु र्द्वादश प्रेरितानपाठीत्, यूयमपि
६८ किमपक्रमितुमिच्छथ? शिमोनः पितरस्तमुवाच, प्रभो, कस्याश्रयितु-
६९ मपक्रमिष्यामः? सन्ति भवतोऽनन्तजीवनस्य कथाः। अस्माभिस्तु
विश्वसितं ज्ञातञ्च यद् भवान् जीवनमयस्येश्वरस्य पुत्रः ख्रीष्टः।
७० यीशुस्तान् प्रत्युवाच, किं न द्वादश यूयं वरिता मया? तथापि
युष्माकमेको दियावलः। अनेन स शिमोनस्य पुत्रमीष्करियोतीयं
यिहूदामसूचयत्, यतो द्वादशानामेकः सन्नपि स तस्य भावी
समर्पयितासीत् ॥ ६ ॥

### यिरूशालेमे यीशोरुपदेशनम्।

ततः परं यीशु र्गालीले पर्य्यटत्, यतो यिहूदीयास्तं जिघां- ७ १
सन्तीति ज्ञात्वा स पुन र्यिहूदियायां पर्य्यटितुं नैच्छत्। यिहूदी- २
यानामुटजनिर्म्माणाख्य उत्सवे त्वासन्ने सति तस्य भ्रातरस्तमवदन्, ३
त्वमतः स्थानादुत्थाय यिहूदियां याहि, त्वया यानि क्रियन्ते,
तानि कर्म्माणि तव शिष्येरप्यालोक्यन्तां, यतः स्वयं सप्रकाशो ४
भवितुमीहमानः कोऽपि गुप्तं नाचरति। त्वं यद्येतानि साधयसि,
तर्ह्यात्मानं जगतः प्रत्यक्षं कुर्व्विति। यतस्तदीयभ्रातरोऽपि तस्मिन्न ५
व्यश्वसन्। यीशुस्तदा तानवादीत्, मम समय इदानीमप्यनुपस्थितः, ६
युष्माकं समयस्तु सर्व्वदा प्रस्तुतः। जगद् युष्मान् द्वेष्टुं न शक्नोति, ७
मान्तु द्वेष्टि, यतस्तस्मिन्नयेदं साक्ष्यं दीयते यत् तस्य कर्म्माणि
दुष्टानि। यूयमेवैनमुत्सवं गच्छत। अहमधुनाप्येनमुत्सवं न गच्छामि, ८
यतो मम काल इदानीमप्यसम्पूर्णः। तानिदमुक्त्वा स गालीले- ९
ऽवतस्थे। प्रस्थितेषु तु तदीयभ्रातृषु सोऽपि तमुत्सवं जगाम, न १०
सप्रकाशमपि तु गुप्तमिव। ततो यिहूदीया उत्सवे तं गवेषयन्तो- ११
ऽवदन्, स नरः कुत्र? जननिवहेषु च तमधि बहुतरो विवादः १२
समजायत। केचिदवदन्, स भद्र इति। केचित् पुनरवदन्, न
तथा, प्रत्युत स जननिवहमुन्मार्गगामिनं करोतीति। तथापि १३
यिहूदीयानां भयात् कोऽपि तमधि सप्रकाशं नाकथयत्।

उत्सवस्यार्द्धकाले तु यीशु र्धर्म्मधाम गत्वोपदेष्टुं प्रववृते। १४
अनेन यिहूदीया विस्मयापन्ना अवदन्, असावनधीत्यापि कथं १५
शास्त्रविज्ज्ञातः? यीशुः प्रतिभाषमाणस्तानवादीत्, मदीयोपदेशो १६
न मम, स मत्प्रेषयितुरेव। कश्चिद् यदि तस्याभीष्टमाचरितुं १७
रोचयति, स तदुपदेशमधि ज्ञास्यति स ईश्वरोत्पन्नोऽथवाहं स्वतो

१८ भाष इति। यः स्वतो भाषते स स्वीयगौरवमीहते, यस्तु स्वप्रेषयितु
१९ र्गौरवमीहते, स सत्यवादी तस्मिन्नधर्म्मो नास्ति। व्यवस्था किं न मोशिना
२० युष्मभ्यं दत्ता? तथापि युष्माकं कोऽपि व्यवस्थां न समाचरति। यूयं
किमर्थं मां जिघांसथ? जननिवहः प्रत्यवादीत्, त्वं भूताविष्टः,
२१ कस्त्वां जिघांसति? यीशुः प्रतिभाषमाणस्तानब्रवीत्, कर्म्मैकमकारि
२२ मया, तत्र सर्व्वे यूयमाश्चर्य्यं मन्यध्वे। तत्कारणाद् (वदामि,) मोशि
युष्मभ्यं त्वक्छेदस्य विधिं दत्तवान्, सोऽपि न मोशित उत्पन्नः
प्रत्युत पितृभ्यः; यूयञ्च विश्रामवारे मनुष्यस्य त्वक्छेदं कुरुथ।
२३ मोशेर्व्यवस्था यत्र लङ्घेत, तदर्थं यदि विश्रामवारे मनुष्येण त्वक्छेदः
संढव्यस्तर्हि विश्रामवारे सर्व्वाङ्गो मनुष्यो मया स्वस्थीकृतोऽत्र किं
२४ मह्यं क्रुध्यथ? चाक्षुषं विचारं मा कुरुत, न्याय्यमेव विचारं कुरुत।
२५ ततो यिरूशालेमनिवासिनां केचिद्वदन्, (नायका) यं हन्तुं
२६ यतन्ते, मनुष्योऽयं किं न स एव? पश्यत च स सप्रकाशं भाषते तैस्तु
किमपि नोच्यते। अयं ख्रीष्ट एवेति किं नायकैः सत्यमज्ञायि?
२७ अयन्तु कुत उत्पन्नस्तदस्माभिर्विदितं। ख्रीष्टस्तु यदागमिष्यति तदा
२८ स कुत उत्पन्नस्तत् केनापि न ज्ञायिष्यते। ततो यीशुः धर्म्म-
धामन्युपदिशन् प्रोच्चैराह, यूयं माञ्च जानीथ कुतश्चाहमुत्पन्न-
स्तदपि जानीथ। अहन्तु न स्वत आगतः प्रत्युत सत्योऽस्ति
२९ मत्प्रेषयिता, स युष्माभिरविदितः। अहन्तु तं जानामि,
यतोऽहं तत्सकाशाद् (आगतो) ऽस्मि, स च मां प्रहितवान्।
३० ततस्ते तं धर्त्तुमयतन्त, तथापि कोऽपि तस्मिन् हस्तं नार्पयामास,
३१ यतस्तदानीमपि तस्य समयोऽनुपस्थित आसीत्। जननिवहस्य बहवो
नराश्च तस्मिन् व्यश्वसिषुरवादिषुश्च, ख्रीष्टो यदागमिष्यति, तदानेन
यानि कृतानि तेभ्योऽधिकान्यभिज्ञानार्थकर्म्माणि किं स करिष्यति?

अथ जननिवहस्तमधीत्थं यद् व्यवदन्त तच्छ्रुत्वा फरीशिनो ३२
मुख्ययाजकाश्च तं धर्त्तुं पदातीन् प्रेषयामासुः। अतो यीशुस्तान् ३३
जगाद, इतः परमहं स्तोकं कालं युष्माभिः सार्द्धं स्थास्यामि, ततो
मत्प्रेषयितुः समीपं यास्यामि। यूयं मां गवेषयिष्यथ न लप्स्यथ। ३४
अहञ्च यत्र विद्ये तत्रोपस्थातुं युष्माभिरशक्यं। ततो यिहूदीया ३५
मिथोऽवदन्, अनेन किं स्थानं गन्तव्यं यत् सोऽस्माभिरप्राप्यो
भविष्यति? अयं किं यूनानीयानां मध्ये विकीर्णजनानां समीपं
गत्वा यूनानीयान् शिक्षयिष्यति? कीदृशमिदमनेन कथितं वचनं, ३६
यूयं मां गवेषयिष्यथ न लप्स्यथेत्यपरञ्च यत्राहं विद्ये तत्रोपस्थातुं
युष्माभिरशक्यमिति?

अथोत्सवस्यान्तिमदिवसेऽर्थतो महादिवसे यीशुस्तिष्ठन्नुच्चरवेण ३७
बभाषे, यः पिपासुः स मदन्तिकमागत्य पिबतु। मयि यो विश्व- ३८
सिति, शास्त्रीयोक्त्यनुसारेण तस्यान्तरादमृततोयस्य सरितः प्रस्र-
विष्यन्ति। तस्मिन् विश्वासिभि र्यं आत्मा लप्स्यते तमधि तेनेतद्- ३९
कथ्यत। पवित्रस्यात्मनो वितरणं तदाप्यसम्भूतमासीत्, यतस्तदापि
यीशुरप्राप्तप्रताप आसीत्। वचनमेतच्छ्रुत्वा जननिवहस्य बहवो ४०
जना अवदन्, सत्यम्, अयं स भाववादी। अन्येऽवदन्, अयं ख्रीष्टः। ४१
अन्ये पुनरवदन्, कथमेतत्? ख्रीष्टेन किं गालीलादागन्तव्यं? शास्त्रे ४२
किं नेदं लिखितमास्ते यद् दायूदस्य वंशाद् दायूदस्य वसतिग्रामात्
बैतलेहमात् ख्रीष्टेनागन्तव्यं? इतस्तमधि जननिवहस्य भेदः ४३
सञ्जातः। तेषां केचिच्च तं धर्त्तुमैच्छन्, तथापि कोऽपि तस्मिन् ४४
हस्तं नार्पयामास।

ततस्ते पदातयो मुख्ययाजकानां फरीशिनाञ्च समीपं प्रत्या- ४५
जग्मुस्ते च तानप्राक्षुः, स किमर्थं युष्माभि र्नानीतः? पदातयः ४६

प्रत्यूचुः, स यादृशं भाषते, तादृशं कोऽपि मनुष्य इतिपूर्व्वं कदापि
४७ न भाषितवान्। फरीशिनस्तदा तान् प्रत्यूचुः, यूयमपि किमुन्मार्गं
४८ नीताः? नायकानां फरीशिनां वा कोऽपि किं तस्मिन् विश्वसिति?
४९ प्रत्युत व्यवस्थानभिज्ञोऽसौ जननिवहः शप्तः। तदा तेषां मध्ये
५० गणितो यो नीकदीमो रजन्यां तस्यान्तिकमागतवान्, स तान्
५१ अब्रवीति, प्रथमं मनुष्यस्य मुखाद् वाक्यमश्रुत्वा तेन किं क्रियते
तदज्ञात्वा वास्माकं व्यवस्था किं मनुष्यं दोषिणं करोति? ते
प्रतिभाषमाणास्तमूचुः, त्वमपि किं गालीलीयः? अनुसन्धत्स्वालोचय
च यद् गालीलतः कोऽपि भाववादी नोत्पद्यते ॥ ७ ॥

८ १ ततस्ते प्रत्येकं स्वगृहं जग्मुः, यीशुश्च जैतुनगिरिं जगाम।
२ प्रत्यूषे तु स पुन धर्म्मधामन्युपतस्थे सर्व्वजनश्च तदन्तिकमागच्छत्,
३ स चोपविश्य तानशिक्षयत्। तदा शास्त्राध्यापकाः फरीशिनश्च
व्यभिचारे धृतां स्त्रियं काञ्चित् तस्य समीपमानयन्ति, मध्यस्थाने
४ स्थापयित्वा च तं वदन्ति, गुरो, योषिदियं व्यभिचारं कुर्व्वत्येव
५ धृता। व्यवस्थायाञ्च मोशिरस्मान् प्रस्तराघातेनेदृशीनां प्राणदण्ड-
६ माज्ञापयामास, अतो भवान् किं वदति? तस्य विरुद्धमभियोग-
सूत्रस्य लिप्सया ते परीक्षमाणास्तमेतदूचुः। यीशुस्तु प्रह्वीभूयाङ्गुल्या
७ मृत्तिकायाम् अलिखत्। तेषु तु तं पृच्छावतिष्ठमानेषु, स ऊर्द्ध्वी-
भूय तानवादीत्, युष्माकं यो निष्पापः प्रथमं सोऽस्यां प्रस्तरं
८ निक्षिपतु। इत्युक्त्वा स पुनः प्रह्वीभूय मृत्तिकायामलिखत्। ते
९ तु तच्छ्रुत्वा संवेदेन दोषबोधमनुभूय च प्राचीनेभ्य आरभ्यान्त्यान्
यावदेकैकशः सर्व्वे निरक्रामन्। इत्थमेकाकी यीशु र्मध्यस्थाने
१० तिष्ठन्ती सा स्त्री चावशिष्येतां। ततो यीशुरूर्द्ध्वीभूय तां स्त्रियं
मृतेऽपरं कमपि न दृष्ट्वा च तां पप्रच्छ, नारि, त्वदभियोगिनस्ते

नराः कुत्र? त्वं किं केनापि न दण्डार्हीकृता? सावादीत्, न ११
केनापि, प्रभो। ततो यीशुस्तामाह, अहमपि त्वां न दण्डार्ही-
करोमि, याहि, पुनः पापं माकार्षीः।

ततो यीशुः पुन र्जनैः संलप्य बभाषे, अहं जगतो ज्योतिः, १२
यो मामनुगच्छति स नैवान्धकारे भ्रमिष्यत्यपि तु जीवनरूपमालोकं
प्राप्स्यति। फरीशिनस्तदा तमूचुः त्वया स्वार्थे साक्ष्यं दीयते, तव १३
साक्ष्यं न सत्यं। यीशुः प्रतिभाषमाणस्तान् जगाद, यद्यप्यहं १४
स्वार्थे साक्ष्यं ददामि, तथापि मम साक्ष्यं सत्यं, यतोऽहं कुत
आगतः क्व वा गच्छामि, तज्जाने। यूयन्तु न जानीथ कुतो-
ऽहमागतः क्व वा गच्छामि। यूयं शरीरानुयायिनं विचारं कुरुथ, १५
अहं कस्यापि विचारं न करोमि। यद्यप्यहं विचारं करोमि, १६
तथापि मम विचारः सत्यः, यतो नाहमेकाकी, किन्त्वहमस्मि
मत्प्रेषयिता पिता चास्ति। युष्मदीयव्यवस्थायामपि लिखितमस्ति, १७
यद् द्वयोः साक्षिणोः साक्ष्यं सत्यं। अहं स्वार्थे साक्ष्यदातास्मि, १८
मत्प्रेषयिता पिता च मयि साक्ष्यं ददाति। तदा ते तं पप्रच्छुः, १९
कुत्रास्ति तव पिता? यीशुस्तान् प्रतिजगाद, यूयं माञ्च न
जानीथ, मम पितरञ्च न जानीथ। यदि मामज्ञास्यत, तर्हि मम
पितरमप्यज्ञास्यत। एतानि वचांसि धनागारे यीशुनाकथ्यन्त। २०
स तदा धर्म्मधामन्युपादिशत्, तथापि कोऽपि तं न दधार, यत-
स्तदानीमपि तस्य समयोऽनुपस्थित आसीत्।

ततो यीशुः पुनस्तानवादीत्, अहं गच्छामि, यूयञ्च मां २१
गवेषयिष्यथ, स्वपापे मरिष्यथ च। अहं यत् स्थानं गच्छमि
तत्रोपस्थातुं युष्माभिरशक्यं। ततो यिहूदीया अवदन्, स किमा- २२
त्मघाती भवितुमुद्यतस्तद्धेतोश्च वदति, यत् स्थानमहं गच्छामि

२३ तथोपस्थातुं युष्माभिरशक्यमिति? स तदा तानब्रवीत्, यूयमधः-
स्थानीयाः, अहमूर्द्ध्वस्थानीयः। यूयमेतज्जगत्सम्बन्धीयाः, नाहमे-
२४ तज्जगत्सम्बन्धीयः। ततो युष्मभ्यं कथितवान्, यूयं स्वपापेषु
मरिष्यथ। यतोऽहं सोऽस्मीति चेन्न विश्वसिथ, तर्हि स्वपापेषु
२५ मरिष्यथ। ते तदा तं पप्रच्छुः, कस्त्वं? यीशुस्तानुवाच, आदित-
२६ स्तदेव युष्मभ्यं कथयामि। युष्मानधि मया बहु वक्तव्यं बहु
विचारणञ्च कर्त्तव्यं। मत्प्रेषयिता तु सत्यः, तस्य मुखाच्च मया
२७ यद्यद्श्रावि तदेव जगते कथ्यते। स यत् तेषां ज्ञानार्थं पितरम-
२८ सूचयत् तत्तैर्नाबोधि। ततो यीशुस्तानब्रवीत्, मनुष्यपुत्रे युष्मा-
भिरुच्चीकृते ज्ञायिष्यते यदहं सोऽस्मि स्वतश्च किमपि न करोम्यपि
२९ तु पित्रा यथादिष्टस्तथैवैतानि भाषे। मत्प्रेषयिता च मया
सार्द्धमास्ते, स मामेकाकिनं न त्यक्तवान् यतस्तस्मै यद्यद् रोचते
सर्व्वदा तदेव मया क्रियते।

३० स यदैताः कथा अभाषत, तदा बहवस्तस्मिन् व्यश्वसिषुः।
३१ ततो ये यिहूदीयास्तस्मिन् व्यश्वसिषुस्तान् यीशुर्जगाद, यदि मम
३२ वाक्ये स्थिरा भवथ, तर्हि सत्यं यूयं मम शिष्याः स्थ, सत्यञ्च
३३ ज्ञास्यथ सत्येन स्वाधीनीकारिष्यध्वे च। ते तं प्रत्यूचुः, वयमब्राहा-
मस्य वंशः, कदापि कस्यापि दास्यं नाचरितवन्तः। तत् कथं
३४ त्वयोच्यते, यूयं स्वाधीना भविष्यथेति? यीशुस्तान् प्रत्यवादीत्,
सत्यं सत्यं, युष्मानहं वदामि, यः कश्चित् पापमाचरति स पापस्य
३५ दासः, दासश्च न शाश्वतं गृहेऽवतिष्ठते, पुत्र एव शाश्वतमवतिष्ठते।
३६ अतश्चेत् पुत्रेण स्वाधीनीक्रियध्वे, तर्हि सत्यरूपेण स्वाधीना
३७ भविष्यथ। अहं जाने यद् यूयमब्राहामस्य वंशः, मान्तु जिघांसथ,
३८ यतो मदीयवाक्यं युष्मदन्तरे स्थानं नाप्नोति। मत्पितुः समीपं

मया यद्यद्दर्शि तदेव कथ्यते, तथा च युष्मत्पितुः समीपं युष्माभि
र्यद्यदद्र्शि तत् क्रियते। ते प्रतिभाषमाणास्तमूचुः, अब्राहामो- ३९
ऽस्माकं पिता। यीशुस्तान् वदति, यद्यब्राहामस्य सन्ताना अभ-
विष्यत, तर्ह्यब्राहामस्य क्रिया अकरिष्यत। इदानीन्तु मां जिघांसथ, ४०
नरं य ईश्वरस्य मुखात् सत्यं श्रुत्वा युष्मभ्यं कथितवान्। अब्राहामे-
णैतन्नाकारि। युष्मत्पितुः क्रिया युष्माभिः क्रियन्ते। ततस्ते तमूचुः, ४१
न व्यभिचारजाता वयम्, अस्माकमेकः पितास्ति स ईश्वरः।
यीशुस्तदा तानुवाच, ईश्वरो यदि युष्माकं पिताभविष्यत्, तर्हि ४२
यूयं मयि प्रेमाकरिष्यत, यतोऽहमीश्वरान्निर्गत्यायातः, नैव हि
स्वत आगतोऽहं प्रत्युत स एव मां प्रहितवान्। मम भाषा ४३
किमर्थं युष्माभि र्नाभिज्ञायते? कारणमेतद् यद् यूयं मम वाक्यं
श्रोतुं न शक्नुथ। यूयं पितुर्दियावलस्य सम्बन्धीयाः, युष्मत्पितुर- ४४
भिलाषानाचरितुकामाश्च। स आदितो नरघातक आसीत्, सत्ये
च नावस्थितः, यतस्तस्मिन् सत्यं नास्ति। स यदानृतं भाषते तदा
निजस्वं भाषते, यतः सोऽनृतवादी तस्य पिता चास्ति। अहन्तु ४५
सत्यं भाषे, तत्कारणाद् यूयं मयि न विश्वसिथ। मम पापमस्तीति ४६
प्रमाणं युष्माकं को ददाति? यदि तु सत्यं भाषे, किमर्थं तर्हि
यूयं मयि न विश्वसिथ? य ईश्वरसम्बन्धीयः स ईश्वरस्योक्तीः ४७
शृणोति। युष्माभिस्ता न श्रूयन्ते, तत्कारणमेतद् यद् यूयमीश्वर-
सम्बन्धीया न स्थ।

यिहूदीयास्तदा प्रतिभाषमाणास्तमवादिषुः, किं न युक्तमस्माभिः ४८
कथ्यते यत् त्वं शमरीयो भूताविष्टश्चेति। यीशुः प्रतिजगाद, ४९
नास्म्यहं भूताविष्टः, प्रत्युत मम पितरं सम्मानयामि, यूयञ्च
मामवमानयथ। नाहं मत्सम्मानाकाङ्क्षी, अस्ति तल्लिप्सुस्तदन्वेषी तद्वि- ५०

५१ धारयिता च। सत्यं सत्यं, युष्मानहं ब्रवीमि, यः कश्चिन्मम
५२ वाक्यमनुपालयति, सोऽनन्तकालं यावन्मृत्युं न द्रक्ष्यति। यिहूदी-
यास्तदा तमवदन्, अधुना वयं बुद्धा जानीमो यत् त्वं भूताविष्टः।
इब्राहीमो ममार, भाववादिनश्च ममुः, त्वं पुन र्वदसि, यः
कश्चिन्मम वाक्यमनुपालयति, सोऽनन्तकालं यावन्मृत्युं नास्वाद-
५३ यिष्यतीति। अस्मत्पितुरिब्राहीमात् त्वं किं महत्तरः? स हि ममार,
५४ भाववादिनोऽपि ममुः, त्वमात्मानं कं कुरुषे? यीशुः प्रत्युवाच,
यद्यहं स्वं सम्मानयामि, तर्हि मम सम्मानः किमपि नास्ति, मम
५५ पितैव मत्सम्मानयिता, स युष्माकमीश्वर इति यूयं वदथ. तथापि
स युष्माकमविदितः, अहन्तु तं जानामि। स ममाविदित इति
चेद् वदेयं, तर्हि युष्माभिः सदृशोऽनृतवादी भविष्यामि। अहं तं
५६ जानामि तस्य वाक्यमनुपालयामि च। युष्मत्पितेब्राहीमो मद्दि-
५७ नदर्शनस्याशया प्रमुमुदे तद् दृष्ट्वा चाहृष्यत्। ततो यिहूदीयास्त-
मूचुः, इदानीमपि तव पञ्चाशद्वर्षपरिमितं वयो नास्ति, त्वं
५८ किमिब्राहीमं दृष्टवान्? यीशुस्तानुवाच, सत्यं सत्यं, युष्मानहं
५९ ब्रवीमि, इब्राहीमस्य जन्मनः प्राक्कालमारभ्याहमस्मि। तदा ते
तमाहन्तुं प्रस्तरानाददिरे। यीशुस्तु प्रच्छन्नस्तेषां मध्येन व्रजन्
धर्म्मधामतो निःससारेत्थं स्थानान्तरं जगाम च॥ ८॥

यीशुना जन्मान्धाय नेत्र दानम्।

उत्तममेषपालकस्य दृष्टान्तः।

९ १ गमनकाले स नरमेकं जन्मान्धं लक्षयामास। तस्य शिष्यास्तदा
२ तमप्राक्षुः, रब्बिन्, असौ यदन्धोऽजनि, तादृशं पापं केनाकारि?
३ अमुना किं वामुष्य पितृभ्यां? यीशुः प्रत्युवाच, (तादृशं) पापं
नामुनाकारि, नापि वामुष्य पितृभ्याम्, प्रत्युतामुष्मिन्नीश्वरस्य

क्रियाभिः प्रत्यक्षीभवितव्यम्। यावद् दिवसोऽस्ति तावन्मत्प्रेषयितुः ४
क्रिया मया कर्त्तव्याः। आयाति सा रात्रि र्यदा कार्य्यं कर्त्तुं
केनापि न शक्यते। अहं यावज्जगति वर्त्ते तावज्जगतो ज्योतिरस्मि। ५
इत्थं भाषित्वा स भूमौ निष्ठीव्य तेन ष्ठीवनेन पङ्कं रचयामास, ६
पङ्केन तस्यान्धस्य चक्षुषी लिप्त्वा च तं जगाद, याहि, शीलोहाख्य- ७
सरस्यास्यं प्रक्षालय च। भाषान्तरे नाम्नोऽस्यार्थः प्रहित इति।
स तदा गत्वास्यं प्रक्षाल्य दृष्टिप्राप्तः प्रत्याजगाम।

तत्प्रतिवेशिवृन्दादयो ये मनुष्याः प्राक् तमन्धं ज्ञात्वालक्षयंस्ते ८
तदाप्राचुः, अयं किं न स जनो यः (प्रत्यहम्) आसीनोऽभिक्षत?
अपरेऽवदन्, अयं स एव। अपरे चावदन्, अयं तेन सदृशः। ९
स त्ववादीत्, अहं स एव। ततस्ते तमप्राचुः, तव लोचने कथं १०
प्रसन्नीभूते? स प्रतिभाषमाणस्तानवादीत्, यीशुनामा नर एकः ११
पङ्कं कृत्वा मम लोचने लिप्त्वा च मामादिदेश, शीलोहसरो
गत्वास्यं प्रक्षालयेति। ततोऽहं गत्वा प्रक्षाल्य च दृष्टिं प्राप्तवान्।
ते तदा तमप्राचुः, स कुत्रास्ति? स आह, न जाने। १२

तदा ते तं पूर्व्वान्धं फरीशिनां समीपमनैषुः। यीशुस्तु यस्मिन् १३
दिने पङ्कं कृत्वा तस्य नेत्रे प्रसन्नीकृतवांस्तद् विश्रामदिनं। फरी- १४
शिनस्तदा तं पुनरप्राचुः, कथं त्वया दृक्शक्ति र्लब्धा? स तान् १५
जगाद, तेन मन्नेत्रयोः पङ्केऽर्पितेऽहमास्यं प्रक्षालितवान्, ततश्च
पश्यामि। फरीशिनः केचित् तदा तमूचुः, नास्ति स नर ईश्वरप्रहितः, १६
यतः स विश्रामवारं नानुपालयति। अपरेऽवदन्, पापी मनुष्य
ईदृशान्यभिज्ञानार्थकर्म्माणि कर्त्तुं कथं शक्नोति? इत्थं तेषु भेदो
जातः। ततस्ते तमन्धं पुनरप्राचुः, स तव नेत्रे प्रसन्नीकृतवानिति १७
हेतोस्त्वं तमधि किं वदसि? स उवाच, स भाववादीति वदामि।

१८ स यदन्ध आसीत् दृक्शक्तिञ्च प्राप्तवान्, यिहूदीयास्तत्
१९ सत्यममन्यन्त. ततः शेषे तस्य दृष्टिप्राप्तस्य पितरावाहूय तावप्राक्षुः,
अयं युवयोः पुत्रो यो युवयोः प्रमाणादन्धोऽजनि. अधुनायं कथं
२० पश्यति? तत्पितरौ प्रतिभाषमाणौ तानूचतुः, अयमस्मत्पुत्रोऽस्य-
२१ न्धोऽजनि च तज्जानीवः. कथन्त्वधुना पश्यति, केन वास्य नेत्रे
प्रसन्नीकृते तन्न जानीव आवां। वयःप्राप्तोऽयम्, इममेव पृच्छत,
२२ अयं स्वकथां स्वयं कथयिष्यति। तत्पितरौ यिहूदीयानां भया-
देवेत्यमभाषेतां, यतो यः कश्चित् तं ख्रीष्टं मत्वा स्वीकरिष्यति स
२३ समाजभ्रष्टो भविष्यतीति यिहूदीयास्तत्पूर्व्वं निश्चितवन्तः। तत्का-
रणात् तस्य पितरावूचतुः, अयं वयःप्राप्तः, इममेव पृच्छतेति।
२४ तदा ते द्वितीयवारं तं पूर्व्वान्धमाहूय जगदुः, ईश्वरस्य
२५ महिमानं स्वीकुरु, वयं जानीमो यत् स नरः पापी। स प्रति-
भाषमाणोऽब्रवीत्, स पापी न वेत्यहं न जाने, एकमेव जाने,
२६ पूर्व्वान्धोऽहमिदानीं पश्यामि। ते तं पुनरप्राक्षुः, स त्वां प्रति किं
२७ कृतवान्? कथं तव नेत्रे प्रसन्नीकृतवान्? स तान् प्रत्यवादीत्, पुरा
मयोक्ता यूयं नाश्रौष्ट, किमर्थं पुनः श्रोतुमिच्छथ? यूयमपि
२८ किं तस्य शिष्या भवितुं वाञ्छथ? तदा ते तं न्यक्कुर्व्वन्तोऽवादिषुः,
२९ त्वं तस्य शिष्यः, वयं मोशेः शिष्याः। मोशिनेश्वरः संललाप तद्
३० वयं जानीमः, असौ तु कुत उत्पन्नस्तन्न जानीमः। स नरः प्रति-
भाषमाणस्तान् जगाद, अचेतदेवाश्चर्य्यं, यत् स कुत उत्पन्नस्तद्
३१ युष्माभि र्न ज्ञायते। स हि मम नेत्रे प्रसन्नीकृतवान्, वयञ्च जानीमो
यदीश्वरः पापिनां न शृणोति, प्रत्युत यो मनुष्य ईश्वरभक्तस्तदभीष्ट-
३२ माचरति च तस्यैव शृणोति। जन्मान्धस्य नयने केनापि प्रसन्नीकृते
३३ इत्यायुगात्राश्रावि। असौ चेदीश्वरप्रहितो नाभविष्यत् तर्हि किमपि

कर्त्तुं नाशक्ष्यत्। ते तं प्रत्यवादिषुः, सर्व्वाङ्गः पापाविष्टोऽजनिष्ठा ३४
यस्त्वं त्वं किमस्मान् शिक्षयसि? इत्युक्त्वा ते तं वहिरकुः।

स तै र्वहिष्कृत इति श्रुत्वा यीशुस्तमनुसृत्य जगाद, त्वं ३५
किमीश्वरस्य पुत्रे विश्वसिषि? स प्रतिबभाषे, स कः, प्रभो? अहं ३६
तस्मिन् विश्वसानि। यीशुस्तमब्रवीत्, स त्वयादर्शि, त्वया यः ३७
संलपति स एव सः। तेनावादि, विश्वसिमि, प्रभो। इत्युक्त्वा स ३८
प्रणिपत्य तमर्चयामास।

यीशुस्तदा बभाषे, ये न पश्यन्ति तै र्द्रष्टव्यं, ये च पश्यन्ति ३९
तैरन्धीभवितव्यमिति विचारार्थमहं जगदिदमागतः। तच्छ्रुत्वा ये ४०
केचित् फिरूशिनस्तेन सार्द्धमविद्यन्त ते तमवादिषुः, वयमपि
किमन्धाः? यीशुस्तानाह, यद्यन्धा अभविष्यत, तर्हि निष्पापा ४१
अभविष्यत, युष्माभिरिदानीमुच्यते पश्याम इति, ततो युष्माकं
पापमवतिष्ठते॥ ९ ॥

सत्यं सत्यं, युष्मानहं ब्रवीमि, यो न द्वारेण मेषवाटं प्रविश्ये- १० १
तरोपायेनारोहति स चोरो दस्युश्च, यस्तु द्वारेण प्रविशति स २
मेषाणां रक्षकः। तस्य निमित्तं दौवारिको द्वारं मुञ्चति, मेषाश्च ३
तस्य गिरं शृण्वन्ति, स चैकैकस्य नाम्ना निजमेषानाह्वयति वहि
र्नयति च। स च यदा निजमेषान् वहिः करोति, तदा तेषामग्रतो ४
व्रजति, मेषाश्च तमनुगच्छन्ति, यतस्ते तस्य गिरं जानन्ति। पर- ५
कीयन्तु नैवानुगमिष्यन्ति प्रत्युत तत्समीपात् पलायिष्यन्ते, यतस्ते
परकीयाणां गिरं न जानन्ति।

उपमेयं यीशुना तेभ्योऽकथ्यत, ते तु तेन यदुच्यते तन्ना- ६
बुध्यन्त। यीशुस्तदा पुनस्तानुवाच, सत्यं सत्यं, युष्मानहं ब्रवीमि, ७
अहमेव मेषवाटद्वारं। यावन्तो मदग्रत आगतास्ते सर्व्वे चोरा ८

९ दस्यवश्च, मेषास्तु तेषां नाशृण्वन्। अहं द्वारस्वरूपः। मया यः प्रवि-
शति, स त्राणं लप्स्यते, स च प्रवेक्ष्यति निर्य्यास्यति च प्रचारमाप्स्यति
१० च। चोरो नान्यकार्य्यार्थमायाति, केवलं चौर्य्यहत्याविनाशार्थमेव।
मेषास्तु यथा जीवनम् अतिपूर्णताञ्च प्राप्नुयुस्तदर्थमहमागतः।

११ अहं स भद्रो मेषरक्षकः। भद्रो मेषरक्षको मेषाणां निमित्तं
१२ स्वप्राणांस्त्यजति। यो वैतनिकस्तु न मेषरक्षकः, मेषाश्च यस्य निजस्वा
न सन्ति, स वृकमागच्छन्तं निरीक्ष्य मेषान् विजहाति पलायते
१३ च। ततो वृकस्तान् हरति मेषान् विकिरति च। वैतनिकः
१४ पलायते, यतो हेतोः स वैतनिको मेषेषु निश्चिन्तश्च। अहं स भद्रो
मेषरक्षको मदीयांश्च जानामि मदीयाश्च मां जानन्ति, यथा पिता
१५ मां जानात्यहञ्च पितरं जानामि। मेषाणां निमित्तं स्वप्राणांस्त्यजामि
१६ च। सन्ति ममैतन्मेषवाटस्थेभ्योऽप्यन्ये मेषाः, तेऽपि मया नेतव्याः, ते च
मम गिरं श्रोष्यन्ति, इत्थं मेषव्रज एको भविष्यति, मेषरक्षकश्चैकः।
१७ एतत्कारणान्मत्पिता मयि प्रेम करोति यतोऽहं मम प्राणांस्तथा
१८ त्यजामि यथा तान् पुन र्ग्रहीष्यामि। नान्यः कोऽपि मत्तस्तान-
पहरति, स्वयमहंस्तांस्त्यजामि। तांस्त्यक्तुं मम सामर्थ्यमास्ते, पुनस्तान्
ग्रहीतुमपि मम सामर्थ्यमास्ते। आदेशोऽयं मत्पितृतो मयालम्भि।

१९ एतेभ्यो वाक्येभ्यो यिहूदियेषु पुन र्भेदः सञ्जातः। तेषां मध्ये
२० बहवोऽवदन्, स भूताविष्ट उन्मत्तश्च, किमर्थं तस्य शृणुथ?
२१ अन्येऽवदन्, न सन्ति भूताविष्टस्योक्तय इमाः। भूतः किमन्धानां
नेत्राणि प्रसन्नीकर्त्तुं शक्नोति?

यीशोः स्वसमताविषयिणी शिक्षा।

२२ अथ यिरूशालेमे मन्दिरोत्सर्गपर्व्वाभवत्। तदा हेमन्तकाल
२३ आसीत्। एकदा धर्म्मधाम्नि शालोमनोऽलिन्दे विहरन् यीशुः यिहू-

दीये वेष्टितः पृष्टवन्, कति कालमस्मत्प्राणान् संशयारूढान् धार- २४
यसि ? त्वं चेत् ख्रीष्टस्तर्ह्यस्मान् स्पष्टं वद। यीशुस्तान् प्रत्यवादीत्, २५
यूयमुक्ता मया, न तु विश्वसिथ। मत्पितु र्नाम्नाहं याः क्रियाः २६
करोमि ता एव मामधि साक्ष्यं ददति यूयन्तु न विश्वसिथ। यूयं
हि न मदीयमेषाणां श्रेण्यां गण्याः। (युष्मानहं तदनुरूपमुक्तवान्।)
मम मेषा मम गिरं शृण्वन्ति, अहञ्च तान् जानामि, ते च मामनु-
गच्छन्ति तेभ्योऽहञ्चानन्तं जीवनं ददामि। अनन्तकालेऽपि ते नैव २७
विनंक्ष्यन्ति, मम कराच्च कोऽपि तान् नापहरिष्यति। ते मह्यं येन २८
दत्ताः स मदीयपिता सर्व्वेभ्यो महत्तरः। मत्पितु र्हस्ताच्च तानपहर्त्तुं २९
कोऽपि न शक्नोति। अहं पिता चैकं स्वः। यिहूदियास्तदा पुनस्त- ३०
माहन्तुं प्रस्तरानाददिरे। यीशुस्तान् प्रत्यवादीत्, मत्पितुः सका- ३१
शादहं युष्मान् बहूनि हितकर्म्माणि दर्शितवान्, तेषां कस्य कर्म्मणः ३२
कारणान्मां प्रस्तरैराहथ ? यिहूदीयाः प्रतिभाषमाणास्तमवादिषुः, ३३
नैव हितकर्म्मणः कारणात् त्वां प्रस्तरैराहन्मः, प्रत्युतेश्वरनिन्दाकारणात्,
यतस्त्वं मनुष्यः स्वमात्मानमीश्वरं कुरुषे। यीशुस्तान् प्रतिजगाद, ३४
युष्माकं शास्त्रे किं नेदं लिखितमास्ते, मयोक्तमीश्वरा यूयमिति ?
स यदि तान् ईश्वरान् अभिहितवान् यान् प्रतीश्वरस्य वाक्यं प्राद्- ३५
रभूत्, यदि च शास्त्रस्य लोपो न सम्भवति, तर्हि पिता यं पवि- ३६
त्रीकृत्य जगति प्रहितवान् सोऽहं कथितवान् ईश्वरस्य पुत्रोऽस्मीति
कारणात् किं मां वदथ त्वमीश्वरं निन्दसीति ? यदि मत्पितुः क्रिया ३७
न करोमि तर्हि मयि मा विश्वसित, यदि तु करोमि, मयि च ३८
न विश्वसिथ, तर्हि क्रियासु तथा विश्वसित, यथा ज्ञास्यथ विश्व-
सिष्यथ च यन्मयि पिता तस्मिंश्चाहं स्थितः। तदा ते पुनस्तं धर्त्तु-
मयतन्त, स तु तेषां हस्ततो निःससार।

३९ ततः परं यीशुः पुन र्यर्द्दनपारस्थं तत् स्थानं प्रतस्थे यत्र प्रथमं
४० योहनोऽस्नापयत्, तद्दैवावतस्थे च। बहवस्तु तदन्तिकमागच्छन्त-
४१ वदंश्च, योहनः किमप्यभिज्ञानार्थकर्म्म न कृतवान्, इममधि तु
४२ योहनो यद्यदुक्तवांस्तत् सर्व्वं सत्यमासीत्। बहवस्तु तत्र तस्मिन्
व्यश्वसिषुः ॥ १० ॥

यीशुना मृतलासाराय जीवनदानम्।

११ १ अथ बैथनियानिवासी लासाराभिधः कश्चिन्नरो व्याधित
आसीत्। बैथनिया मरियमस्तस्या भगिन्या मार्थायाश्च ग्राम
२ आसीत्। मरियम् सा योषिद् या सुगन्धितैलेन प्रभुं समलोलिपत्
स्वकचैश्च तच्चरणौ पर्य्यमार्ज्जीत्। तस्या एव भ्राता लासारो व्याधित
३ आसीत्। अतस्तस्य भगिन्यौ दूतं प्रहित्य तस्मै निवेदयामासतुः,
प्रभो, पश्यतु, भवान् यस्मिन् प्रेम करोति स व्याधितः। यीशुस्त
४ तच्छ्रुत्वाब्रवीत्, व्याधिरयं न मृत्यवे प्रत्युतेश्वरस्य महिमार्थं,
५ ईश्वरस्य पुत्रो यथा तेन महीयेत। यीशु मार्थायां तस्या भगिन्यां
६ [मरियमि] लासारे च प्रेमाकरोत्। स तु यत्राविद्यत तत्र
तद्व्याधिसंवादश्रवणात् परमपि दिनद्वयमवतस्थे।
७ ततः परन्तु स स्वशिष्यानवादीत्, पुनर्यिहूदिया गम्यतामस्माभिः।
८ शिष्यास्तं वदन्ति, रब्बिन्, दिनेऽमुष्मिन् यिहूदीयाः प्रस्तराघातेन
९ भवन्तं मारयितुमयतन्त, भवांश्च किं पुनस्तत्र गच्छति? यीशुः
प्रतिबभाषे, दिवसे किं न द्वादश घटिका भवन्ति? दिवा यः परि-
१० व्रजति स न स्खलति, यतः स जगतोऽस्य ज्योतिः पश्यति, निशायान्तु
यः परिव्रजति स स्खलति, यतो ज्योति र्न तदन्तःस्थं।
११ एतत्कथनात् परं स तानब्रवीत्, अस्मद्बन्धु र्लासारः स्वपिति,
१२ तं जागरयितुन्तु गच्छामि। शिष्यास्तदा तमूचुः, प्रभो, स यदि

स्वपिति, तर्हि तरिष्यति। यीशुस्तस्य मृत्युमुद्दिश्य कथितवान्, ते १३
त्वमन्यन्त, स निद्राहृपस्वपनमुद्दिश्य कथयतीति। अतएव यीशु- १४
स्तदा तान् स्पष्टमब्रवीत्, त्त्रासारो ममार, यूयञ्च विश्वसिष्यथेति
बुद्ध्वा युष्मदर्थं तत्र मदनुपस्थितत्वादहं हृष्यामि। तद्यथा तथास्तु, १५
तत्समीपं गम्यतां। तदा थोमा अर्थतो दिदुमो [यमकः] सह- १६
शिष्यान् जगाद, अस्माभिरपि गम्यतां, तेन सार्द्धं तथा मरिष्यामः।
इत्थं यीशु र्यदागमत् तदाजानाद्, यदादिनचतुष्टयात् स [त्त्रासारः] १७
श्मशानागारे शेते। बैथनिया च यिरूशालेमस्य समीपस्था प्रायेण १८
क्रोशैकदूरासीत्, बहवो यिहूदीयास्च मार्थामरियमो र्भ्रातृशोक- १९
सान्त्वनार्थं तयो र्गृहमागतवन्तः।

मार्था तदा यीशोरागमनसंवादं श्रुत्वैव तं प्रत्युज्जगाम, मरियम् २०
तु गृह आसीनावातिष्ठत। मार्था तदा यीशुमवादीत्, प्रभो, २१
भावन् यद्यत्रास्थास्यत्, तर्हि मम भ्राता नामरिष्यत्; जाने २२
त्वधुनापि भवान् ईश्वरं यद्यत् प्रार्थयिष्यते, तदीश्वरेण भवते
दायिष्यते। यीशुस्तां ब्रूते, तव भ्राता पुनरुत्थास्यति। मार्था तं २३
ब्रूते, अन्तिमदिने पुनरुत्थाने स उत्थास्यतीति जाने। यीशुस्ता- २४
मुवाच, अहं पुनरुत्थानं जीवनञ्च। मयि यो विश्वसिति स मृत्वापि २५
जीविष्यति, यः कश्चिच्च जीवति मयि विश्वसिति च, सोऽनन्तकाले- २६
ऽपि नैव मरिष्यति। अत्र त्वं किं विश्वसिषि? सा तं ब्रवीति, २७
तथैव, प्रभो। जगति येनागन्तव्यम् ईश्वरस्य पुत्रः स ख्रीष्टो भवा-
नेवेति विश्वासो मयाकारि। इत्युक्त्वा सापजगाम, गुप्तञ्च स्वभगिनीं २८
मरियममाह्वयन्ती तामाह, गुरुरुपस्थितोऽस्ति त्वामाह्वयति च।
सा तच्छ्रुत्वैव सत्वरमुत्थाय तदन्तिकमायाति। यीशुस्तदापि ग्रामं २९
न प्रविष्टवान्, मार्था यत्र तं प्राप्तवती तत्रैवासीत्। ततो मरियमा ३०

३१ सार्द्धं गृहे विद्यमाना ये यिहूदीयास्तामसान्त्वयंस्ते तां सत्वर-
मुत्तिष्ठन्तीं निर्गच्छन्तीञ्च दृष्ट्वा, सा रोदितुं शवागारं यातीत्युक्त्वा
३२ च तामनुजग्मुः। यीशुस्तु यत्रासीत् मरियम् तत्रोपस्थाय तं
दृष्ट्वा च तच्चरणयोः प्रणिपत्योवाच, प्रभो, भवान् यद्यत्रास्थास्यत्,
३३ तर्हि मम भ्राता नामरिष्यत्। तदा यीशुस्तां रुदतीं तया
सार्द्धमागतान् यिहूदीयांश्चापि रुदतो विलोक्यात्मन्यधैर्य्यं गत्वा
३४ संक्षुभ्य च पप्रच्छ, स युष्माभिः कुत्र शायितः? ते तं वदन्ति, प्रभो,
३५ एत्य निरीक्षतां। यीशुरश्रूणमुञ्चत्। ततो यिहूदीया अवदन्,
३६ पश्यत, स तस्मिन् कीदृक् प्रेमाकुरुत। तेषां केचिदवादिषुः, तस्यान्धस्य
३७ नेत्रे प्रसन्नीचकार योऽसौ सोऽसौ किमस्य मृत्युं निवारयितुमपि
३८ समर्थो नासीत्? यीशुस्तदान्तरे पुनरधैर्य्यं गत्वा शवागारसमीप-
३९ मागच्छति। तद् गुहाकारं पाषाणेनापिहितञ्चासीत्। यीशु
र्ब्रवीति, तं पाषाणमपसारयत। तस्य मृतस्य भगिनी मार्था तं
वदति, प्रभो, इदानीं स पूयते, यत आचतुर्भ्यो दिनेभ्यः स मृतः।
४० यीशुस्तां ब्रवीति, त्वं यदि विश्वसिषि, तर्हीश्वरस्य महिमानं
४१ द्रक्ष्यसीति किं नोक्ता मया? ततः स मृतो यत्राशेत, तत्र स्थितः
पाषाणस्तैरपसारितः। यीशुश्चोर्द्धदृष्टिं कृत्वा व्याजहार, पितः,
४२ त्वामहं धन्यं वदामि, यतस्त्वं मे श्रुतवान्। त्वं सर्व्वदा मे शृणोषि
तदजानाम् अपि त्वयाहं यत् प्रहितस्तच्चैते विश्वसिष्यन्तीति बुद्ध्वा
४३ परितः स्थितस्य जननिवहस्य कारणादिदं मयोदाहारि। इदमुक्त्वा
४४ स प्रोच्चैः क्रोशन् व्याजहार, लासार, वहिरागच्छ। तदा स मृतो
वहिरागमत्, स च दीर्घवस्त्रखण्डै र्बद्धचरणहस्तः स्वेदहरवस्त्रेण
वेष्टितमुखश्चासीत्। यीशुस्तान् ब्रवीति, बन्धनानि मुक्त्वेमं गन्तुमनु-
४५ जानीत। तदा मरियमः समीपमागता बहवो यिहूदीया यीशुना

यद्यदकारि तद् दृष्ट्वा तस्मिन् व्यश्वसिषुः, केचित्तु फिरूशिनामन्तिकं ४६
गत्वा यीशुना यद्यदकारि तत् तेभ्यो निवेदयामासुः।

ततो मुख्ययाजकाः फिरूशिनश्च मन्त्रिसभां समाहूयावादिषुः, ४७
किं कुर्व्वाम? स नरो बहून्यभिज्ञानार्थकर्म्माणि करोति। यदि ४८
तस्य वृत्तिमित्थं सहामहे, तर्हि सर्व्वे तस्मिन् विश्वसिष्यन्ति, रोमी-
यास्चागत्यास्माकं स्थानस्य प्रजावृन्दस्य हरिष्यन्ते। तेषां मध्ये गणित- ४९
स्त्वेको नरोऽर्थतो यः कायाफास्तस्य संवत्सरस्य महायाजक आसीत्
स तदा तानुवाच, यूयं किमपि न जानीथ नापीदं तर्कयथ, यत्
प्रजावृन्दस्य निमित्तमेकस्य मरणमस्मद्धितकरं, न च कृत्स्नस्य प्रजा- ५०
वृन्दस्य विनाशः। एतत् तेन न स्वतो व्याहारि, प्रत्युत स तस्य ५१
संवत्सरस्य महायाजक आसीत्, तत्कारणात् तेन भाविकथितमिदं
व्याहारि यत् प्रजावृन्दस्य निमित्तं यीशुना मर्त्तव्यं, नापि च ५२
केवलं तस्य प्रजावृन्दस्य निमित्तं, प्रत्युत विकीर्णानाम् ईश्वर-
सन्तानानाम् एकत्र सङ्ग्रहणार्थमपि। तद्दिनमारभ्य ते तस्य वधार्थम् ५३
अमन्त्रयन्त। अतएव यीशुः पुनः सप्रकाशं यिहूदीयानां मध्ये ५४
पर्य्यटनं न कृत्वा तस्मात् स्थानान्मरुसमीपस्थम् इफ्रायिमाख्यं ग्रामं
प्रस्थाय स्वशिष्यैः सार्द्धं तत्रैवावर्त्तत।

यीशो निस्तारपर्व्वोत्सवे यिरूशालेमगमनम् उपदेशदानञ्च।

तदा यिहूदीयानां निस्तारोत्सव आसन्न आसीत्, बहवो ५५
मनुष्याश्च शुचित्वसाधनार्थं निस्तारोत्सवात् प्राक् जनपदाद् यिरू-
शालेमं जग्मुः। ते तदा यीशुमगवेषयन् धर्म्मधाम्नि स्थित्वा च ५६
मिथोऽवदन्, किं मन्यध्वे, स किमुत्सवे नैवोपस्थास्यत इति।
मुख्ययाजकाः फिरूशिनश्च तं धर्त्तुमिच्छन्त आज्ञामपि दत्तवन्तः, ५७
यथा स कुत्र वर्त्तते तत् स्थानं यो वेत्ति स तत् सूचयेदिति॥ ११॥

१२ १ ततो यीशु निस्तारोत्सवात् षट् दिनानि प्राग् बैथनिया-
यामुपतस्थे। यो मृतो लासारस्तेन मृतानां मध्यादुत्थापितः स
२ तत्रासीत्। तत्र च तस्य निमित्तं रात्रिभोज्यमकारि, मार्था तत्र
३ पर्य्यचरत्, लासारस्य तत्सहभोजिनामेक आसीत्। तदा मरियम्
अर्द्धसेटकं बहुमूल्यं प्रकृतं जटामांसीरसयुक्तं सुगन्धितैलमादाय
यीशोश्चरणौ समलेपयत् स्वकचैश्च तौ चरणौ पर्य्यमार्क्षीत्, कृत्स्नं
४ गृहञ्च तस्य तैलस्य सौरभेण पर्य्यपूर्य्यत। तदा तच्छिष्याणामे-
कोऽर्थतः शिमोनसुतो य ईष्करियोतीयो यिहूदास्तत्समर्पयिता-
५ भूत्, स ब्रवीति, सुगन्धितैलमिदं किमर्थं न त्रिभिः शतै मुद्रापादै
६ र्विक्रीतं दरिद्रेभ्यो दत्तञ्च? न दरिद्राणां हितचिन्तनकारणात्
तेनेदमकथ्यत, प्रत्युत स चौरः सम्पुटवाही चासीत् सम्पुटे च यदन्य-
७ क्षिप्यत तदहरत् तत्कारणादेव। यीशुस्तदाब्रवीत्, अमूमनुजानीहि,
८ मत्समाधिदिनार्थं तयेदं रक्षितं। दरिद्रा हि सततं युष्मत्सङ्गिनः,
अहन्तु न सततं युष्मत्सङ्गी।

९ अथ यीशुस्तत्रास्तीति ज्ञात्वा यिहूदीयानां महान् जननि-
वहस्तत्रोपतस्थे, न केवलं यीशोः कारणात्, प्रत्युत मृतानां मध्यात्
१० तेनोत्थापितस्य लासारस्यापि दिदृक्षया। मुख्ययाजकास्तु लासा-
११ रस्यापि हत्यार्थं मन्त्रयाञ्चक्रिरे, यतस्तस्य कारणाद् बहवो यिहूदीया
गत्वा यीशौ व्यश्वसन्।

१२ अथ परदिने यीशु र्यिरूशालेममायातीति श्रुत्वा पर्व्वार्थ-
१३ मागतो महान् जननिवहः खर्ज्जूरपल्लवानादाय यीशोः प्रत्युद्गमनार्थं
निर्ययावुच्चैरवदच्च, जय, प्रभो र्नाम्ना य आयाति धन्यः स
१४ इस्रायेलस्य राजा। यीशुस्तु युवगर्द्दभं प्राप्य तत्पृष्ठ उपविवेश,
यथा लिखितमास्ते,

मैवानुभूयतां त्रासो भो सीयोनसुते त्वया । १५
पश्य राजा तवायात्यासीनो गर्द्दभशावके ॥

सर्व्वमेतत् तस्य शिष्यैः प्रथमं नाबोधि, यीशोस्तु महिमप्राप्तेः परं ते १६
सस्मरु र्यत् तमधि कथेयं लिखितासीत् तं प्रतीत्थमकारि चेति ।
यीशु र्यल्लासारं शवागारान्निर्गमनार्थमाहूतवान् मृतानां मध्यादुत्था- १७
पितवांश्चेति साक्ष्यं तस्य तदानीन्तनसङ्गिनिवहेनादीयत । एतत्कार- १८
णादेवार्थतः स तद् अभिज्ञानार्थकर्म्म कृतवानितिकथाश्रवणकरणादेव
जननिवहस्तं प्रत्युज्जगाम । फरीशिनस्तदा परस्परमाहुः, युष्माकं १९
सर्व्वरत्नो व्यर्थस्तद् विलोकयथ, जगदेव तस्य पश्चाद् अपगतम् ।

पर्व्वण्युपासनार्थं ये आगमंस्तेषां मध्ये कतिपया यूनानीया नरा २०
आसन् । ते तदा गालीलस्यबैतसैदानिवासिनं फिलिपमभिगम्य प्रार्थ- २१
याञ्चक्रिरे, प्रभो, वयं यीशुं दिदृक्षामहे । फिलिप आगत्याम्द्रियं २२
तद् वदति । पुनराम्द्रियफिलिपौ यीशवे निवेदयतः । यीशुस्तु २३
प्रतिभाषमाणस्तावावादीत्, मनुष्यपुत्रस्य महिमप्राप्तेः समय उपस्थितः ।
सत्यं सत्यं, युवामहं ब्रवीमि, गोधूमबीजं चेत्र मृत्तिकायां पतित्वा २४
म्रियते, तर्ह्येकं तिष्ठति, यदि तु म्रियते, तर्हि बहु फलं फलति ।
यः स्वप्राणेषु प्रेम कुरुते, स तान् हारयिष्यति, यश्चिहलोके तान् २५
प्रति विरज्यते, सोऽनन्तजीवनाय तान् रक्षिष्यति । कश्चिन्मनुष्यो २६
यदि मां परिचरितुं स्वीकरोति, तर्हि मामनुगच्छतु, तथा सत्यहं
यत्रास्मि मम परिचारकोऽपि तत्रैव स्थास्यति । यश्च कश्चिन्मां
परिचरति, मम पिता तं सम्मानयिष्यति ।

### यीशो र्विश्वासाविश्वासस्य विषयः ।

अधुना तु मम प्राणा उद्विग्ना जाताः, अत्र किं वदामि ? २७
पितः, दण्डादस्मान्मां तारय । प्रत्युतैतदर्थमहं दण्डमिमं यावदा-

२८ गतवान् । पितः, तव नाम महिमान्वितं कुरु । तदा गगनादियं
वाणी सञ्जाता, तन्मया महिमान्वितमकारि पुनश्च महिमान्वितं
२९ कारिष्यत इति । तत्र स्थितो जननिवहस्तदा श्रुत्वाब्रवीत्, मेघनादो
जात इति । अन्येऽवदन्, कश्चित् स्वर्गदूतोऽनेन सम्भाषतेति ।
३० यीशुस्तु प्रतिभाषमाणोऽब्रवीत्, न मदर्थं, किन्तु युष्मदर्थं वाणीयं
३१ समभूत् । अधुना जगतोऽस्य विचारः साध्यते, अधुना जगतो-
३२ ऽस्याधिपति र्वहि र्निक्षेप्स्यते । अहञ्च चेत् भूतलादूर्द्धीकृतो
३३ भवामि, तर्हि सर्व्वान् मदन्तिकमाकर्षिष्यामि । स कीदृशं मृत्युं
३४ सहिष्यते बचनेनैतेन तदसूचयत् । ततो जननिवह उवाच, व्यवस्था-
पाठेन वयं श्रुतवन्तो यत् ख्रीष्टेन शाश्वतं स्थातव्यं, तद् भवान्
कथं ब्रूते, मनुष्यपुत्र ऊर्द्धीकर्त्तव्य इति ? स मनुष्यपुत्रः कः ?
३५ यीशुस्तदा तानवादीत्, इतः परं ज्योतिः स्तोकं कालं युष्माभिः
सार्द्धं विद्यते । ततो यावोज्ज्यतिस्तिष्ठति तावत् परिव्रजत,
नोचेदन्धकारेणावेष्टयिष्यध्वे । अन्धकारे यः परिव्रजति स कुत्र
३६ गच्छति तन्न जानाति । यावद् युष्माकं ज्योतिरास्ते तावज्ज्योतिषि
तथा विश्वसित यथा ज्योतिषः पुत्रा भविष्यथ । एतानि वचनानि
यीशुस्तेभ्यः कथयामास, ततः परमपगत्य तेभ्यः प्रच्छन्नो बभूव ।
३७ यद्यपि स तेषां समक्षमेतावन्त्यभिज्ञानार्थकर्म्माणि कृतवांस्तथापि
३८ ते तस्मिन् न व्यश्वसन् । इत्थं भाववादिनो यिशायाहस्यैतद् वचनं
सिद्धं गतं,

अस्मत्प्रचारितसंवादे विश्वासं कोऽकरोत् प्रभो ।
परमेशस्य बाहुर्वाभूत् कस्मै सम्प्रकाशितः ॥

३९ एतत्कारणात् ते विश्वसितुं नाशक्नुवन्, यतो यिशायाहः
पुनरिदमपि व्याहृतवान्,

तेषां नेत्राणि सोऽन्धानि चित्तं स्थूलं चकार च। ४०
नोचेत् ते लोचनै र्दृष्ट्वा चित्तै र्बुद्धिमवाप्य च।
परावृत्ता भविष्यन्ति मोक्ष्याम्यामयात्तथा॥

यिशायाहस्तस्य प्रतापमपश्यत् तत इदं व्याहार्षीत्, तमेवोद्दिश्य ४१
स बभाषे। तथापि नायकानामपि बहवस्तस्मिन् व्यश्वसिषुः, फिरूशिनां ४२
कारणात्तु तं न स्वीकृतवन्तः, समाजभ्रष्टा भविष्याम इति भयात्।
यत ईश्वरदत्तगौरवात् ते मानवदत्तं गौरवं प्रेयोऽमन्यन्त। ४३

अपि तु यीशुरुच्चैःस्वरेण व्याहृतवान्, यो मयि विश्वसिति, ४४
स न मयि विश्वसित्यपि तु मत्प्रेषयितरि। यश्च मां निरीक्षते ४५
स मत्प्रेषयितारं निरीक्षते। अहं ज्योतिःस्वरूपो जगदागतवान्, ४६
यः कश्चिन्मयि विश्वसिति स यथा तिमिरे न स्थास्यति। यस्य ४७
कश्चिन्मम वचांसि श्रुत्वा न विश्वसिति तस्य विचारो मया न
क्रियते, यस्माज्जगतो विचारं कर्त्तुमागतोऽहं, प्रत्युत जगत्
तारयितुमेव। यो मां निराकरोति मम वचांसि न गृह्लाति च ४८
तस्य विचारयितास्ते। मया कथितं वाक्यमेवान्तिमदिने तस्य विचारं
करिष्यति। यतोऽहं न स्वतः कथितवान्, प्रत्युत मया किं कथयितव्यं ४९
किञ्च भाषितव्यं, तन्निरूपिकाज्ञा मत्प्रेषयित्रा पित्रा मह्यमदायि।
तस्याज्ञा च यद् अनन्तजीवनावहा तदहं जानामि। अतोऽहं यद् ५०
भाषे तत् पित्रा यथोक्तस्तथैव भाषे॥ १२॥

यीशो र्मृत्योः प्राग् शिष्यान् प्रति तस्य प्रबोधवाक्यम्।

यीशुना स्वशिष्याणां चरणक्षालनम्।

अथ निस्तारोत्सवात् प्राग् यीशु र्यदा जगतोऽस्मात् पितु- १३ १
रन्तिकमात्मगमनस्य समयमुपस्थितमजानात् तदा जगति स्थितान्
यान् निजस्वान् प्रति प्रेम कृतवांस्तान् प्रत्यन्तं यावत् प्रेमाकुरुत।

१ अपि च अद्युषु तत्समर्पणस्य बौजे दियावलेन शिमोनसुतस्येष्करि-
योतीयस्य यिहूदा हृदि निक्षिप्ते सति यदा रात्रिभोज्यमभवत्,
३ तदा सर्व्वं पित्रा मत्करयोः समर्पितमहञ्चेश्वरसकाशादागत ईश्वर-
४ समीपं गन्तुमुद्यतश्चेति ज्ञात्वा यीशु र्भोज्यादुत्थौ स्ववसनानि
५ मोचयित्वा च गात्रमार्ज्जनवस्त्रमादाय तेन स्वकटिं बबन्ध। ततः
परं प्रक्षालनपात्रे तोयं निधाय शिष्याणां चरणान् प्रक्षालयितुं
६ स्वकटौ निबद्धेन मार्ज्जनवस्त्रेण मार्ज्जयितुञ्चारेभे। इत्थं स यदा
शिमोनपितरस्य समीपमागच्छत् तदा स तमवादीत्, प्रभो, भवान्
७ किं मम चरणौ प्रक्षालयेत्? यीशुः प्रतिभाषमाणस्तमुवाच, मया
यत् क्रियते, त्वया तदिदानीं न ज्ञायते, इतः परन्तु ज्ञायिष्यते।
८ पितरस्तं ब्रूते, भवान् अनन्तकालेऽपि नैव मच्चरणौ प्रक्षालयिष्यति।
यीशुस्तं प्रत्यब्रवीत्, यद्यहं त्वां न प्रक्षालयामि, तर्हि मया सार्द्धं
९ तवांशित्वं न भवति। शिमोनः पितरस्तं वदति, तर्हि न केवलं
मम चरणौ, प्रत्युत करौ शिरश्चापि [प्रक्षालयतु]। यीशुस्तं ब्रूते,
१० यः स्नातः केवलं चरणयोः प्रक्षालनं तस्यावश्यकं स हि सर्व्वाङ्गः शुचिः।
११ यूयमपि शुचयः स्थ, न तु सर्व्वे। यतो यीशुः स्वसमर्पयितार-
मजानात्, तत्कारणाज्जगाद, न सर्व्वे यूयं शुचयः।

१२ इत्थं तेषां चरणान् प्रक्षाल्य स स्ववसनान्याददे, पुन र्भोजना-
योपविश्य च तानवादीत्, युष्मान् प्रति मया यदकारि तत् किं
१३ जानीथ? युष्माभिरहं गुरुः प्रभुश्चेत्यभिधीये, तच्च भद्रं कथ्यते,
१४ यतोऽहं स एवास्मि। अतः प्रभु र्गुरुश्च योऽहं, सोऽहं यदि युष्म-
च्चरणान् प्रक्षालितवांस्तर्हि परस्परं चरणप्रक्षालनं युष्माभिरपि
१५ कर्त्तव्यं। यतोऽहं युष्मान् प्रति यादृशं कृतवान् तादृशं कर्म्म यूय-
१६ मपि यत् करिष्यथ, तदर्थं युष्मान् दृष्टान्तं दर्शितवान्। सत्यं सत्यं,

युष्मानहं ब्रवीमि, नास्ति दासः स्वप्रभुतो महत्तरो नापि वा प्रेरितः १७
प्रेषयितु र्महत्तरः। यद्येतत् सर्व्वं जानीथ तर्हि तदाचरन्तो धन्या १८
भविष्यथ। न सर्व्वान् युष्मानधीदं मया कथ्यते। अहं यान् वरित-
वांस्तान् जानामि, अपि त्वनेन शास्त्रीयवचनेन सिद्धेन भवितव्यं,

———————यः पूपाशी मया सह।

सोऽपि मत्प्रातिकूल्येन पार्ष्णिक्षेपं चकार ह॥

इदानीमेव सिद्धेः प्राग् यूयमुच्यध्वे मया, सिद्धिकाले यथा १९
विश्वसिष्यथ यदहं सोऽस्मि। सत्यं सत्यं, युष्मानहं ब्रवीमि, यो २०
मया प्रहितं नरं गृह्णाति स मां गृह्णाति, माञ्च यो गृह्णाति
स मत्प्रेषयितारं गृह्णाति।

यिहूदा विश्वासघाती भविष्यतीति ज्ञापनम्।

इदमुक्त्वा यीशुरात्मन्युदविजत, साक्ष्यञ्च ददत् कथयामास, सत्यं २१
सत्यं, युष्मानहं ब्रवीमि, युष्माकमेको मां शत्रुषु समर्पयिष्यति। ततः
स कमधि भाषते तत्र सन्दिहानाः शिष्याः परस्परमालोकयन्। २२
तदीयशिष्याणामेकस्त्वर्थतो यो यीशोः प्रियः स तस्य क्रोडमा- २३
लम्ब्यासीन आसीत्। शिमोनः पित्रः सङ्केतेन तमेवेदमादिशत्, २४
यत् कमुद्दिश्य यीशु र्भाषते, तत् तेन पृष्ट्वा वक्तव्यं। ततः स यीशो २५
र्वक्षसि शिरो निपात्य तं वदति, प्रभो, स कः? यीशुः प्रत्यवादीत्, २६
अहं [सूपे] पूपखण्डं मज्जयित्वा यस्मै दास्यामि स एव सः। ततः स
पूपखण्डं मज्जयित्वा शिमोनसुतायेष्करियोतीयाय यिहूदे ददौ।
तस्मात् पूपखण्डात् परं शैतानस्तं प्रावेक्षीत्। यीशुस्तदा तमाह, २७
त्वं यत् करोषि तत् सत्वरमेव कुरु। किमुद्दिश्येदं तेनाकथ्यत, तद् २८
भोजनायासीनानां केनापि नाज्ञायत। स हि यिहूदाः स्वलसम्पुटवाहक २९
आसीत्, तस्मात् केचिदन्वमीयत; यीशुस्तमुत्सवार्थमस्मत्प्रयोज्यानि

३० द्रव्याणि क्रेतुं किंवा दरिद्रेभ्यः किञ्चिद् दातुमाज्ञापयतीति। स
तु तं पूपखण्डं गृहीत्वा सपदि निश्चक्राम। तदा रात्रिरासीत्।

यीशो 'र्नवीनाज्ञा'।

३१ तस्मिन् निष्क्रान्ते यीशुरुवाच, इदानीं मनुष्यपुत्रो महि-
३२ मान्वितोऽभूत्, ईश्वरश्च तस्मिन् महिमान्वितोऽभूत्। तस्मिंश्चे-
दीश्वरो महिमान्वितोऽभूत्, तर्हीश्वरोऽपि स्वस्मिंस्तं महिमान्वितं
३३ करिष्यति, सत्वरमेव करिष्यति। वत्साः, युष्माभिः सार्द्धमहमितः
परं स्तोकं कालं स्थास्यामि। यूयं मां गवेषयिष्यथ, यथा तु
यिहूदीयानहमुक्तवांस्तथाधुना युष्मानपि वच्मि, अहं यत् स्थानं
३४ गच्छामि तत्रोपस्थातुं युष्माभि र्न शक्यं। नवीनामेकामाज्ञां युष्मभ्यं
ददामि, यद् युष्माभिः परस्परं प्रेम कर्त्तव्यं। यथा युष्मान् प्रति मयै-
३५ तदर्थं प्रेमाकारि यद् यूयमपि परस्परं प्रेम करिष्यत। यदि परस्परं
प्रेमाचरथ, तर्ह्यनेन सर्व्वे ज्ञास्यन्ति यद् यूयं मम शिष्या इति।
३६ शिमोनः पितरस्तं ब्रवीति, प्रभो, कुत्र याति भवान्? यीशुस्तं
प्रत्युवाच, यत्र गच्छामि, तत्रेदानीं मामनुगन्तुं न शक्नोषि, पश्चात्
३७ त्वनुगमिष्यसि। पितरस्तं ब्रूते, किमर्थमधुनैव भवन्तमनुयातुं न
३८ शक्नुयां? भवदर्थमहं प्राणांस्त्यक्ष्यामि। यीशुः प्रतिबभाषे, मदर्थं
त्वं किं प्राणांस्त्यक्ष्यसि? सत्यं सत्यं त्वामहं ब्रवीमि, त्वं यावन्न
त्रिस्त्वां मां निह्नोष्यसे तावत् कुक्कुटो न रविष्यति॥ १३॥

यीशुरेव पन्थाः।

१४ १ युष्माकं हृदयं मैवोद्विजताम्, ईश्वरे विश्वसित, मय्यपि
२ विश्वसित। मम पितु र्निकेतने बहवो वासाः सन्ति। नोचेद्
युष्मभ्यमकथयिष्यं। युष्मदर्थं हि स्थानं सज्जीकर्त्तुं गच्छामि।
३ यदि च गत्वा युष्मदर्थं स्थानं सज्जीकरोमि, तर्हि पुनरागत्य

मत्समीपं युष्मान् ग्रहीष्यामि, यत्राहं वर्त्ते तत्र यूयमपि यथा
वर्त्तिष्यध्वे। यत् स्थानमहं गच्छामि तद् यूयं जानीथ, पन्थान- ४
मपि जानीथ। थोमास्तं ब्रूते, प्रभो, भवान् किं स्थानं गच्छति, ५
तन्न जानीमः, कथं तर्हि पन्थानं ज्ञातुं शक्नुयाम? यीशुस्तं ६
वदति, अहमेव पन्थाः सत्यञ्च जीवनञ्च, नान्येनोपायेन मनुष्यः
पितुः समीपमायाति, केवलं मया। मामेदज्ञास्यत, तर्हि मत्पि- ७
तरमप्यज्ञास्यत। अधुनारभ्य च तं जानीथ, तं दृष्टवन्तश्च।

फिलिपस्तदा तं ब्रवीति, प्रभो, दर्शयलस्मभ्यं पितरम् अस्म- ८
दर्थं तत् पर्य्याप्तं भविष्यति। यीशुस्तमवादीत्, एतावत्कालं ९
यावदहं युष्माभिः सार्द्धं वर्त्ते, फिलिप। तथापि त्वं मां किं न
जानासि? मां यो दृष्टवान् स पितरं दृष्टवान्। अतः कथं
वदसि, दर्शयलस्मभ्यं पितरमिति? त्वं किमिदं न विश्वसिषि १०
यदहं पितरि, पिता च मयि स्थितः? युष्मभ्यमहं यानि वचांसि
कथयामि तानि न स्वतः कथयाम्यपि तु मय्यवस्थितः पितैव
कर्म्माणि करोति। मयि विश्वसित यदहं पितरि पिता च मयि ११
स्थितः। नोचेत् कर्म्मणां कारणाद् विश्वसित। सत्यं सत्यं, युष्मानहं १२
ब्रवीमि, मयि यो विश्वसिति, मया क्रियमाणानि कर्म्माणि
तेनापि कारिष्यन्ते, तेभ्यो महत्तराणि च कारिष्यन्ते, यतो हेतो-
रहं मत्पितुः समीपं गच्छामि, युष्माभिश्च मम नाम्ना यत् किमपि १३
प्रार्थयिष्यते तत् करिष्यामि, पुत्रे पिता यथा महिमान्वितो भवि-
ष्यति। यदि मम नाम्ना किञ्चन प्रार्थयध्वे तर्ह्यहं तत् करिष्यामि। १४

सत्यस्वरूपमात्मा शिष्याणां सहायः।

यदि मां प्रति प्रेम कुरुथ, तर्हि ममाज्ञा अनुपालयत, १५
ततोऽहं पितरं याचिष्ये, स च युष्मभ्यमन्यमेकं शान्तिकर्त्तारं १६

१७ दास्यति युष्माभिः सार्द्धं येन शाश्वतं स्थातव्यं, तं सत्यस्वरूपमात्मानं
दास्यति यो जगता ग्रहीतुं न शक्यते, यतः स तेन न दृश्यते
नापि वा ज्ञायते। युष्माभिस्तु स ज्ञायते, यतः स युष्मत्समीपमव-
१८ तिष्ठते युष्मदन्तश्च वर्त्तिष्यते। न परित्यक्ष्यामि युष्मान् अनाथान्,
१९ अहं युष्मदन्तिकमागच्छामि। स्तोके काले व्यतीते जगन्मां पुन
र्न द्रक्ष्यति, यूयन्तु द्रक्ष्यथ, यतोऽहं जीवामि [ततश्च] यूयमपि
२० जीविष्यथ। तस्मिन् दिने यूयं ज्ञास्यथ, यदहं मत्पितरि स्थितो
२१ यूयञ्च मयि स्थिता अहञ्च युष्मासु स्थितः। यो ममाज्ञाः प्राप्तवांस्ता
अनुपालयति च स एव मयि प्रेमकारी। यश्च मयि प्रेमकारी
स मम पितुः प्रेमपात्रं भविष्यति, अहञ्च तं प्रति प्रेम करिष्यामि
२२ स्वं तत्प्रत्यक्षीकरिष्यामि च। ईष्करियोतीयादन्यो यिहूदास्तदा
तं ब्रूते, प्रभो, कथमेतद् यद् भवान् स्वं जगतः प्रत्यक्षं न कृत्वास्म-
२३ त्प्रत्यक्षं करिष्यति? यीशुः प्रतिभाषमाणस्तमाह, कश्चिद् यदि
मां प्रति प्रेम करोति तर्हि मम वाक्यमनुपालयिष्यति, मम
पिता च तं प्रति प्रेम करिष्यति, तत आवां तस्य समीपमागमि-
ष्यावस्तेन सह वसतिं करिष्यावश्च। यो मां प्रति प्रेम न करोति
२४ स मम वाक्यानि नानुपालयति। यच्च वाक्यं युष्माभिः श्रूयते,
तन्न मम प्रत्युत मत्प्रेषयितुः पितु र्वाक्यम्।

२५ युष्माभिः सार्द्धं वर्त्तमानोऽहं युष्मभ्यं सर्व्वमेतत् कथितवान्।
२६ शान्तिकर्त्ता त्वर्थतो मन्नाम्नि पित्रा प्रेषयितव्यः पवित्र आत्मा
युष्मान् सर्व्वं शिक्षयिष्यति, मया युष्मभ्यं यद्यत् कथितं तत् सर्व्वं
२७ स्मारयिष्यति च। अहं युष्मदर्थं दायमिव शान्तिं त्यजामि,
मदीयशान्तिं युष्मभ्यं ददामि। 'जगद् यथा ददाति नाहं युष्मभ्यं
तथा ददामि। युष्माकं हृदयं मैवोद्विजतां मैव वा भीतं भवतु।

अहं गत्वा युष्मत्समीपमागमिष्यामीति युष्मभ्यं यद्चकथं तद् यूयं २८
श्रुतवन्तः। यदि मां प्रति प्रेमाकरिष्यत, तर्ह्यहं पितुः समीपं
गच्छामीति यद्चकथं तत्रानन्दिष्यत, यतः पिता मत्तो महत्तरः।
तत्सिद्धिकाले च यद् विश्वसिष्यथ, तदर्थमहमिदानीं सिद्धेः प्राग् २९
युष्मभ्यं कथितवान्। इतः परमहं युष्माभिः सार्द्धं न पुन र्बहु ३०
सम्भाषिष्ये। यतो जगतोऽस्याधिपतिरागच्छति, मयि च तस्य
किमपि नास्ति। अहन्तु पितरं प्रति प्रेम करोमि पित्रा च यथा- ३१
दिष्टस्तथाचरामीति जगता ज्ञातव्यम्। उत्तिष्ठत, स्थानादस्माद-
स्माभिः प्रस्थीयताम्॥ १४॥

यीशोर्द्राक्षालतास्वरूपत्वदर्शनं शिष्याणां शाखास्वरूपत्वदर्शनम्।

**१५** अहं यथार्था द्राक्षालता, मम पिता च कृषकः। मयि १
स्थिता या काचिच्छाखा फलं न फलति सा तेन छिद्यते। या २
काचिच्छाखा च फलं फलति, सा तेन तथा संस्क्रियते यथाधिकं
फलं फलिष्यति। यूयं मया यद् वाक्यमुक्तास्तत्कारणात् परिष्कृता ३
जाताः। मयि युष्माभिरवस्थीयतां, युष्मासु च मया। यथा द्राक्षा- ४
लतायामनवस्थाय शाखया स्वतः फलं फलितुं न शक्यते, तथा
मय्यनवस्थाय युष्माभिरपि न शक्यते। अहं लता, यूयं तच्छाखाः। ५
यो मय्यवतिष्ठतेऽहञ्च यस्मिन्नवतिष्ठे, स बहूनि फलानि फलति।
यतो मत्तः पृथग् युष्माभिः किमपि कर्त्तुं न शक्यते। मनुष्यस्ते- ६
ष्मयि नावतिष्ठते, तर्हि स शाखेव बहि र्निक्षिप्तः शुष्कीभूतश्च,
मनुष्यैस्ता सञ्चित्याग्नौ निक्षिप्तास्ता ज्वलन्ति।

यूयं यदि मय्यवतिष्ठध्वे मम वचांसि च युष्मास्ववतिष्ठन्ते तर्हि ७
यद्यद् वाञ्छिष्यथ तत् प्रार्थयिष्यध्वे, युष्मदर्थं तत् सेत्स्यति च।

८ मम पितानेन महिमान्वितोऽभूत्, यद् यूयं बहु फलं फलथ मम
९ शिष्या भविष्यथ च । यथा मयि पित्रा प्रेमाकारि, तथा युष्मासु
१० मया प्रेमाकारि । मम प्रेमन्यवतिष्ठध्वं । यदि ममाज्ञा अनुपालयथ
तर्हि मम प्रेमन्यवस्थास्यध्वे, यथाहं मत्पितुराज्ञा अनुपालितवां-
११ स्तत्प्रेमन्यवतिष्ठे च । अहं युष्मभ्यमेतदर्थमिदं कथयामि यन्ममानन्दो
१२ युष्मास्ववस्थास्यते युष्माकमानन्दश्च सम्पूर्णो भविष्यति । ममाज्ञेयं
यद् युष्माभिः परस्परं तथा प्रेम कर्त्तव्यं यथा युष्मान् प्रति मया
१३ प्रेमाकारि । स्वबन्धूनां निमित्तं प्राणत्यागान्महत्तरं प्रेम कस्यापि
१४ नास्ति । यूयं मया यद्यदादिश्यध्वे तत् सर्व्वं चेदाचरथ तर्हि
१५ यूयं मम बन्धवः । नाहं पुन र्युष्मान् दासानित्यभिदधामि, यतः
प्रभुना किं क्रियते दासस्तन्न जानाति । अपि तु युष्मान् बन्धू-
नित्यभिहितवान्, यतः पितुः सकाशान्मया यद्यदश्रावि तत्
१६ सर्व्वमहं युष्मान् ज्ञापितवान् । न यूयं मां वरितवन्तः, प्रत्युताहं
युष्मान् वरितवांस्तदर्थं नियुक्तवांश्च यद् यूयं गत्वा फलं फलिष्यथ,
युष्मत्फलञ्च स्थास्यति, यथा मम नाम्ना पितरं यत् किमपि
प्रार्थयिष्यध्वे तत् तेन युष्मभ्यं दायिष्यते ।

### जगत् सत्यस्य च आत्मा ।

१७ अहं युष्मानेतदर्थमिदमादिशामि, यद् यूयं परस्परं प्रेम
१८ करिष्यथ । जगद् यदि युष्मान् द्वेष्टि तर्हीदं जानीत यद् युष्म-
१९ दग्रतोऽहं तेन सन्द्विष्टः । यदि जगत्सम्बन्धीया अभविष्यत, तर्हि
जगन्निजस्वं प्रति प्रेमाकरिष्यत् । यूयन्तु न जगत्सम्बन्धीया अपि
२० तु जगन्मध्यान्मया वरितास्तत्कारणाज्जगद् युष्मान् द्वेष्टि । नास्ति
दासः स्वप्रभुतो महत्तर इति यद् वचो यूयं मयोक्तास्तत् स्मरत ।
ते यद्यहमुपद्रुतस्तर्हि यूयमप्युपद्राविष्यध्वे, ते यदि मम वाक्यमन्-

पालितं तर्हि युष्माकमपि वाक्यमनुपालयिष्यते। एतत् सर्व्वन्तु २१
युष्मान् प्रति मन्नाम्नः कारणात् तैः कारिष्यते, यतस्ते मत्प्रेषयितारं २२
न जानन्ति। यद्यहमनागत्य तेभ्यो नाकथयिष्यं, तर्हि ते निष्पापा
अभविष्यन्। इदानीन्तु स्वपापप्रच्छादकोपायस्तेषां नास्ति। यो मां २३
द्वेष्टि स मत्पितरमपि द्वेष्टि। यानि कर्म्माण्यन्येन केनापि न २४
कृतानि, तानि चेदहं तेषां मध्ये नाकरिष्यं, तर्हि ते निष्पापा
अभविष्यन्। इदानीन्तु ते दृष्ट्वापि मां मत्पितरञ्च द्विष्टवन्तः।
किन्त्वेतस्मिन् तेषां शास्त्रे लिखितेनानेन वचनेन सिद्धेन भवितव्यं, २५
द्विष्टोऽहं तैरकारणादिति। यः शान्तिकर्त्ता तु पितुः सकाशाद् २६
युष्मदन्तिकं मया प्रेषयिष्यते, पितुः सकाशान्निर्गच्छन् स सत्यस्वरूप
आत्मा यदागमिष्यति, तदा स एव मामधि साक्ष्यं प्रदास्यति। २७
यूयमपि साक्षिणः, यत आदितो मत्सङ्गिनः स्थ॥ १५॥

यूयं यन्न स्खलिष्यथ तदर्थमहं युष्मभ्यं सर्व्वमेतत् कथितवान्। १६ १
जना युष्मान् सभाजच्युतान् करिष्यन्ति। अपि तु समय आयाति २
यदा युष्मद्घातक एकैको मंस्यते, ईश्वरायाराधनमुपहरामीति।
ते यद् युष्मान् प्रतीदृशमाचरिष्यन्ति, तत्कारणमिदं यत् ते नं ३
पिता नाहं वाभिज्ञातः। यूयं मयेदमुक्ता इति यदुपस्थिते समये ४
स्मरिष्यथ, तदर्थमहं युष्मभ्यमिदं कथितवान्। आदितस्तु युष्मभ्यमिदं
नाकथयं, यतोऽहं युष्माभिः सार्द्धमासं। अधुना तु मत्प्रेषयितुः ५
समीपं गच्छामि, युष्माकञ्च कोऽपि मां न पृच्छति, कुत्र
गच्छसीति। अपि तु युष्मभ्यं मयैतत् कथितमिति कारणाद् ६
युष्माकं हृदयं शोकपूर्णमभूत्। तथापि युष्मानहं सत्यं ब्रवीमि, ७
ममापगमनं युष्माकं हितावहं, यतोऽहं चेन्नापगच्छामि, तर्हि
शान्तिकर्त्ता युष्मत्समीपं नागमिष्यति, यदि त्वपगच्छामि तर्हि

८ तं युष्मत्समीपं प्रेषयिष्यामि। ततः स आगत्य पापे धार्म्मिकतायां
९ विचारे च दोषस्य प्रमाणं जगते दास्यति। पापस्य प्रमाणमिदं
१० यत् ते मयि न विश्वसन्ति। धार्म्मिकतायाः प्रमाणमिदं यदहं
११ पितुः समीपं गच्छामि युष्माभिश्च न पुन र्द्रक्ष्ये। विचारस्य
प्रमाणञ्चेदं यदस्य जगतोऽधिपते र्विचारो निरणायि।

१२ युष्मभ्यं कथयितव्या अन्या बह्वः कथा मम सन्ति, यूयन्त्विदानीं
१३ ताः सोढुं न शक्नुथ। स सत्यस्वरूप आत्मा तु यदायास्यति तदा पथ-
प्रदर्शक इव युष्मान् कृत्स्नं सत्यं नेष्यति। स हि न स्वतः कथयिष्यति,
प्रत्युत यद्यच्छ्रोष्यति तत् कथयिष्यति, यद्यद् भावि तद् युष्मान्
१४ ज्ञापयिष्यति च। स मां महिमान्वितं करिष्यति, यतो यन्मम
१५ तल्लब्ध्वा युष्मान् ज्ञापयिष्यति। पितु र्यद्यदास्ते तत् सर्व्वं मम, ततो
हेतो र्मया कथितं, यन्मम स तल्लब्ध्वा युष्मान् ज्ञापयिष्यति।

१६ स्तोककालेऽतीते यूयं मां न द्रक्ष्यथ, पुनः स्तोककालेऽतीते
१७ मां द्रक्ष्यथ, यतोऽहं पितुः समीपं गच्छामि। ततस्तच्छिष्याणां
केचित् परस्परमवदन्, किमेतद् यत् तेन व्याह्रियते, स्तोककाले-
ऽतीते यूयं मां न द्रक्ष्यथ, पुनः स्तोककालेऽतीते मां द्रक्ष्यथेति,
१८ अपि च, यतोऽहं पितुः समीपं गच्छामीति। तत्रैव तेऽवदन्,
स्तोककाल इति तेन यद्व्याह्रियते तत् किं? तेन किं कथ्यते
१९ तदस्माभि र्न बुध्यते। ततस्ते तं प्रष्टुकामा इति ज्ञात्वा यीशु
स्तानवादीत्, स्तोककालेऽतीते मां न द्रक्ष्यथ, पुनः स्तोककाले-
ऽतीते मां द्रक्ष्यथेति मया यदुक्तं तदधि किं मिथो विचारयथ?
२० सत्यं सत्यं, युष्मानहं ब्रवीमि, यूयं क्रन्दिष्यथ विलपिष्यथ च, जगत्
त्वानन्दिष्यति। यूयं शोचिष्यथ, किन्तु युष्माकं शोक आनन्देन
२१ परिणतो भविष्यति। प्रसवन्ती नारी शोकार्त्ता भवति, यतस्तस्या

दण्ड उपस्थितः। शिशुं प्रसूता तु सा तं क्लेशं पुन र्न स्मरति,
प्रसवेन मनुष्यो जगत् प्रविष्ट इत्यानन्दात्। यूयमप्यधुना शोकार्त्ताः, २१
अहन्तु युष्मान् पुन र्द्रक्ष्यामि, ततो युष्माकं हृदयमानन्दिष्यति,
युष्माकमानन्दस्य केनापि युष्मत्तो नापहर्त्तव्यः। तस्मिन् दिने च यूयं
मां किमपि न प्रक्ष्यथ। सत्यं सत्यं, युष्मानहं ब्रवीमि, यूयं पितरं २३
यद्यत् प्रार्थयिष्यध्वे मम नाम्ना स युष्मभ्यं तत् सर्व्वं दास्यति।
इतिपूर्व्वं यूयं मम नाम्ना किमपि न प्रार्थितवन्तः। प्रार्थयध्वं तेन २४
लप्स्यध्वे, युष्माकमानन्दो यथा सम्पूर्णो भविष्यति।

सर्व्वमेतदहमुपमाभि र्युष्मभ्यमकथयं। आयाति तु समयो २५
यदा न पुनरुपमाभि र्युष्माभिः सार्द्धं सम्भाषिष्येऽपि तु स्पष्टं
युष्मान् पितुः कथां ज्ञापयिष्यामि। तस्मिन् दिने यूयं मम नाम्ना २६
प्रार्थयिष्यध्वे। युष्मानध्यहं पितरं याचिष्य इति युष्मान् न वदामि।
पिता हि स्वयं युष्मासु प्रेम कुरुते, यतो यूयं मयि प्रेम कृतवन्तो २७
विश्वसितवन्तश्च यदहं पितुः सकाशान्निर्गत्यायातः। अहं पितुः २८
सकाशान्निर्गत्य जगदायातः पुन र्जगत् त्यक्त्वा पितुः समीपं
गच्छामि। तस्य शिष्यास्तं वदन्ति, पश्यत्वधुना भवान् स्पष्टं भाषते, २९
कामप्युपमां न कथयति। भवान् सर्व्वं वेत्ति कस्यापि प्रश्नं न ३०
प्रतीक्षते, तदधुनास्माभिरनुभूतं। अनेन वयं विश्वसिमो यद्
भवान् ईश्वरसकाशान्निर्गत्यायातः। यीशुस्तान् प्रत्यवादीत्, अधुना ३१
किं विश्वसिथ? पश्यतायाति स समय इदानीमागतोऽस्ति यदा यूयं ३२
विकीर्णाः प्रत्येकं निजस्थानं गमिष्यथ मामेकाकिनं विहास्यथ च।
नास्मि त्वेकाकी, यतः पिता मया सार्द्धं वर्त्तते। सर्व्वमेतदहं युष्मभ्यम-
कथयं, यथा मयि युष्माकं शान्ति र्भविष्यति। जगति युष्माकं क्लेशो ३३
जायते, किन्त्वाश्वसित, पराजितं मया जगत्॥ १६॥

शिष्याणामर्थं यीशोर्प्रार्थनम्।

१७ १ सर्व्वमेतत् कथयित्वा यीशुः स्वर्गं प्रत्यूर्द्ध्वदृष्टिं कृत्वा बभाषे,
पितः, समय उपस्थितः, तव पुत्रं महिमान्वितं कुरु, पुत्रोऽपि यथा
२ त्वां महिमान्वितं करिष्यति। त्वं ह्येतदर्थं तस्मै यावतीयमर्त्त्यानां
कर्तृत्वं दत्तवान् यत् तस्मै त्वया यद्यद्दायि तत्सर्व्वस्मै सोऽनन्तं जीवनं
३ दास्यति। अनन्तं जीवनञ्चेदं यत् त एकं सत्यमीश्वरं त्वां त्वत्प्रेरितं
४ यीशुं ख्रीष्टञ्च ज्ञास्यन्ति। पृथिव्यामहं त्वां महिमान्वितं कृतवान्
साधितवांश्च तत् कर्म्म यत् त्वं मया करणार्थं मयि समर्पितवान्।
५ अतोऽधुना, पितः, त्वत्समीपं मां महिमान्वितं कुरु तेन महिम्ना
यो जगत उद्भवात् प्राक् त्वत्समीपं ममासीत्।
६ जगतो मध्याद् ये मनुष्यास्त्वया मह्यं दत्तास्तेषां समक्षमहं
तव नाम प्रकाशितवान्। ते तवासन्, त्वञ्च मह्यं तान् दत्तवान्,
७ ते च तव वाक्यं रक्षितवन्तः। इदानीं तैरज्ञायि यत् त्वं मह्यं
८ यद्यद् दत्तवान्, तत् सर्व्वं त्वत्सकाशादुत्पन्नं। यतस्त्वं मह्यं यानि
वाक्यानि दत्तवांस्तानि मया तेभ्यो दत्तानि, तैश्च तानि गृहीत्वा
सत्यमज्ञायि यदहं त्वत्सकाशान्निर्गत्यायातः। ते चात्र व्यश्वसिषु
९ र्यत् त्वं मां प्रहितवान्। तेषां निमित्तमहं याचे। नाहं जगतो
निमित्तं याचे, किन्तु त्वया ये मह्यं दत्तास्तेषां निमित्तं, यतस्ते
१० तव। यद्यन्मम तत् सर्व्वं तव, तथा यद्यत् तव तन्मम। अहञ्च
११ तेषु महिमान्वितो जातः। इतः प्रभृति चाहं न जगति वर्त्ते।
इमे तु जगति वर्त्तन्तेऽहञ्च त्वत्समीपं गच्छामि। पवित्र पितः,
मह्यं दत्ते तव नाम्नि तान् रक्ष, आवामिव ते यथैकं भविष्यन्ति।
१२ यदा तैः सार्द्धं जगत्यासं तदाहं तव नाम्नि तानरक्षं। त्वं मह्यं
यान् दत्तवांस्तानहं रक्षितवान्।* तेषां मध्ये कोऽपि न हारितः,

केवलं तद् विनाशभाजनं हारितं, यतः शास्त्रेण सिद्धेन भवि-
तव्यं। अधुना त्वहं तव समीपं गच्छामि, भाषे चेदं जगति, ते १३
यथा ममानन्दं सम्पूर्णमन्तरे प्राप्य भोक्ष्यन्ते। अहं तेभ्यस्तव वाक्यं १४
दत्तवान् जगच्च तान् अद्विषत्, यतोऽहं यथा न जगत्सम्बन्धीयस्तथा
तेऽपि न जगत्सम्बन्धीयाः। ते त्वया जगतो बहि र्नीयन्तां नाहमेतद् १५
याचे, प्रत्युत ते त्वया दुरात्मतो रक्ष्यन्तामिति याचे। अहं यथा
जगत्सम्बन्धीयो नास्मि तेऽपि तथा जगत्सम्बन्धीया न सन्ति। तव १६
सत्येन तान् पवित्रीकुरु, तव वाक्यमेव सत्यस्वरूपं। त्वं यथा मां जगति १७
प्रहितवांस्तथाहमपि तान् जगति प्रहितवान्। तेषां निमित्तं स्वं १८
पवित्रीकरोमि च, यथा तेऽपि सत्येन पवित्रीकृता भविष्यन्ति। १९

अहं न केवलमेतेषां निमित्तं याचे, प्रत्युत तेषामपि निमित्तं २०
य एतेषां वाक्येन मयि विश्वसिष्यन्ति, सर्व्वे ते यद् एकीभविष्यन्ति। २१
यथा मयि त्वं, पितः, त्वयि चाहं, तथावयोस्तेऽपि यद् एकीभ-
विष्यन्ति, त्वं मां प्रहितवानच्च जगद् यद् विश्वसिष्यति। त्वया यो २२
महिमा मह्यं दत्तस्तमहं तेभ्यो दत्तवान्, यथावामेकं स्वस्तथा तेऽपि
यदेकीभविष्यन्ति, तेष्वहं मयि च त्वं, ते यत् सिद्धिं प्राप्यैकीभवि- २३
ष्यन्ति, त्वञ्च मां प्रहितवान् यथा च मयि प्रेम कृतवांस्तथा तेष्वपि
प्रेम कृतवानिति जगद् यज्ज्ञास्यति। पितः, ममाभीष्टमिदं, त्वं मह्यं २४
यान् दत्तवान्, यत्राहं वर्त्ते तत्र मया सार्द्धं तेऽपि वर्त्तन्तां, जगत्स्थाप-
नात् प्राक् च त्वं मयि प्रेम कृतवानिति हेतो र्मह्यं यं महिमानं
दत्तवान्, मम तं महिमानं ते निरीक्षन्तां। धर्म्मय पितः, जगत् २५
त्वां नाजानात्, अहन्तु त्वामजानां, त्वयाहं प्रहित इतीमेऽप्यजानन्।
अहञ्च तांस्तव नाम ज्ञापितवान् पुन र्ज्ञापयिष्यामि च, त्वं मयि यत् २६
प्रेम कृतवांस्तद् यथा तेषु स्थास्यत्यहञ्च यथा तेषु स्थास्यामि॥१७॥

### यीशोः शेषदुःखभोगमरणसमाधिश्च ।

#### महायाजकसमक्षं यीशोर्विचारः ।

१८ १ सर्व्वमेतत् कथयित्वा यीशुः स्वशिष्यान् सङ्गिनः कृत्वा किद्रो-
णाख्यस्रोतसः पारं जगाम शिष्यैः सार्द्धं तत्रस्थमेकमुद्यानं प्रविवेश
२ च । तस्य समर्पयिता यिहूदा अपि तत् स्थानमजानात्, यतो
३ यीशुः पुनः पुनः स्वशिष्यैः सह तत्र समवेतः । तदा यिहूदाः
सैन्यगणं मुख्ययाजकेभ्यः फिरूशिभ्यश्च पदातींश्च लब्ध्वोल्कादीपिकास्त्रैः
४ सज्जितस्तत्रोपतिष्ठते । ततो यीशुरात्मानं प्रति यद् भवितव्यं तद्
५ ज्ञात्वा वहिरागत्य तानवादीत्, कं गवेषयथ ? ते प्रत्यूचुः, नासरतीयं
६ यीशुं । यीशुस्तान् अवादीत्, अहमेव सः । तैः सार्द्धं तस्य
७ समर्पयिता यिहूदा अपि तिष्ठन्नासीत् । अतोऽहं स इति तेन
व्याहृते ते पश्चाद्दिशं व्रजित्वा भूमौ निपेतुः । ततः स तान् पुनर-
८ प्राक्षीत्, कमन्विच्छथ ? तेऽवादिषुः, नासरतीयं यीशुं । यीशुस्तान्
९ प्रत्यवादीत्, अहं सोऽस्मीति युष्मान् उक्तवान् । अतो मां चेदन्विच्छथ
तर्ह्येतेषां गमनमनुजानीत । एतस्याभिप्रायोऽयं यत् तेन कथित-
मिदं वचनं सिद्धं भवेत्, त्वं मह्यं यान् दत्तवांस्तेषां कोऽपि मया
१० न हारित इति । तदा शिमोनः पितरोऽसिना सज्जित आसीत्,
अतः स तं कोशान्निष्कृष्य महायाजकस्य दासमाहत्य तस्य दक्षिणं
११ कर्णं परिचिच्छेद । दासस्य तस्य नाम मल्क इति । ततो यीशुः
पितरं जगाद, तवासिं कोषे निधेहि । पिता मह्यं यत् पानपात्रं
दत्तवांस्तत्रस्थं पानीयं किं न पास्यामि ?

१२ ततः परं सैन्यगणः सहस्रपति र्यिहूदीयानां पदातयश्च यीशुं
१३ धृत्वा बद्ध्वा च प्रथमं हाननस्य समीपमनैषुः । वत्सरस्य तस्य
१४ महायाजको यः कायाफास्तस्य श्वशुरो हाननः । कायाफा एव

यिहूदीयान् मन्त्रणारूपामिमां कथामुक्तवान्, प्रजावृन्दस्य निमित्त-
मेकस्य मनुष्यस्य मरणं श्रेय इति।

यीशुस्तु पित्रेण तदन्येनैकेन शिष्येण चान्वगम्यत। स शिष्यो १५
महायाजकस्य परिचित आसीत्, यीशुना सार्द्धं महायाजकस्य
[निकेतनस्य] प्राङ्गणं प्रविवेश च। पित्रस्तु वहि र्गोपुरसमीपं १६
तिष्ठन्नासीत्। ततो महायाजकस्य परिचितः सोऽन्यतरः शिष्यो
वहि र्गत्वा द्वाररक्षिकया दास्या संलप्य पित्रमभ्यन्तरमानैषीत्।
सा द्वाररक्षिका दासी तदा पित्रं जगाद, त्वमपि किं नरस्य तस्य १७
शिष्याणामेकः? सोऽवादीत्, नास्मि। दासेषु पदातिषु च शीत- १८
कारणाद् अङ्गारैरग्निं प्रज्वाल्य तिष्ठत्सु तापं सेवमानेषु च पित्रोऽपि
तैः सार्द्धं तिष्ठंस्तापमसेवत।

महायाजकस्तदा यीशुं तस्य शिष्यानुपदेशञ्चाप्राक्षीत्। यीशुस्तं १९
प्रतिजगाद, अहं जगते स्पष्टमकथयं। यिहूदीया यत्र नियतं २०
समागच्छन्ति सर्व्वदा तत्र समाजगृहे धर्म्मधाम्नि चोपादिशं, गुप्तं
किमपि न कथितं मया। भवान् मां कथं पृच्छति? ये श्रुतवन्तस्ते २१
मया किमुक्तास्तानेव तत् पृच्छतु। पश्यतु मया यत् कथितं
तत् ते ज्ञायते। इदं भाषितवति तस्मिन् तत्र तिष्ठन्नेकः पदातिः २२
करेण यीशुमाहत्य जगाद, महायाजकं किमित्थं प्रतिभाषसे?
यीशुस्तं प्रत्यवादीत्, यद्ययुक्तं व्याहृतं मया तर्हि तस्यायुक्तस्य प्रमाणं २३
देहि, युक्तन्तु यदि व्याहृतं तर्हि कथं मां प्रहरसि?

ततो हाननस्तं बद्धं महायाजकस्य कायाफाः समीपं प्राहि- २४
णोत्। तदापि शिमोनः पित्रस्तिष्ठन् तापमसेवत। ततः केचित् २५
तं वदन्ति, त्वमपि किं तस्य शिष्याणामेकः? स निह्नुत्य जगाद,
नास्मि। पित्रो यस्य कर्णं छिन्नवांस्तस्य ज्ञाति र्महायाजकस्यैको २६

दासस्तदाब्रवीत्, उद्याने तेन सार्द्धं तिष्ठंस्त्वं किं न लक्षितो मया ?
२७ ततः पितरः पुन र्निजुह्नुवे तत्क्षणाच्च कुक्कुटो रुराव ।

देशाध्यक्षसमक्षं यीशोर्विचारः ।

२८ ततो यीशुस्तैः कायाफाः सकाशात् राजगृहं नीतः । तदा
प्रत्यूष आसीत् । ते तु राजगृहं न प्रविविशुः, यतस्तेऽशौचं
२९ परिहर्त्तुं निस्तारोत्सवीयं भोज्यं भोक्तुञ्चैच्छन् । ततः पीलातस्तेषां
समीपं वहिरागत्य बभाषे, नरस्यैतस्य विरुद्धं यूयं कमभियोग-
३० मुपस्थापयथ ? ते प्रतिभाषमाणास्तमूचुः, अयं यदि दुष्कर्म्मी
३१ नाभविष्यत्, तर्ह्यस्माभि र्भवतो हस्ते न समार्पयिष्यत । ततः
पीलातस्तानब्रवीत्, यूयमेव तं गृहीत्वा युष्मदीयव्यवस्थानुरूपं तस्य
विचारं कुरुत । यिहूदीयास्तदा तमूचुः, कमपि हन्तुमस्माकं
३२ क्षमता नास्तीति । एतस्याभिप्रायोऽयं यत् तेन कीदृशो मृत्यु
र्भाक्तव्यस्तत्सूचकं तस्य वचनं सिद्धं भवेत् ।

३३ ततः पीलातो राजगृहं पुनः प्रविश्य यीशुमाहूय जगाद,
३४ त्वं किं यिहूदीयानां राजा ? यीशुस्तं प्रत्यवादीत्, भवानेतत् स्वतो
३५ भाषते, किं वान्येन मम कथामुक्तः ? पीलातः प्रतिबभाषे, किं
यिहूदीयोऽहं ? तवैव जात्या मुख्ययाजकैश्च त्वं मयि समर्पितः ।
३६ किमकारि त्वया ? यीशुः प्रत्युवाच, नास्ति मम राज्यम् एतज्जग-
त्सम्बन्धीयं। मम राज्यं यद्येतज्जगत्सम्बन्धीयमभविष्यत् तर्हि यिहूदी-
यानां हस्ते मत्समर्पणस्य निवारणार्थं मम भृत्याः [प्राणपणेन]
३७ व्यचेष्टिष्यन्त । वास्तवन्तु नास्ति मम राज्यमैहिकं । ततः पीलात-
स्तमब्रवीत्, तर्हि नूनं राजासि त्वं ? यीशुः प्रतिबभाषे भवांस्तथ्यं
ब्रवीति, यतोऽस्म्यहं राजा । एतदर्थमजनिषि, एतदर्थं जगदागमञ्च,
यत् सत्यार्थे मया साक्ष्यं दातव्यं । यः कश्चित् सत्यसम्बन्धीयः स

मम वाणीं शृणोति। पीलातस्तमाह, सत्यं किं? इदमुक्त्वा स पुन ३८
र्यिहूदीयानां समीपं बहि र्गत्वा तान् ब्रवीति, मया तस्मिन् कोऽपि
दोषो न लभ्यते, निस्तारोत्सवे तु काराबद्ध एको नरो युष्मदर्थं ३९
मया मोच्यते युष्माकमियं रीतिरस्ति। अतो यिहूदीयानां राजा
युष्मदर्थं मया मोच्यत इदं किं वाञ्छथ? ततः सर्व्वे पुनरुच्चैःस्वरेणा- ४०
वदन्, नैवायमपि तु बाराब्बाः। स बाराब्बा दस्युरासीत्॥ १८॥

अतएव तदा पीलातो यीशुं गृहीत्वा कशाभिराजघान। १९ १
सैनिकजनाश्च कण्टकैः स्रजं रचयित्वा तस्य शिरस्यर्पयामासुस्तस्मै २
कृष्णलोहितं वसनं परिधापयामासुस्ततो नमो यिहूदीयानां राज ३
इति वदन्तस्तमताडयन्। पीलातस्तदा पुन र्बहिरागत्य जनानब्रवीत्, ४
पश्यताहं तं पुन र्युष्मत्समीपमानयामि, यतस्तस्मिन् कमप्यपराधं न
लभयामीति युष्माभि र्ज्ञातव्यं। ततस्तया कण्टकस्रजा तेन कृष्णलो- ५
हितवर्णेन वसनेन च राजवेशी यीशु र्बहिराजगाम, पीलातश्च
बभाषे, निरीक्ष्यतामयं मनुष्य इति। मुख्ययाजकाः पदातयश्च तदा ६
तं दृष्ट्वा रुरुवुः, क्रुशारोपणं कुरु, क्रुशारोपणं कुरु। पीलातस्तान् ब्रूते,
यूयं तं गृहीत्वा क्रुशमारोपयत, यतो मया तस्मिन् कोऽप्यपराधो
न लभ्यते। यिहूदीयास्तं प्रतिजगदुः, अस्माकं व्यवस्थास्ति, तयास्म- ७
दीयव्यवस्थया स मृत्युमर्हति, यतः स स्वमीश्वरस्य पुत्रं कृतवान्।

ततः पीलातो वचनमिदं श्रुत्वाधिकमभैषीत् पुनश्च राजगृहं ८
प्रविश्य यीशुं ब्रवीति, कुत्रत्यस्त्वं? यीशुस्तु तस्मै किमपि प्रत्युत्तरं ९
नादात्। ततः पीलातस्तमवादीत्, मया किं न सम्भाषसे? किं न १०
जानासि यत् त्वां क्रुशमारोपयितुं ममाधिकारोऽस्ति, त्वां मोचयि-
तुमधिकारोऽप्यस्ति? यीशुः प्रतिबभाषे, ऊर्द्ध्वतो यदि भवते न ११
प्रादायिष्यत, तर्हि मद्विरुद्धं भवतः कोऽप्यधिकारो नाभविष्यत्।

१२ एतत्कारणात् स महत्तरेण पापेन लिप्तो येनाहं भवतः करे
समर्पितः। तदारभ्य पीलातस्तं मोचयितुमयतत। यिहूदीयास्तूच्चै-
रवदन् भवान् यद्येनं मोचयति, तर्हि कैसरस्य प्रणयी न भवति।
यः कश्चित् स्वं राजानं कुरुते, स कैसरं प्रति विसंवादीति।
१३ ततः पीलातः कथामिमां श्रुत्वा यीशुं वहिरानिनाय, स्वयञ्च
शिलास्तर इत्यभिहिते स्थाने विचारासन उपविवेश। इब्रीयभाषया
१४ तस्य स्थानस्य नाम गब्बथेति। तद् दिनं निस्तारोत्सवस्य सज्जनदिनं,
घटिका प्रायेण षष्ठी। ततः स यिहूदीयान् ब्रूते, निरीक्ष्यतां
१५ युष्माकं राजा। ते तु रुरुवुः, संहरैनं संहरैनं क्रुशमारोपय। पीलातस्तान्
ब्रूते, युष्माकं राजानं किं क्रुशमारोपयिष्यामि? मुख्ययाजकाः प्रति-
१६ बभाषिरे, नास्त्यस्माकं राजा कैसरादन्यः। तदैव स तं क्रुशारोप-
णार्थं तेषु समर्पयामास। ते च यीशुं धृत्वा पनिन्युः।

यीशोः क्रुशारोपणं मृत्युश्च।

१७ ततः स स्वक्रुशं वहन् कपालस्थलमित्यभिधमर्थत इब्रीयभाषया
१८ गल्गथेतिनामकं स्थानं प्रतस्थे। तत्रैव ते तञ्च तेन सार्द्धमन्यौ द्वौ
च क्रुशान्यारोपयामासुः, तौ द्वौ तस्य पार्श्वयोर्यीशुञ्च मध्यस्थाने।
१९ पीलातस्त्वपराधविज्ञापकं पत्रं लेखयित्वा क्रुशेऽर्पयामास। तत्र
२० लिखितमासीत्, यिहूदीयानां राजा नासरतीयो यीशुरिति। अत
एव बहवो यिहूदीयास्तत् पत्रमपठन्, यतो यीशुः यत्र क्रुशमारो-
पितस्तत् स्थानं नगरस्य निकटस्थं, तत् पत्रञ्चेब्रीये यूनानीये रोमी-
२१ येश्चाक्षरै र्लिखितमासीत्। अत एव यिहूदीयानां मुख्ययाजकाः
पीलातमवादीषुः यिहूदीयानां राजेति मा लिख्यतां, प्रत्युतेदं
२२ लिख्यताम् अयं कथितवान्, यिहूदीयानां राजाहमिति। पीलातः
प्रतिबभाषे, अहं यल्लिखितवांस्तदेव लिखितवान्।

सैनिकजनास्तु यीशुं क्रुशमारोप्य तस्य वासांसि गृहीत्वैकैकस्य २३
सैनिकस्य निमित्तमेकैकमंशमिति चतुरोऽंशान् कृत्वा विभेजिरे,
तस्याङ्गाच्छादकमप्यादद्रुश्च। तदङ्गाच्छादकन्तु सीवनरहितम् ऊर्द्ध-
प्रान्तमारभ्याखिलमूतमासीत्। ततस्ते परस्परमवदन्, सैव छिद्य- २४
तामिदं प्रत्युतेदं कस्य भविष्यति गुटिकापातं कृत्वा तन्निश्चीयताम्।
अनेन शास्त्रीयमिदं वचः सिद्धं बभूव,

मामकीनानि वस्त्राणि स्वमध्ये विभजन्ति ते।

मम परिच्छदार्थञ्च गुटिकां पातयन्ति हि॥

ते सैनिकजनास्तदेवाकार्षुः।

आसंस्तु यीशोः क्रुशस्य समीपे तिष्ठन्त्यस्तस्य माता, मातु र्भगिनी २५
क्लोपाभार्य्या मरियम्, मग्दलीनी च मरियम्। यीशुस्तदा स्वमातरं २६
सन्निधौ तिष्ठन्तं स्वप्रियं शिष्यञ्च विलोक्य स्वमातरमाह, नारि,
पश्यायं तव पुत्रः। ततः परं स तं शिष्यमाह, पश्येयं तव माता। २७
तस्मात् दण्डादारभ्य स शिष्यस्तां निजगृहं नीत्वाग्रहीत्।

ततः परं शास्त्रं यथा सिद्धं भवेत् तथा सर्व्वमिदानीं समाप्त- २८
मिति ज्ञात्वा यीशु र्बभाषे पिपासामि। तत्र लम्लरसेन पूर्णं २९
पात्रमेकमासीत्। ततो जनाः स्पञ्जमेकमम्लरसेन पूरयित्वा तुलसी- ३०
दण्डे बद्ध्वा च तस्य मुखान्तिकमनैषुः। अम्लरसं तं भुक्त्वा यीशु-
र्व्याजहार, समाप्तमिति, शिरो नमयन्नात्मानं समर्पयामास च।

तद् दिनं सज्जनदिनं तदुत्तरविश्रामवारश्च महादिनं, तत्का- ३१
रणाद् यिहूदीया विश्रामवारे तेषां शवानां क्रुशेष्ववस्थानं निवार-
यितुमिच्छन्तः पीलातं तदीयजङ्घानां भञ्जनं तेषाञ्च स्थानान्तरी-
करणं ययाचिरे। अत एव सैनिकजना आगत्य तेन सार्द्धं क्रुशारो- ३२
पितयोः प्रथमस्य जङ्घे तदन्यतरस्य जङ्घे च बभञ्जुः, यीशुमुपस्थाय

३३ तु यदा तं स्पष्टं मृतमपश्यंस्तदा ते तस्य जङ्घे न बभञ्जुरेकस्तु
३४ सैनिको दीर्घशूलेन तस्य पार्श्वं विव्याध, ततस्तत्क्षणं शोणितं तोयञ्च
३५ निःसृते। यो दृष्टवान् स साक्ष्यं दत्तवान्, तस्य साक्ष्यञ्च सत्यं,
स च जानाति यत् सत्यं भाषते यूयं यथा विश्वसिष्यथ, यतः
३६ सर्व्वमिदमेतदर्थं सम्भूतं यदियं शास्त्रीयोक्तिः सिद्धा भवेत्, तस्यैकं
३७ कीकसमपि न भङ्क्ष्यमिति। पुनश्चान्या शास्त्रीयोक्तिरियं, ते यं
विद्धवन्तस्तमुद्दिश्य दृक्पातं करिष्यन्तीति।

यीशोः समाधिः।

३८ ततः परमरिमाथियानिवासी यो योषेफो यीशोः शिष्य
आसीत्, प्रच्छन्नस्तु यिहूदीयानां भयात्, स यीशो र्देहं स्थाना-
न्तरीकर्त्तुमिच्छंस्तदर्थं पीलातमनुमतिं ययाचे। पीलातेनानुज्ञातश्च
३९ स आगत्य यीशो र्देहमवरोहयामास। यश्च नीकदीमः प्रथमं
रजन्यां यीशोः समीपमागतवान्, सोऽप्यागत्य प्रायेण पञ्चाशत्सेटक-
४० परिमितं गन्धरससम्मिश्रितमगुरु समानैषीत्। तौ तदा यीशो र्देह-
मादाय यिहूदीयानां समाधिकर्म्मणो रीत्यनुसारेण तैः सुगन्धिद्रव्यैः
४१ सार्द्धं पटैर्वेष्टयामासतुः। यत्र स्थाने च स क्रुशमारोपितस्तत्रोद्यानं,
तस्मिन्नुद्याने च नूतनमेकं शवागारमासीत्, यत्र कोऽपि कदापि
४२ न निहितः। अतस्तदा यिहूदीयानां सज्जनदिनं तच्छवागारश्च
निकटस्थमेतत्कारणाद् यीशुस्तत्रैव ताभ्यां निहितः॥ १९ ॥

यीशोः पुनरुत्थानम् शिष्येभ्यो वारम्वारदर्शनदानम्।

यीशोः मगदलीनीमरियमे दर्शनदानम्।

२० १ सप्ताहस्य प्रथमे दिने तु मग्दलीनी मरियम् प्रत्यूषेऽन्ध-
कारेऽनतीते तच्छवागारमायाति पाषाणं शवागारमुखादपसारितं
२ पश्यति च। ततः सा धावन्ती शिमोनस्य पितरस्य समीपं यीशोः

प्रियस्यान्यतरशिष्यस्य च समीपमायाति तौ वदति च, शवागारात्
प्रभुरपसारितोऽस्मदविदिते स्थाने निहितश्चेति। ततः पित्रः सोऽन्य- ३
तरः शिष्यश्च निर्गत्य शवागारमगच्छतां। तौ युगपदधावतां। ४
सोऽन्यतरः शिष्यस्तु पित्रात् क्षिप्रतरं प्रधाव्य प्रथमं शवागार उप-
तस्थे, प्रह्वीभूय पटानि लक्षयामास च, न तु प्रविवेश। ततः परं ५
तमनुगच्छन् शिमोनः पित्र उपस्थाय प्रविशति भूमौ निहितानि ६
पटानि लक्षयति च, तस्य शिरश्च येनाच्छादितं तत् स्वेदहरवस्त्रमपि ७
लक्षयामास। तत्र पटैः सार्द्धं निहितं प्रत्युत पृथक् स्थानविशेषे
सुरचितमासीत्। तदैव शवागारे प्रथममागतः सोऽन्यतरः शिष्योऽपि ८
प्राविक्षीत् दृष्ट्वा च व्यश्वसीत्। यतो मृतानां मध्यात् तेनोत्थातव्य- ९
मिति या शास्त्रीयोक्तिः सा तदानीमपि ताभ्यां नाबोधि।

तौ शिष्यौ तदा पुनर्निजस्थानं जग्मतुः। मरियम् तु रुदती १०
शवागारसमीपे बहिरतिष्ठत्। रुदती शवागारं प्रति प्रह्वीभूय सा ११
श्वेतवसनौ द्वौ स्वर्गदूतौ पश्यति, यीशोर्देहो यत्राशेत तौ तत्रो- १२
पविष्टौ, एकः शिरसः स्थानेऽन्यतरश्च चरणयोः स्थाने। तौ तां १३
वदतः, नारि, किमर्थं रोदिषि? सा तौ ब्रवीति, मम प्रभुः
स्थानान्तरीकृतः, न जाने कुत्र स निहितः। एतदुक्त्वा सा पश्चाद्दिशि १४
प्रत्यावृत्य यीशुं तिष्ठन्तं पश्यति, न तु जानाति यत् स यीशुः।
यीशुस्तां ब्रूते, नारि, किमर्थं रोदिषि? कमन्विष्यसि? सा तम् १५
उद्यानरक्षकं मत्वा ब्रवीति, महेच्छ, स यदि भवतापवाहितस्तर्हि
कुत्र निहितस्तन्मां वक्तुमर्हति, अहञ्च तं स्थानान्तरीकरिष्यामि।
यीशुस्तां वदति, भो मरियम्। सा प्रत्यावृत्येब्रीयभाषया तं १६
वदति, रब्बूणि। अस्यार्थः, भो गुरो। यीशुस्तां ब्रूते, मां मा धर, १७
यतोऽहमिदानीमपि मत्पितुः समीपं नारूढवान्, प्रत्युत मम

भ्रातृणां समीपं याहि तान् ब्रूहि च, यो मम पिता युष्माकञ्च
१८ पिता, ममेश्वरो, युष्माकञ्चेश्वरस्तस्य समीपमहमारोहामीति। तदा
मग्दलीनी मरियम् गत्वा, प्रभुस्तस्यै दर्शनं दत्तवान् सर्व्वमेतत्
कथितवांश्चेदं शिष्यान् ज्ञापयामास।

### यीशोः शिष्येभ्यो द्वौ वारौ दर्शनदानम्।

१९ तस्मिन्नेव सप्ताहस्य प्रथमदिने सन्ध्यायां जातायां समवेताः
शिष्या यत्रासन् यिहूदीयानां भयात् तस्य स्थानस्य द्वारेषु रुद्धेषु
यीशुरागत्य मध्यस्थाने स्थित्वा तान् ब्रूते, युष्माकं शान्ति र्भूयात्।
२० इदमुक्त्वा स तान् स्वहस्तौ स्वपार्श्वञ्च दर्शयामास। ततः प्रभुं निरीक्ष्य
२१ शिष्या आनन्दुः। यीशुस्तदा तान् पुनर्ब्रवीति, युष्माकं शान्ति
र्भूयात्। यथा पिता मां प्रहितवांस्तथाहं युष्मान् प्रहिणोमि।
२२ इदमुक्त्वा स तानुद्दिश्य दध्मौ तान् जगाद च, पवित्रमात्मानं गृह्णीत,
२३ येषां पापानि मोचयिष्यथ तेषां मोचयिष्यन्ते, येषान्तु न मोच-
यिष्यथ तेषाममुक्तानि स्थास्यन्ति।
२४ इत्थं यदा यीशुरागमत्, तदा द्वादशानां मध्ये गणितः थोमा
२५ अर्थतो यमजस्तैः सार्द्धं नासीत्। ततोऽन्ये शिष्यास्तमूचुः, वयं प्रभुं
दृष्टवन्तः। स तु तानवादीत्, तस्य करयो र्लौहकीलचिह्नमदृष्ट्वा
तत्र लौहकीलचिह्ने ममाङ्गुलीमनिधाय च तस्य पार्श्वे मम करम-
निधाय चाहं नैव विश्वसिष्यामीति।
२६ ततोऽष्टदिनेभ्यः परं शिष्याः पुनरभ्यन्तर आसन्, थोमा अपि
तैः सार्द्धमासीत्। तदा रुद्धेषु द्वारेषु यीशुरुपस्थाय मध्यस्थाने
तिष्ठन्नवादीत्, युष्माकं शान्ति र्भूयात्। ततः परं स थोमां ब्रवीति,
२७ तवाङ्गुलीमत्र नय मम हस्तौ निरीक्षस्व च, तव करञ्च नय मम
पार्श्वे निधेहि च। अविश्वासी च मा भव, प्रत्युत विश्वासी भव।

थोमास्तदा प्रतिभाषमाणस्तमवादीत् भो मम प्रभो, भो ममेश्वर। १८
यीशुस्तं ब्रूते, त्वं मां दृष्ट्वांस्थोमाः, तस्माद् व्यश्वसीः, धन्यास्ते ये न १९
दृष्ट्वापि व्यश्वसिषुः।

मास्तत्रमेतेभ्योऽन्यानि बहून्यभिज्ञानार्थकर्म्माणि स्वशिष्याणां समक्षं ३०
यीशुनाक्रियन्त, तानि त्वस्मिन् ग्रन्थे न लिखितानि। एतेषां ३१
वृत्तान्तस्त्वलेखि, यतो यीशु र्यदीश्वरस्य पुत्रः ख्रीष्टोऽत्र युष्माभि र्विश्वसितव्यं, विश्वसद्भिश्च तस्य नाम्नि जीवनं प्राप्तव्यम्॥ २०॥

यीशोः समुद्र-तीरे कतिपयशिष्येभ्यो दर्शनदानम्।

ततः परं यीशुस्तिबिरीयस्य हृदस्य तीरे पुनरात्मानं **२१** १
शिष्याणां प्रत्यक्षं चकार। स इत्थमेवात्मानं प्रत्यक्षीचकार।
शिमोनः पित्रः, थोमा अर्थतो यमजः, गालीलस्थकान्नानिवासी २
नथनेलः, सिवदियस्य पुत्रौ, शिष्यौ च द्वावन्यावेकत्रासन्। शिमोनः ३
पित्रस्तान् ब्रवीति, अहं मीनान् धर्त्तुं यामि। ते तं वदन्ति
वयमपि त्वया सार्द्धं यामः। ततस्ते तूर्णं बहि र्गत्वा नावमारु-
रुक्षुस्तस्यां रजन्यान्तु किमपि न दध्रुः। जाते पुनः प्रत्यूषे यीशुस्तटे ४
स्थितवान्। स तु यीशुरिति शिष्यै र्नाज्ञायि। यीशुस्तदा तान् ५
ब्रवीति, वत्साः, खाद्यं किमपि युष्माकं किमास्ते? ते तं प्रत्य-
वादिषुः, नास्ति। यीशुस्तदा तान् वदति, नावो दक्षिणपार्श्वे जालं ६
निक्षिपत, तर्हि लप्स्यध्वे। ततस्ते तन्निचिक्षिपुस्तदा च मीनानां
महासङ्घातः पुनस्तदाक्रष्टुं नाशक्नुवन्। ततो यीशोः प्रियः स ७
शिष्यः पित्रमवादीत्, असौ प्रभुः। तदा प्रभुरसाविति श्रुत्वा पित्र
उत्तरीयवसनमादाय कटौ बबन्ध, यतः स विवस्त्र आसीत्।
ततः परं समुद्रे निपपात। अन्ये शिष्यास्तु पोतेनागमन्, यतस्ते ८
स्थलाद् अदूराः केवलं प्रायेण द्विशतहस्तव्यवधाना आसन्। ते च

९ मत्स्यपूर्णं जालमाकर्षन्। स्थलमुत्तीर्य्य तु तैरङ्गारीयोऽग्निस्तस्यो-
१० परिस्थितो भृष्टो मीनः पूपश्च लब्धन्ते। यीशुस्तान् ब्रवीति,
११ अधुना यान् मत्स्यान् अधार्ष्ट तेषां कतिपयानानयत। ततः
शिमोनः पित्र आरुह्य मत्स्यपूर्णं जालं कर्षन् स्थलेऽर्पयामास, तत्र
त्रिपञ्चाशदधिकशतं महान्तो मत्स्या आसन् एतावत्सु सत्स्वपि
१२ जालं न व्यदीर्य्यत। यीशुस्तदा तानवादीत्, आयात, प्रातराशं
भुंग्ध्वं। शिष्याणाञ्च कोऽपि कस्त्वमिति तं स्पष्टं प्रष्टुं नोत्सेहे,
१३ यतः स प्रभुरिति तेऽजानन्। यीशुस्तदोपस्थाय तं पूपं गृहीत्वा
१४ तेभ्यो वितरति, तं मत्स्यञ्च तथा। इत्थं मृतानां मध्यादुत्था-
पितो यीशुस्तृतीयं वारं स्वशिष्याणां प्रत्यक्षो बभूव।

पित्रेण सह यीशोः कथनम्।

१५ तेषां प्रातराशभोगात् परं यीशुः शिमोनं पित्रं ब्रवीति,
योनासुत शिमोन, एतेभ्यस्त्वं किं मां प्रत्यधिकं प्रेम करोषि?
स तं वदति, सत्यं प्रभो, भवान् जानाति यदहं भवदनुरक्तः।
१६ स तं ब्रवीति, मम मेषशावकान् चारय। स पुन र्द्वितीयं वारं
तं वदति, योनासुत शिमोन, मयि किं प्रेम करोषि? स तं
वदति, सत्यं प्रभो, भवान् जानाति यदहं भवदनुरक्तः। स तं
१७ ब्रवीति, मम मेषान् पालय। स तृतीयं वारं तं ब्रवीति,
योनासुत शिमोन, त्वं किं मदनुरक्तः? पित्रस्तृतीयवारं त्वं किं
मदनुरक्त इति तेन पृष्टस्तत्कारणाच्छोकार्त्तो बभूव, तस्य जगाद,
प्रभो भवान् सर्व्वविद्, भवान् जानाति यदहं भवदनुरक्तः। यीशुस्तं
१८ ब्रूते, मम मेषान् चारय। सत्यं सत्यं, त्वामहं ब्रवीमि, यदा
तरुणतर आसीस्तदा स्वयं स्वकटिमबध्वा यत्र चैच्छस्तत्र व्यहरः।
यदा तु वृद्धो भविष्यसि, तदा स्वहस्तौ प्रसारयिष्यस्यन्यस्य कश्चित्

तव कटिं भन्त्स्यति, त्वदनभीष्टं स्थानं त्वां नेष्यति च। कीदृशेन १९
मृत्युना स ईश्वरं सम्मानयिष्यति तत् सूचयन् यीशुरिदं कथया-
मास। इदं कथयित्वा च स तमवादीत्, मामनुगच्छ।

पितरस्तदा प्रत्यावृत्य यीशोः प्रियं तं शिष्यमनुगच्छन्तं व्यलो- २०
कयत्, यो भोज्ये तस्य वक्षस्यासीनः पृष्टवान्, प्रभो, भवतः
समर्पयिता क इति। तमेव दृष्ट्वा पितरो यीशुं ब्रवीति, प्रभो, २१
किं भवितव्यमनेन? यीशुस्तं वदति यदि ममागमनं यावत् २२
तस्यावस्थानं रोचये, तर्हि तत्र तव किं? त्वं मामनुगच्छ। ततः २३
शिष्येषु कथेयं व्यानशे तत् तेन शिष्येण न मर्त्तव्यं। यीशुस्तु तं
नैवेदं व्याजहार, तेन न मर्त्तव्यमिति, प्रत्युतेदं, यदि ममागमनं
यावत् तस्यावस्थानं रोचये तर्हि तत्र तव किमिति।

स एव शिष्य एताः कथा अधि साक्ष्यं दत्तवान् एताः कथा २४
लिखितवांश्च, तस्य साक्ष्यञ्च सत्यमिति वयं जानीमः। एतेभ्यो- २५
ऽन्यान्यपि बहूनि कर्म्माणि यीशुना कृतानि, सर्व्वाणि तानि यद्ये-
कैकशो लिख्यन्ते, मन्ये तर्हि तेषां लेखितव्यानां ग्रन्थानां धारणार्थं
जगद्यपर्य्याप्तं भविष्यति॥ २१॥

# प्रेरितानां कर्म्मणामाख्यानम् ।

आभाषः । प्रभोः यीशोः स्वर्गारोहणम् ।

१ १. भो महामहिमथियफिल, यीशु र्यद्यत् कर्त्तुमुपदेष्टुञ्च प्रववृते
२ तत्सर्व्वस्य कथा मया पूर्व्वप्रबन्धे तद् दिनं यावद् रचिता यस्मिन्
स पवित्रेणात्मना स्ववरितेभ्यः शिष्येभ्य आदेशं दत्त्वोर्द्ध्वलोकमनायि ।
३ स्वदुःखभोगात् परं स बहुभिः प्रत्यक्षैः प्रमाणैस्तेषां समक्षमात्मानं
जीवन्तं दर्शितवान्, यतश्चत्वारिंशद्दिनेषु स पुनः पुनस्तेभ्यो दर्शनम-
४ ददात् ईश्वरराज्यस्य कथाञ्चाकथयत् । ततः स तान् एकत्रीकृत्या-
दिदेश, यूयं यिरूशालेमतो मापगच्छत, प्रत्युत मत्तः श्रुतां पितुः
५ प्रतिज्ञां प्रतीक्षध्वं, यतो योहनस्तोयेनास्नापयत्, यूयन्त्वल्पेषु दिनेष्व-
६ तीतेषु पवित्र आत्मनि स्नापयिष्यध्वे । ते तदा समागत्य तमप्राक्षुः,
प्रभो, कालेऽस्मिन् भवान् किमिस्रायेलाय राज्यं प्रतिपादयिष्यति ?
७ स तु तानवादीत्, पिता यान् कालान् यांश्च समयान् स्वकर्त्तृत्वा-
८ धीनान् कृतवांस्तान् ज्ञातुं युष्माकमधिकारो नास्ति । पवित्रेणात्म-
नाविष्टास्तु यूयं प्रभावं लप्स्यध्वे, यिरूशालेमे कृत्स्नायां यिहूदियायां
शमरियायाञ्च मेदिन्याः प्रान्तञ्च यावन्मम साक्षिणो भविष्यथ ।
९ तेनेदमुक्तास्ते यावन्निरैक्षन्त तावत् स ऊर्द्ध्वमनीयत मेघश्चैकस्तेषां
१० लोचनगोचरात् तमपजहार । तस्यापगमनकाले तेष्वेकाग्रदृष्ट्या गगनं
निरीक्षमाणेषु, पश्य, शुक्लपरिच्छदौ द्वौ पुरुषौ तानुपस्थायावदतां,
११ भो गालीलीयनराः, किमर्थं गगनमवलोकयन्तस्तिष्ठथ ? असौ यो
यीशु र्युष्मत्समीपात् स्वर्गं नीतः स यादृशेन गमनेन स्वर्गं गच्छन्
युष्माभिः सन्दृष्टस्तादृशेन प्रत्यागमिष्यति ।

तदा ते जैतुनाख्यगिरितो यिरूशालेमं प्रत्यावर्त्तिरे। स गिरि १२
र्यिरूशालेमस्य निकटस्थः प्रायेण विश्रामवारीयमार्गैकव्यवधानः।
नगरं प्रविश्य ते गृहस्योपरिस्थप्रकोष्ठं जग्मुः। तद्गृहनिवासिनः पितरो १३
याकोबो योहन आन्द्रियश्च, फिलिपस्थोमाश्च बर्थलमयो मथिश्च,
आल्फेयसुतो याकोब उद्योगी शिमोनश्च याकोबस्य भ्राता यिहूदा-
श्चैते सर्व्वे योषिद्भि र्यीशो र्माता मरियमा च तस्य भ्रातृभिश्च सार्द्ध- १४
मेकचित्ताः सन्तः प्रार्थनायां याचनायाञ्चाध्यवसायिनोऽवर्त्तन्त।

यिहूदाविनिमयेन मत्तथियनियोजनञ्च।

तेषु दिनेष्वेकदा प्रायेण विंशत्यधिकशतजनेष्वेकत्रीभूतेषु पितरो १५
भ्रातॄणां मध्य उत्थाय बभाषे, भ्रातरः, यीशु र्यैरधारि तेषां १६
नायकीभूतं यिहूदामधि पवित्र आत्मा दायूदस्य वक्त्रेण यां शास्त्री-
योक्तिं व्याहृतवांस्तया सिद्धिः प्राप्तव्यासीत्। स ह्यस्माकं मध्ये १७
गणितोऽस्याः परिचर्य्याया अंशित्वं प्राप्तश्चासीत्। सोऽधर्म्मस्य वेतनेन १८
भूमिखण्डमेकमक्रीणीत् अवाक् पतित्वा तु द्विधा बभूव निःसृतश्च
तस्य सर्व्वान्त्राणि। तच्च यिरूशालेमनिवासिभिः सर्व्वैरज्ञायि, तस्मात् १९
तेषां स्वभाषायां तत् क्षेत्रं हकलदामेत्यभिधीयते। अस्यार्थः
शोणितक्षेत्रमिति। गीतसंहिताख्ये ग्रन्थे हि लिखितमास्ते।

वाटी तस्य भवेच्छून्या तन्मध्ये कोऽपि मा वसेत्॥ २०

पुनश्च, अध्यक्षपदं तस्य गृह्णीयादपरो नरः॥

अत एव योहनस्य स्नापनमारभ्य प्रभो र्यीशोरस्मत्त ऊर्द्ध्वमपसा- २१
रणदिनं यावत् सोऽस्माकं दृष्टिगोचरे यदा प्राविशन्निरगच्छच्च
तस्मिन् कृत्स्ने काले येऽस्माकं सहचरा आसंस्तेषां नराणामेको- २२
ऽस्माभिः सार्द्धं तदीयपुनरुत्थानस्य साक्षी भवतीत्यावश्यकं। ततस्ते २३
युष्ट इतिनामानं बार्शबाभिधं योषेफं मत्तथियञ्च द्वावेतौ स्थापया-

२४ मास्तुः प्रार्थयमानाश्च जगदुः, भो सर्व्वेषां चित्तज्ञ प्रभो, यिहूदाः
स्वस्थानं प्रयाणार्थमिदं यत् परिचारकत्वं प्रेरितत्वञ्च त्यक्ता गत-
२५ वांस्तदधिकारलाभाय त्वया द्वयोरेतयो र्यो वरितस्तं निर्द्दिश ।
२६ ततः परं तावुद्दिश्य गुटिकापाते कृते मत्तथियो गुटिकया निर-
चायि, स चैकादशप्रेरितैः सार्द्धं गणितोऽभूत् ॥ १ ॥

पञ्चाशत्तमीत्यभिधोत्सवस्य दिने पवित्रस्यात्मन आविर्भावः ।

२ १ ततः परमुपस्थिते पञ्चाशत्तमीत्यभिधोत्सवस्य दिने ते सर्व्वे
२ एकचित्तीभूय स्थान एकस्मिन्नवसन्। तदा कस्माद् गगनाद् वहमानस्य प्रचण्डवा-
तस्येव शब्दः सञ्जातः, ते च यत्रोपविष्टा आसंस्तत् कृत्स्नं गृहं तेन
३ व्याप्तम्, अग्नेरिव विभज्यमाना जिह्वाकारास्च तेषां प्रत्यक्षीबभूवुः
४ स च वह्निस्तेषामेकैकस्मिन् निषसाद, ते सर्व्वे च पवित्रेणात्मना
पूरयाञ्चक्रिरे, आत्मना च यथोच्चारणमदीयत तथैवान्याभि र्भाषाभि
र्गदितुमारेभिरे ।

५ तदा गगनस्याधःस्थिताभ्यः सर्व्वजातिभ्य आगताः अद्धाशीला
६ यिहूदीयनरा यिरूशालेमे न्यवसन्। अतः सञ्जाते तस्मिन् शब्दे
जनौघः समागत्य व्याकुलीबभूव, यतस्ते प्रत्येकं निजभाषया व्याहरतां
७ तेषां कथामशृण्वन्। ततः सर्व्व आश्चर्य्यं मत्वा चमत्कृताः परस्परमूचुः,
८ पश्यतां, वक्तारोऽमी किं न सर्व्वे गालीलीयाः? कथं तर्हि वयं
प्रत्येकं स्वजन्मभाषया व्याहरतां तेषां कथां शृणुमः? पार्थीया मादीया
९ एलमीया जना मिसपतामिया-यिहूदिया-कापदकिया-पन्तदेशानाम्
१० आशिया-फरुगिया-पम्फुलियादेशानां मिसरस्य कुरीण्निकटवर्त्तिलिबुया-
देशस्य च निवासिनः प्रवासिरोमीयाश्च यिहूदीया यिहूदिमतावल-
११ म्बिनश्च क्रीतीया आरबीयाश्च वयं सर्व्वेऽस्मद्भाषाभिरीश्वरकृतानि
१२ महान्ति कर्म्माणि निवेदयताम् अमीषां कथाः शृणुमः। इत्थं सर्व्वे

विस्मिता बभूवुः सन्दिहानाश्च परस्परमूचुः, अस्य तात्पर्य्यं किं भवेत्?
अन्ये तूपहसन्तोऽवदन्, अमी सुस्वादुना द्राक्षारसेण मत्ताः। १३

पितरस्योपदेशवाक्यम्।

तदा पित्र एकादशभिः सार्द्धमुत्थायोच्चस्वरमुदीरयंस्तानुद्दिश्येत्थं १४
बभाषे, भो भ्रातरो यिरूशालेमनिवासिनश्च सर्व्वे, युष्माभिरेत-
ज्ज्ञायताम् अतो मम वक्तव्यमाकर्ण्यतां। युष्माभि र्यथानुमीयते तथामी १५
मत्ताः सन्ति तन्न सत्यं, यतोऽधुना दिवसस्य तृतीया घटिकास्ति।
प्रत्युत भाववादिना योयेलेन यदुक्तम् इदं तदेव, यथा। १६

इदं भाव्यन्तिमे काल इति व्याहरतीश्वरः। १७
वर्षिष्यामि निजात्मानं सर्व्वमर्त्त्यस्य मूर्धनि।
युष्माकं पुत्रपुत्रीभि र्भावोक्तिः कथयिष्यते॥
भविष्यन्ति च युष्माकं युवानो लब्धदर्शनाः।
स्वप्नान्यालोकयिष्यन्ते युष्माकं स्थविरा अपि॥
शीर्षेष्वपि स्वदासानां स्वदासीनाञ्च मूर्धसु। १८
वर्षिष्यामि निजात्मानमहं तेषु दिनेषु च॥
गगने लक्षणान्यूर्द्ध्वेऽभिज्ञानान्यप्यधो भुवि। १९
रक्तं दास्यामि वह्निञ्च सधूमं वाष्पमेव च॥
विकृतोऽग्रे रविर्ध्वान्तं चन्द्रो रक्तं भविष्यति। २०
तदायास्यति भीमं तत् प्रसिद्धञ्च प्रभोर्दिनं॥
भव्यमेतच्च यः कश्चिन्नरो नामाश्रयन् प्रभोः। २१
प्रार्थनां कुरुते तस्य परित्राणं भविष्यति॥

भो इस्रायेलीयनरा वचांसीमान्याकर्णयत। नासरतीयो यीशुः २२
प्रभावसिद्धक्रियाभिरद्भुतलक्षणैरभिज्ञानार्थकर्म्मभिश्च युष्मत्समीपमीश्व-
रात् प्रहितो नर इव प्रतिपन्न आसीत्। ईश्वरो हि तेनैव युष्मन्मध्ये

१३ तानि क्षतवान् एतद् यूयमपि जानीथ। तमीश्वरस्य निर्णीतमन्त्रणया
भाविज्ञानेन च समर्पितं यूयं धृत्वाधर्म्मिणां हस्तैः क्रुशविद्धं
१४ हतवन्तः। ईश्वरस्तु मृत्यो र्यन्त्रणानि मोचयित्वा तमुत्थापयामास।
१५ यतस्तं वशीकर्त्तुं मृत्युर्नाशक्नोत्। दायूदो हि तमुद्दिश्योवाच,

सततं स्थापयामि स्म निजसाक्षादहं प्रभुं।
स मद्दक्षिणपार्श्वस्थः स्खलनं मे निवारयन्॥

१६ तस्माद्धृष्यति मच्चित्तं मम जिह्वा च नन्दति।
शरीरं मामकञ्चाप्याश्वासितं विश्रमिष्यति॥

२० यतस्त्वं मामकप्राणान् पाताले न विहास्यसि।
स्वीयपुण्यवतो नैव सोढासे क्षयदर्शनं।

१८ जीवनस्य हि पन्थानं त्वं मां ज्ञापितवानसि।
पूरयिष्यसि हर्षेण मां त्वदास्यस्य सन्निनं॥

१९ हे भ्रातरः, तं पितृकुलपतिं दायूदमधि युष्मभ्यं मुक्तकण्ठेन
मयेदं कथयितुं शक्यते यत् स ममार च शवाधारे निदधे च तस्य
३० शवागारञ्चाद्याप्यस्मदन्तिकं विद्यते। स तु भाववादी आसीद्जानाच्च
यच्छरीरसम्बन्धे तस्यौरसफलात् ख्रीष्टेनोत्पद्य तदीयसिंहासन उप-
३१ वेष्टव्यमितीश्वरः शपथेन तस्मै प्रतिश्रुतवान्। ततः स भवितव्यं दृष्ट्वा
ख्रीष्टस्य पुनरुत्थानमधीदमब्रवीत्, यतस्तस्यैव प्राणाः पाताले न
३२ परित्यक्तास्तस्यैव देहस्य क्षयं न दृष्टवान्। तमेव यीशुमीश्वरः
३२ पुनरुत्थापितवान्, अत्र सर्व्वे वयं साक्षिणः। अत ईश्वरस्य दक्षिण-
हस्तेनोच्चीकृतः स पितृतः प्रतिज्ञायाः फलं पवित्रमात्मानं लब्ध्वाधुना
३४ युष्माभि र्यद् दृश्यते श्रूयते च तदवतारयामास। न हि दायूदः
स्वर्गमारूढवान् स एव तूवाच,

मम प्रभुमिदं वाक्यं बभाषे परमेश्वरः।

लक्ष्चून् पादपीठं ते यावन्नहि करोम्यहं ॥ ३५
अवतिष्ठस्व तावत् त्वम् आसीनो मम दक्षिणे ॥

अत इस्रायेलस्य सर्व्वं कुलममोघं जानातु यद् युष्माभिः ३६
क्रुशारोपितं तमेव यीशुमीश्वरः प्रभुमभिषिक्तत्रातारञ्च चकार।

त्रयाणां सहस्राणां लोकानां मण्डलिमुक्तत्वम्।

इदं श्रुत्वा ते विदीर्णहृदया भूत्वा पित्रमन्यान् प्रेरितांश्च जगदुः, ३७
भो भ्रातरः, किं करवाम ? पित्रस्तदा तानुवाच, मनांसि परावर्त्त- ३८
यत प्रत्येकश्च पापानां मोचनार्थं यीशोः ख्रीष्टस्य नाम्नि स्नायध्वं,
तथा कृते पवित्रमात्मानं दानवल्लप्स्यध्वे। यतः सा प्रतिज्ञा युष्मासु ३९
युष्मत्सन्तानेषु चास्मदीश्वरेण प्रभुना समाह्वायिष्यमाणेषु दूरस्थेषु
सर्व्वेष्वपि च वर्त्तते। एतदन्यैरपि बहुभि र्वचोभिः स साक्ष्यं ४०
दत्त्वान्वनयत्, यूयमेतत्कालिकेभ्यः कुटिलेभ्यो मनुष्येभ्यः स्वनिस्तार
माधयितुमर्हथ। तदा ते सानन्दं तस्य वाक्यं गृहीत्वा स्नापिता ४१
बभूवुः। इत्थं तस्मिन् दिने प्रायेण त्रयाणां सहस्राणां मनुष्या-
णामागमने मण्डली ववृधे।

ते च प्रेरितानां शिक्षायां सहभागितायां पूपभञ्जने प्रार्थनासु ४२
चाध्यवसायेन निविष्टा अतिष्ठन्। यावतीयप्राणिनश्च भयं सञ्जातं ४३
प्रेरितैश्च बह्वन्यद्भुतानि लक्षणान्यभिज्ञानार्थकर्म्माणि चासाध्यन्त।
विश्वासिनश्च सर्व्व एकत्रातिष्ठन् सर्व्वञ्च साधारणं मत्वाधारयन्, ४४
स्थावराणि जङ्गमानि वा वित्तानि च व्यक्रीणन् एकैकस्य प्रयोज- ४५
नानुसारेण सर्व्वेषु व्यभजंश्च। अध्यवसायेन च प्रत्यहमेकचित्ता ४६
धर्म्मधामन्यवर्त्तन्त गृहे गृहे च पूपं भञ्जन्त आह्लादेन हृदयस्य
सारल्येन च भक्ष्यम् अभुञ्जतेश्वरमस्तुवंश्च सर्व्वजनस्यानुग्रहभाजना- ४७
न्यभवंश्च। प्रभुस्तु प्रत्यहं परित्राणपात्रैः मण्डलीमवर्धयत् ॥२॥

अनेकजन्मखञ्जस्य आरोग्यकरणम् ।
पित्रयोहनयोश्च कथा कारायां स्थापनञ्च ॥

३ १ एकदा प्रार्थनायाः समयेऽर्थतस्तृतीये प्रहरे पित्रयोहनौ यदा
२ युगपद् धर्म्मधाम गच्छतस्तदामातृगर्भतः खञ्जो नर एक उह्यमान
आगच्छत् । धर्म्मधामप्रवेशकान् भिक्षां याचिष्यमाणः स प्रत्यहं
३ धर्म्मधाम्नः सुन्दराभिधे द्वारे न्यधीयत । स धर्म्मधाम प्रवेष्टुमुद्यतौ
४ पित्रयोहनौ निरीक्ष्य भिक्षां लिप्सुरयाचत । तदा योहनेन सहितः
५ पित्रोऽनन्यदृष्ट्या तं समालोक्याह, आवां प्रत्यवेक्षस्व । स तदा
६ किमपि लप्स्य इति प्रतीक्ष्य तयो र्निविष्टलोचनोऽतिष्ठत् । ततः
पित्रो जगाद स्वर्णं रूप्यं वा मम नास्ति, यत्त्वस्ति तुभ्यं तद्
ददामि । नासरतीयस्य यीशोः ख्रीष्टस्य नाम्ना समुत्थाय परिव्रज ।
७ इत्युक्त्वा स तस्य दक्षिणहस्तं धृत्वा तमुत्थापयामास । तत्क्षणमेव
८ तस्य पादतलौ गुल्फौ च दृढौ बभूवुः, स चोत्प्लवमान उत्तस्थौ
व्रजितुं प्रववृते च व्रजन्नुत्प्लवमानश्चेश्वरं स्तुवंस्ताभ्यां सार्द्धं धर्म्मधाम
९ प्रविवेश च । व्रजन्नीश्वरं स्तुवंश्च स सर्व्वजनेनादर्शि धर्म्मधाम्नः
१० सुन्दरे द्वार उपविष्टो योऽभिक्षत स एवायमित्यभ्यज्ञायि च ।
तस्मिंश्च यत् सम्भूतं तेन ते चमत्कृता विस्मयापन्नाश्च बभूवुः ।
११ स्वास्थ्यप्राप्ते तस्मिन् खञ्जे तु पित्रयोहनाववलम्ब्य स्थिते सर्व्वजन-
श्चमत्कृतो द्रुतगत्या शलोमनोऽलिन्दं तेषामन्तिकमाजगाम ।
१२ तद् दृष्ट्वा पित्रो जनानवादीत्, भो इस्रायेलीयनराः, यूयं
किमर्थमत्राश्चर्य्यं मन्यध्वे निजशक्त्या निजभक्त्या वावामिमं व्रजने
समर्थं कृतवन्ताविति मत्वा किमर्थमनन्यदृष्ट्यावां निरीक्षध्वे च ?
१३ इब्राहामस्येसहाकस्य याकोबस्य च य ईश्वरोऽस्मत्पूर्व्वपुरुषाणामीश्वरः
स एव स्वसेवकं तं यीशुं महिमाप्राप्तं कृतवान् यो युष्माभिः

शत्रुहस्ते समर्पितो विचारे तद्विसर्ज्जनकामस्य पीलातस्य समक्षमेव
प्रत्याख्यातश्च। यूयं हि पवित्रं धर्म्मवन्तञ्च तं नरं प्रत्याख्याय १४
मनुष्यघातिनं नरं वरवद् याचितवन्तो जीवनस्यादिकर्त्तारन्तु १५
हतवन्तः। ईश्वरस्तु मृतानां मध्यात् तमुत्थापितवान् एतस्यावां
साक्षिणौ। तस्य नाम्नि विश्वसनहेतोश्च युष्माभि र्दृश्यमानम- १६
भिज्ञातञ्च नरमिमं तस्य नाम सबलीकृतवान् तज्जनितो विश्वास-
स्तस्मै सर्व्वेषां युष्माकं समक्षमिदं सर्व्वाङ्गव्यापि स्वास्थ्यं दत्तवान्।

अधुना, भो भ्रातरः, जानेऽहं तत् कर्म्म युष्माभि र्युष्मदीया- १७
ध्यक्षैश्चाज्ञानत्वादकारि। ख्रीष्टेन तु दुःखं भोक्तव्यमिति यद्यद् १८
भव्यमीश्वरः स्वीयभाववादिनां सर्व्वेषां मुखैर्विज्ञापितवान् तत्तदित्थं
साधयामास। अतो युष्मत्पापानां मार्ज्जनार्थमनुतप्यध्वं मनांसि १९
परावर्त्तयत च, तथा कृते प्रभोः सकाशात् तापशान्तेः काल
आयास्यति स च युष्मदर्थं पूर्व्वं निरूपितं ख्रीष्टं यीशुं प्रहेष्यति। २०
ईश्वरस्तु युगारम्भात् पवित्राणां स्वीयभाववादिनां सर्व्वेषां मुखैः २१
सर्व्वविषयाणां सुदशायाः प्रतिपादनस्य यं कालमङ्गीकृतवान् तं प्रती-
क्षमाणेन ख्रीष्टेन स्वर्गेऽवस्थातव्यं। मोशि ह्यस्मत्पूर्व्वपुरुषान् उक्तवान् २२
युष्माकमीश्वरः प्रभु र्युष्मदर्थं युष्मद्भ्रातृणां मध्यान्मादृशं भाववादि-
नमुत्पादयिष्यति, स युष्मान् यद्यद् वदिष्यति, तत् सर्व्वमधि तस्य
वाक्यं युष्माभि र्ग्रहीतव्यं। यः कश्चित् प्राणी तु तस्य भाववादिनो २३
वाक्यं न ग्रहीष्यति स स्वजनमध्याद् उच्छेत्स्यत इति। अपि च २४
शमूयेलादयो यावन्तो भाववादिनः कालानुक्रमेण भाषितवन्तः सर्व्वे
तेऽपीमं कालमधि भाविवाक्यं कथयामासुः। यूयं हि भाववादिनां २५
सन्ताना अस्मत्पूर्व्वपुरुषैः सार्द्धमीश्वरेण स्थापितस्य समयस्य चाधि-
कारिणः सन्तानाः। तं स्थापयन् सोऽब्राहाममवादीत्, तव वंशे

२६ मेदिन्याः सर्व्वाणि कुलान्याशिषं लप्स्यन्त इति। प्रथमं युष्मदन्ति-
कमीश्वरः स्वसेवकं यीशुमुत्थाप्यैकैकं स्वस्वलतातः परावर्त्त्य युष्मान्
आशिषो भाजनानि करिष्यन्तं तं प्राहिणोत्॥३॥

४ १ यदा तौ जनान् प्रतीत्यमभाषेतां, तदा याजका धर्म्मधाम्नः
२ सेनापतिः सद्दूकीयाश्च तावुपतस्थुः, यतस्तौ जनानुपादिशतां यीशौ
३ मृतानां मध्यादुत्थानमज्ञापयताञ्चेत्यनेन ते पर्य्यतप्यन्त। अतस्तयो
र्हस्तार्पणं कृत्वा ते परदिनपर्य्यन्तं तौ कारायां निदधुः, यतस्तदा
४ सन्ध्यासीत्। ये तु वाक्यं श्रुतवन्तस्तेषां बहवो विश्वासिनो जाताः,
पुरुषाश्च सङ्ख्यया न्यूनाधिकं पञ्च सहस्राण्यासन्।

५ परदिनेऽध्यक्षाः प्राचीनाः शास्त्राध्यापका हाननामा महाया-
६ जकः कायाफा योहनः सिकन्दरश्च महायाजकीयकुलजाता अन्ये
७ सर्व्वे नराश्च यिरूशालेमे समाजग्मुः, मध्यस्थाने तौ स्थापयित्वा
पप्रच्छुश्च, केनाधिकारेण केन नाम्ना वा युवामिदं कृतवन्तौ?
८ तदा पवित्रेणात्मना पूर्णः पितरस्तान् जगाद, भो जनाध्यक्षा इस्रा-
९ येलस्य प्राचीनाश्च, अयं केन स्वास्थ्यं प्राप्तवानिति रोगिणोऽस्य
१० मनुष्यस्योपकारमधि यद्यावां पृच्छ्यावहे, तर्हि सर्व्वे युष्माभिः
सर्व्वैरिस्रायेलीयजनेन चेदं ज्ञायतां, यो युष्माभिः क्रुशमारोपित
ईश्वरेण तु मृतानां मध्यादुत्थापितस्तस्यैव नासरतीयस्य यीशु-
११ ख्रीष्टस्य नाम्नायं युष्मत्समक्षमरोगी तिष्ठति। स एव स्थपतिभि
१२ र्युष्माभिरवज्ञातः स प्रस्तरो यः कोणस्य मुख्यप्रस्तरो जातः। न
च विद्यतेऽन्यस्मिन् कस्मिन्नपि परित्राणं, नापि वास्त्यन्यत् किमपि
नाम स्वर्गस्याधो मनुष्येभ्यो दत्तं यद्द्वारास्माभिः परित्राणं प्राप्तव्यं।

१३ तदा पितरयोहनयो र्निर्भयतां पश्यन्तस्तावकृतविद्यौ सामान्य-
नराविति बुद्ध्वा च ते विस्मिता बभूवुस्तौ यीशोः सङ्गिनावास्ता-

मित्यभ्यजानंश्च। तं स्वस्थीकृतं मनुष्यन्तु ताभ्यां सार्द्धं तिष्ठन्तं १४
पश्यन्तः किमपि प्रतिवदितुं न शेकुः। ततः परं सभातस्तेषां निर्ग- १५
मनमादिश्य ते मिथ इत्थं मन्त्रयितुमारेभिरे, इमौ नरावुद्दिश्या- १६
स्माभिः किं कर्त्तव्यं? यतः प्रसिद्धमेकमभिज्ञानार्थकर्म्म ताभ्यां यद्-
कारि तद् यिरूशालेमनिवासिनां सर्व्वेषां प्रत्यक्षमस्माभिश्च निह्नो-
तुमशक्यं। परन्तु सा कथा प्रजासु यथाधिकं न व्याप्नुयात् तदर्थं १७
वयं तौ तर्जयन्तोऽद्यप्रभृति तेन नाम्ना कमपि किमपि मा भाषे-
थामित्यादिशामः। ततः परं ते तावाहूयाज्ञापयामासुः, इतः परं १८
यीशो र्नाम्ना कथञ्चित् किमपि मा व्याहरतं मा शिक्षयतं वेति।
पितरयोहनौ तु प्रतिगदन्तौ तानवादिष्टाम् ईश्वरस्याज्ञातो युष्मा- १९
कमाज्ञायामधिकमवधानमीश्वरस्य दृष्टौ न्याय्यं न वेति युष्माभि
र्निर्णीयतां। आवाभ्यां हि यद्यदश्रूयतादर्शि च तन्न भाषितुमशक्य- २०
मिति। तदा ते पुनस्तौ तर्जयित्वा विससृजुः, यतो यत् सम्भूतं तद्धेतोः २१
सर्व्वे ईश्वरमस्तुवन्, अतो जनभयात् ते तयोः शासनस्योपायं
नालभन्त। तत् स्वास्थ्यप्रदानरूपमभिज्ञानञ्च यस्मिन् नरे प्रदर्शितं २२
तस्य वयश्चत्वारिंशद्वर्षेभ्योऽप्यधिकमासीत्।

इत्थं विसृष्टौ तौ स्वीयात्मीयानां समीपमगमतां मुख्ययाजकैः २३
प्राचीनैश्च यद्यदुक्तौ तत् तेभ्यः कथयामासतुश्च। श्रुत्वा ते चैकचि- २४
त्तेनेश्वरमुद्दिश्य प्रोच्चैः प्रार्थयमाना अवदन्, भो नाथ, स्वर्गस्य
भूमण्डलस्य समुद्रस्य च तत्र विद्यमानानां सर्व्वेषाञ्च त्वमेव स्रष्टे-
श्वरः, त्वमेवकस्य दायूदस्य मुखेन च त्वमिदं भाषितवान्, २५

किमर्थं भिन्नजातीया लोकाः कुर्व्वन्ति गर्ज्जनं।
देशवासिप्रजाश्चापि चिन्तयन्ति व्यलीकतां॥
उत्तिष्ठन्ति महीपालाः समायान्ति च नायकाः। २६

परमेशस्य तेनैव चाभिषिक्तस्य शात्रवात्॥

२७ सत्यं हि, पवित्रस्तव सेवको यो यीशुस्त्वयाभिषिक्तस्तस्य विरुद्धं
२८ नगरेऽस्मिन् हेरोदः पन्तीयः पीलातस्य परजातीयैरिस्रायेलीयवं-
शीयैश्च जनैः सार्द्धं मिलित्वा साधितवन्तौ सर्व्वं तद् भव्यं यत् तव
२९ हस्तेन मन्त्रणया च पुरा निर्णीतमासीत्। इदानीञ्च, भो प्रभो,
तेषां विविधतर्जनमवलोकय स्वदासेभ्यश्च सम्पूर्णनिर्भयत्वेन त्वद्वाक्य-
३० कथनस्य सामर्थ्यं देहि तदर्थञ्च प्रसारय स्वहस्तमारोग्यदानाय तव
पवित्रसेवकस्य यीशो र्नाम्नाभिज्ञानार्थकर्म्मणामद्भुतलक्षणानाञ्च सिद्धये
३१ च। तैरित्थं प्रार्थिते यत्र ते समवेता आसंस्तत् स्थानं चकम्पे,
सर्व्वे ते च पवित्रेणात्मना पूर्णा ईश्वरस्य वाक्यं निर्भयमकथयन्।

शिष्याणां प्रेम। प्रेरितानां समतासाहसञ्च।

३२ कृतविश्वासिनाञ्च निकरस्य चित्तमेकं मनश्चैकमासीत्। नापि
च कोऽपि सर्व्वस्वस्य किमपि निजस्वमवदत् अपि तु सर्व्वमेव तेषां
साधारणमासीत्। प्रेरिताश्च महाप्रभावेण प्रभो यीशोः पुन-
३३ रुत्थाने साक्ष्यं प्राददुः। तेषु सर्व्वेषु च महानुग्रहोऽवर्त्तत।
३४ फलतो दुर्गत एकोऽपि तेषु नाविद्यत, यतो यावन्तो भूमि-
खण्डानां गृहाणां वा स्वामिन आसंस्तैस्तानि विक्रीय यदा यद्
व्यक्रीयत तदा तस्य मूल्यमानीय प्रेरितानां चरणेषु न्यधीयत
३५ ततः परम् एकैकस्मै प्रयोजनानुसाराद् व्यतीर्य्यत। तदा यो प्रेरितै
३६ र्वार्णबा अर्थतः प्रबोधपुत्र इत्यभिहितः स कुप्रद्वीपे जातो योषि-
३७ नामा लेवीयः क्षेत्रस्यैकस्य स्वाम्यासीत्, स तद् विक्रीय मूल्यमानीय
प्रेरिताणां चरणेषु निदधौ॥ ४॥

५ १ अननियाख्यस्त्वेकः पुरुषः स्वभार्य्यायाः साफीरायाः सम्मत्या
२ कश्चिद् विषयं विक्रीय भार्य्यायामप्यवगतायां मूल्यस्यांशमात्मसात्

हत्वा कश्चिदंशमानीय प्रेरितानां चरणेषु निदधौ। पितरस्तु तम- ३
वादीत्, अननिय, किमर्थं शैतानस्तव हृदयं पूरयित्वा त्वं यथा ४
पवित्रायात्मनेऽनृतं कथयेस्तद्भूमिखण्डस्य मूल्यस्य चांशमात्मसात्
कुर्य्यास्तथा त्वां प्रवर्त्तयामास? स्थितिकाले स किं न तवातिष्ठत्?
विक्रीते च तन्मूल्यं किं न तवाधीनमासीत्? किमर्थमेतत् कर्म्म
स्वहृदयेऽग्राहीः? न मनुष्येभ्योऽपि त्वीश्वरायानृतं कथितं त्वया।
कथा एताः शृण्वन्ननियः पतित्वा प्राणांस्तत्याज, यावन्तश्चाश्रौषुस्ते ५
सर्व्वे महाभयापन्नाः। युवानस्तूत्थाय तं वस्त्रेण वेष्टयामासु र्वहिरूढ्वा ६
शवागारे निदधुश्च।

तदनन्तरमतीते प्रायेणैकस्मिन् प्रहरे तस्य पत्नी तद् वृत्तम- ७
ज्ञात्वा प्रविवेश। पितरस्तां सम्बोध्य जगाद, मां वद, सा भूमिः ८
किं युवाभ्यामेतावन्मुद्राभि र्विक्रीता? साब्रवीत्, सत्यम् एतावती-
भिरेव। तदा पितरस्तां जगाद, कथमेतद् यद् युवां प्रभोरात्मानं ९
परीक्षितुमेकमन्त्रणौ जातौ? पश्य तव पतिं यैः शवागारे निहित-
स्तेषां पादा द्वारदेश उपस्थितास्ते त्वामपि वहि र्वक्ष्यन्ति। अनेन सा १०
तत्क्षणं तस्य चरणयो र्निपत्य प्राणांस्तत्याज। ते युवानश्च प्रविश्य
तां मृतां दृष्ट्वा वहिरूढ्वा पतिपार्श्वे तां शवागारे निदधुः। ११
ततः कृत्स्ना मण्डली येश्चेदमश्रावि सर्व्वे ते च महाभयेनापन्नाः।

अपि च प्रेरितानां हस्तै र्जनेषु बहून्यभिज्ञानार्थकर्म्माण्यद्भुत- १२
लक्षणानि चासाध्यन्त। सर्व्वे चैकचित्ताः शलोमनोऽलिन्देऽवर्त्तन्त। १३
अपरेषान्तु कोऽपि मनुष्यस्तेष्वनुषंक्तुं प्रगल्भतां नागमत्। तथापि
जनास्तान् समाद्रियन्त। विश्वासिनां सङ्ख्या तु पुरुषाणां योषिताञ्च १४
बाहुल्येनोत्तरोत्तरमवर्धत। चत्वरेष्वपि मनुष्यै र्वहिरानीय व्याधिताः १५
शय्यासु खट्वासु वा शायिता न्यधीयन्त, किंस्विदचागच्छतः पितरस्य

१६ छायैव तेषां कमपि स्प्रक्ष्यतीत्याशया। चतुर्द्दिक्स्थनगराणां नर-
निकरश्च व्याधितान् अपवित्रभूतग्रस्तांश्च मनुष्यान् आनयन्तो
यिरूशालेमं समागच्छन्, सर्व्वे ते चारोग्यमलभन्त।

१७ तदा महायाजकः सर्व्वे तस्य सङ्गिनश्चार्थतः सदूकिमतावल-
१८ म्बिनो महाक्रोधेन ईर्ष्यया पूर्णाः प्रेरितेषु हस्तार्पणं कृत्वा तान्
१९ साधारणकारायां निदधुः। प्रभो र्दूतस्तु रात्रौ काराया द्वाराणि
२० मोचयामास, तांश्च बहि र्नीत्वा जगाद, यूयं गत्वा धर्म्मधाम्नि
तिष्ठन्तो जनेभ्य एतज्जीवनावहानि सर्व्वाणि वाक्यानि कथयत।
२१ श्रुत्वा त आसन्नप्रभाते धर्म्मधाम प्रविश्योपदेष्टुमारेभिरे। इतो-
मध्ये महायाजकस्तत्सङ्गिनश्चोपस्थाय सभाम् इस्रायेलीयसन्तानानां
२२ कृत्स्नं प्राचीनवर्गञ्च समाहूय प्रेरितानामानयनार्थं पदातिनः कारा-
गृहं प्रेषयामासुः। ते तूपस्थाय तान् कारायां नासादयामासुः।
२३ अतस्ते प्रत्यावृत्य जगदुः सम्पूर्णयत्नेन रुद्धं कारागृहं द्वारदेशेषु
तिष्ठन्तो रक्षकाश्चास्माभि र्दृष्टाः, प्रविश्य त्वभ्यन्तरे कोऽपि नासा-
२४ दितः। कथामिमां श्रुत्वा महायाजको धर्म्मधाम्नः सेनाध्यक्षो
२५ मुख्ययाजकाश्चेदं केन परिणंस्यतीति तेषु चिन्ताकुला अभवन्। तदा
कश्चिदागत्य तेभ्यो निवेदयामास, पश्यत, ये पुरुषा युष्माभिः
२६ कारायां समर्पितास्ते धर्म्मधाम्नि तिष्ठन्तो जनमुपदिशन्ति। तदा
सेनाध्यक्षः पदातयश्च गत्वा तानानिनाय, न तु बलेन, जनभयात्
२७ प्रस्तरै र्घानिष्यामह इति शङ्कमानाः। तांश्चानीय सभायां स्थापया-
२८ मासुः। महायाजकस्तदा तान् पप्रच्छ, तेन नाम्ना नैवोपदिशतेति
यूयं किं न दृढमस्माभिराज्ञापिताः? पश्यत तु, युष्मदुपदेशेन
यूयं यिरूशालेमं पूरयितवन्तः, तस्य नरस्य शोणितमस्मासु वर्त्तयितुं
२९ यतध्वे च। ततः पितरोऽन्ये प्रेरिताश्च प्रतिजगदुः, मनुष्याणामाज्ञात

ईश्वरस्याज्ञाधिकं ग्रहीतव्या। यूयं काष्ठ उद्बध्य यं व्यापादितवन्तः ३०
स यीशुरस्मत्पूर्व्वपुरुषाणामीश्वरेण पुनरुत्थापितः। ईश्वरः स्वदक्षिण- ३१
हस्तेन तमेवोच्चीकृत्येस्रायेलाय मनःपरावर्त्तनस्य पापमोचनस्य च
प्रदानार्थमधिपतिं त्रातारञ्च कृतवान्। कथास्वेतासु तस्य साक्षिणो ३२
वयं स च पवित्र आत्मा यमीश्वरः स्वीयाज्ञाग्राहिभ्यः प्रदत्तवान्।

एतच्छ्रुत्वा ते रुष्टास्तेषां हत्यार्थममन्त्रयन्त। सभायामुपस्थित- ३३
स्त्वेकः फरीशी नरोऽर्थतो सर्व्वजनेन सम्मानितो गमलीयेल ३४
इत्यभिधो व्यवस्थाध्यापक उत्थाय प्रेरितानां कियत्कालार्थं बहि-
ष्करणमादिश्य सभास्थान् जगाद, भो इस्रायेलीयनराः, यूयं तान् ३५
मनुष्यान् प्रति यत् करिष्यथ तत्र सावधाना भवत। एतेभ्यो ३६
दिनेभ्यः प्राक् थूदा आत्मानं विशिष्टं मत्वोत्तस्थौ न्यूनाधिकं
चत्वारिशतानि नराश्च तस्मिन्ननुससञ्जिरे, स तु जघ्ने तस्याज्ञा-
ग्राहिणश्च सर्व्वे विकीर्णा अवास्तवाश्च बभूवुः। तस्य पश्चात् नाम्नां ३७
लेख्यारोपणकाले गालीलीय यिहूदा उत्थाय बहुजनान् स्वानु-
गमनायोन्मार्गं निनाय। सोऽपि ननाश तदाज्ञाग्राहिणश्च सर्व्वे
विकीर्णा बभूवुः। अतोऽहमिदानीं युष्मान् ब्रवीमि, यूयं तान् ३८
नरांस्त्यक्त्वा मा बाधध्वं। यतो मन्त्रणमिदं कार्य्यमिदं वा चेन्मनुष्य- ३९
मूलकं तर्हि लोपं यास्यति, तत्तु चेदीश्वरमूलकं तर्हि यूयं तस्य लोपं
साधयितुं न शक्ष्यथ। अपि त्वीश्वरेण सार्द्धं युद्धकारिणः प्रतिभास्यथ।
तदा ते तस्य वाक्यं जगृहुः प्रेरितांश्च स्वान्तिकमाहूय प्रहार्य्य च, ४०
यीशो र्नाम्ना पुन र्न भाषध्वमित्यादिश्य च तान् विससृजुः। तदा ४१
तस्य नाम्नः कारणाद् वयमवमाननाया योग्या गणिता इत्यत्रा-
नन्दन्तस्ते सभायाः सम्मुखात् प्रतस्थिरे। कृत्स्नं दिनञ्चाविरतं धर्म्मधाम्नि ४२
गृहे चोपादिशन् यीशुरेव ख्रीष्ट इति सवादं व्यज्ञापयंश्च॥ ५॥

## सप्तसहकारिणां नियोजनम्।

६ १ तेषु दिनेषु वर्धमानायां शिष्याणां सङ्ख्यायाम् इब्रीयभाषिणां
विरुद्धं यूनानीयभाषिणां मनोदुःखसूचकमिदं वाक्यमश्रावि यत्
२ प्रात्यहिकोपकारेऽस्माकं विधवा योषित उपेक्ष्यन्त इति। द्वादश-
प्रेरितास्तदा शिष्यनिकरं स्वसमीपमाहूय जगदुः, वयं यदीश्वरस्य
३ वाक्यं विहाय भोजनमश्नान् परिचरामस्तन्न प्रीतिजनकं। अतो भो
भ्रातरः, युष्मन्मध्ये पवित्रेणात्मना प्रज्ञया च पूर्णान् सप्त सुख्यातान्
४ नरान् निरूपयत, तानेव वयं कार्य्येऽस्मिन्नधिकरिष्यामः। वयन्तु
प्रार्थनायां वाक्यस्य परिचर्य्यायाञ्चानुव्यवसायिनः स्थास्यामः।
५ कथायामेतस्यां कृत्स्नस्य जननिवहस्य प्रीतिर्जाता, अतस्ते
विश्वासेन पवित्रेणात्मना च पूर्णं स्तिफाननामानं नरं, फिलिपं,
प्रखरं, नीकानरं, तीमोनं, पार्म्मिणां, नीकलायाभिधमेकञ्चान्तीय-
६ खीयं यिहूदिमतावलम्बिनं वरयामासुः प्रेरितानां सम्मुखे स्थाप
७ यामासुश्च, ते च प्रार्थयित्वा तेषु हस्तानर्पयामासुः। ईश्वरस्य
वाक्यञ्चावर्धत, यिरूशालेमि शिष्याणां सङ्ख्याप्यतीवावर्धत। याजका-
नामपि महानिवहो विश्वासेनाज्ञाग्राही बभूव।

## स्तिफानस्य विवरणम्।

८ अनन्तरं स्तिफानोऽनुग्रहेण प्रभावेन च पूर्णः सन् जनानां
९ मध्येऽद्भुतलक्षणान्यभिज्ञानार्थकर्म्माणि चासाधयत्। तदा लिबर्त्ति-
नानां समाज इत्यभिधस्य समाजस्य केचिदंशिनः कुरीणीयानां
सिकन्दरीयाणाञ्च केचिन्नराः किलिकियादेशिनाम् आशिया-
१० प्रदेशिनाञ्च समाजस्य केचिदंशिनश्चोत्थाय स्तिफानेन सार्द्धं व्यव-
दन्त स तु येन ज्ञानेन येनात्मना चाभाषत तयोः प्रतिरोधं कर्त्तुं
११ नाशक्नुवन्। तदा तैः प्रवर्त्तिताः केचिन्नरा अवदन् असौ मोशि-

रीश्वरस्य च विरुद्धं निन्दोक्तीर्व्याहरत् ता वयमाकर्णितवन्तः ।
इत्थं प्रजासु प्राचीनेषु शास्त्राध्यापकेषु च तैरुत्तेजितेषु ते तमुप- १२
स्थाय दधृः सभां निन्युश्च मृषासाक्षिण उपस्थापयामासुश्च । तेऽ- १३
ब्रुवन् असौ नरोऽस्य पवित्रस्थानस्य व्यवस्थायाश्च विरुद्धं निन्दोक्ती
र्व्याहर्त्तुं न विरमति । वयं हि तस्येदं वाक्यमश्रौष्म, यथा, नासरतीयो १४
यीशुरिदं स्थानं ध्वंसयिष्यति मोशिनास्मभ्यं दत्ता रीतीः परि-
वर्त्तयिष्यति चेति । तदा सभायामासीनाः सर्व्वेऽनन्यदृष्ट्या तं समा- १५
लोकयन्तस्तस्याननं स्वर्गदूतस्याननमिव प्रतिभातीत्यपश्यन् ॥ ६ ॥

अनन्तरं महायाजकः पप्रच्छ, कथा एताः किं सत्याः ? ७ १
स्तिफानोऽवादीत्, भो भ्रातरः पितरश्च, शृणुत । अस्माकं पूर्व्व- २
पुरुषोऽब्राहामो हारणनगरे निवासनात् प्राग् यदा सिस्पतामि-
यादेशेऽवर्त्तत, तदा प्रतापस्येश्वरस्तस्मै दर्शनं दत्त्वा तमवादीत्, त्वं ३
स्वदेशात् स्वज्ञातिजनमध्याच्च निर्गत्य मया प्रदर्शयितव्यं देशं
याहि । तदा स कल्दीयानां देशान्निर्गत्य हारणे न्यवास । पुन- ४
स्तत्पितु र्मरणात् परं स तं ततोऽपि प्रस्थाप्येदानीं युष्माभिरध्युष्य-
माणेऽस्मिन् देशे वासयामास । तत्र तु तस्मै कमपि भूम्यधिकारं ५
न ददौ पदैकमानामपि भूमिं न ददौ तथा च निजस्वविषयार्थं
तं देशं तस्मै तदीयोत्तरवंशाय च दातुं प्रतिशुश्राव । तदा स
निःसन्तान आसीत् । ईश्वर इत्थमप्यभाषत, यत् तस्य वंशश्चत्वारि- ६
शतानि वर्षान् परदेशप्रवासी भविष्यति तज्जनैर्दासीकृतः पीडयिष्यते
च । ताः प्रजास्तु यस्या जाते दासा भविष्यन्ति, तामहं शासिष्या- ७
मीति प्रभुरुवाच, ततः परं ता निर्गत्य स्थानेऽस्मिन् मामाराधयि-
ष्यन्तीति । स तस्मै त्वक्छेदस्य नियममपि ददौ । तदनुरूपञ्च स ८
इसहाकं जनयित्वाष्टमे दिने तस्य त्वक्छेदं चकार । पुनरिस्हाको

याकोबं प्रति, याकोबश्चास्माकं द्वादश पितृकुलपतीन् प्रति तदेव
चकार ।

ते पितृकुलपतयो योषेफायेर्ष्यन्तो मिसरगामिनरेषु तं
१० विचिक्रियिरे । ईश्वरस्तु तेन सार्द्धमवर्त्तत तद्दुःखात् सर्व्वस्मात्
क्लेशात् तमुद्दधारे च, तस्मै मिसरराजस्य फरौणस्य समक्षमनुग्रहं
प्राज्ञताञ्च विततार च, स च तं मिसरस्य स्वीयकृत्स्नकुलस्य चाधि-
११ पत्ये नियुयुजे । तदा कृत्स्ने मिसरदेशे कनाने च दुर्भिक्षं महा-
१२ क्लेशश्चोपतस्थाते, भक्ष्यद्रव्याणि चास्मत्पूर्व्वपुरुषैरलभ्यान्यभवन् । तदा
मिसरे गोधूमा विद्यन्त इति निशम्य याकोबः प्रथममस्मत्पूर्व्व-
१३ पुरुषान् प्राहिणोत् । अनन्तरं द्वितीये गमने योषेफः स्वभ्रातृभिः
१४ प्रत्यभिज्ञातः फरौणस्य समक्षञ्च योषेफस्य जातिः प्रकाशिता । तदा
योषेफः संवादं प्रहित्य स्वपितरं याकोबं निजान् पञ्चसप्ततिसङ्ख्यान्
१५ सर्व्वज्ञातींश्चानाययामास । अनन्तरं याकोबो मिसरं जगाम, तत्रैव
१६ स चास्मत्पूर्व्वपुरुषाश्च प्राणांस्तत्यजुः । तेषां शवाश्च शिखिमं नीताः
शिखिमस्यहमोरस्य पुत्रेभ्यो रूप्यमूल्यं दत्त्वाब्राहामेण क्रीते
शवागारे निदधिरे ।

१७ ईश्वरस्त्वब्राहामाय शपथेन यत् प्रतिश्रुतवान् तस्याङ्गीकार-
वाक्यस्य सिद्धिसमयो यदा निकटोऽभवत् तदा मिसरे प्रजा-
१८ वर्धन बहुसङ्ख्या चाभवत् । शेषे योषेफं यो नाजानात् तादृशो
१९ ऽपरो मिसरराज उत्पन्नः । सोऽस्मज्जाते विरुद्धं छलमाश्रित्यास्माकं
पूर्व्वपुरुषानपीडयत् फलतस्तेषां शिशवो यथा न जीवेयुस्तदर्थं
२० तेषां बहिःपरित्यागमादिदेश । तस्मिन् काले मोशिरजनि, स
ईश्वरस्य दृष्टौ मनोहर आसीत्, मासत्रयं पितृगृहे पर्य्यपाल्यत च ।
२१ ततः परं बहिः परित्यक्तं तं फरौणस्य दुहितोद्दधार स्वार्थं पुत्रं

नियुज्य परिपालयामास च। ततो मोशि र्मिस्रीयाणां सर्व्वविद्यानां २२
शिक्षितो वाक्येषु क्रियासु च शक्तिमान् जातश्च। इत्थं चत्वारिंश- २३
द्वर्षपरिमिते काले तेनातिवाहिते स्वभ्रातृणामिस्रायेलवंशानानां
तत्त्वावधारणे प्रवृत्तिस्तस्य हृदाकाश उदियाय। ततस्तेषामेकं २४
प्रत्यन्यायः क्रियत इति दृष्ट्वा स उपकारं कुर्व्वंस्तं मिस्रीयं हत्वा
तस्य पीड्यमानस्य कृतेऽन्यायस्य प्रतीकारं चकार। अत्र सोऽन्वमन्यत, २५
मम भ्रातरो भोक्ष्यन्ते यन्मम हस्तेनेश्वरस्तेभ्यस्त्राणं ददातीति। मन्तु २६
ते नाबोधि। परदिने तेषु मिथो युध्यमानेषु स तेषां प्रत्यक्षो
भूत्वा साग्रहं सन्धये प्रवर्त्तयंस्तानब्रवीत्, भो नराः, भ्रातरो यूयं २७
किमर्थं परस्परमपकुरुथ? तदा निकटस्थस्यापकारी तं दूरीकुर्व्वन्
जगाद, कस्त्वां शासकं प्राड्विवाकञ्च कृत्वास्माकमधिकृतवान्। त्वं २८
यथा ह्यस्तं मिस्रीयं हतवांस्तथा मामपि हन्तुं किमिच्छसि? तद् २९
वचः श्रुत्वा मोशिः पलाय्य मिदियनदेशप्रवासी बभूव तत्र पुत्रद्वयं
जनयामास च। इत्थं चत्वारिंशद्वर्षेष्वतीतेषु सीनयगिरे र्मरौ प्रभो ३०
र्दूतो गुल्मानलस्य शिखायां तस्मै दर्शनं ददौ। तस्मिन् दर्शने ३१
मोशि र्विस्मितः। यदा तु तत समालोकयितुं समीपं याति, तदा
तं प्रति प्रभोरियं वाणी बभूव, तव पूर्व्वपुरुषाणामीश्वरोऽहम, ३२
अब्राहामस्येश्वर इस्हाकस्येश्वरो याकोबस्य चेश्वरः। तदा मोशिर्वेप-
मानः समालोकयितुं प्रगल्भो न बभूव। प्रभुस्तु तमब्रवीत्। तव ३३
चरणयोरुपानहौ मोचय यतस्त्वं यत्र तिष्ठसि सा पवित्रा भूमिः।
मिसरस्थानां मम प्रजानां पीडनं मया सम्यग् दृष्टं श्रुतञ्च तासा- ३४
मार्त्तरावः। ता उद्धर्त्तुमेवाहमवतीर्णः। इदानीञ्च त्वमायाहि, अहं
त्वां मिसरं प्रहेष्यामि। तं यं मोशिं प्रत्याख्याय त ऊक्तवन्तः, ३५
कस्त्वां शासकं प्राड्विवाकञ्च नियुक्तवांस्तमेवेश्वरः शासकं मोचयिता-

३६ रञ्च कृत्वा गुल्मे तस्मै दर्शनदातु र्दूतस्य हस्तेन प्रेषयामास। स एव
मिसरदेशे लोहितसमुद्रे च मरौ च चत्वारिंशद् वत्सरान् अद्भुत-
३७ लक्षणान्यभिज्ञानार्थकर्म्माणि च साधयंस्तान् वहि र्निनाय। स एव
मोशिरिस्रायेलसन्तानान् जगाद युष्माकमीश्वरः प्रभु र्युष्मदर्थं
युष्मद्भ्रातॄणां मध्यान्मादृशं भाववादिनमुत्पादयिष्यति, तस्य वाक्यं
३८ युष्माभि र्ग्रहीतव्यमिति। स एव मरौ वर्त्तमानायां मण्डल्यां
सीनयगिरौ तेन संलपतो दूतस्यास्मत्पूर्व्वपुरुषाणाञ्च मध्यस्थो जातो-
३९ ऽस्मभ्यं दातव्यानि जीवनावहानि वचांसि लब्धवांश्च। अस्मत्पूर्व्व-
४० पुरुषास्तु तस्याज्ञावर्त्तिनो भवितुमनिच्छन्तस्तं दूरीकृत्य स्वमनःसु
मिसरं प्रत्यावृत्ता हारोणमब्रुवन् अस्मदर्थं देवान् निर्म्मीध्व
येऽस्माकमग्रे यास्यन्ति, यतो येन मोशिना वयं मिसराद् वहिरा-
४१ नीतास्तस्य का दशा सम्भूता तन्न जानीम इति। तस्मिन् काले ते
गोवत्समूर्त्तिं निर्म्माय तां मूर्त्तिमुद्दिश्य यज्ञमनुतस्थुः स्वहस्तानां
४२ कर्म्मस्वानन्दंश्च। तत ईश्वरः पराङ्मुखीभूय गगनीयवाहिन्या
आराधनार्थं तांस्तत्याज। भाववादिनां ग्रन्थे तदधीदं लिखितमास्ते,

चत्वारिंशत् समा यावत् किं मह्यं प्रान्तरे बलीन्।
किं नैवेद्यानि वादत्त यूयं भो इस्रायेल्कुल॥
४३ मोलकस्यापि दूष्यन्तु रिम्फन्देवस्य तारकां।
युष्माभि र्निर्म्मिताः पूज्या अन्याश्चावहताकृतीः।
ततोऽहं बाबिलः पारं वो नेष्यामि प्रवासयन्॥

४४ यो मोशिं तेन दृष्टस्यादर्शस्यानुरूपं साक्ष्यदूष्यं निर्म्मातुमादिष्टवां-
४५ स्तस्याज्ञातस्तद् दूष्यं मरावस्मत्पूर्व्वपुरुषाणां मध्येऽविद्यत,-यिहो-
शूयस्य सङ्गिनोऽस्मत्पूर्व्वपुरुषाश्च पैतृकविषयमध्ये तल्लब्ध्वा परजाती-
नामधिकारग्रहणकाले तत्र नीत्वास्मत्पूर्व्वपुरुषाणां सम्मुखादीश्वरेण

निरस्तानां तासां जातीनां देशे दायूदस्य काल, यावत् तदरचन्।
स ईश्वरस्यानुग्रहभाजनं भूत्वा याकोबेश्वरस्य कृत आवासस्याविष्कारं ४६
प्रार्थयाञ्चक्रे। सलोमा तु तस्य कृते गृहं निर्म्ममे। अपि तु ४७
परात्परो हस्तनिर्म्मितेषु निवासेषु न वसति, भाववादिना यथोक्तं, ४८

मम सिंहासनं स्वर्गं मम पादासनञ्च भूः। ४९
प्रभुराह गृहं कीदृग् विनिर्म्मास्यथ मत्कृते॥
मद्विश्रामार्थकं स्थानं कुत्र वा लक्षयिष्यते।
मामकीनकरस्येदं साकल्यं किं न सृष्टवान्॥ ५०

भो कठोरग्रीवा हृदयेषु कर्णेषु चाच्छिन्नत्वचश्च जनाः, यूयं सर्व्वदा ५१
पवित्रस्यात्मनः प्रतिकूलाचाराः, युष्माकं पूर्व्वपुरुषा यादृशा आसन्,
यूयमपि तादृशाः। भाववादिनां मध्ये को युष्मत्पूर्व्वपुरुषै र्नोपद्रुतः। ५२
तस्य धर्म्मवतो भाव्यागमनं ये ज्ञापितं तांस्ते जघ्नुः। इदानीञ्च
यूयं तस्य समर्पयितारो घातकाश्च जाताः। स्वर्गदूतानां नियम- ५३
मिव व्यवस्थां लब्ध्वा यूयं तां न रक्षितवन्तः।

एतच्छ्रुत्वा ते रुष्टहृदया जातास्तं प्रति दन्तानघर्षंश्च। स तु ५४
पवित्रेणात्मना पूर्णः सन्ननन्यदृष्ट्या स्वर्गमालोकयन्नीश्वरस्य प्रताप- ५५
मीश्वरस्य दक्षिणे तिष्ठन्तं यीशुञ्च ददर्श जगाद च, पश्य, उद्घाटितं ५६
स्वर्गमीश्वरस्य दक्षिणे तिष्ठन्तं मनुष्यपुत्रञ्च वीक्षे, तदा ते प्रोच्च- ५७
रवेण क्रोशन्तः स्वकर्णान् रुद्ध्वा चैकचित्तेन तमभ्यद्रवन्। नगराद् ५८
वहिष्कृत्य च तं प्रस्तरैराघ्नन्। साक्षिणश्च शौलनाम्नः कस्यचिद्
यूनश्चरणयोः स्ववासांसि निदधुः। यदा ते स्तिफानं प्रस्तरैराघ्नंस्तदा ५९
स प्रार्थयमानोऽवदत्, प्रभो यीशो ममात्मानं गृहाण। जानुनी ६०
पातयित्वा चाब्रवीत्, तेषामिदं पापं मा गणय। इत्युक्त्वा स
निदद्रौ। शौलस्तु तस्य हत्यायां समप्रीयत॥ ७॥

फिलिपस्य प्रचारकार्य्यम्।

८ १ तस्मिन् दिने यिरूशालेमस्थमण्डल्या विरुद्धमुत्कट उपद्रव
उत्पन्नः। ततः प्रेरितेभ्योऽन्ये सर्व्वे यिहूदियायाः शमरियायाश्च
२ ग्रामेषु व्यकीर्य्यन्त। तथाच श्रद्धाशालिनः केचिन्नराः स्तिफानं
३ समाधिक्रियामनुष्ठाय तमधि महाविलापमकार्षुः। शौलस्तु मण्डलीं
लुम्पन् गृहाणि प्रविश्य पुरुषान् योषितश्च व्यपकर्षन् कारायां समर्पयत्।
४ तदा ये विकीर्णास्ते विविधस्थानानि गच्छन्त, सुसंवादस्य वाक्यं
५ व्यज्ञापयन्। विशेषतः फिलिपः शमरियाया नगरं गत्वा तत्रत्य-
मनुष्याणां मध्ये ख्रीष्टस्य कथामघोषयत्। तदा फिलिपो यद्यद्
६ अकथयत्, जननिवहा एकचित्तास्तत्र मनांसि न्यदधत, यतस्तेन
साध्यमानानामभिज्ञानार्थकर्म्मणां वृत्तान्तं तेऽशृण्वन् अथवा तान्य-
७ पश्यन्। फलतोऽशुच्यात्माविष्टेभ्यो बहुभ्य आत्मान उच्चरवमुदीरयन्तो
८ निरगच्छन् अवशाङ्गाः खञ्जाश्च बहवो निरामया अभवन्। अनेन
तस्मिन् नगरे महानन्दः सञ्जातः।
९ तस्मिन् नगरे पूर्व्वमुपस्थितः शिमोननामा पुरुष एक आसीत्,
स मायाविलवृत्तिमास्थाय महापुरुषोऽहमिति वदन् शमरीय-
१० जातिं विस्मयापन्नामकरोत्। असावीश्वरस्य महती शक्तिरिति
वदन्तः क्षुद्रा महान्तश्च सर्व्वे तस्मिन् मनांसि न्यदधत च।
११ आदीर्घकालाद् विविधमायाविलेन ते विस्मयापन्नास्ततो हेतो-
१२ स्तस्मिन् मनांसि न्यदधत। यदा त्वीश्वरराज्यस्य यीशुख्रीष्टस्य
नाम्नश्च सुसंवादं विज्ञापयति फिलिपे तेषां विश्वासोऽजायत तदा
१३ पुरुषा योषितश्च स्नापिता अभवन्। स शिमोनोऽपि व्यश्वसीत्,
स्नापितश्च नित्यं फिलिपस्यान्तिकेऽवर्त्तत, अभिज्ञानानां प्रभावसिद्धा-
नाञ्च महतां कर्मणां साधनं पश्यन् विस्मयापन्नोऽभवच्च।

अनन्तरं शमरीया ईश्वरस्य वाक्यं गृहीतवन्त इति श्रुत्वा १४
यिरूशालेमस्थाः प्रेरिताः पितरं योहनञ्च तेषां समीपं प्राहिण्वन्,
तौ च तत्रोपस्थाय यथा ते पवित्रमात्मानं लभेरंस्तेषां निमित्तं १५
तथा प्रार्थयाञ्चक्राते। यतस्तदा स आत्मा तेषां कस्याप्युपरि न १६
पतितवान्। ते केवलं प्रभो यीशो र्नाम्ना स्नापिता आसन्।
अतस्तौ तेषु हस्तार्पणमकुरुतां ते च पवित्रमात्मानमलभन्त। १७
अनन्तरं प्रेरितयो र्हस्तार्पणेन पवित्र आत्मा वितीर्य्यत इति १८
लक्षयित्वा शिमोनस्तयोः समीपं मुद्रा आनीय तावब्रवीत्, मह्य- १९
मपीदं सामर्थ्यं दत्तं, यन्मया यस्मिन् कस्मिंश्चिद् हस्तार्पणं क्रियते
स पवित्रमात्मानं लभेतेति। पितरस्तु तमवादीत्, तव रूप्यं २०
त्वया सहितं विनाशमाप्नोतु, यतस्त्वमीश्वरस्य दानं मुद्राभिः क्रेतुं
कल्पितवान्। कथायामस्यां कोऽप्यंशः कोऽप्यधिकारो वा तव २१
नास्ति, यत ईश्वरस्य समक्षं तव हृदयं न सरलं। अतः कुभावा- २२
दस्मान्मनः प्रत्यावर्त्तय, कथञ्चित् तव हृदयस्यैतत्सङ्कल्परूपं पापं
यन्मार्ज्यते तदेवेश्वरं प्रार्थयस्व च, यतोऽहं पश्यामि, त्वं तिक्तता- २३
रूपपित्ते चाधर्म्मरूपबन्धने च पतितः। शिमोनस्तु प्रतिभाष- २४
माणोऽब्रवीत्, युवामेव मदर्थं प्रभुं तथा प्रार्थयेथां यथा युष्म-
त्कथितं किमपि मयि न वर्त्तिष्यते। अनन्तरं तौ साक्ष्यं दत्त्वा २५
प्रभो र्वाक्यं कथयित्वा च यिरूशालेमं प्रतिजग्मतुः, गमनकाले
च शमरीयाणां बहुग्रामेषु सुसंवादं विज्ञापयामासतुः।

प्रभो र्दूतस्तु फिलिपमालप्याब्रवीत्, त्वमुत्थाय दक्षिणां दिश- २६
मुद्दिश्य प्रस्थाय यो मार्गो यिरूशालेमाद् घसां याति तमाल-
म्बस्व, स निर्जनः। ततः स उत्थाय प्रस्थितः। पश्य च, कूशदेशीय २७
एको नपुंसकस्तत्रासीत्, स कूशीयानां कान्दाकीत्यभिधाया महिष्या

अमात्यस्तस्याः कृत्स्ने धनकोषेऽधिकृतश्च। स उपासनार्थं यिरूशालेमं
२८ गत्वा प्रत्यागमनकाले रथासीनो भाववादीनो यिशायाहस्य ग्रन्थं
२९ पठति। आत्मा फिलिपं जगाद, समीपं गत्वामुष्मिन् रथेऽनुषज्यस्व।
३० फिलिपस्तत्समीपं धावंस्तेन पठ्यमानानि भाववादिनो यिशायाहस्य
वचांसि शृण्वंस्तमाह, भवता यत् पठ्यते तत् किं बुध्यते? स जगाद,
३१ कथं तच्छक्यं मया बोधकहीनेन? अनन्तरं स फिलिपं जगाद, भवा-
३२ नारुह्य मया सार्द्धमुपविशतु। शास्त्रस्य यत् प्रकरणं तेनापठ्यत तदिदं

यथा मेषस्तथा सोऽपि वध्यस्थानमनीयत।
लोमच्छेत्तुः समक्षञ्च मूको मेषशिशुर्यथा॥
तादृगेव स्ववक्त्रस्योद्घाटनं न करोति सः।
३३ अस्य दीनदशायाञ्च विचारोऽप्यपहारितः॥
तत्कालिकमनुष्याणां वर्णने को भवेत् क्षमः।
यतो भूमण्डलात् तस्य जीवनं व्यपहार्य्यते॥

३४ स नपुंसकः प्रतिभाषमाणः फिलिपमब्रवीत्, भवान् मां वक्तु-
मर्हति, कथेयं भाववादिना कमुद्दिश्य कथ्यते? स्वमुद्दिश्याथवा
३५ कञ्चिदन्यमुद्दिश्य? तदा फिलिपो वक्त्रमुद्घाट्य तस्मात् शास्त्रीय-
३६ वचनादारभ्य तं यीशोः सुसंवादं ज्ञापयामास। अनन्तरं मार्गेण
गमनकाले तोयस्थानमेकं ताभ्यां प्रापि। तदा नपुंसक आह,
३७ पश्यात्र तोयं। मम स्नापनस्य का बाधा? फिलिपस्तमब्रवीत्,
भवान् यदि सम्पूर्णान्तःकरणेन विश्वसिति, तर्हि बाधा नास्ति।
३८ स प्रतिबभाषे, यीशुः ख्रीष्ट ईश्वरस्य पुत्र इति विश्वसिमि। तदा
दिष्टायां तेन रथस्य गमनविरत्यां फिलिपो नपुंसकश्चोभौ तोय-
३९ मवतेरतुः, स च तं स्नापयामास। तोयमध्यात्तु तयोरारूढयोः
फिलिपः प्रभोरात्मनापहृतो नपुंसकेन च पुन र्न दृष्टः। स हि

मानन्दं स्वगन्तव्यमार्गेणागमत्। फिलिपस्त्वस्दोद आविष्कृतः। ४०
ततश्चाग्रं गच्छन् सर्व्वेषु नगरेषु सुसंवादं घोषयंश्च स क्रमेण
कैसरियायामुपतस्थे ॥ ८ ॥

शौलस्य मनःपरिवर्त्तनम् यीशोः प्रचारणञ्च।

प्रभोः शिष्याणां भर्त्सनं वधस्य तदापि शौलस्य प्राणवायुरास्तां, ९ १
ततो हेतोः स महायाजकस्य समीपं गत्वा दम्मेशकस्थेभ्यः समाजेभ्यो २
दर्शयितव्याः पत्रिका ययाचे। तत्र यदि स तन्मार्गावलम्बिनः
कांश्चिन्मनुष्यान् आसादयति, तर्हि पुरुषांस्तांस्ता योषितो वा
शृङ्खलैर्बद्ध्वा यिरूशालेमं नेष्यतीति तस्याभिप्राय आसीत्।
गमनकाले तु यदा स दम्मेशकस्य निकटमुपातिष्ठत, तदा सहसा ३
तस्य परितो गगनात् प्रभा व्यद्योतिष्ट। अनेन स भूमौ पतित्वा ४
मामालपन्तीमिमां वाणीमश्रौषीत्, शौल शौल किमर्थं मामुप-
द्रवसि? सोऽब्रवीत्, को भवान् प्रभो? प्रभु र्जगाद, त्वं यमुप- ५
द्रवसि स यीशुरहं; दुष्करं तव पदाघातेन कण्टकाग्राणां ताडनं।
स कम्पमानश्चमत्कृतश्च पप्रच्छ, प्रभो, भवान् मया कर्त्तव्यं किं ६
वाञ्छति? प्रभुस्तमाह, उत्थाय नगरं प्रविश, यत् त्वया कर्त्तव्यं
तत् तुभ्यं कथयिष्यते। तत्सङ्गिनः पान्थास्तु मौनिनोऽतिष्ठन्, यतः ७
शब्दं शृण्वन्तोऽपि ते कमपि नापश्यन्। अनन्तरं शौलो भूमित ८
उत्तस्थौ। उन्मीलितयोस्तु तस्य नेत्रयोः स कमपि नापश्यत्, केचि-
न्नरास्तु तस्य हस्तं धृत्वा तं दम्मेशकं निन्युः। तत्र स त्रीणि ९
दिनानि दृष्टिहीनोऽवर्त्तत, भोजनं पानञ्चापि नाकरोत्।

दम्मेशकनिवासिनां शिष्याणां मध्येऽननियाख्य एको नर आसीत्, १०
प्रभु र्दर्शनं दत्त्वा तमब्रवीत्, अननिय। स प्रतिजगाद, पश्यत्रूप-
स्थितोऽहं प्रभो। प्रभुस्तमाह, उत्थाय सरलाभिधं मार्गं गच्छ, ११

यिहूदा गृहे तार्षीयं शौलमन्विच्छ च। यतः पश्य स प्रार्थयते
१२ दर्शने चेदं दृष्टवान् यदननियाख्यो नरः प्रविश्य तस्मै दृष्टिदानार्थं
१३ तस्मिन् हस्तार्पणं करोति। अननियः प्रतिबभाषे, प्रभो, बहूनां
मुखात् तं नरमधि मयाश्रावि यिरूशालेमे भवतः पवित्रजनानां
१४ कत्यपकारान् स कृतवान्, अत्रापि मुख्ययाजकैः प्रदत्तस्तस्याधि-
कारोऽस्ति तेन स भवन्नाम्ना प्रार्थयमानान् सर्व्वान् बन्धुं समर्थः।
१५ प्रभुस्तु तं जगाद, याहि, यतः परजातीनां राज्ञाञ्चेस्रायेलसन्तानानाञ्च
१६ समक्षं मदीयनाम्नो वहनार्थं स मत्कृते वरितं भाजनं। यतो
मदीयनाम्नः कृते कति दुःखानि तेन भोक्तव्यानि तदहं तं
१७ दर्शयिष्यामि। अनन्तरमननियः प्रस्थाय तद् गृहं प्रविवेश तस्मिन्
हस्तावर्पयित्वा च तमाह, भ्रातः शौल, प्रभुर्यतस्त्वागमनकाले
पथि तुभ्यं दर्शनदाता यीशुः मां प्राहिणोत्, त्वं यद् दृष्टिप्राप्तिं
१८ लब्ध्वा पवित्रेणात्मना पूर्णो भविष्यसीति तस्याभिप्रायः। तत्क्षणं
तस्य नेत्राभ्यां मीनशल्कवद् वस्तुषु पतितेषु स तदैव दृष्टिं लेभे
१९ प्रोत्थाय स्नापितो भवन् भोजनं गृहीत्वा सबलीबभूव च।
अनन्तरं शौलः कतिपयदिवसान् दम्मेशकस्थैः शिष्यैः सार्द्धम-
२० वर्त्तत, अविलम्बे च समाजगृहेषु यीशोरिमां कथामघोषयत् यत्
२१ स एवेश्वरस्य पुत्रः। कथेयं यैरश्रावि ते सर्व्वे चमत्कृता अवदन्, अयं
किं न स मनुष्यो यो यिरूशालेम एतन्नाम्ना प्रार्थयमानान् नाशितवान्
स्थानमिदञ्चैतदर्थमागतवान्, यत् स तान् बद्ध्वा मुख्ययाजकानां
२२ समीपं नेष्यति? शौलस्त्वधिकं शक्तिमान् अभवत्, असौ ख्रीष्ट इति
सिद्धान्तं कुर्व्वंश्च दम्मेशकनिवासिनो यिहूदीयान् निरुत्तरान् अकरोत्।
२३ बहुदिनेष्वित्थमतिवाहितेषु यिहूदीयास्तं हन्तुममन्त्रयन्त।
२४ तेषान्तु सा कुकल्पना शौलेनाज्ञायि। ते च तं हन्तुमिच्छन्तो

दिवानिशं पुरद्वाराण्यरक्षयन्। तदा शिष्यास्तं गृहीत्वा रात्रौ पिटके २५
प्रवेश्य प्राचीरस्य छिद्रेण रज्जुभिरवरोहयामासुः।

यिरूशालेम उपस्थाय शौलः शिष्येष्वनुषक्तो भवितुमुत्सेहे, स २६
तु यच्छिष्य इति न विश्वस्य सर्व्वे तस्माद् अभैषुः। तदा बार्णब्बास्त- २७
मुपकुर्व्वन् प्रेरितानां समीपं निनाय, पथि स कथं प्रभुं दृष्टवान्
प्रभुस्तु यत् तेन संलपितवान् दम्मेषके च स यीशो र्नाम्ना
कीदृशीं निर्भयतां प्रदर्शितवांस्तत् सर्व्वं तेभ्यो निवेदयामास च।
अनन्तरं स यिरूशालेमे तैः सह वर्त्तमानोगृहप्रवेशं गृहान्निर्गम- २८
नञ्चाकरोत् प्रभो र्यीशो र्नाम्ना निर्भयतां प्रदर्शयंस्तु यूनानीभाषा- २९
वादिभिः सार्द्धमालापं मीमांसाञ्चाकरोत्। ते तु तं हन्तुं प्रावर्त्तन्त।
तदवगत्य भ्रातरस्तं समुद्रतटस्थां कैसरियां नीत्वा तार्षं प्रेषयामासुः। ३०

पितरस्य द्वौ अलौकिकौ कार्य्यम्।

तदा यिहूदियायां गालीले शमरियायाञ्च सर्व्वत्र मण्डल्यो ३१
निर्व्विघ्नतां भुञ्जाना प्रत्यष्ठाप्यन्त प्रभो र्भीतिं पवित्रस्यात्मनः
सान्त्वनमाचरन्त्यो च सङ्ख्यायावर्धन्त च।

तदा सर्व्वेषां स्थानानि पर्य्यटन् पितरो लुद्दानिवासिनां पवित्र- ३२
जनानामन्तिकमप्युपतस्थे। तत्राष्टौ वत्सरान् खट्वायां शयान ऐनिय- ३३
नामावशाङ्ग एको नरस्तेनादर्शि, पितरस्तमब्रवीत्, ऐनिय, यीशुः ३४
ख्रीष्टस्त्वामरोगं करोति, त्वमुत्थाय स्वार्थं शय्यां विस्तृणु। स
तत्क्षणमुत्तस्थौ लुद्दाशारोणयो र्निवासिनस्तु सर्व्वे तं दृष्ट्वा प्रभुं ३५
प्रति मनांसि प्रत्यावर्त्तयामासुः।

तदा याफुनगरे टाबिथानाम्न्येका शिष्यासीत्, भाषान्तरेऽस्या ३६
नाम दर्क्का [हरिणी]। सा भिक्षादानादिभिः सत्कर्म्मभिः पूर्णा-
सीत्। तस्मिन् काले तु व्याधिता सती सा ममार धौता ३७

३८ गृहोपरिस्थप्रकोष्ठे शाययाञ्चक्रे च । लुद्दा तु याफो निकटस्था,
अतः पितरस्तत्रास्तीति श्रुत्वा शिष्या द्वौ नरौ तस्यान्तिकं प्रहित्य तं
३९ ययाचिरे, भवानस्मत्स्थानं यावदागन्तुं मा विलम्बतामिति । तदा
पितर उत्थाय ताभ्यां सार्द्धं जगाम । तस्मिंस्तत्रोपस्थिते जनैस्तं
प्रकोष्ठं नीते च सर्व्वा विधवा योषितस्तस्य परितस्तिष्ठन्त्यो रुद-
त्यश्च स्वाभिः सार्द्धमवस्थितिकाले दर्कया रचितान्यङ्गरचकादीनि
४० वासांसि प्रादर्शयन् । पितरस्तु सर्व्वान् बहिष्कृत्य जानुनी पातयित्वा
प्रार्थयाञ्चक्रे शवमुद्दिश्य मुखं वर्त्तयित्वा चाब्रवीत्, टाबिथे, उत्तिष्ठ ।
४१ तदा सा नेत्रे उन्मीलयामास पितरं दृष्ट्वोत्थायोपविवेश च । स च
तस्यै हस्तं दत्त्वा तामुत्थापयामास । अनन्तरं स पवित्रजनान्
४२ विधवाश्चाहूय तां जीवन्तीं प्रदर्शयामास । तच्च याफो सर्व्वत्र
४३ विदितमभूत् बहवश्च प्रभौ विश्वसिषुः । ततः पितरो दीर्घकालं
याफो शिमोननाम्नः कस्यचिच्चर्म्मकारस्य गृहेऽवातिष्ठत ।

### ख्रीष्टमण्डल्याम् परजातीयानां प्रवेशनम् ।

१० १ कैसरियायाम् इतालीयाख्यसैन्यदलान्तर्गतः शतपतिरेक
२ आसीत्, तस्य नाम कर्णीलिय इति । कृत्स्नगृहेण सहितः स भक्त
ईश्वराद् भीतश्चासीत् यिहूदिजातये प्रचुरभिक्षादानान्यकरोत्,
३ ईश्वरमुद्दिश्य सततं प्रार्थयत च । एकदा प्रायेण समाप्ते दिवसस्य
तृतीये प्रहरे स दर्शने स्पष्टमीश्वरस्य दूतमेकं वीक्षाञ्चक्रे यस्तस्य
४ समीपं प्रविश्य तमवादीत्, भो कर्णीलिय । स स्थिरदृष्ट्या
तमवलोक्य भयापन्नः पप्रच्छ, भो प्रभो, किं ? स तमब्रवीत्,
तव प्रार्थना भिक्षादानानि च स्मरणोपायवदीश्वरस्य समक्षमुपत-
५ स्थिरे । अत इदानीं त्वं कतिपयनरान् याफों प्रहित्य पितराभिधं
६ शिमोनमानायय । स समुद्रतटस्थगृहनिवासिनः शिमोननाम्नः

कस्यचिच्चर्म्मकारस्यातिथिः। त्वया यत् कर्त्तव्यं तत् स त्वां वदिष्यति।
कर्णीलियेन सार्द्धं संलपति तस्मिन् दूते प्रस्थिते स स्वदासानां द्वौ ७
जनौ स्वपरिचारकाणां मध्ये भक्तमेकं सैनिकनरञ्चाहूय सर्व्वं ८
निवेद्य तान् याफां प्रस्थापयामास।
परदिवसे यदा ते मार्गेण गच्छन्तो नगरान्तिकमुपातिष्ठन्त, ९
तदा मध्याह्नकाले पितरः प्रार्थनार्थं गृहपृष्ठमारूढवान्, क्षुत्पीडितो १०
भूत्वा च भोक्तुमैच्छत्। यावत्तु खाद्यमुपाकल्प्यत तावत् स मूर्च्छा-
पन्नो भूत्वा स्वर्गमुद्घाटितं स्वसमीपमवतरमाणं बृहद्वस्त्राकारमेकं ११
भाजनञ्च ददर्श, तच्चतुर्भिः कोणैराबद्धं भूतलमवारोह्यत। तत्र १२
सर्व्वविधा भूचराश्चतुष्पदाः पशवः सरीसृपाश्च खेचरपक्षिणश्चावि-
द्यन्त, एका वाणी च तमाह, पितर, उत्थाय मारय भुंच्व च। १३
पितरस्त्वब्रवीत्, नैव प्रभो, यतोऽखाद्यमशुचि वा किमपि कदापि १४
मया न भुक्तं। पुन र्द्वितीयवारं वाणी तमाह, ईश्वरो यच्छुची- १५
कृतवांस्तत् त्वमखाद्यं मा कुरु। त्रिकृत्व इत्थं वृत्ते सति तद् १६
भाजनमकस्मात् पुनः स्वर्गमारोहयाञ्चक्रे।
पितरेण दृष्टं तद् दर्शनं किमर्थकमत्र यावत् स मनसि १७
सन्दिग्ध आसीत्, पश्य तावत् कर्णीलियेन प्रहितास्ते नरा
अनुसन्धानेन शिमोनस्य गृहं निश्चित्य द्वारदेश उपतस्थिरे उच्चै- १८
रपृच्छंश्च, पितराभिधः शिमोनः किमतिथिः सन्नत्र विद्यत इति।
पितरे च तद् दर्शनमनुचिन्तयत्यात्मा तमवादीत्, पश्य कतिपय- १९
नरास्त्वां गवेषयन्ते, तत् त्वमुत्थायावरोह निःसंशयञ्च तैः सार्द्धं २०
याहि, यतोऽहं तान् प्रहितवान्। तदा पितरोऽवरुह्य कर्णीलियेन २१
स्वसमीपं प्रेषितानां नराणां समक्षमुपस्थाय जगाद, युष्माभि
र्योऽन्विष्यते सोऽहं, युष्माकमुपस्थितेः किं कारणं? त ऊचुः, २२

शतपतिः कर्णीलिय इति नामा धार्म्मिक ईश्वराद् भीतः कृत्स्नायां
यिहूदिजात्यां सुख्यातश्च नरः पवित्रेण स्वर्गदूतेन स्वगृहं भवत
२३ आनयनं भवतो मुखे वाक्यश्रवणञ्चाज्ञापयाञ्चक्रे। अनन्तरं स
तानभ्यन्तरमानीयातिथीनिव जग्राह। परदिने पित्र उत्थाय तैः
सार्द्धं प्रतस्थे, याफुनिवासिनां भ्रातॄणां केचिदपि तेन सार्द्धं जग्मुः।
२४ तत्परदिने ते कैसरियां प्रविविशुः कर्णीलियश्च स्वज्ञातीन्
२५ आत्मीयबन्धूंश्च समाहूय तान् प्रतीक्ष्य स्थितः। अनन्तरं पित्रो
यदा गृहं प्राविशत् तदा कर्णीलियस्तमभ्युद्गत्य तच्चरणयोः पतित्वा
२६ भजनं चकार। पित्रस्तु तमुत्थाप्याब्रवीत्, उत्तिष्ठ, अहमपि मनुष्यः।
२७ तेन संलपंश्च प्रविश्य स बहून् समवेतान् ददर्श, तांश्च जगाद,
२८ अन्यजातीयस्य कस्यचिदनुषङ्गी निकटवर्त्ती वा भवितुं यिहूदि-
नरस्य कथमवैधं तद् युष्माभिरनुभूतं। मान्त्वीश्वर इदमादिष्टवान्,
२९ त्वं कमपि मनुष्यमव्यवहार्य्यमशुचिं वा मा वदेरिति। ततो हेतोश्च
दूतैराहूतः सन् विना प्रतिकूलवादमागमं। अतः पृच्छामि, यूयं
३० किमर्थं मामानायितवन्तः? तदा कर्णीलिय उवाच, अद्य चत्वारि
दिनानि गतान्यहमिमां घटिकां यावदुपोष्य तृतीयप्रहरस्यान्ते
स्वगृहे प्रार्थनां कृत्वा स्थितः। तदा, पश्य, शुभ्रवासा एकः पुरुषो
३१ मम समक्षं तिष्ठन्नाह, कर्णीलिय, तव प्रार्थनानुगृहीता, तव
३२ भिक्षादानानि चेश्वरस्य समक्षं स्मृतानि। अतस्त्वं याफुं दूतान्
प्रहित्य पित्राभिधं शिमोनमानायय, स समुद्रतीरनिवासिनश्चर्म्म-
कारस्य शिमोनस्य गृहेऽतिथिः। स आगत्य त्वया सार्द्धं सम्भा-
३३ षिष्यते। तत्क्षणमेवाहं भवन्तं प्रति दूतान् प्राहिणवं। भवानागत-
वानित्युत्तममकार्षीत्। अत इदानीं सर्व्वे वयमीश्वरस्य समक्षमुप-
स्थिताः, भवानीश्वरेण यद्यदादिष्टस्तत् सर्व्वं श्रोतुमिच्छामः।

पितरस्योपदेशवाक्यम् तत्फलञ्च।

तदा पितरो वक्त्रमुद्घाट्य बभाषे, सत्यं मयानुभूयते यद् ईश्वरो ३४
न पक्षपाती, अपि तु सर्व्वस्यां जात्यां यस्तस्माद् बिभेति धर्म्म- ३५
माचरति च स तस्य ग्राह्यः। स इस्रायेलस्य सन्तानान् प्रति ३६
कथामेकां प्रेषयामास, सा यीशुना ख्रीष्टेन सन्धिसाधनस्य घोषणा।
स एव सर्व्वेषां प्रभुः। योहनेन घोषितं स्नापनात् परं सा या ३७
वाणी गालीलम् आरभ्य कृत्स्नां यिहूदियां व्याप्नवती सा नासर-
तीययीशोः कथा युष्माद्विदिता। ईश्वरो हि पवित्रेणात्मना प्रभावेन ३८
च तमभिषिक्तवान्, स देशं पर्य्यटन् जनस्य हितमकरोत् दिया-
बलेनोपनिपीड्यमानानां सर्व्वेषामारोग्यमसाधयच्च, यत ईश्वरस्तेन
सार्द्धमासीत्। वयञ्च यिहूदीयानां जनपदे यिरूशालेमे च तेन ३९
कृतानां सर्व्वकर्म्मणां साक्षिणः। ते तु दण्डकाष्ठ उद्वध्य तं जघ्नुः।
तमेवेश्वरस्तृतीये दिने पुनरुत्थाप्य प्रत्यक्षीभवितुमनुमेने। स न ४०
सर्व्वजनस्य प्रत्यक्षीबभूव, किन्त्वीश्वरेण पूर्व्वं निरूपितानां साक्षिणां ४१
तेषामस्माकं ये मृतानां मध्यात् तस्योत्थानात् परं तेन सार्द्धं
भोजनपाने कृतवन्तः। स चास्मान् जनेष्विदं घोषयितुमिदं साक्ष्यं ४२
दातुञ्चादिदेश, यत् स एव जीवितानां मृतानाञ्चेश्वरनिरूपितो
विचारपतिः। तस्य पक्षे भाववादिनः सर्व्वे इदं साक्ष्यं ददति, यत् ४३
तस्मिन् यः कश्चित् विश्वसिति स तस्य नाम्ना पापक्षमां प्राप्नोतीति।

पितरे कथा एता भाषमाणे यावन्तो मनुष्या वाक्यमशृण्वन् ४४
पवित्र आत्मा तेषु सर्व्वेषु पपात। तदा पवित्रात्मरूपं दानं ४५
परजातीयेष्वपि वारिवत् पातितं दृष्ट्वा पितरेण सार्द्धमागता
विश्वासिनश्छिन्नत्वचः सर्व्वे नराश्चमत्कृता बभूवुः, यतस्ते तेषा- ४६
मन्यभाषाकथनम् ईश्वरस्तवनञ्चाशृण्वन्। अनन्तरं पितरो व्याजहार,

४७ वयमिवैते ये जनाः पवित्रमात्मानं लब्धवन्तः कोऽपि किं तोयं
४८ निवारयन्नेतेषां स्नापनं निषेद्धुं शक्नोति? ततः स प्रभो र्यीशोः
ख्रीष्टस्य नाम्ना तेषां स्नापनमादिदेश। तदा ते कतिपयदिनानि
यावत् तस्यावस्थितिं प्रार्थयाञ्चक्रिरे।

११ १ अनन्तरं परजातीया मनुष्या अपीश्वरस्य वाक्यं गृहीतवन्त
२ इति प्रेरिते यिहूदियानिवासिभि र्भ्रातृभिश्चाश्रावि। यदा च
पितरो यिरूशालेमम् आगमत्, तदा छिन्नत्वचो भ्रातरस्तेन सार्द्धं
३ विवदमाना अब्रुवन्, त्वमच्छिन्नत्वचां नराणां गृहं प्रविश्य तैः सार्द्धं
४ भुक्तवानिति। तदा पितर आरभ्य तेभ्यः क्रमागतं वृत्तान्तं कथ-
५ यन्नवादीत्, याफुनगरे वर्त्तमानोऽहमेकदा प्रार्थनकाले मूर्च्छापन्नो
दर्शनं प्राप्यापश्यं, चतुर्भिः कोणैरवरोह्यमाणं वृहद् वस्त्रमिव
६ भाजनमेकं स्वर्गादवतरति मदन्तिकं यावदायाति च। अनन्यदृष्ट्या
तन्निरीक्षमाणश्च तत्र भूचरान् चतुष्पदपशून् वन्यजीविनः सरी-
७ सृपान् खेचरपक्षिणश्चापश्यं वाणीमेकामश्रौषञ्च, मा मामाह, पितर,
८ उत्थाय मारय भुंक्ष्व च। तदाहमवादिषं, नैव, प्रभो, यतो-
९ ऽस्वाद्यमशुचि वा किमपि कदापि मम मुखं न प्रविष्टं। पुनश्च
वाणी मां प्रतिबभाषे, ईश्वरो यत्शुचीकृतवांस्तत् त्वमशुचि मा
१० कुरु। त्रिरित्थं वृत्ते सति तत् सर्व्वं पुनः स्वर्गमाकृष्टं। पश्य च
११ तदैव कैसरियातो मत्समीपं प्रहितास्त्रयो नरा आगत्य यत्राहम्
१२ आसं तद्गृहस्य द्वार उपतस्थिरे। आत्मा च मां निःसंशयं तैः सह
गमनमादिदेश। इमे षड् भ्रातरोऽपि मम सार्द्धमगमन्। अनन्तर-
१३ मस्मासु तस्य नरस्य गृहं प्रविष्टेषु सोऽस्मभ्यं कथयामास, [illegible]
दूत एकोऽदर्शि, स मद्गृहस्याभ्यन्तरे तिष्ठन् मामाह, त्वं याफुं
१४ नरान् प्रहित्य पितराभिधं शिमोनमानाय्य, स तुभ्यं कथाः

कथयिष्यति, ताभिस्त्वया कृत्स्नेन तव कुलेन च परित्राणं लप्स्यते।
मयि तु भाषितुमारभमाणे पवित्र आत्मा यथादावस्मासु तथा १५
तेष्वपि पपात। तदा प्रभोरेतद् वाक्यं मयास्मारि, योहनस्तोये- १६
ऽस्नापयत्, यूयन्तु पवित्र आत्मनि स्नापयिष्यध्वे इति। अतो यदि १७
प्रभौ यीशौ ख्रीष्टे कृतविश्वासेभ्योऽस्मभ्यं तेभ्यश्च समानं दानमीश्व-
रेणादायि तर्हि कः पुनरहं यदीश्वरं वारयितुं शक्नुयां? एतच्छ्रुत्वा १८
ते शान्ता बभूवुरीश्वरं प्रशंसन्तश्च जगदुः, तर्हीश्वरः परजातीयेभ्यो-
ऽपि जीवनावहं मनःपरावर्त्तनं दत्तवानिति।

स्तिफानमधि सम्भूतेन क्लेशेन विकीर्णा नराः फैनीकीदेशं कुप्र- १९
द्वीपमान्तियखियानगरञ्च यावत् पर्य्यटन्तः केवलं यिहूदीयानी-
श्वरस्य वाक्यमब्रुवन् न तु कमप्यन्यं। तथापि तेषां मध्ये कुप्रीयाः २०
कुरीणीयाश्च केचिन्नरा यदान्तियखियामागमंस्तदा यूनानीयजनैः
सम्भाषमाणाः प्रभो यीशोः सुसंवादमज्ञापयन्। प्रभो र्हस्तश्च तेषां २१
सहाय आसीत्, बहुसङ्ख्या मनुष्याश्च विश्वस्य प्रभुं प्रति परावर्त्तिरे।
तेषां कथा च यिरूशालेमस्थमण्डल्याः कर्णगोचरमाजगाम। अतो २२
मण्डली बार्णबां प्रहित्यान्तियखियां यावद् गन्तुमादिदेश। स २३
तत्रोपस्थायेश्वरस्यानुग्रहं दृष्ट्वा जहर्ष सर्व्वांश्च हृदयस्य निश्चयेन प्रभाव-
वस्थानाय समाश्वासयत्, यतः स सुजनो विश्वासेन च पवित्रेणात्मना २४
च पूर्ण आसीत्। तदा बहुमनुष्यैः प्रभोः प्रजावृद्धिः सञ्जाता।

अनन्तरं बार्णबा पौलमन्वेष्टुं तार्षं जगाम, तमासाद्यान्तिय- २५
खियामानिनाय च। ततः परं तौ कृत्स्नं संवत्सरं मण्डल्यां मिलन्तौ २६
बहूञ्जनानशिक्षयताम्, प्रथमञ्चान्तियखियायां शिष्याः ख्रीष्टीया
इति नाम्नाभ्यधीयन्त।

तस्मिन् काले केचिद् भाववादिनो यिरूशालेमाद् आन्तिय- २७

२८ खियामाजग्मुः। आगाबनामा तेषामेक उत्थायात्मन आवेशात्
सूचयामास यत् कृत्स्ने साम्राज्ये महादुर्भिक्षेण भवितव्यं। कैसरस्य
२९ क्लौदियस्य राजत्वकाले च तत् सम्भूतं। शिष्याश्च प्रत्येकं स्वीय-
सम्पदनुरूपं साहाय्यं यिहूदियानिवासिनां भ्रातॄणां समीपं प्रेषयितुं
३० विनिश्चेयिषुः, तत् कुर्व्वन्तश्च बार्णबाशौलयो र्हस्तेष्वर्थं समर्प्य
प्राचीनानां समीपं प्रेषयामासुः।

याकोबस्य बधः पितरस्य मोचनञ्च।

**१२** १ तस्मिन् काले राजा हेरोदो मण्डल्याः केषाञ्चिदंशिनां हिंसने
२ हस्तक्षेपं चक्रे। स हि योहनस्य भ्रातरं याकोबमसिना घातयामास,
३ यिहूदीयेभ्यश्च तद्रोचत इति विलोक्य स पितरमपि संग्रहीतुं
४ प्रववृते। तदा किण्वशून्यपूपानां समय आसीत्। स तं सङ्गृह्य
कारायां निधाय रक्षार्थं चतुर्षु योद्धृचतुष्टयेषु समर्पयामास,
यतोऽतीते निस्तारोत्सवे स तं जनस्य समक्षमुपस्थापयिष्यतीति
५ तस्याभिप्राय आसीत्। अतः पितरः कारायामरक्ष्यत, मण्डल्या तु
६ तस्य कृत ईश्वरमुद्दिश्यैकाग्रा प्रार्थनाक्रियत। अनन्तरं यस्मिन्
दिने हेरोदस्तं जनस्य समक्षमुपस्थापयितुमैच्छत् तत्पूर्व्वनिशायां
शृङ्खलद्वयेन बद्धः पितरो द्वयो र्योद्ध्रो र्मध्येऽशेत, रक्षकाश्च द्वार-
७ देशेऽरक्षन्, पश्य तदा प्रभोरेको दूत उपतस्थौ दीप्तिश्च तस्मिन्
प्रकोष्ठे विरराज, स दूतश्च पितरस्य कक्षदेशं ताडयंस्तं जागरयित्वा
८ जगाद, सत्वरमुत्तिष्ठ। तदा तस्य हस्ताभ्यां शृङ्खलद्वयेऽवगलिते
स दूतस्तमाह, कटिं बद्ध्वा पादयोरुपानहावर्पय। स तच्चकार।
९ अनन्तरं दूतस्तमाह, स्ववस्त्रं परिधाय मामनुगच्छ। ततः स
निष्क्रम्य तमनुजगाम। दूतेन तु यदसाध्यत तत् सत्यमिति स
१० नाजानात् अपि तु दर्शनं पश्यामीत्यन्वमिमीत। अनन्तरं तौ

प्रथमस्य द्वितीयस्य च रक्षकवर्गस्य मध्येन प्रगत्य, नगरं येन गम्यते
तस्य लौहद्वारस्यान्तिकमुपतस्थाते। तत् तयोः कृते स्वयं मुमुचे।
तेन निःसृत्यैकस्या रथ्याया अन्तं यावत् प्रगतयोस्तयोः स दूतः
सहसा तस्मात् प्रतस्थे। तदा पितरः सचेतनो भूत्वाब्रवीत्, इदानी- ११
महं निश्चयं जाने, प्रभुः स्वदूतं प्रहित्य हेरोदस्य करात् यिहूदि-
जातेः सर्व्वाकाङ्क्षातश्च मामुद्धृतवान्।

एतदनुभूय स मार्काभिधस्य योहनस्य मातु र्मरियमो गृहा- १२
न्तिकं जगाम। तत्र बहवो मिलित्वा प्रार्थयन्त। अनन्तरं पितरे १३
बहिर्द्वारस्य कपाटं ताडितवति रोदानामिका दासी श्रवणार्थं
तत्राजगाम। सा च पितरस्य स्वरमभिज्ञायानन्दाद् बहिर्द्वारं न १४
मुक्त्वाभ्यन्तरं धावित्वा व्याजहार, पितरो द्वारदेशे तिष्ठतीति। ते तु १५
तामूचुः, त्वमज्ञानासि। सा पुनः पुनरब्रवीत्, सत्यमेव कथयामि।
तदा तेऽवदन्, मन्ये स तस्य दूतः। इतिमध्ये पितरः पुनः पुन १६
र्द्वारमताडयत्। ततस्ते तन्मुमुचुः पितरं दृष्ट्वा चमत्कृता बभूवुश्च।
स तु हस्तचालनेन तेषां मौनावलम्बनार्थं सङ्केतं कृत्वा कथं प्रभुस्तं १७
कारात उद्धृतवांस्तन्निवेदयामास, जगाद च यूयं याकोबाय
भ्रातृभ्यश्चैतस्य संवादं दत्त। इत्युक्त्वा स निर्गत्य स्थानान्तरं जगाम।
प्रभाते जाते तु पितरः क्व गत इत्यत्र योद्धृणां महाक्षोभः सञ्जातः। १८
हेरोदश्च तं गवेषयामास न प्राप्य च रक्षिणां विचारं कृत्वा प्राणदण्ड- १९
माज्ञापयामास। ततः परं यिहूदियातः कैसरियां गत्वा तत्रावर्त्तत।

तदा स सोरसीदोनयो र्निवासिभ्योऽकुप्यत्। ते त्वेकचित्तेन २०
तमुपतस्थुः राज्ञः शयनागाराध्यक्षं ब्लास्तं प्रसाद्य सन्धिं ययाचिरे
च, यतो राज्ञो देशात् तेषां देशो खाद्यद्रव्याण्यलभत। अनन्तरं २१
निरूपिते दिवसे राजकीयपरिच्छदवेष्टितो हेरोदो भद्रासन उपविश्य

२२ पौरसमाजे तानुद्दिश्य वक्तृतामकरोत्। समवेताः पौराश्चोच्चैर-
२३ ब्रुवन्। वाणीयमीश्वरस्य, न तु मनुष्यस्येति। सहसा च प्रभो
र्दूतस्तमाजघान, यतः स ईश्वरस्य गौरवं न स्वीकृतवान्। तत
परं स कृमिभक्षितः प्राणांस्तत्याज।

२४ ईश्वरस्य वाक्यन्त्ववर्धत बहुफलदमभवच्च। बार्णबाः शौलश्च
कर्त्तव्यां परिचर्य्यां समाप्य मार्काभिधं योहनं सहचरवद् गृहीत्वा
च यिरूशालेमतः प्रतिजग्मतुः।

सुसंवादं प्रचारयितुं पौलस्य प्रथमगमनम्।

१३ १ आन्तियखियायां या मण्डल्यासीत् तस्यां केचिद् भाववादिनो
गुरवश्चाविद्यन्त, ते बार्णबा नियाभिधः शिमोनः कुरीणीयो लुकियो
२ राज्यपादाधिपेन हेरोदेन सार्द्धं पोषितो मनहेमः शौलश्च। प्रभु-
मुद्दिश्य तेषु सेवामनुतिष्ठत्सूपवसत्सु च पवित्र आत्मावादीत्, बार्णबाः
शौलश्च यत् कर्म्म कर्त्तुं मयाहूतौ तदर्थं युष्माभि र्मामुद्दिश्य
३ पृथक् क्रियेतां। तदा त उपोष्य प्रार्थ्य च तयो र्हस्तान् अर्पयित्वा
च तौ विससृजुः।

४ इत्थं पवित्रेणात्मना प्रेषितौ तौ समुद्रतीरस्थां सिलूकियां
५ जग्मतुः। तस्मात् स्थानाच्चार्णवयानेन कुप्रद्वीपं प्रतस्थाते। साला-
म्यामुपस्थाय च यिहूदिनां समाजगृहेष्वीश्वरस्य वाक्यमज्ञापयतां।
६ भृत्य इव योहनोऽपि तयोः सहचर आसीत्। अनन्तरं ते तस्य
द्वीपस्य मध्येन पाफं यावद् गत्वा तत्र बार्यीशुरित्यभिधं यिहूदि-
७ जातीयमेकं मायाविनमासादयामासुः। स कूटभाववादी देशा-
ध्यक्षेण सर्गियपौलेन सार्द्धमवर्त्तत। नरोऽयं बुद्धिमान् आसीत्,
८ ततो बार्णबां शौलञ्चाहूयेश्वरस्य वाक्यं श्रोतुमयतत। इलुमा
मायावी तु तयोः प्रतिरोधमकरोत्। मायावीति तदीयनामधेय-

स्यार्थः। विश्वासाद् देशाध्यक्षस्यापसारणाय सोऽयतत। तदा ९
पौल इति नामान्तरेण विख्यातः शौलः पवित्रेणात्मना पूर्णः
सन्ननन्यदृष्ट्या तं समालोक्याब्रवीत्। हे यावतीयच्छलेन यावतीय- १०
शाठ्येन च परिपूर्णभाजन दियाबलस्यात्मज सर्व्वधर्म्मद्वेषिन्, प्रभोः
सरलानां मार्गाणां विपरीतिकरणात् कतिकालमनिवृत्य स्थास्यसि?
अत इदानीं पश्य, प्रभो र्हस्तेनावपीड़ितस्त्वमन्धो भविष्यसि, उप- ११
युक्तं समयं यावत् सूर्य्यं न द्रक्ष्यसि। तत्क्षणं धूमेनान्धकारेण
चाक्रान्तः स परिव्रजन् हस्तधारिणोऽन्वैच्छत्। तदा यद् वृत्तं तद् १२
विलोक्य देशाध्यक्षः प्रभोः शिक्षायां चमत्कृतो विश्वासी बभूव।

### आन्तियखियायां सुसंवादप्रचारणम्।

अनन्तरं पौलस्तत्सङ्गिनौ च पोतेन पाफात् प्रस्थाय पम्फु- १३
लियादेशस्यपर्गायामुपतस्थिरे, योहनस्तु तौ विहाय यिरूशालेमं
प्रत्याववृते। तौ तु पर्गातो देशस्य मध्येन गत्वा पिषिदिया- १४
प्रदेशस्थायाम् आन्तियखियामुपतस्थाते विश्रामवारे च समाजगृहं
प्रविश्योपविविशतुः। व्यवस्थाया भाववादिनां ग्रन्थस्य च पठनात् १५
परं समाजाध्यक्षाः प्रेष्येण ताववादिषुः, भ्रातरौ, जनान् प्रति वक्तव्यं
किमपि प्रबोधवाक्यं युवयो र्यदि विद्यते तर्हि तद् वक्तुमर्हथः।
तदा पौल उत्थाय हस्तं चालयित्वा बभाषे, भो इस्रायेलीयनराः, १६
भो ईश्वरभीतिपराः सर्व्वे, शृणुत। अस्या इस्रायेलीयजातेरीश्वरो- १७
ऽस्माकं पूर्व्वपुरुषान् वरयामास, मिसरदेशे प्रवासिनामस्मज्जातीय-
जनानामुन्नतिं साधयामास च ऊर्द्ध्वेन बाहुना तस्माद् देशात् तान्
बहि र्निनाय च। अनन्तरं प्रायेण चत्वारिंशद्वर्षपरिमितं कालं १८
मरौ शिशुपालक इव तान् अवहत्। ततः परं कनानदेशे सप्त १९
जातीर्हत्वा तासां भूमिं रिक्थमिव तेभ्यो ददौ। तदा प्रायेण २०

पञ्चाशदधिकचतुःशतानि वत्सरा अतिवाहिता आसन्। अनन्तरं
२१ स तेभ्यो भाववादिनं शमूयेलं यावद् विचारपतीन् ददौ। ततः
परं ते राजानं याचयामासुस्तत ईश्वरस्तेभ्यो बिन्यामीनीयवंशजातं
२२ कीशस्य पुत्रं शौलं चत्वारिंशद् वत्सरान् यावद् ददौ। अनन्तरं स
तं दूरीकृत्य तेषां निमित्तं नृपतिमिव दायूदमुत्पादयामास। तमे-
वाधि स साक्ष्यं दत्त्वा जगाद। लब्धितो मया यिशयस्य पुत्रो
दायूदः, स मदीयहृदयाभिमतो नरः, स मम सर्व्वमभीष्टं साध-
२३ यिष्यति। तस्यैव वंशात् स स्वीयप्रतिज्ञानुसारेणेस्रायेलस्य कृते
२४ त्रातारं यीशुमुत्पादयामास। तस्यागमनात् पूर्व्वन्तु योहनः
कृत्स्नाया इस्रायेलीयजात्या निमित्तं मनःपरावर्त्तनार्थकं स्नापनं
२५ घोषयामास। स योहनो यदा स्वीयधावनमसाधयत् तदावदत्,
यूयं मां कं मन्यध्वे? नाहं सोऽस्मि, पश्यत तु, यस्य चरणयो-
रुपानहौ मोचयितुमहं नार्हामि स मत्पश्चादायाति।

२६ भो भ्रातरः, भो अब्राहामस्य वंशोत्पन्नाः सन्तानाः, भो अत्रो-
पस्थिता ईश्वरभीतिपरा मनुष्याश्च, युष्मदन्तिकमेतत्परित्राणकथा
२७ प्रहिता। यतो यिरूशालेमनिवासिनस्तेषां नायकाश्च तं त्रातारं
प्रतिविश्रामदिनं पठ्यमाना भाववादिनामुक्तीश्चानभिज्ञाय तस्य
२८ विचारं कुर्व्वन्तस्ताः सिद्धीचक्रुः, प्राणदण्डार्हं कमपि दोषमप्राप्य
२९ पीलातं तस्य संहारं ययाचुश्च। तमधि यद्यल्लिखितमासीत् तस्मिन्
सर्व्वस्मिन् समाप्ते सति स दण्डकाष्ठादवरोहितः शवागारे स्थापि-
३० तश्च। ईश्वरस्तु मृतानां मध्यात् तमुत्थापयामास ये च तेन सार्द्धं
३१ गालीलाद् यिरूशालेममागतवन्तस्तेभ्यः स बहुदिनानि दर्शनम-
३२ ददात्, ते पुनः प्रजानां समक्षं तस्य साक्षिणः सन्ति। अस्मत्पूर्व्व-
पुरुषान् प्रति कृतां प्रतिज्ञामध्यात्वामपि युष्मानिमं सुसंवादं ज्ञाप-

यावः, यदीश्वरस्तेषां सन्तानानस्मानुद्दिश्य तां प्रतिज्ञां सिद्धीचकार, ३३
यतः स यीशुं पुनरुत्थापयामास। एतदधि द्वितीये गीते हि लिखि-
तमास्ते, यथा,

मदीयस्तनयोऽसि त्वम् अद्याहं त्वामजीजनम्॥

तेन च चयस्थानं न प्रत्यावर्त्तितव्यमिति निश्चित्येश्वरस्तं मृतानां ३४
मध्यादुत्थापितवानेतदधि स बभाषे,

दायूदेनार्जितं पुण्यं पणं दास्यामि वः स्थिरम्॥

तन्निमित्तं सोऽन्यस्मिन् स्थानेऽपि वदति, यथा, ३५

त्वं स्वपुण्यवतो नैव सोढासे चयदर्शनम्॥

ईश्वरस्य मन्त्रणातो दायूदः स्वकालिकमनुष्यान् उपकृत्य ३६
निद्रां जगाम, स्वपूर्व्वपुरुषाणां समीपं सङ्गृहीतः चयं ददर्श च।
ईश्वरस्तु यमुत्थापितवान् स चयं न ददर्श। अतो, भो भ्रातरः, ३७
युष्माभिरिदं ज्ञायतां यत् तेनैव पापक्षमा भवतीति संवादो ३८
युष्मभ्यं दीयते, मोशे र्व्यवस्थया च येभ्यो दोषेभ्यो निर्द्दोषीभवितुं ३९
युष्माकमशक्यमासीत् तेभ्यः सर्व्वेभ्यो विश्वासी सर्व्वमनुष्यस्तेनैव
निर्द्दोषीक्रियते। अतः सावधाना भवत। भाववादीनां ग्रन्थे ४०
लिखितेयमुक्ति र्युष्मासु मा फलतु, यथा,

अवज्ञाकारिणः सर्व्वे कुरुताचावलोकनं। ४१
चमत्कारञ्च मन्यध्वम् अन्तर्धानञ्च गच्छत॥
युष्मत्काले यतः कार्य्यमेकं कारिष्यते मया।
तस्मिन् विज्ञापिते यूयं विश्वासं न करिष्यथ॥

अनन्तरं समाजगृहात् तयो र्निर्गमनकाले जना इदं प्रार्थ- ४२
याञ्चक्रिरे, आगामिनि विश्रामवारे ता एव कथा अस्मभ्यं कथ-
यिष्यामिति। विसृष्टे च समाजे यिहूदिनां मध्ये भजनशीलानां ४३

यिहूदिमतावलम्बिनां मध्ये ऽनेके पौलं वार्णबाञ्चानुजग्मुः। तौ च
तैः सम्भाषमाणावीश्वरस्यानुग्रहेऽवस्थानाय तान् समाश्वासयतां।
४४ तत्परविश्रामवारे नगरस्य प्रायेण सर्व्वजन ईश्वरस्य वाक्यं श्रोतुं
४५ समाजगाम। यिहूदिनस्तु तं जननिवहं दृष्ट्वेर्ष्यया पूर्णाः सन्तः
प्रतिवदमाना निन्दन्तश्च पौलेन यद्यदकथ्यत तत्प्रतिकूलं व्यवदन्त।
४६ तदा पौलो वार्णबाश्च स्पष्टमूचतुः, प्रथमं युष्माभ्यमीश्वरस्य वाक्यं
कथयितव्यमासीत्। यूयन्तु तन्निरस्यथ स्वान् अनन्तजीवनस्यायोग्यान्
४७ मन्यध्वे च तन्निमित्तं पश्यत, आवां परजातीयानां समीपं वर्त्तावहे,
यतः प्रभुरावामिदम् आज्ञापितवान्, यथा,

पृथिवीप्रान्तपर्य्यन्तं त्वं यत् त्राणाकरो भवेः।
तदर्थं परजातीनां त्वं ज्योति र्मन्निरूपितं॥

४८ तच्छ्रुत्वा परजातीया हृष्टा ईश्वरस्य वाक्यं प्राशंसन्, यावन्त-
४९ श्चानन्तजीवनाय निरूपिता आसंस्ते व्यश्वसिषुः। प्रभो र्वाक्यञ्च तं
५० कृत्स्नं जनपदं व्याप्नोत्। यिहूदिनस्तु भजनशीला विशिष्टाश्च महिला
नगरस्य प्रमुखनरांश्च प्रचोदयन्तः पौलवार्णबयो र्विरुद्धमुपद्रवमुत्पाद्य
५१ स्वसीमभ्यस्तौ निःसारयामासुः। तदा तेषां विरुद्धं स्वचरणेभ्यो धूलिं
५२ प्रमृज्य ताविकनियं गत्वोपतस्थाते। शिष्यास्त्वानन्देन पवित्रेणात्मना
च पूर्णा बभूवुः।

नानादेशे सुसंवादप्रचारणम्।

१४ १ इकनिये तावेकत्र यिहूदिनां समाजं प्रविश्येत्थमभाषेतां येन
२ यिहूदिनां युनानीयानाञ्च बहुजनो व्यश्वसीत्। अविश्वासिनो यिहूदि-
नस्तु परजातीयानां मनांसि भ्रातृणां विरुद्धमुत्तेजयन्तो हिंसायां
३ प्रवर्त्तयामासुः। तौ हि दीर्घकालमवतिष्ठमानौ प्रभुमवलम्ब्याक्षोभे-
णोपादिशतां, सोऽपि स्वीयानुग्रहस्य कथां सप्रमाणामकरोत् तयो

हस्तैश्चाभिज्ञानानाम् अद्भुतलक्षणानाञ्च प्रदर्शनम् असाधयत्। ततो ४
नगरस्य जननिकरो द्वैधीबभूव। एके यिहूदिनाम् अन्ये तु प्रेरितयो-
रनुषङ्गिणो बभूवुः। यदा तु नायकानां साहाय्येन तयो र्न्यक्कारं ५
प्रस्तराघातञ्च कर्त्तुं परजातीयानां यिहूदिनाञ्च चेष्टा समजायत, तदा ६
तौ तद् बुद्ध्वा पलाय्य लुकायनियादेशस्य लुस्त्रादर्ब्बीनामकं नगरद्वयं ७
तत्परिसरञ्च जग्मतुः सुसंवादं घोषयन्तौ च तत्रावातिष्ठतां।

लुस्त्रायाम् अवशचरण एको नर उपविश्यातिष्ठत्। स आमातृ- ८
जठरात् खञ्जः, कदापि न व्रजितवान्। स पौलेन यदकथ्यत ९
तदशृणोत्। पौलस्तानन्यदृष्ट्या तं निरीक्ष्य त्राणप्राप्तये तस्य
विश्वासोऽस्तीति विलोक्य च प्रोच्चैरुवाच, चरणाभ्यामुत्तिष्ठन् ऋजु १०
र्भवेति। तदा स उत्प्लुत्याव्रजत्। पौलेन यदकारि तद् दृष्ट्वा ११
जननिवहा लुकायनीयभाषया प्रोच्चैरवदन्, देवा मनुष्यरूपिणो
भूत्वास्मत्समीपमवतीर्णाः। ते च बार्णबां युपितर इत्यभ्यदधुः, पौलञ्च १२
हर्म्मिरिति, यतः स एव मुख्यो वक्तासीत्। तेषां नगरस्य सम्मुखं १३
स्थापितस्य युपितरविग्रहस्य याजकश्च वृषान् मालाश्च द्वारदेशमानीय
जनैः सार्द्धं यष्टुमैच्छत्। तच्छ्रुत्वा तु प्रेरितौ बार्णबापौलौ स्ववासांसि १४
विदार्य्योत्प्लुत्य जनानां मध्यं धावित्वा प्रोच्चैरवदतां, भो नराः,
किमेतत् कुरुथ? आवामपि सुखदुःखभोगेन युष्मादृशौ मनुष्यौ, १५
युष्मांश्चेमं सुसंवादं ज्ञापयावः, यदेतेभ्यो ऽलीकेभ्यो वस्तुभ्यो जीवन-
मयमीश्वरं प्रति युष्माभिः प्रत्यावर्त्तव्यं। स एव स्वर्गं पृथिवीं समुद्रञ्च
तेषु यद्यद् विद्यते तत् सर्व्वञ्च रचितवान्। अतीतायां पुरुषपरम्परायां १६
स सर्व्वासां परजातीनां स्वेष्टमार्गे गमनमसहत। तथापि स्वं साक्ष्य- १७
विहीनं नात्यजत्। स हि मङ्गलकारी सन् युष्मभ्यं गगनाद् वृष्टिं
फलोत्पादकान् ऋतूंश्च प्राददात् भक्ष्यैरामोदेन च युष्मद्धृदयान्य-

१८ पूरयच्च। एतानि कथयामानौ तौ कथङ्कथमपि जनान् स्वार्थं
यजनान्निवारयामासतुः।
१९ अनन्तरम् आन्तियखियात् इकनियाच्चोपागताः कियन्तो
यिहूदिनो जननिवहान् प्रबोध्य पौलं प्रस्तरैराजघ्नुः मृतं मन्यमाना
२० नगराद् वहिश्चकृषुश्च। शिष्येषु तु तस्य परितः संस्थितेषु स उत्थाय
२१ नगरं प्रविवेश। परदिने च स बार्णबाश्च दर्बीं जग्मतुः। तस्मिन्
नगरे सुसंवादं ज्ञापयित्वा बहुजनान् शिष्यान् कृत्वा च तौ लुस्त्राम्
२२ इकनियम् आन्तियखियाञ्च प्रत्यावृत्य जग्मतुः। तत्र तौ शिष्याणां
मनांसि सुस्थिराण्यकुरुताम् विश्वासेऽवस्थानायाश्वासयन्ताववदताञ्च
यत् क्लेशबाहुल्यरूपेण द्वारेणेश्वरस्य राज्यमस्माभिः प्रवेष्टव्यमिति।
२३ तेषां निमित्तञ्च मण्डलीं प्रति प्राचीनवर्गं नियोज्य सोपवासं प्रार्थनां
कृत्वा यस्मिन् प्रभौ ते विश्वसितवन्तस्तस्य हस्ते तान् समर्पयामासतुः।
२४ अनन्तरं पिषिदियाया मध्येन गत्वा तौ पाम्फुलियप्रदेशमुपतस्थाते
२५ पर्गायाम् ईश्वरस्य वाक्यं कथयित्वा च समुद्रतटस्थाम् अत्तालियां
२६ जग्मतुः। ततश्च पोतेन ताम् आन्तियखियानगरीं प्रतस्थाते, यत्र
तस्य स्वसम्पन्नकर्म्मणो निमित्तं तौ प्रथममीश्वरस्यानुग्रहे समर्पितौ
२७ जातौ। तत्रोपस्थाय तौ मण्डलीमेकत्रीचक्रतुः, ताभ्यां सार्द्धमीश्वरेण
साधितानि सर्व्वकर्म्माणि परजातीयानां निमित्तञ्च यत् तेन
२८ विश्वासरूपं द्वारमुद्घाटितं तदपि निवेदयामासतुश्च। ततः परं तौ
दीर्घं कालं शिष्यैः सार्द्धमवातिष्ठताम्।

ख्रीष्टमण्डल्याम् यिहूदिनां परजातीयानाञ्च समकक्षत्वस्य मीमांसा।

१५ १ तदानीं यिहूदियात आगताः केचिन्नरा भ्रातृनित्थमशिक्ष-
यन्, यूयं यदि मोशे विधितस्त्वक्छेदवचो न भवथ तर्हि त्राणं लब्धुं
२ न शक्नुथ। अत्र तान् प्रति पौलबार्णबयोः प्रभूतद्वन्द्वविवादयो

जातयोः शिष्यैरिदं निरचायि, यत् तद्विवादनिष्पत्त्यर्थं पौलो
बार्णबाः स्वेषामन्ये केचिन्नराश्च यिरूशालेमं प्रेरितानां प्राचीना-
नाञ्च समीपं यास्यन्ति । अतो मण्डल्या प्रस्थापितास्ते फैनीकी- ३
शमरियादेशयो र्मध्येनागच्छन् परजातीयानां मनःप्रत्यावर्त्तनं निवे-
दयन्तः सर्व्वभ्रातॄणां महानन्दमजनयंश्च । यिरूशालेम उपस्थिताश्च ४
मण्डल्या प्रेरितैः प्राचीनैश्चानुजगृहिरे स्वैः सार्द्धमीश्वरेण यत्
साधितं तद्वृत्तान्तं कथयामासुश्च । फरीशिपक्षस्य तु केचिद् विश्वा- ५
सिनो नरा अनूत्थायावादिषुः, तेषां त्वक्छेदः कर्त्तव्यः, मोशिदत्त-
व्यवस्थायाः पालनस्याज्ञा तेभ्यो दातव्या चेति ।

अनन्तरं तस्याः कथाया आलोचनार्थं प्रेरिताः प्राचीनाश्च ६
समाजग्मुः । तदा बहुविवादे जाते पितर उत्थाय तान् जगाद, ७
भो भ्रातरः, यूयं जानीथ यत् प्राक्कालेऽस्माकं मध्ये ईश्वरः पर-
जातीयानां मम मुखात् सुसंवादकथायाः श्रवणं विश्वसनञ्च रोचित-
वान् । स चित्तज्ञ ईश्वरस्तेषु साक्ष्यमपि दत्तवान्, वस्तुतः सोऽस्म- ८
भ्यमिव तेभ्योऽपि पवित्रमात्मानं विततार तेषां हृदयानि च ९
विश्वासेन शुचीकृत्यास्माकं तेषाञ्च मध्ये कमपि प्रभेदं न चकार ।
अतएवेदानीं किमर्थं यूयमीश्वरं परीक्षमाणास्तेषां शिष्याणां ग्रीवासु १०
तं युगमर्पयितुं यतध्वे यस्य वहनं नास्मत्पूर्व्वपुरुषै र्नास्माभि र्वा
शक्यमासीदिति बुद्ध्वा वयमपि ते मनुष्या इव प्रभो र्यीशोः ख्रीष्ट- ११
स्यानुग्रहेण परित्राणं प्राप्ता इति विश्वसामः ? अनन्तरं सभ्याः १२
सर्व्वे तूष्णीम्बभूवुः, बार्णबापौलाभ्यामीश्वरः परजातीयेषु यान्यभि-
ज्ञानार्थकर्म्माण्यद्भुतलक्षणानि च साधितवांस्ताभ्यां कथ्यमानं तेषां
वृत्तान्तमश्रौषुश्च । समाप्तायां तयोः कथायां याकोब उत्तरं १३
कुर्व्वन्नाह, भ्रातरः, मम वाक्यं श्रूयतां । ईश्वरः कथं प्रथमं स्वनाम्ना १४

निमित्तं परजातीनां मध्ये प्रजापुञ्जं ग्रहीष्यन् तत्त्वावधानं कृतवान्
१५ तद्वृत्तान्तं शिमोनः कथयामास। अपि च भाववादिनामुक्तयस्तत्-
सम्मताः, यतो लिखितमास्ते,

१६ इतः पश्चाद्धि दायूदः कुटीरं पतितं भुवि।
अहमुत्थापयिष्यामि स्थानान्युत्पाटितानि च॥
विनिर्म्मास्ये पुनस्तस्य करिष्यामि च तदृजुः।
१७ अत्रेदं मदभिप्रेतं सकलाः शेषमानवाः॥
यासाञ्चोपरि मन्नाम ख्यातं ताः परजातयः।
सकला यत् करिष्यन्ति प्रभोरेव गवेषणं।
इयं तस्य प्रभो र्वाणी यस्तत्सर्व्वस्य साधकः॥

१८ ईश्वरस्य सर्व्वाणि कर्म्माण्यनादिकालात् तेनानुभूतानि। अतो
१९ मम मतिरियं, परजातीनां मध्ये ये मनुष्या ईश्वरमुद्दिश्य प्रत्या-
वर्त्तन्ते तेषामुपरि कोऽप्यन्यो भारो नैवार्प्यताम् आदेशोऽयन्तु
२० पत्रिकया तेभ्यो दीयतां यद् देवमूर्त्तिभ्यो व्यभिचाराद् रुद्धश्वास-
जीविनां मांसात् शोणितभोगाच्चेतेभ्योऽशौचस्य कारणेभ्यस्तैः पृथक्
२१ स्थातव्यं। मोशिदत्तव्यवस्थाया हि घोषका विद्यन्ते, यत आचिर-
कालात् सर्व्वनगरेषु प्रतिविश्रामवारं सा पठ्यते।

२२ तदा प्रेरिताः प्राचीनाश्च कृत्स्नमण्डल्या सार्द्धमिदं निरचैषु यत्
ते स्वेषां मध्ये द्वौ नरौ वरयित्वा पौलबार्णबाभ्यां सार्द्धम् आन्तिय-
खियां प्रेष्यन्ति। तौ वरितौ नरौ बार्शब्बाभिधो यिहूदाः
२३ सीलश्च, भ्रातृषु तावग्रगण्यौ। तयो र्हस्तेच ते पत्रिकयेदं निवेदया-
मासुः, आन्तियखियानगरस्य सुरियाकिलिकियादेशयोश्च निवा-
सिभ्यः परजातीयभ्रातृभ्यः प्रेरितानां प्राचीनानाञ्च भ्रातृणाञ्च
२४ मङ्गलवादः। अतमस्माभि र्यदस्मत्तो निर्गताः कियन्तो नरा

अस्मत्त आदेशमप्राप्य युष्मन्मनांसि क्षोभयन्तो युष्माभिस्त्वक्छेदः
स्वीकर्त्तव्यो व्यवस्था पालयितव्या चेति कथाभि र्युष्मान् व्याकुली-
कृतवन्तः, अत एकचित्तेन समवेता वयमिदं निरचैष्म, यद् अस्माकं २५
प्रियौ यौ बार्णबापौलावस्मत्प्रभो र्यीशोः ख्रीष्टस्य नाम्नो निमित्तं २६
स्वीयप्राणान् पणवन्निक्षिप्तवन्तौ ताभ्यां सार्द्धमस्मद्वरितान् कति-
पयनरान् युष्मदन्तिकं प्रहेष्यामः। अतो यिहूदां सीलाञ्च प्रहि- २७
णुमः, तावपि वाचनिकसंवादेन युष्मांस्तदेव ज्ञापयिष्यतः। फलतः २८
पवित्रेणात्मनास्माभिश्चेदं निरचायि यद् युष्मास्वधिकं कमपि भार-
मनर्पयित्वा केवलमावश्यकमिममादेशं दास्यामो यद् देवमूर्त्तये २९
दत्तेभ्य उपहारेभ्यः शोणिताद् रुद्धश्वासजीविनां मांसाद् व्यभि-
चाराच्च युष्माभिः पृथक् स्थातव्यं। एतेभ्य आत्मरक्षां कुर्व्वन्तः
क्षेममवाप्स्यथ। युष्माकं मङ्गलं भूयादिति।

अनन्तरं ते विसृष्टा आन्तियखियां जग्मुः, तत्र शिष्यनिवह- ३०
मेकत्रीकृत्य पत्रिकां समर्पयामासुश्च। तां पठित्वा सर्व्वे आश्वासा- ३१
दानन्दुः। यिहूदाः सीलाश्चापि भाववादिनावास्ताम् अत एव ३२
तावपि प्रचुरवाक्यैस्तान् आश्वासयतां स्थिरानकुरुताञ्च। इत्थं ३३
दीर्घकालं यापयित्वा तौ स्वप्रेरयितॄणां समीपं गमनार्थं सकल्याणं
भ्रातृभिर्विससृजाते। सीलास्तु तत्रावस्थातुं रोचयामास। अपि ३४
च पौलो बार्णबाश्चान्तियखियायां निवसन्तावन्यैरनेकैः सार्द्धं प्रभो ३५
र्वाक्यमशिक्षयन् तत्सुसंवादमज्ञापयंश्च।

सुसंवादं प्रचारयितुं पौलस्य द्वितीयगमनम्।

अतीते तु कस्मिंश्चित् काले पौलो बार्णबामवादीत्, येषु ३६
नगरेषु प्रभो र्वाक्यं प्रागावाभ्यां विज्ञापितं तत्र पुनर्गत्वा
प्रतिनगरमस्मद्भ्रातॄणां तत्त्वानुसन्धानं क्रियतां। तदा बार्णबा मार्का- ३७

३८ भिधं योहनं सङ्गिनं कर्त्तुमैच्छत्, पौलस्तममन्यत यत् पाम्फुलिया
याम् अस्मत्तोऽपक्रम्य य आवाभ्यां सार्द्धं कर्म्म कर्त्तुं न गतवान्
३९ न युक्तमावाभ्यां तं सङ्गिनं कर्त्तुं। अत्र चण्डले सञ्जाते तौ पृथग्
बभूवतुः। बार्णवास्च मार्कं सङ्गिनं कृत्वा पोतेन कुप्रं प्रतस्थे।
४० पौलस्तु सीलां वरयित्वादाय भ्रातृभिरीश्वरस्यानुग्रहे समर्पितः सन्
४१ प्रतस्थे मण्डलीः स्थिरीकुर्व्वंश्च सुरियां किलिकियाञ्च पर्य्यटत्।

१६ १ ततः परं स दर्ब्बीं लुस्त्रायाञ्चोपतस्थे। पश्य च तत्र तीम-
थियनामा शिष्य एकोऽविद्यत, स विश्वासिन्या यिहूदिन्या योषितः
२ पुत्रस्तस्य पिता तु यूनानीय आसीत्। लुस्त्रायाम् इकनिये च
३ स्थिता भ्रातरस्तस्य पक्षे साक्ष्यमददुः। अतः पौलः स्वेन सार्द्धं
तस्यैव गमनं रोचयामास, तेषु स्थानेषु विद्यमानानां यिहूदिनां
हेतोस्तमादाय तस्य त्वक्छेदं चकार च, यतस्तस्य पिता यद्
यूनानीयस्तत् ते सर्व्वेऽजानन्।

४ नगराणि पर्य्यटन्तस्ते प्रेरितै र्यिरूशालेमस्थैः प्राचीनैश्चाभिम-
५ तानि विधानानि पालनार्थं शिष्येषु समार्पयन्। मण्डल्यश्चानुदिनं
विश्वासे दृढा अभवन् सङ्ख्यायामवर्द्धन्त च।

६ फरुगीयगालातीयदेशस्य मध्येन गता त आशियायामीश्वरीय-
७ वाक्यकथनात् पवित्रेणात्मना निवारिताः सन्तो मुशियायाः सन्नि-
धावुपस्थाय बिथुनियां प्रवेष्टुमुद्यमहन्त, यीशोरात्मा तु तान् नानु-
८ जज्ञे। अनन्तरं ते मुशियामतीत्य समुद्रतटस्थां त्रोयां जग्मुः।
९ तत्र रात्रौ पौलो दर्शनं लेभे। एको माकिदनीयो नरस्तिष्ठन् तं
प्रसादयन्नवदत्, समुद्रं तरित्वा माकिदनियामागत्यास्माकमुपकुरु।
१० तेन तस्मिन् दर्शने लब्धे वयं तद्देशीयान् सुसंवादं ज्ञापयितुं
प्रभुनाहूता इति निश्चित्य सत्वरं माकिदनियां प्रस्थातुमयतिष्महि।

यूरोपमहाखण्डे सुसंवाद-प्रचारारम्भः।

अतस्त्रोयातः समुद्रयात्रामारभ्य वयमृजुगत्या सामथ्राकीद्वीपं ११
परदिने च नियापलीं प्राप्य ततः फिलिपीं जगाम। सा माकि- १२
दनियाविभागस्य प्रथमनगरी रोमीयाणामुपनिवेशश्च। तस्मिन्
नगरे वयं कियन्ति दिनान्ययापयाम। सप्ताहस्य प्रथमे दिने च वयं १३
नगरस्य वहि र्यत्र नदीतीरे प्रार्थनास्थानमस्तीत्यन्वमन्यामहि तत्
स्थानं गत्वोपविश्य समवेताभ्यो नारीभ्यः कथामकथयाम। तदेश्वर- १४
भजनकारिणी लुदियानाम्न्येका योषिदशृणोत्, सा थुयातीरानग-
रीया धूम्रवस्त्रविक्रेत्री। सा यथा पौलेन कथ्यमानेषु वाक्येषु मनो
निदधीत तथा प्रभुस्तस्या हृदयमुद्घाटयामास। अनन्तरं तया तस्याः १५
कृत्स्नगृहेण च स्नापिते सति सा सविनयमस्मानवादीत्, भवन्तो
यदि मां प्रभौ विश्वासिनीं ज्ञातवन्तस्तर्हि मद्गृहमागत्य तत्रावतिष्ठ-
ध्वमिति। साग्रहेणास्मान् प्रवर्त्तयामास च।

फिलिपीनगरे सुसंवादप्रचारणम्।

एकदास्मासु तत् प्रार्थनास्थानं गच्छत्सु दैवज्ञात्माविष्टैका दास्य- १६
स्मत्सम्मुखमागमत् सा भाविवादित्वेन स्वस्वामिनां प्रचुरमायमजन-
यत्। सा पौलमस्मांश्चानुव्रजन्ती प्रोच्चैरवदत्, नरा इमे परात्पर- १७
स्येश्वरस्य दासाः, इमेऽस्मान् परित्राणस्य पन्थानं ज्ञापयन्तीति।
बहुदिनानि तयैतदक्रियत। शेषे पौलो व्यथितः सन् परावृत्य १८
तमात्मानमवादीत्, यीशोः ख्रीष्टस्य नाम्नाहं त्वामादिशामि, अस्या
निःसरेति। तस्मिन्नेव दण्डे स निःससार, तदास्वदायस्याशा निःसृ- १९
तेति दृष्ट्वा तस्याः स्वामिनः पौलं सीलाञ्च सङ्गृह्य कर्षन्तो विपणिं
शास्तृणां सम्मुखं निन्युः सेनापत्योः समीपं तावुपस्थाप्य च जगदुः, २०
नराविमावस्मन्नगरमतीव व्याकुलीकुरुतः, इमौ यिहूदिनौ वयं

२१ रोमीयाः, या रीती ग्रहीतुमनुष्ठातुं वा न विधेयमस्माभिस्तादृशी
२२ रीतीरिमौ विज्ञापयत इति। जननिवहोऽपि तयो र्विरुद्धमुत्तस्थौ।
तदा सेनापती तयो र्वासांसि विदार्य्य तयो र्वेत्राघातमाज्ञापया-
२३ मासतुः। बह्वाघातैस्तौ प्रहार्य्य च कारारक्षकं तयोः सयत्नं रक्षण-
२४ मादिश्य तौ कारागारे स्थापयामासतुः। स च तादृशमादेशं प्राप्य
तावन्तरस्थकारायां निधाय काष्ठयन्त्रणेन तयोश्चरणान् बबन्ध।
२५ अर्द्धरात्रे पौलः सीलाश्च प्रार्थयमानावीश्वरस्य स्तवमगायतां,
२६ कारावद्धा जनाश्च तयो र्गानमाकर्णयन्। सहसा तु महान् भूकम्पः
सम्बभूव तेन कारागृहस्य भित्तिमूलानि विचालितानि सर्व्वद्वाराणि
२७ युगपद्द्वाटितानि सर्व्वेषां बन्धनानि च मुक्तानि। तदा कारारक्षकः
भग्ननिद्रः सन् काराया द्वाराणि मुक्तानि दृष्ट्वा कोषादसिं निष्कृ-
ष्यात्मघातं कर्त्तुं प्रावर्त्तत, यतो वन्दिजना वहिः पलायिता इति
२८ तेनान्वमीयत। पौलस्तूच्चस्वरेण तमाह, मैवात्महिंसां कुरुष्व यतो
२९ वयं सर्व्वेऽत्र विद्यामहे इति। तदा स दीपिका याचित्वा प्लवमानः
३० प्रविवेश, सकम्पीभूय पौलसीलयोश्चरणेषु प्रणिपपात च। तौ वहि-
३१ र्नीत्वा बभाषे च, प्रभू, परित्राणलाभार्थं मया किं कर्त्तव्यं? ताव-
वदतां, प्रभौ यीशौ ख्रीष्टे विश्वसितं तथा कृते परित्राणं लप्स्यते
३२ त्वया तव गृहेण च। अनन्तरं तौ तस्मै तस्य गृहे विद्यमानेभ्यः
३३ सर्व्वेभ्यश्च प्रभो र्वाक्यं कथयामासतुः, स च निशायास्तस्मिन् दण्डे
तावादाय तयोः क्षतानि प्रक्षालयामास, स च सर्व्वे तदीयजनाश्च
३४ युगपत् स्नापिता अभवन्। स च तान् ऊर्द्ध्वं स्वीयवेश्म नीत्वा भक्ष्याणि
परिवेषयामास सपरिवारमीश्वरे विश्वासी भूत्वा जहर्ष च।
३५ प्रभाते जाते सेनापती वेत्रधरान् प्रहित्य तमूचतुः, तौ नरौ
३६ विसृजेति। अतः कारारक्षकस्तां कथां ज्ञापयन् पौलमवादीत्,

सेनापती युष्मद्विसर्जनस्याज्ञां प्रहितवन्तौ, अत इदानीं युवां निर्गत्य
सकल्याणं प्रस्थातुमर्हथः। पौलस्तु तानुवाच, रोमीयौ नरावावां ३७
विचारं विना सर्व्वजनस्य समक्षं ताभ्यां प्रहार्य्य कारायां स्थापितौ,
इदानीं पुन र्गुप्तं ताभ्यां वहिष्क्रियावहे? तन्नैव भूयात्। तावेवागत्य
नौ वहिर्नयतामिति। अनन्तरं ताः कथा वेत्रधरैः सेनापतिभ्यां ३८
निवेदिताः। तदा तौ रोमीयाविति श्रुत्वा सेनापती विभ्यतुरागत्य च ३९
तौ प्रासादयतां बहिर्नीत्वा च नगरात् तयोः प्रस्थानं प्रार्थयाञ्चक्राते।
अनन्तरं तौ कारातो निर्गत्य लुदियाया गृहं प्रविविशतुः, तत्र च ४०
भ्रातॄन् दृष्ट्वा समाश्वास्य च प्रतस्थाते।

थिषलनीकीनगरे सुसंवादप्रचारणम्।

अनन्तरं तावाम्फिपल्यापल्लोनियया च गत्वा थिषलनीक्यामुप- १७ १
तस्थाते। तत्र यिहूदिनां समाजगृहमासीत्। पौलस्तु स्वीयाभ्यासात् २
तेषां समाजं प्रविश्य। त्रिषु विश्रामवारेषु च तैः सम्भाषमाणः
शास्त्रप्रयोगेनेदमवर्णयत् प्रत्यपादयच्च यत् क्लेशभागित्वं मृतानां ३
मध्यात् पुनरुत्थानञ्च ख्रीष्टस्योचितमासीत् मया च यस्य संवादो
युष्मभ्यं कथ्यते स यीशुरेव ख्रीष्ट इति। तदा तेषां केचिन्नरा ४
भजनशीलानां यूनानीयानां महती सङ्ख्या बह्व्यः प्रमुख्यमहिलाश्च
वाक्यं गृहीत्वा पौलसीलयोः स्वपक्षा बभूवुः। अविश्वासिनो ५
यिहूदिनस्त्वीर्ष्यामास्थाय हट्टसेविनां कांश्चिद् दुर्जनान् गृहीत्वा
जनसंहतिं कृत्वा च नगरं व्याकुलीचक्रुः, यासनस्य गृहमुपस्थाय च
तौ पौरसमाजं नेतुमयतन्त। तावप्राप्य तु यासनं कांश्चिदन्यान् ६
भ्रातृंश्च कर्षन्तः पौरनायकानां समीपं नीत्वा प्रोच्चैरवदन्, ये
भूमण्डलं विक्षोभितवन्तस्तेऽत्राप्युपस्थिताः, यासनश्च तेषामातिथ्यं
कृतवान्। ते सर्व्वे च कैसरस्य विधीनां प्रतिकूलाचारं कुर्व्वन्तो ७

८ वदन्ति, यीशुनामा तदन्यो राजास्तीति। कथामिमां श्रावयन्तस्ते
९ जननिवहं पौराध्यक्षांश्च व्याकुलीचक्रुः, ततस्ते यासनाद् अन्येभ्यश्च
प्रातिभाव्यमादाय तान् विससृजुः।

१० अनन्तरं भ्रातरः शीघ्रं निशायामेव पौलं सीलाञ्च बिरयां
प्रस्थापयामासुः। तत्रोपस्थाय तौ यिहूदिनां समाजगृहं जग्मतुः।
११ थिषलनीकीनिवासिभ्य इमे सुशीला आसन्, तस्मात् सम्पूर्णोत्सुकत्वे-
नेश्वरवाक्यमगृह्लिषुः, प्रतिदिनञ्च शास्त्राण्यालोचयन्तस्ताः कथा यथार्था
१२ न वेति ज्ञातुमयतन्त। ततस्तेषामनेके यूनानीयानां भद्रयोषितां
१३ पुरुषाणाञ्चानल्पाश्च व्यश्वसिषुः। थिषलनीकीया यिहूदिनस्तु बिरया-
यामपि पौलेनेश्वरवाक्यस्य घोषणमवगत्यैव तत्राप्युपस्थाय जननिवहं
१४ व्यचालयन् व्याकुलमकुर्व्वंश्च। तदा भ्रातरस्तत्क्षणं पौलं समुद्रेण
जिगमिषुमिव प्रस्थापयामासुः, सीलास्तु तीमथियश्च तत्रावातिष्ठतां।
१५ पौलस्य पथप्रदर्शकास्तु तम् आथीनीं यावन्निन्युः, सीलास्तीमथियश्च
यथाशीघ्रं मदन्तिकमागच्छतामित्याज्ञां प्राप्य प्रतस्थिरे च।

आथीनीनगरे सुसंवादप्रचारणम्।

१६ आथीन्यां तौ प्रतीक्षमाणः पौलो यदा तन्नगरं देवप्रतिमामय-
१७ मपश्यत् तदा तस्यान्तरात्मोदतेजयत। ततः स समाजगृहे यिहूदिभि
र्भजनशीलजनैश्च, विपण्याञ्च प्रत्यहं तत्र विद्यमानै र्मनुष्यैः समभाषत।
१८ इपिकूरीयमतस्य स्तोयिकीयमतस्य च कियन्तो दर्शनशास्त्रवेत्तारोऽपि
तेन सार्द्धं व्यवदन्त। एके चावदन्, वाक्कणाहारोऽसौ किं विवक्षुरिति?
अन्योऽवदन्, मन्ये स विदेशिदेवानां ज्ञापक इति, यतः स तान् यीशोः
१९ पुनरुत्थितेश्च सुसंवादमकथयत्। शेषे ते तं गृहीत्वारेयपागाभिधं
सभास्थानं नीत्वावादिषुः, भवता कथ्यमानेयं नवशिक्षा कीदृशी, तत्
२० किमस्माभिरवगम्यं न वेति? भवान् असम्भवकथा अस्मत्कर्णगोचर-

मानयति, अतस्तासां किं तात्पर्य्यं तद् वयं ज्ञातुमिच्छाम इति।
आथीनीयाः सर्व्वे तत्र प्रवासिविदेशिनश्च नान्यत् किमपि कर्त्तुं २१
पर्य्यवास्यन्, केवलं सर्व्वतो नूतनतरं किञ्चित् कथयितुं श्रोतुं वा।
तदा पौल आरेयपागस्य मध्य उत्थाय जगाद, भो आथीनीयनराः, २२
युष्मानहं सर्व्वविषयेऽतीव देवभक्तान् लक्षयामि। यतः पर्य्यटनकाले २३
युष्माकं पूज्यवस्तूनि समालोचयता मया यज्ञवेदिरेकादर्शि, तस्यां
लिखितमासीत्, अविदिताय देवायेति। अतो यूयमजानन्तो यस्य
भजनं कुरुथ तस्य कथामहं युष्मान् ज्ञापयामि। विश्वस्य तत्र २४
विद्यमानानां सर्व्वेषाञ्च निर्म्माता य ईश्वरः स एव स्वर्गपृथिव्योः
प्रभुः सन् नैव हस्तनिर्म्मितेषु मन्दिरेषु निवसति न वा कस्यापि
द्रव्यस्याप्राप्तितो मानवहस्तैः सेव्यते, स एव हि सर्व्वेभ्यो जीवनस्य २५
श्वासस्य सर्व्वस्य च दाता। स चैकस्माच्छोणितान्मनुष्याणां यावतीय- २६
जातिमुत्पाद्य कृत्स्ने भूमण्डले वासयित्वा च तेषां निवासस्य प्राङ्-
निरूपितान् कालान् सीमाश्च निर्णीतवान्। किमर्थं? ते कथञ्चित् २७
तं स्पृष्ट्वान्वयास्यन्ति वेत्याशया यत् तमन्विष्येयुरित्यर्थं। स त्वस्माकं २८
कस्माच्चिद् दूरे न वर्त्तते, यतस्तस्मिन्नेव वयं जीवामश्चरामः स्मश्च।
तथा हि युष्माकं कैश्चित् कविभिरपि कथितं तस्य वयं सजातीया
इति। यदि च वयं तस्य सजातीयास्तर्हि नानुमेयमस्माभि र्यद् २९
ऐश्वरप्रकृति र्मनुष्याणां शिल्पाच्चिन्तातश्च सुतच्चितेन स्वर्णेन रजतेन
प्रस्तरेण वा सदृशी। अतएवेश्वरोऽज्ञानतस्य कालान् उपेक्ष्य साम्प्रतं ३०
सर्व्वत्र सर्व्वमनुष्यान् मनःप्रत्यावर्त्तनमादिशति। यतः स दिनमेकं ३१
निरूपितवान्, यस्मिन् स स्वनिर्णीतेन नरेण धर्म्मतो भूमण्डलस्य
विचारं करिष्यति, मृतानां मध्यात् तस्योत्थापनेन च तमधि
सर्व्वेभ्यो विश्वासयोग्यं प्रमाणं दत्तवानिति।

३२ तदा मृतानां पुनरुत्थानस्य कथां श्रुत्वा केचिदुपजहसुः केचिच्चा-
वादिषुः, अन्यस्मिन् काले वयं तव मुखादेतस्य कथां श्रोष्याम इति।
३३ इत्थं पौलस्तेषां मध्यान्निर्जगाम। केचिन्नरास्तु तस्यानुषङ्गिणो भूत्वा
३४ व्यश्वसिषुः, आरेयपागीयो दियनुषियोऽपि तेषां मध्य आसीत् तथा
दामारीनाम्न्येका महिला, अन्ये कियन्तश्च ताभ्यां सार्द्धमासन्।

करिन्थनगरे सुसंवादप्रचारणम्।

१८ १ ततः परं पौल आथीनीतः प्रस्थाय करिन्थ उपतस्थे। तत्र
२ स पन्तदेशजातम् आक्किलानामानमेकं यिहूदिनं तत्पत्नीं प्रिस्क्किल्ला-
ञ्चासादयामास, स आक्किला किञ्चित् पूर्व्वम् इतालियात आगत-
वान्, यतः क्लौदियो रोमातः सर्व्वयिहूदिनां प्रस्थानमाज्ञापितवान्।
३ पौलस्तावभ्यगमत् एकव्यवसायित्वाच्च ताभ्यां सार्द्धं वसन् कर्म्माकरोत्,
४ यतस्तौ दूष्यनिर्म्माणव्यवसायिनावास्तां। प्रतिविश्रामवारन्तु स समाज-
गृहे कथाप्रसङ्गं कुर्व्वन् यिहूदिनो यूनानीयांश्च विश्वासिनः
कर्त्तुमयतत।

५ माक्किदनियातस्तु सीलातीमथिययोरागतयोः पौल ऐश्वरवाक्ये
निविष्टमनाः सन् यीशुरेव ख्रीष्ट एतस्य दृढं प्रमाणं यिहूदिभ्यो-
६ ऽददत्। तेषु तु प्रतिरोधं धर्म्मनिन्दाञ्च कुर्व्वत्सु स स्ववस्त्राणि
परिधूय तानवादीत्, युष्मच्छोणितं युष्माकं शिरःसु वर्त्ततां, शुचि-
७ रहमद्यारभ्य परजातीयानां समीपं यास्यामि। अनन्तरं स समाज-
गृहं त्यक्त्वा युष्टनामकस्य कस्यचिद् ऐश्वरभजनशीलस्य नरस्य गृहं
८ प्रविवेश, तस्य गृहं समाजगृहस्य पार्श्वे स्थितं। समाजाध्यक्षः
क्रीष्पस्च कृत्स्नेन स्वगृहेण सार्द्धं प्रभौ व्यश्वसीत्, करिन्थीयानाञ्च
९ बहवः श्रुत्वा व्यश्वसिषुः स्नापिता बभूवुश्च। प्रभुश्च नैशदर्शनेन
१० पौलमब्रवीत्, मा भैषीरपि तु भाषस्व, मौनी मा भवेः, यतोऽहं

त्वया सार्द्धं वर्त्ते, त्वां हिंसितुं कोऽपि त्वां नाक्रमिष्यति, यतो
नगरेऽस्मिन् मम बह्वी प्रजा विद्यते। स च वत्सरमेकं षड्मासां- ११
स्चावस्थाय तत्रत्यानां मध्य ईश्वरस्य वाक्यमशिक्षयत्।

गाल्लियनि स्त्राखायाप्रदेशस्याधिपत्ये नियुक्ते सति यिहूदिन १२
एकचित्तेन पौलस्य विरुद्धमुत्थाय विचारासनस्य सम्मुखं नीत्वावदन्,
असावीश्वरस्य व्यवस्थाविरुद्धभजनाय मनुष्यान् प्रचोदयति। तदा १३
पौले मुखमुद्घाटयितुमुद्यते सति गाल्लिया यिहूदिनोऽब्रवीत्, भो १४
यिहूदिनः, यद्यपराधोऽथवा दुष्टच्छलः समभविष्यत् तर्हि यथायुक्तं
युष्मान् असहिष्ये। यदि तु केवलं कथां नामानि युष्मदीयव्यवस्था- १५
मधि वा विवादः स्यात् तर्हि यूयमेव तदालोचनां कुरुथ, यत-
स्तादृशानां विचारयिता भवितुमहं न रोचये। इत्यमुक्त्वा स तान् १६
विचारासनसमीपात् निरास्यत्, तदा यूनानीयः सर्व्वजनः समाजा- १७
ध्यचं सोस्थिनिं सङ्गृह्य विचारासनस्य सम्मुखं ताड़यामासुः। गाल्लिया
च तत्र किञ्चिदपि न व्यचिन्तयत्।

ततः परमपि पौलो बहुदिनान्यवस्थाय शेषे भ्रातॄन् आमन्त्र्य १८
सुरियादेशगमनार्थं प्रिस्किल्लाक्किलाभ्यां सहितः पोतमारुरोह।
किञ्चिद् व्रतमास्थाय स किंख्रियायां शिरो मण्डितवान्। अनन्तरम् १९
इफिष उपस्थाय स तौ तत्र तत्याज, स्वयञ्च समाजगृहं प्रविश्य
यिहूदिभिः सार्द्धं कथाप्रसङ्गमकार्षीत्। तेषु तु स्वसन्निधौ तस्य २०
दीर्घतरमवस्थानं प्रार्थयमानेषु स तन्नाङ्गीचकार, अपि तु ताना- २१
मन्त्र्यावादीत्, यिरूशालेम आगामिपर्व्वणः पालनं सर्व्वथा मया
कर्त्तव्यं।, यदि त्वीश्वराय रोचते, तर्हि पश्चाद् युष्मदन्तिकं प्रत्या-
गमिष्यामि। अनन्तरं स पोतेनेफिषात् प्रतस्थे कैसरियायामुपस्थाय २२
स स्थलेन यिरूशालेमं गत्वा मण्डलीमभिवन्द्यान्तियखियां जगाम।

सुसंवादं प्रचारयितुं पौलस्य तृतीयगमनम्।

२३ तत्र कियत्कालं यापयित्वा स प्रस्थाय क्रमशो गालातियादेशं
फरुगियाञ्च पर्य्यटन् सर्व्वान् शिष्यान् स्थिरीकर्त्तुं प्रावर्त्तत।

आपल्लोर्विवरणम्।

२४ अथ सिकन्दरियानगरे जात आपल्लुनामैको यिहूदीफिष उप-
२५ तस्थे, स सुवक्ता शास्त्रे शक्तश्चासीत्। स प्रभो मार्गं शिक्षित
आत्मन्युत्तप्तश्च सन् प्रभुमधि सूक्ष्ममुपदेशमददात् अपि तु केवलं
२६ योहनस्य स्नापनमजानात्। स नरः समाजगृहे निर्भयेन भाषितु-
मारेभे। तस्योपदेशं श्रुत्वाक्किलाः प्रिस्किल्ला च तं स्वान्तिकमानीय
२७ सूक्ष्मतररूपेणेश्वरस्य पन्थानमबोधयतां। ततः परं तस्मिन् सामुद्र-
मार्गेणाखायां जिगमिषति भ्रातर आश्वास्य शिष्यैः यदनुगृह्यत
तदर्थं तेषां समीपं पत्रिकां लिलिखुः। तत्रोपस्थाय च सोऽनुग्रहेण
२८ प्राप्तविश्वासिनाम् अतीवोपकारी बभूव, यतो यीशुरेव ख्रीष्ट
एतत् शास्त्रीयोक्तिभिः सप्रमाणीकुर्व्वन् स उत्साहपूर्व्वकं जनसमक्षं
यिहूदिभिः सार्द्धं विवदमानस्तान् अजयत्।

इफिषनगरे पौलस्य प्रचारणम्।

१९ १ करिन्थ आपल्लोरवस्थितिकाले पौलः समुद्राद् दूरतराणां
प्रदेशानां पर्य्यटनं समाप्येफिष उपतस्थे। तत्र कतिपयान् शिष्यान्
२ आसाद्य पप्रच्छ, यूयं विश्वासिनो भूत्वा किं पवित्रमात्मानं लब्ध-
वन्तः? ते तमूचुः, पवित्र आत्मा यदस्तीदमपि न श्रुतमस्माभिः।
३ स तान् पुनरवादीत्, तर्हि किमुद्दिश्य स्नापिता अभवत? त ऊचुः,
४ योहनस्य स्नापनमुद्दिश्य। पौलस्त्वाह, योहनो मनःप्रत्यावर्त्तनसूच-
केन स्नापनेनास्नापयत्, अपि तु जनेभ्योऽकथयत् मत्पश्चाद् य
आगमिष्यति तस्मिन्नर्थतः ख्रीष्टे यीशौ युष्माभि र्विश्वसितव्यमिति।

तच्छ्रुत्वा ते प्रभो र्यीशोर्नाम्ना स्नापिता बभूवुः। पौलेन तेषु हस्तार्पणे ५
कृते च पवित्र आत्मा तेषामवततार, ते नानाभाषाभिरभाषन्त ६
भाविवाक्यानि व्याहरंश्च। ते साकल्येन प्रायेण द्वादशनरा आसन्। ७

ततः परं स सभागृहं प्रविश्य त्रीन् मासान् यावत् निर्भय- ८
त्वमाश्रायेश्वरस्य राज्यमधि प्रसङ्गमकरोत् विश्वासाय च ओत्तृना-
श्वासयत्। केचित्तु कठोरा अनाज्ञावहाश्च भवन्ति जनसमक्षं धर्म्ममार्गं ९
निन्दन्ति चेति दृष्ट्वा स तेभ्योऽपक्रम्य शिष्यान् पृथक् कृत्वा प्रत्यहं
तुरान्ननाम्नः कस्यचिन्नरस्य विद्याशालायां कथाप्रसङ्गमकरोत्। इत्थं १०
वर्षद्वयमयाप्यत, तस्माद् आशियाप्रदेशनिवासिभि र्यिहूदिभि
र्यूनानीयैश्च सर्व्वैः प्रभो र्यीशोः कथाश्रावि। ईश्वरश्च पौलस्य हस्ताभ्याम् ११
असामान्यानि प्रभावसिद्धकर्म्माण्यसाधयत्, फलतस्तस्य गात्रान्नीतेषु १२
निचोलेषु हस्तमार्जनार्थवस्त्रेषु वा व्याधितानामुपरि निहितेषु
व्याधयस्तेभ्यो निराक्रियन्त, दुष्टा आत्मानश्च तदाविष्टेभ्यो निरसरन्।

तदा देशपर्य्यटकानां यिहूदिनां भूतापसारिणां केचिद् दुष्टा- १३
त्माभिः क्लिष्टानां मनुष्याणामुपरि प्रभो र्यीशो र्नामव्याहर्त्तुं प्रवृत्या-
वदन्, पौलेन घोष्यमाणस्य यीशो र्नाम्ना शप्ना युष्मान् आज्ञापयाम
इति। स्किवानाम्नः कस्यचिद् यिहूदिनो मुख्ययाजकस्य सप्त पुत्रास्तद- १४
कुर्व्वन्। एकदा तु दुष्ट आत्मावादीत्, यीशुं जानामि पौलोऽपि मम १५
विदितः, यूयन्तु के? अनन्तरं तेन दुष्टेनात्मनाविष्टो नर उत्प्लुत्य १६
तानाक्रम्य जित्वा च तेषां तथा प्रबभूव, यथा ते विवस्त्राः क्षताङ्गाश्च
तस्माद् गृहाद् वहिः पलायाञ्चक्रिरे। तच्चेफिषनिवासिभिः सर्व्वै १७
र्यिहूदिभि र्यूनानीयैश्चावागम्यत, ते च सर्व्वे भयाक्रान्ता अभवन्
प्रभो र्यीशो र्नाम चामहीयत। ये विश्वसितवन्तस्तेषामनेके चागत्य १८
स्वव्यापारान् स्वीचक्रिरे ज्ञापयामासुश्च। ये च कुहकवृत्तय आसं- १९

तेषामनेके स्वपुस्तकानि समानीय सर्व्वेषां समक्षमदाहुः। गणितेषु
२० च तेषां मूल्येषु तानि पञ्चायुतानि रौप्यमुद्रा इति तै र्निरणायि।
इत्थं सप्रभावं प्रभो र्वाक्यमवर्धत प्राभवच्च।

२१ सर्व्वेष्वेतेषु कर्म्मसु पौलो मनसीदं निरचैषीत्, माकिदनियाम्
आखायाञ्च पर्य्यटिष्यामि ततश्च यिरूशालेमं गमिष्यामीति, पुनश्चाह,
२२ तत्र गमनात् परं मया रोमापि द्रष्टव्येति। अनन्तरं तस्य
परिचर्य्याकारिणां मध्ये तीमथियमिरास्तञ्च द्वावेतौ माकिदनियां
प्रहित्य स स्वयम् आशियायां कियन्तं कालमवातिष्ठत।

२३ तस्मिन् काले तु तं धर्म्मपथमधि महाक्षोभ उत्पेदे। फलतो
२४ दीमीत्रियनामैकः स्वर्णकार आर्त्तिमीदेव्या रौप्यमन्दिराणि रचयन्
२५ शिल्पिनां प्रचुरार्थोपार्ज्जनमजनयत्। स तान् तादृशशिल्पसम्पर्कीय-
कर्म्मकारिणश्चैकत्रीकृत्यावादीत्, महाशयाः, अर्थोपार्ज्जनोपायादस्मा-
२६ दस्माकं सम्पत्तिः सम्भवतीति भवद्भिरनुभूयते। भवद्भिश्चैतद् दृश्यते
श्रूयते च यत् केवलमिफिषेऽपि तु प्रायेण कृत्स्नायाम् आशियायां
पौलोऽसौ बहुजनं स्वपक्षीकृत्य हस्तनिर्म्मिता देवा न देवा इत्युप-
२७ दिशन् मतान्तरावलम्बिनं कृतवान्। अनेन न केवलम् अस्मदीय-
वृत्तेरपशंशगमनं शङ्कनीयम्, अपि तु महादेव्या आर्त्तिम्या धर्म्मधाम्नो
हेयत्वं कृत्स्नयाशियया मर्त्त्यलोकेन च पूज्यमानायास्तस्या माहात्म्य-
२८ भ्रंशोऽपि शङ्कनीयः। एतच्छ्रुत्वा ते रोषपूर्णा उच्चैःस्वरेण कथयन्तो-
२९ ऽवदन्, इफिषीयाणाम् आर्त्तिमी महतीति। कृत्स्ने नगरे च कलहपूर्णे
जाते ते पौलस्य सहचरौ गायारिष्टार्खाविमौ माकिदनीयौ नरौ
३० सङ्गृह्यैकचित्ते धावन्तोरङ्गभूमिं जग्मुः। पौले तु पौरसमाजं
३१ प्रवेष्टुमिच्छां दर्शयति शिष्यास्तं नानुजज्ञिरे। आशियाधिपतीनां ये
केचित् तस्य प्रणयिन आसंस्तेऽपि दूतं प्रहित्य रङ्गभूमौ स्वसमर्पणं

तेन यच्च क्रियेत तत् प्रार्थयाञ्चक्रिरे। तत्र लेक एकमन्ये चान्यत् ३२
क्रोशन्तोऽवदन्, यतः पौरमण्डली प्रत्युञ्चासीत्, ते किमर्थं समवे-
तास्तद्व्यधिकांशो जनो नाजानात्। अनन्तरं जननिवहाद् यिहूदिभि ३३
र्निर्द्दिष्टः सिकन्दरः कैश्चिद् वहिरानिन्ये, स च सिकन्दरो हस्तं
चालयित्वा दोषप्रक्षालनार्थं पौरसमाजमालपितुमुद्यतोऽभूत्। स तु ३४
यिहूदीति विदिते सति, प्रायेण पञ्च दण्डान् यावत् क्रोशतां
सर्व्वेषां मुखादियमेका वाणी निरसरत्, इफिषीयाणाम् आर्त्तिमी
महतीति। शेषे नगरस्य कार्य्यसम्पादको जननिवहं शमयित्वावादीत्, ३५
भो इफिषीयनराः, को नु मनुष्यो नेदं जानाति यदिफिषीयाणां
नगरी महादेव्या आर्त्तिम्या द्युपितरात् पतितायाः मूर्त्ताश्च मन्दिर-
मार्जिका? कथेयं प्रतिवादातीतेति बुद्ध्वा युष्माभिः शान्तभावमवलम्ब्य ३६
स्थातव्यम् अविमृश्य किमपि न कर्त्तव्यं। नराविमौ युष्माभिरानीतौ, ३७
तौ तु न पूतवस्तुपहारकौ न वा युष्मद्देव्या निन्दकौ। केनचित् सार्द्धं ३८
यदि दीमीत्रियस्य तत्सङ्गिनां शिल्पिनाञ्च विवादो भवेत्, तर्हि
व्यवहारार्थं निरूपितानि दिनानि सन्ति राजप्रतिनिधयश्च विद्यन्ते,
ते मिथो वादप्रतिवादौ क्रियेतां, अन्यत् किमपि तु यदि युष्माभि ३९
र्याच्यते, तर्हि व्यवस्थानुमतायां पौरमण्डल्यां तन्निर्णायिष्यते।
वास्तवम् अद्यतनस्य कारणाद् उपप्लवदोषग्रस्तानामिवास्माकमभियोगो ४०
शङ्कनीयः, यत एतस्य बहुजनसमागमस्य व्याख्यां कर्त्तुं येन शक्नुयाम
तादृशो हेतुवादः कोऽपि न विद्यते। इदं कथयित्वा स ४१
पौरमण्डलीं विससर्ज।

पौलस्य प्रथमे ग्रीकदेशे चमत्कारं यिरूशालेमगमनम्।

तस्य कलहस्य निवृत्तेः परं पौलः शिष्यान् स्वसमीपमाहूय २० १
मङ्गलं वदित्वा च माकिदनियां गन्तुकामः प्रतस्थे। तत्रत्यस्थानानि २

पर्य्यन्त बहुवाक्यै र्जनानाश्वास्य च स यूनानीयदेश उपतस्थे।
३ तत्र मासत्रयं यापयित्वा यदा स सामुद्रमार्गेण सुरियां गन्तुमुद्यत
आसीत्, तदा यिहूदिभिस्तस्य विरुद्धायां कुमन्त्रणायां कृतायां स
४ माकिदनियया प्रत्यावर्त्तितुं निरचैषीत्। आशियां यावत् तेन
सार्द्धमिमेऽगच्छन्, विरयीयः सोपात्रः, थिषलनीकीयावारिष्टार्खसि-
कुन्दौ दर्व्वीयो गायस्तीमथियश्च, आशियादेशीयौ तुखिकत्रफिमौ
५ च। इमेऽस्माकं पूर्व्वं गत्वा त्रोयायाम् अस्मान् प्रत्यैक्षन्त। वयन्तु
६ किण्वशून्यपूपानां पर्व्वकालात् परं पोतेन फिलिपीतः प्रस्थाय पञ्च-
भिर्दिनैस्त्रोयां तेषां समीपमागमाम तत्र सप्तदिनान्ययापयाम च।
७ अनन्तरं सप्ताहस्य प्रथमे दिने भ्रातृषु पूपभञ्जनार्थं मिलितेषु
पौलः परप्रातःकाले प्रस्थातुं निश्चित्य तैः सह कथाप्रसङ्गं कुर्व्वन्नर्ध-
८ रात्रं यावत् कथयित्वातिष्ठत्। यत्र गृहोपरिस्थे प्रकोष्ठे वयं
९ मिलिता आस्म तत्र बह्व्यो दीपिका आसन्। तदा वातायन
उपविष्ट उतुखनामैको युवा प्रबलनिद्रयाक्रान्यत। पौले दीर्घकालं
भाषमाणे स निद्रयाकृष्टस्तृतीयायाः श्रेण्याः प्रकोष्ठाद् भूमौ निपपात
१० मृतोऽपनिन्ये च। पौलस्त्ववरुह्य तस्योपरि पतित्वा तं समाश्लिष्य
११ चावादीत् मा क्षुभ्यध्वं यतोऽस्य देहे प्राणाः स्थिताः। अनन्तरं स
पुनरुपरिस्थं प्रकोष्ठं गत्वा पूपं भङ्क्ताहारं कृत्वा प्रभातं यावत् प्रचुरं
१२ सम्भाष्य च तथाविधो निर्जगाम। जनास्तु तं बालं जीवन्तमानी-
यासामान्यमाश्वासं लब्धवन्तः।
१३ प्रथमं हि वयं पोतमारुह्यास्सं जिगमिषवस्तत्रैव पौलं गृहीष्यन्तः
१४ प्रस्थितमहे, यतः स एव स्थलेन गन्तुकामस्तदाज्ञापितवान्। आस्से-
ऽस्माभिः सार्द्धं मिलितं तं गृहीत्वा वयं मितुलीनीं जग्मिम, ततश्च
१५ प्रस्थाय परदिने खीयस्य सम्मुखमुपस्थिमहे। अपरेद्युः सामं यावत्

समुद्रं तेरिम; चोगुल्लिये रात्रिं यापयित्वा च परदिने मिलीतं
जग्मिम। यत आशियायां विलम्बः सम्भविष्यतीति शङ्कया पौल १६
इफिषमतिक्रम्य गन्तव्यममन्यत। यतः शक्ये सति पञ्चाशत्तम्युत्सवस्य
दिने यिरूशालेम उपस्थितो भवितुमिच्छातः सोऽत्वरत।

मिलीतात्तु स इफिषं दूतं प्रहित्य मण्डल्याः प्राचीनान् १७
आकाययामास। तेषु तस्यान्तिकमागतेषु स तान् जगाद, १८
आशियायां ममोपस्थितेः प्रथमं दिनमारभ्य युष्मत्सङ्गेऽहं समस्तकालं
कथमाचरितवांस्तद् युष्माभिरनुभूतं। सम्पूर्णनम्रतयाहं प्रचुरनेत्रजलेन १९
सहितो यिहूदिनां कुमन्त्रणाभिरुत्पादितानां बहुपरीक्षाणां मध्ये
प्रभो र्दासत्वम् अकरवं। हितजनकं किमपि न प्रच्छाद्य जनसमक्षं २०
गृहे गृहे च युष्मान् सर्व्वं ज्ञापयितुं शिक्षयितुञ्चाक्लान्त आसम्,
ईश्वरमुद्दिश्य मनःप्रत्यावर्त्तनं कर्त्तव्यम् अस्मत्प्रभुं यीशुं ख्रीष्टमुद्दिश्य २१
विश्वासश्च कर्त्तव्य इत्येतस्य साक्ष्यं यिहूदिभ्यो यूनानीयेभ्यश्च
प्राददाम्। इदानीन्तु पश्यतात्मना बद्धोऽहं यिरूशालेमं गच्छामि; २२
न जाने तत्र मम किं सम्भविष्यति, केवलमिदं जानामि, यदेकै- २३
कस्मिन् नगरे पवित्र आत्मा साक्ष्यं दत्त्वा वदति, यद् बन्धनानि
क्लेशाश्च मां प्रतीक्षन्ते। नाहं तु किमप्यनुचिन्तयामि न वा मम २४
प्राणान् मदर्थं महामूल्यान मन्ये, केवलं सानन्दं मम धावनं
समापयितुम् ऐश्वरानुग्रहप्रकाशके सुसंवादे साक्ष्यप्रदानाय प्रभो
र्यीशो र्लब्धां परिचर्य्यां साधयितुञ्चाकाङ्क्षामि। इदानीञ्च पश्यत २५
जानेऽहं यद् येषां मध्य ईश्वरस्य राज्यं घोषयन्नहं पर्य्यटितवान् सर्व्वे
ते यूयमितः परं ममास्यं पुन र्न द्रक्ष्यथ। अतो हेतोरद्यैव युष्मान् २६
साक्षिणः कुर्व्वन् वदामि, सर्व्वेषां शोणितपातदोषादहं शुचिः, यतो
युष्मान् ईश्वरस्य समग्रां मन्त्रणां ज्ञापयितुमहमक्लान्त आसं। अतो २७

१८ यूयं स्वेषु पवित्र आत्मा च युष्मान् अध्यक्षान् कृत्वा यस्य मध्ये
स्थापितवांस्तस्मिन् कृत्स्ने ब्रजे च मनांसि निधद्धम् ईश्वरस्य
१९ स्वशोणितेन क्रीतां मण्डलीं रक्षितुं यतध्वं। जानेऽहं यन्मम
प्रस्थानात् परं दुर्जया वृका युष्मन्मध्यं प्रवेक्ष्यन्ति ते ब्रजस्य न
३० दयिष्यन्ते। युष्मत्तः केचिन्नरा उत्पद्य कुटिलकथाभिः शिष्यान् स्वानु-
३१ गामिनोऽपकर्षितुं यतिष्यन्ते। अतो जागृत स्मरत च यद् वर्षत्रयं
यावदहं निशायां दिवसे च सबाष्पनेत्रो युष्मान् प्रत्येकं सचेतनान्
३२ कुर्व्वन् व्यरमे। इदानीञ्च भो भ्रातरः, अहमीश्वरे तदीयानुग्रहस्य
वाक्ये च युष्मान् समर्पयामि, स हि युष्मान् प्रतिष्ठापयितुं
पवित्रीकृतानां सर्व्वेषां मध्ये युष्मभ्यं दायांशं दातुञ्च शक्तः। कस्यचित्
३३ स्वर्णाय रूप्याय परिच्छदाय वाहं न लुब्धवान्। यूयमेव च
३४ जानीथ यन्मम मदीयसङ्गिनाञ्चावश्यकव्ययार्थं किङ्करेणैतेन
३५ करद्वयेन परिश्रमोऽकारि। सर्व्वथाहं स्वं युष्माकमादर्शं कृतवान्
यत इत्थं परिश्रमं स्वीकृत्यास्माभि र्दुर्ब्बला उपकर्त्तव्याः स्मर्त्तव्यानि
च प्रभो र्यीशो र्वाक्यानि स एव हि कथितवान्, धन्यतरं
दानमादानत इति।

३६ एतत् कथयित्वा स जानुनी पातयित्वा सर्व्वैः सार्द्धं प्रार्थया-
३७ ञ्चक्रे। सर्व्वेषाञ्च तीव्रं रोदनं समजातं, ते च पौलस्य कण्ठदेश-
३८ मालिङ्ग्य तमचुम्बन्। विशेषतस्ते तदीयास्यं पुन र्न द्रक्ष्यन्तीति
तेन यदुक्तं तस्मिन् वाक्ये तेऽतीव दुःखार्त्ता बभूवुः। अनन्तरं ते
पोतं यावत् तेन सार्द्धं जग्मुः।

२१ १ आयासेन तेभ्यो वियुक्ताः सन्तः पोतेन प्रस्थाय वयमृजुमार्गेण
२ कोयं परदिने च रोदं, ततश्च पातारां जग्मिम। तत्र फैनीकी-
३ देशगामिनं पोतमासाद्य तमारुह्य प्रतस्थिमहे। कुप्रद्वीपे चास्म-

दृष्टिगोचरीभूते तं सव्यदिशि विहाय सुरियामुद्दिश्य गत्वा सोर
उपतस्थिमहे। यतस्तत्रैव पोताद् भाण्डनिःसारणं कर्त्तव्यमासीत्।
४ वयञ्च तत्र शिष्यानन्विष्याय सप्तदिनान्यतिष्ठाम। त आत्मन
५ आवेशात् पौलमवदन् यत् तेन यिरूशालेमं न गन्तव्यं। तेषु
दिनेषु शेषं यावदस्माभि र्यापितेषु यदा वयं नगरान्निर्गत्य प्राति-
ष्ठामहि तदा भार्य्याभि र्बालकैश्च परिवृतास्ते सर्व्वेऽस्माभिः सार्द्धं
नगरस्य वहिःप्रान्तं यावदगच्छन् तत्र समुद्रतटे च सर्व्वे वयं जानूनि
६ पातयित्वा प्रार्थयामहि। अनन्तरं परस्परमभिवाद्य वयं पोतमारू-
ढवन्त ते च प्रत्येकं स्वस्थानं प्रत्यावृतिरे।

७ सोराद् वयं समुद्रयात्रां समाप्य तलिमायावुपतस्थिमहे शिष्या-
८ नभिवाद्य च दिनमेकं तेषां सन्निधाववातिष्ठामहि। अपरेद्युश्च
पौलस्तत्सङ्गिनश्च वयं प्रस्थाय कैसरियायामुपतस्थिमहे; सप्तानां
श्रेण्यां गणितस्य सुसंवादघोषकस्य फिलिपस्य गृहं प्रविश्य च तस्य
९ सन्निधाववातिष्ठामहि। तस्य चतस्रोऽनूढ़ा भाववादिन्यो दुहितर
१० आसन्। अस्मासु तत्र बहुतराणि दिनान्यवतिष्ठमानेषु यिहूदि-
११ यात आगावनामैको भाववाद्युपतस्थे। सोऽस्मत्समीपमागत्य पौलस्य
कटिबन्धनं गृहीत्वा स्वहस्तौ स्वचरणौ च बद्ध्वाब्रवीत्, पवित्र
आत्मेदं वक्ति, इदं यस्य कटिबन्धनं, तं नरं यिरूशालेमे यिहूदिन
१२ इत्थं बद्ध्वा परजातीयानां हस्तेषु समर्पयिष्यन्तीति। तच्छ्रुत्वास्मा-
भिस्तत्रत्यैश्च स सविनयमूचे, भवता यिरूशालेमं मा गम्यतामिति।
१३ पौलस्त्वस्मान् प्रतिबभाषे, क्रन्दन्तो मम हृदयं सम्भेदयन्तश्च किं
कुरुथ? प्रभो र्यीशो र्नाम्नो निमित्तं यिरूशालेमे न केवलं बद्धो
१४ भवितुमुद्यतोऽहं मर्त्तुमप्युद्यतोऽस्मि। इत्थं तस्मिन्नस्माकं याचनाया-
मसम्मते सति वयं निवृत्यावादिष्म, प्रभोरिच्छा भवत्विति।

### पौलस्य यिरूशालेमे शृङ्खलाबद्धत्वम्।

१५ तेभ्यो दिनेभ्यः परं वयं पाथेयद्रव्याण्यादाय यिरूशालेमम-
१६ गमाम। कैसरियातोऽपि केचिच्छिष्या अस्माभिः सार्द्धमगमन्
यस्य गृहे चास्माभिरतिथिभि र्भवितव्यं तस्य कुप्रीयम्नासोनेतिनाम्नः
प्राचीनस्य शिष्यस्य गृहमस्माननैषुः।
१७ यिरूशालेम उपस्थिता वयं भ्रातृभिः सानन्दमनुगृहीताः।
१८ अपरेद्युः पौलोऽस्मान् सङ्गिनः कृत्वा याकोबस्य गृहं प्रविवेश।
१९ प्राचीनाश्च सर्व्वे तत्रोपतस्थिरे। स तानभिवाद्य तस्य परिचर्य्यया
परजातीनां मध्य ईश्वरेण यद् यत् साधितं तत्तत् सविशेषं तेभ्यः
२० कथयामास। ते च श्रुत्वेश्वरमस्तुवन्, पौलञ्चावदन् त्वं पश्यसि,
भ्रातः, कत्ययुतानि यिहूदिनो विश्वासिनो जाताः, ते च सर्व्वे
२१ व्यवस्थायाः पक्ष उद्योगिनः। त्वामधि च ते सयत्नमिदमुक्ता यत्
त्वं परजातिषु वासकारिणः सर्व्वान् यिहूदिनो मोशितोऽपक्रमणं
शिक्षयन् शिशूनां त्वक्छेदोऽकर्त्तव्यो रीतयश्च नाचरितव्या युष्मा-
२२ भिरिति वदसि। अतः किं कर्त्तव्यं? जननिवहेनावश्यं मिलितव्यं,
२३ यतस्त्वदागमनसंवादस्तैः श्रोष्यते। अतो वयं तुभ्यं यत् कथया-
मस्तत् कर्त्तुमर्हसि। व्रतेन बद्धा अस्माकं चत्वारः पुरुषा विद्यन्ते।
२४ त्वं तानादाय तैः सार्द्धं स्वं पुनीष्व ते च यथा शिरोमुण्डनं कर्त्तुं
शक्नुयुस्तथा तेषां निमित्तमर्थव्ययं कुरु, तथा कृते सर्व्वे ज्ञास्यन्ति
यत् त्वामधि ते यदुक्तास्तदतथ्यमपि तु त्वमपि व्यवस्थापालन-
२५ माचरसीति। कृतविश्वासानां परजातीयानां हि वयं पत्रेणास्माक-
मिमां मतिं ज्ञापितवन्तो यदेतेषामन्यत् किमपि ते न रक्षणीयं
केवलं देवमूर्त्तीनां प्रसादः शोणितं रुद्धश्वासजीविनां मांसं व्यभि-
२६ चारश्चैतानि तैः परिहर्त्तव्यानि। तदा पौलस्तान् नरानादाय

परदिने तैः सार्द्धं स्वं पवित्वा धर्म्मधाम प्रविश्य तेषां निमित्तमे-
कैकस्य उपहारानयनं यावद् यापयितव्यानां पावनस्य दिनानां
पूर्णां सङ्ख्यां ज्ञापयामास।

तेषु सप्तसु दिनेषु प्रायेण समाप्तेषु आशियादेशीया यिहूदिनो २७
धर्म्मधाम्नि तं दृष्ट्वा प्रायेण कृत्स्नं जननिवहं व्याकुलीचक्रुस्तस्मिन्
हस्तार्पणं कृत्वोच्चैःस्वरेणावादिषुश्च, भो इस्रायेलीयनराः साहाय्यं २८
कुरुत। अयं स मनुष्यो यः सर्व्वत्र सर्व्वेभ्यो ऽस्मदीयजाते र्व्यवस्थायाः
स्थानस्यैतस्य च विरुद्धां शिक्षां ददाति। अपि च स यूनानीय-
नरानपि धर्म्मधाम्नोऽभ्यन्तरमानीयेदं पवित्रं स्थानमपवित्रीकृतवा-
निति। वस्तुतस्तत्पूर्व्वं ते नगरे तस्य सङ्ग इफिषीयं त्रफिमं दृष्ट- २९
वन्तः स पौलेन धर्म्मधाम्नोऽभ्यन्तरं नीत इत्यनुमितवन्तश्च। अन- ३०
न्तरं कृत्स्नं नगरं चुक्षुभे जननिवहाश्च मिलितुं दधावुः। पौलं
सङ्कृह्य कर्षन्तो धर्म्मधाम्नो वहि र्निन्युश्च। तदीयगोपुराणि च
तत्क्षणं बद्धानि। इत्थं तेषु तं हन्तुं यतमानेषु सैन्यदलाध्यक्षस्य ३१
सहस्रपतेः समीपं संवादोऽयमुपतस्थे यत् कृत्स्नं यिरूशालेमं
प्रचुक्षुभमिति। ततः स तूर्णं योद्धॄन् शतपतींश्च सङ्गिनः कृत्वा तेषां ३२
विरुद्धं दधाव। सहस्रपतिं योद्धॄंश्च दृष्ट्वा ते पौलं ताडयितुं
निवृत्ताः। सहस्रपतिस्तदा निकटं गत्वा तं सङ्कृह्य शृङ्खलद्वयेन ३३
तस्य बन्धनमादिदेश। स च कः किं कृतवांश्चेत्यपृच्छत्। तदा ३४
जननिवहस्य मध्य एक एकमन्ये चान्यद् वच उदैरयन्। कोला-
हलात् निश्चितं किमप्यवगन्तुमशक्तः सन् स सन्निवेशं तस्यापनयन-
मादिदेश। यदा तु स सोपान उपातिष्ठत तदा जननिवहस्योप- ३५
तातो योद्धृभिस्तस्य वहनमावश्यकमभूत्। यतो जननिवहोऽनुव्रज- ३६
न्नुच्चैःस्वरेणाब्रवीत्, अयं व्यापाद्यतामिति।

३७ सन्निवेशस्याभ्यन्तरं नायिष्यमाणस्तु पौलः सहस्रपतिं पप्रच्छ,
भवन्तं किञ्चन वक्तुं किमनुज्ञायते? सोऽब्रवीत्, यूनानीयभाषां
३८ किं जानासि? तर्हि नासि त्वं स मिस्रीयनरो यः कियत्कालात्
पूर्व्वं विप्लवं कृत्वा घातकानां चतुःसहस्राणि पुरुषान् जङ्गलभूमिं
३९ नीतवान्? पौलः प्रतिबभाषे, अहं तार्षे जातो यिहूदी, किलि-
कियायास्तस्यैव प्रसिद्धस्य नगरस्य पौरोऽहं, जननिवहसमाभाषितु-
४० मिच्छन् भवन्तं तदनुमतिं प्रार्थये। दत्तायाञ्च तेनानुमत्यां पौलः
सोपाने तिष्ठन् जननिवहस्य मौनार्थं हस्तं चालयामास। तदा
महती निःशब्दता सञ्जाता।

पौलस्य निवेदनम्।

२२ १ अनन्तरं स इब्रीभाषया प्रोच्चैरिदं कथयामास, भो भ्रातरः
२ पितरश्च, ममेदानीं स्वपक्षे यद् वक्तव्यं भवन्तस्तच्छ्रोतुमर्हन्ति। तदा
स इब्रीभाषयास्मानालपतीति श्रुत्वा तेऽधिकतरं मौनभावमातस्थुः।
३ स च जगाद, अहं यिहूदी नरः, किलिकियास्थे तार्षे जातोऽपि
त्वस्मिन् नगरे गमलीयेलस्य चरणतले पोषितः पैतृकव्यवस्थायाः
सूक्ष्मनियमानुरूपं शिक्षितश्च भूत्वा सर्व्वे यूयमद्य यथा स्थ तथै-
४ वेश्वरस्य निमित्तमुद्योग्यासं। एतद्धर्म्ममार्गावलम्बिनोऽहं मृत्युं याव-
५ दुपाद्रवं पुरुषान् योषितश्च बद्ध्वा कारासु समार्पयञ्च। अत्र मम
साक्षी महायाजकः कृत्स्नः प्राचीनवर्गश्च। तेभ्य एवाहं भ्रातृन् प्रति
पत्रिका गृहीत्वैकदा दम्मेषकमगच्छं। तत्र येऽविद्यन्त तान् बद्ध्वा
६ दण्डनार्थं यिरूशालेमं नेष्यामीति मम मनस्यमासीत्। यदा तु
मार्गेण गच्छन् दम्मेषकस्य सन्निधावुपातिष्ठं, तदा मध्याह्नकाले
सहसा गगनादवतरमाणा महती दीप्ति र्मत्परितो व्यद्योतिष्ट।

अहञ्च भूमौ पतित्वा मामालपन्तीमिमां वाणीमश्रौषं, शौल शौल ७
किमर्थं मामुपद्रवसीति। तदाहं प्रत्यवदं को भवान्, प्रभो? स ८
मामवादीत्, त्वं यमुपद्रवसि, स नासरतीयो यीशुरहमिति। मम ९
सहचरा अपि तां दीप्तिं दृष्टवन्तो भयग्रस्ता जाताश्च, मामालापतो
वाणीन्तु ते न श्रुतवन्तः। अहं पुनरवोचं, किं कर्त्तव्यं मया, प्रभो? १०
स जगाद, उत्थाय दम्मेषकं याहि, तव कर्त्तव्यं यद्यन्निरूपितं तत्
सर्व्वं तत्रैव तुभ्यं कथयिष्यते। अनन्तरं तस्या दीप्तेः प्रतापतो हीन- ११
दृष्टिः सन्नहं सङ्गिभि र्धृतहस्तो दम्मेषकं प्राविशं। ततः परं १२
तन्निवासिषु सर्व्वेषु यिहूदिषु सुख्यातो व्यवस्थानुरूपं भक्तोऽननिय- १३
नामैको नरो ममान्तिकमागत्य मामुपस्थाय च मामब्रवीत्, भ्रातः
शौल, दृष्टिं लभस्व। तत्क्षणे चाहं तं प्रति दृक्पातमकार्षं। स च १४
मामवादीत्, अस्मत्पूर्व्वपुरुषाणामीश्वरस्तस्येच्छाया ज्ञानार्थं तस्य धर्म्म-
वतो दर्शनलाभार्थं तदीयमुखाद् वाण्याः श्रवणार्थञ्च त्वां नियुक्तवान्।
यतस्त्वं यद्यद् दृष्टवान् श्रुतवांश्च तस्मिन् सर्व्वस्मिन् सर्व्वमनुष्याणां १५
समीपं तस्य साक्षी भविष्यसि। इदानीञ्च किमर्थं विलम्बसे? उत्थाय १६
तस्य नामाह्वय स्नापनं गृहाण स्वपापानि प्रक्षालय च। ततः परं १७
यिरूशालेमे प्रत्यावृत्तोऽहं यदा धर्म्मधाम्नि प्रार्थये तदा मूर्च्छापन्नो
भूत्वा तमदर्शं, स मामवादीत्, त्वरामास्थाय शीघ्रं यिरूशालेमात् १८
प्रतिष्ठस्व, यतो मामधि तव साक्ष्यं तै र्न ग्राहीष्यते। अहन्त्ववोचं, १९
प्रभो, ते जानन्ति, यदहं त्वयि विश्वासिनो मनुष्यान् कारायां २०
समार्पयं समाजगृहेषु प्राहारयञ्च, यदा च तव साक्षिणः स्तिफानस्य
शोणितमसिच्यत तदाहं पार्श्वे तिष्ठंस्तस्य वधमन्वमोदे तद्वधकारिणां
वासांस्यरक्षञ्चेति। स तु मामवादीत्, याहि, यतोऽहं त्वां दूरं २१
परजातीनां समीपं प्रहेष्यामीति।

पौलस्य विषये लोकानां कथनं कशया तं ताड़यितुं सेनापतेरादेशः।

२२ एतद्वचो यावत् तस्य कथां श्रुत्वा ते प्रोच्चैरिदमुदैरयन्, एवं-
२३ विधोऽसौ पृथिवीतो निराक्रियतां, न युक्तं तस्य जीवनं। तेषु तु
२४ विक्रोशत्सु वस्त्राणि त्यजत्स्वाकाशं प्रति धूलिं क्षिपत्सु च सहस्रपति-
स्तस्य विरुद्धं तेषां कोलाहलस्य कारणमवगन्तुमिच्छन् सन्निवेशस्या-
भ्यन्तरं तस्यापनयनमादिश्य कशाघातेन तस्य परीक्षणमाज्ञापया-
२५ मास। यदा त स चर्म्मकशानां निमित्तमातन्यत तदा पौलः पार्श्वे
तिष्ठन्तं शतपतिं पप्रच्छ, रोमीयस्याथवानिर्णीतदोषस्य नरस्य
२६ कशाघातः किं विधेयो युष्माकं? तच्छ्रुत्वा स शतपतिर्गत्वा सहस्र-
पतिमब्रवीत्, भवान् यत् कर्त्तुमुद्यतस्तत्र सतर्को भवतु, यतः स
२७ मनुष्यो रोमीयः। तदा सहस्रपतिः समीपमागत्य तं जगाद, ब्रूहि
मां, त्वं रोमीयो न वेति? सोऽवादीत्, रोमीयोऽस्मि, सहस्रपतिः
२८ पुनरवोचत्, महता मूल्येनाहं तं पौरत्वाधिकारं क्रीतवान्। पौलो
२९ जगाद, अहं जन्मनैव तं लब्धवान्। ततस्तं परीक्षितुमुद्यता नरा-
स्तत्क्षणं तस्मादपचक्रमुः। स च रोमीय इत्यवगत्य सहस्रपति र्यत्
तं बद्धवांस्तत्कारणादभैषीत्।

३० अपरेद्यु र्यिहूदिभिस्तस्य किमभियुज्यते तद्यथातथ्यं तज्ज्ञातु-
मिच्छन् सहस्रपतिस्तस्य बन्धनानि मोचयामास, मुख्ययाजकानां
कृत्स्नायाः सभायाश्चागमनमादिदेश च। अनन्तरं पौलं नीत्वा तेषां
समक्षं स्थापयामास।

२३ १ तदा पौलः स्थिरदृष्ट्या महासभामालोक्य जगाद, भो
भ्रातरः, सर्व्वथोत्तमेन संवेदेनाहमद्य यावद् ईश्वरभक्तिमाचरितवान्।
२ अथ महायाजकोऽननियस्तत्सन्निधौ तिष्ठतो जनांस्तदीयमुखस्य
३ ताडनमाज्ञापयामास। तदा पौलस्तमाह, भो सुधाधवलित कुड्य,

ईश्वरस्त्वां ताडयिष्यति, व्यवस्थानुसारेण मम विचारं कर्त्तुमुपविष्टो
यस्त्वं स त्वं व्यवस्थां लङ्घयन् मम ताडनमाज्ञापयसि ।' पार्श्वे तिष्ठन्तो ४
नरा अवदन्, त्वं किमीश्वरस्य महायाजकं धिक्करोषि ? पौलोऽवा- ५
दीत्, भ्रातरः स महायाजक इति नाजानं । लिखितं ह्यस्ति,
स्वीयजाते र्मुख्यं मा शपस्वेति । सभास्थानामेकतरोंशः सद्दूकिनाम् ६
अन्यतरश्च फरीशिनामिति ज्ञात्वा पौलः सभायामुच्चैःस्वरेण व्याज-
हार, भ्रातरः, फरीश्यहं फरीशिसुतश्च, मृतानां प्रत्याशां पुनरुत्थान- ७
ञ्चाधि मम विचारो भवतीति । तेनैवं कथिते फरीशिनां सद्दूकि-
नाञ्च विसंवादः सभाया भेदश्च सञ्जातौ । सद्दूकिनो हि वदन्ति ८
पुनरुत्थानं नास्ति स्वर्गीयदूत आत्मापि वा नास्ति । फरीशिनस्तूभयं
स्वीकुर्व्वन्ति । इत्थं महति कोलाहले जाते फरीशिनां स्वपक्षाः ९
शास्त्राध्यापका उत्थाय वाग्युद्धं कुर्व्वन्तोऽवदन्, अस्य नरस्य कोऽपि
दोषोऽस्माभि र्न दृश्यते, किञ्चित् कोऽप्यात्मा स्वर्गीयदूतोऽनेन
सम्भाषितवान्, ईश्वरेण सहास्माभिः किं योद्धव्यमिति । अनन्तरं १०
घोरे विसंवाद उत्पन्ने पौलस्तैः परिकर्षद्भिर्द्विधा कारिष्यत इति
शङ्कित्वा सहस्रपति, सैन्यं तत्र गमनं तेषां मध्यात् तस्य सञ्जूहणं
सन्निवेशाभ्यन्तरमपनयञ्चाज्ञापयामास । परनिशायां प्रभुस्तमुपस्थाय ११
जगाद, आश्वसिहि, पौल, यतो मत्पक्षे त्वया यथा यिरूशालेमे
साक्ष्यमदायि तथा रोमायामपि दातव्यम् ।

पुन र्द्दिवसे जाते यिहूदिनां केचिदेकमन्त्रणा भूत्वा शपथेनेदं १२
प्रत्यश्रौषुः, पौलं न हत्वास्माभिः खाद्यं पेयं वा किमपि न भोक्ष्यते ।
चत्वारिंशतोऽधिका नराः पणमिमं कृतवन्तः । ते च मुख्ययाजकानां १३
प्राचीनानाञ्च समीपं गत्वा तानवदन् घोरशपथेन स्वान् बद्धास्माभि- १४
रिदं प्रत्यश्रावि, यत् पौलं न हत्वास्माभिः किमपि नास्वादिष्यते ।

१५ अत इदानीं महासभायाः सहिता यूयं सहस्रपतिमिदं याचध्वं, यत् पौलस्य कथां, सूक्ष्मतरमनुसन्धातुमिच्छूनां युष्माकं समीपं श्वस्तमुपस्थापयितुं सोऽर्हति, वयञ्च तस्योपस्थितेः प्राक् तं हन्तुमुद्यताः।

१६ तस्य कुसङ्कल्पस्य कथा तु पौलस्य भगिनीसुतेनाश्रावि, स च

१७ गत्वा सन्निवेशं प्रविश्य पौलं तां ज्ञापयामास। पौलस्तदा शतपतीनामेकमाहूय जगाद, भवान् युवानमिमं सहस्रपतेः समीपं नेतुमर्हति, यतोऽनेन तस्मै किञ्चित् कथयितव्यं। अतः स तमादाय सहस्रपतेः समीपं नीत्वाब्रवीत्, वन्दिः पौलो माम् आहूय प्रार्थयत, यद् भवतः समीपं युवानमिममानयामि, यतो भवतोऽस्य

१९ किञ्चित् कथयितव्यं। तदा सहस्रपतिस्तस्य हस्तं धृत्वा निभृतं स्थानं

२० गत्वा तं पप्रच्छ, मह्यं किं कथयितव्यं त्वया? सोऽब्रवीत्, पौलमधि सूक्ष्मतरमनुसन्धानं कर्त्तव्यमिति छलमास्थाय यिहूदिभिरिदं निरचायि, यत् श्वस्तेषां सभां पौलस्यानयनं ते भवन्तं प्रार्थयिष्यन्ते।

२१ नार्हति तु भवांस्तेषां याचञ्चां ग्रहीतुं। यतस्तेषां चत्वारिंशतोऽधिका नराः कुसङ्कल्पं साधयितुं यतन्ते, तं न हत्वा ते खाद्यं पेयं वा किमपि न भोक्ष्यन्त इति प्रतिश्रुत्य शपथं कृतवन्तश्च, इदानीमेव

२२ सज्जिताः सन्तो भवतस्तमङ्गीकारं प्रतीक्षन्ते च। तदा सहस्रपतिस्तं युवानं विसृजन् आदिदेश, त्वं मामिदं ज्ञापितवांस्तत् कमपि मा

२३ वद। अनन्तरं स शतपतीनां द्वौ नरावाहूय, युवां कैसरियां यावद् गमनार्थं द्वे शते योद्धॄन् सप्ततयश्वारोहिणश्च द्वे शतेऽनुचरांश्च

२४ यामिन्याः प्रथमयामस्य शेषे सज्जयतं, तैश्च वाहनान्यप्युपस्थापयि-

२५ तव्यानि, तदारोहितः पौलश्च निर्विघ्नं देशाध्यक्षस्य फीलिक्षस्य समीप

२६ नेतव्य इति। स एतत्कथासम्बलितां पत्रिकामपि लिलेख, महामहिमश्रीयुक्ताय देशाध्यक्षाय फीलिक्षाय क्लौदियलुषियस्य नमस्कारः।

यिहूदिभिः संगृहीतं तूर्णं घानिष्यमाणञ्चेमं नरमहं ससैन्य उपस्थाय २७
रोमीयोऽयमित्यवगत्योद्धृतवान्। तैस्तस्य विरुद्धोऽभियोगो यत् २८
क्रियते तस्य कारणं जिज्ञासुरहं तेषां सभां तं नीतवान्। तदा २९
मयाज्ञायि यत् तेषां व्यवस्थायाः कांश्चन प्रश्नानधि तस्य विरुद्धो-
ऽभियोगः क्रियते, मरणार्हः शृङ्खलार्हो वा दोषस्तु तस्मिन्नारोप्यते।
अनन्तरं तस्य विरुद्धं यिहूदिभिः कुमन्त्रणा कारिष्यत इति संवादं ३०
प्राप्याहं तत्क्षणं भवतः समीपं तं प्राहिणवं तदभियोगिनश्चादिशं यत्
भवतः सम्मुखं तद्विरुद्धं ते कथयितव्यं। भवतः कुशलं भूयात्।

अनन्तरं सैनिकनरा यथादिष्टास्तथा पौलमादाय तस्यां रजन्याम् ३१
आन्तिपात्रों निन्युः। प्रातस्य सन्निवेशं प्रत्यावर्त्तमाना हयारूढांस्तेन ३२
सार्द्धं गमनमनुयज्ञिरे। ते च कैसरियां गत्वा देशाध्यक्षाय पत्रिकां ३३
दत्त्वा पौलमपि तस्य समक्षमुपस्थापयामासु। तां पठित्वा देशाध्यक्षः ३४
पप्रच्छ, स कस्य प्रदेशस्य नरः। स यत् किलिकियायां जात इत्यव-
गत्य च स तमाह, त्वदभियोगिष्वागतेष्वहं तव कथां श्रयतं ३५
श्रोष्यामि। इत्युक्त्वा स हेरोदस्य हर्म्ये तस्य रक्षणमादिदेश।

देशाध्यक्षसमक्षं पौलस्य विचारः।

पञ्चदिनेभ्यः परं महायाजकोऽननियः प्राचीनवर्गः तर्त्तुल्लना- २४ १
मानं कञ्चन वक्तारञ्च सङ्गिनः कृत्वा कैसरियां जगाम, ते च
देशाध्यक्षस्य समीपं पौलस्य विरुद्धमभियोगमावेदयामासुः। तदा २
तस्मिन्नाहूते तर्त्तुल्ल इत्यमभियोक्तुमारेभे, भो महामहिम फीलिक्,
भवतो यत्नेनास्माकं बहुकुशलं जातं, भवतः परिणामदर्शितया
सर्व्वथा सर्व्वत्र चास्या जातेरुन्नतिः साध्यते च, तद् वयं सम्पूर्ण- ३
कृतज्ञतया स्वीकुर्म्मः। कथाधिक्येन तु भवन्तं बाधितुमनिच्छुः ४
समहं प्रार्थये, भवान् स्वीयक्षान्त्यास्माकं स्वल्पकथा आकर्णयतां।

५ फलतो नरोऽयं मारीस्वरूपो भूमण्डलस्थेषु सर्व्वयिहूदिषु विरोधो-
६ त्पादको नासरतीयस्य वैधर्म्मपक्षस्याग्रणी चेत्यस्माभिरनुभूतं, स
च धर्म्मधामोऽप्यपवित्रीकर्त्तुमुपचक्रमे, ततो वयं तं सङ्गृह्यास्मदीय-
७ व्यवस्थानुसारेण तस्य विचारं कर्त्तुमुद्यता अभवाम, सहस्रपति
८ र्लुषियस्तूपस्थाय महाबलेनास्मत्करेभ्यस्तमपनीय तदभियोगिनो
भवतः समक्षमागमनमादिदेश। अस्माभिस्तस्य यदभियुज्यते, भवान्
९ परीक्षां कुर्व्वंस्तस्यैव प्रमाणात् तत् सर्व्वमवगन्तुं शक्ष्यतीति। यिहू-
दिनोऽपि स्वीकृत्यावदन्, प्रमाणमिदं यथार्थमिति।
१० अनन्तरं देशाध्यक्ष इङ्गितेन पौलाय कथनस्यानुमतिं दत्तवति
स प्रतिबभाषे, भवान् बहुवत्सरेभ्योऽस्या जातेः शास्तास्तीति
११ विज्ञायाहं सुमनाः सन् मदर्थं प्रतिभाषे। केवलं द्वादशदिनेभ्यः
पूर्व्वमहं यिरूशालेम ईश्वरमुपासिष्यन् तत्र गतवानिदं भवतावगन्तुं
१२ शक्यते। इमे च न धर्म्मधाम्नि न सभागृहे न नगरे वा मां
१३ केनचित् सम्भाषमाणं जनान् सङ्कुलीकुर्व्वन्तं वा दृष्टवन्त इदानीञ्च
मयि यान् दोषान् आरोपयन्ति तेषां प्रमाणं दातुं न शक्नुवन्ति।
१४ भवतः समीपन्त्वहमिदं स्वीकरोमि यदिमे यं वैधर्म्यमार्गं वदन्ति
तं मार्गमवलम्ब्याहमित्थं पैतृकमीश्वरमाराधयामि, वस्तुतो व्यवस्थायां
१५ भाववादिनां ग्रन्थे च यद्यल्लिखितमस्ति तस्मिन् सर्व्वस्मिन् विश्वसामि,
धार्म्मिकाणामधार्म्मिकाणाञ्च पुनरुत्थानं भविष्यतीति यां प्रत्या-
१६ शामिमेऽपि प्रतीक्षन्तेऽहमपीश्वरमुद्दिश्य तां धारयामि च। अत्र
चाहमीश्वरं प्रति मनुष्यांश्च प्रति निरन्तरम् अबाधं संवेदं रक्षितुं
१७ यते। बहुवर्षान्ते स्वजातये दानानि नैवेद्यानि च चिकीर्षुरहम्
१८ उपातिष्ठं। अत्रावसरेऽहं धर्म्मधाम्नि पावितो न तु जननिवहेन
कोलाहलेन वा सहितो दृष्टः, नैवैतैरपि त्वाशियादेशीयैः कैश्चिद्

यिहूदिभिः । भवतः समक्षं तैरेवोपस्थायाभियोक्तव्यमासीत्, यदि १९
मया तेषां किमप्यपराद्धं । नोचेदिम एव वदन्तु, महासभायाः २०
समक्षं यदाहमतिष्ठं तदा मम किमपि दुष्कृतं निरणायि न वेति ।
मन्ये केवलमिदमेकं वचो यत् तेषां मध्ये तिष्ठता मयोदीरितं, २१
यथा, मृतानां पुनरुत्थानमध्यद्य युष्माभि र्मम विचारो क्रियत इति ।

फीलिक्षस्तं धर्म्ममार्गमधि सूक्ष्मतरमभिज्ञ आसीत्, अतस्तत्छ्रुत्वा २२
स तान् विलम्बमवलम्बयन्नवादीत्, सहस्रपति र्लुषियो यदाया-
स्यति, तदाहं युष्मत्कथां सम्यगवगमिष्यामीति । शतपतिञ्च स २३
पौलस्य रक्षणमादिश्याब्रवीत्, स क्लेशरहितस्तिष्ठतु, आत्मीयानां
केनापि तस्य परिचर्य्या तत्समीपं गमनं वा त्वं मानिवारयेरिति ।

कतिपयदिनेभ्यः परं फीलिक्षः स्वभार्य्यया यिहूदिन्या द्रुषि- २४
ल्लया सहित उपस्थाय पौलमाहूय तस्य मुखात् ख्रीष्टे विश्वसनस्य
कथामश्रौषीत् । तदा न्यायपरतायाः परिमितभोगस्य भावि- २५
विचारस्य च कथायां पौलेन कथ्यमानायां फीलिक्षो भयव्याप्तः
सन् प्रतिबभाषे, इदानीं याहि, उपयुक्तं समयं लब्ध्वाहं त्वामा-
ह्वास्यामि । एतदतिरिक्तं तस्येयमाशापि समजायत, यन्मुक्तिं लिप्सुना २६
पौलेन तस्मै मुद्रा दायिष्यन्ते । ततो हेतोस्स स पुनः पुनस्तमा-
हूय तेन समभाषत । अतिवाहिते तु वर्षद्वये पर्कियः फीष्टः २७
फीलिक्षस्योत्तराधिकारित्वे नियुयुजे । तदा फीलिक्षो यिहूदिनः
प्रसादयितुमिच्छुः पौलं बद्धं विहाय प्रतस्थे ।

अनन्तरं फीष्टः शासनीयप्रदेशमागत्य दिनत्रयात् परं २५ १
कैसरियातो यिरूशालेमं जगाम । तदा महायाजको यिहूदिनां २
मुख्यनराश्च तस्य समीपं पौलस्य विरुद्धमावेदनमकार्षुस्तस्य विपक्षं
वरं प्रार्थयमानास्तेदं ययाचिरे यत् स तं यिरूशालेममानाययेत् । ३

अनेन ते पथिमध्ये तस्य हत्यार्थं तद्विरुद्धां कुमन्त्रणामचिकीर्षन्।
४ फीष्टस्तु प्रतिबभाषे, पौलः कैसरियायां बद्धो रक्ष्यते, अहमपि
५ सत्वरं प्रस्थातुमिच्छामि, अतो युष्माकं मध्ये ये शक्तिमन्तस्ते मया
सार्द्धं तत्र गच्छन्तु, यदि च तस्य नरस्य कोऽपि दोषो विद्यते, तर्हि
६ तस्याभियोगं कुर्व्वन्तु। ततः परं स तेषां समीपमष्टाभ्यो दशभ्यो
वा दिनेभ्योऽनधिकं कालं यापयित्वा कैसरियां जगाम, परदिने च
७ विचारासन उपविश्य पौलस्यानयनमादिदेश। तस्मिन्नुपस्थिते
यिरूशालेमत आगता यिहूदिनः परितस्तिष्ठन्तः पौले बहून्
८ गुरुतरांश्च दोषानारोपयामासुः सप्रमाणी कर्त्तुन्तु न शेकुः। स
चात्मपक्षे प्रतिजगाद, न यिहूदिनां व्यवस्थाया विरुद्धं न धर्म्म-
९ धाम्नो वा विरुद्धं न कैसरस्य वा किमप्यपराद्धं मया॥ फीष्टस्तु
यिहूदिनः प्रसन्नीकर्त्तुमिच्छुः प्रतिभाषमाणः पौलं पप्रच्छ, यिरू-
शालेमे मम समक्षं कथास्वेतासु तव विचारो यद् भवेत् तदर्थं त्वं
१० किं तत् स्थानं गन्तुमिच्छसि। तदा पौलो जगाद, कैसरस्यैव
विचारासनस्य सम्मुखेऽहं तिष्ठामि, अत्र मम विचारेण भवितव्यं।
यिहूदिनां मया किमपि नापराद्धं, तद् भवतापि सम्यग् बुध्यते।
११ यद्यहमपराधी, यदि वधार्हं किमपि कृतवानस्मि तर्हि मर्त्तुं
नानङ्गीकरोमि, एतैस्तु मम यदभियुज्यते तत् सर्व्वं यद्यतथ्यं तर्हि
कोऽप्येतेभ्य उपहारमिव मां प्रदातुं न शक्नोति। कैसरमहं पुन
१२ र्विचारं प्रार्थये। तदा फीष्टो मन्त्रिभिः सार्द्धं समन्त्र्य प्रतिजगाद,
कैसरस्त्वया विचारं याचितः, कैसरस्य समीपं त्वं गमिष्यसि।

आग्रिपाराजस्य सन्निधौ पौलस्य आत्मपक्षसमर्थनम्।

१३ अनन्तरमतीतेषु कतिपयदिनेष्वाग्रिपा राजा वर्णीकी च
१४ फीष्टमभिवादितुं कैसरियामाजग्मतुः। तयोश्च दीर्घतरं कालं

विलम्बमानयोः फीष्टो राजानं पौलस्य कथां ज्ञापयन्नब्रवीत्,
फीलिक्षेण कारायां परित्यक्तो नर एको विद्यते, मयि च यिरू- १५
शालेम उपस्थिते यिहूदिनां मुख्ययाजकाः प्राचीनाश्च तमधि
मत्समीपमावेदनं कृत्वा तस्य विरुद्धां दण्डाज्ञां याचितवन्तः।
अहन्तु तान् प्रत्युक्तवान्, कस्मिंश्चिन्मनुष्ये यदि दोष आरोप्यते, १६
तर्हि स यावद् दोषवक्तॄन् साक्षात् दृष्ट्वाभियोगस्य खण्डनार्थं सुयोगं
न प्राप्नोति, तावद् विनाशार्थमुपहारस्येव तस्य समर्पणं रोमीयाणा-
मनुचितमिति। ततः परं तेषु मया सार्द्धमेतत् स्थानमागतेष्वहं १७
कञ्चन विलम्बं न कृत्वा तत्परदिवसे विचारासन उपविश्य तस्य
नरस्यानयनमादिशं। तं परितिष्ठन्तस्तस्य दोषवक्तारस्तदा मदनु- १८
मितं कमपिदोषमनारोप्य तस्य विरुद्धं स्वीयधर्म्मसम्बन्धीयेषु केषु- १९
चिद् विवादेषु प्रवृत्तिरे, विशेषतो यीशुनामानमेकं मृतं नर-
मधि, यस्य विषये पौलोऽवदत् स जीवतीति। एतेषां विचारे २०
सन्दिग्धः सन्नहं तमप्राच्छं, कथास्वेतासु तव विचारो यिरूशालेमे
यद् भवेत् तदर्थं त्वं किं तत् स्थानं गन्तुमिच्छसीति। पौलस्तु २१
पुनर्विचारं याचित्वा राजाधिराजेन मीमांसार्थं कारायां रक्षितो
भवितुं प्रार्थयाञ्चक्रे, अतः कैसरस्य समीपं स यावन्न प्रहायिष्यते
तावदहं तस्य रक्षणमादिशं। तदाग्रिपाः फीष्टमवादीत्, तस्य २२
नरस्य मुखात् कथां श्रोतुं ममापि मनीषा सञ्जाता। स प्रत्यवा-
दीत्, श्वस्तस्य कथा भवता श्रविष्यत।

अतस्तत्परदिन आग्रिपा वर्णीकी च महासमारोहेण सहोप- २३
स्थाय सहस्रपतिभि र्नगरस्य श्रेष्ठनरैश्च मिलित्वा सभामण्डपं
प्रविविशतुः। तदा फीष्टस्यादेशात् पौले समानीते फीष्टो जगाद, २४
भो राजन्नाग्रिपा, भो अस्माभिः सार्द्धमत्रोपस्थिता महेच्छाः, भवन्तो

मनुष्यमिमं निरीक्षितुमर्हन्ति, यमधि यिरूशालेमे ऽत्र च यिहू-
दिनां सर्व्वे जना मत्समीपमावेद्यित्वा प्रोच्चैः कथितवान्, इतः
२५ परमनेन न जीवितव्यमिति। तेन तु वधार्हं किमपि कर्म नाका-
रीति मया बुद्धं, तेनाप्यधीश्वरो विचारं याचितस्तस्मादहं तं
२६ प्रेषयितुं मतिमकार्षं। पत्रेण तु प्रभुं तमधि यज्ज्ञापयिष्यामि
तादृशं निश्चितं किमपि मम नास्ति, ततो हेतो र्भवतां समक्षं,
विशेषतो भो राजन्नाग्रिपा, भवतः समक्षं स मयानीतः, मन्ये
२७ विचारे कृते लिखितव्यं किञ्चिन्मया लप्स्यते। यतः शृङ्खलबद्धस्य
मनुष्यस्य प्रेषणकाले तस्मिन्नारोपितानां दोषाणां सूचनाविहिति
र्मम युक्तिविरुद्धा प्रतिभाति।

२६ १ अनन्तरमाग्रिपाः पौलं जगाद, स्वपक्षं कथनस्यानुमतिस्तुभ्यं
दीयते। तदा पौलो हस्तं प्रसार्य्याभियोगखण्डनार्थमकथयत्।
२ भो राजन्नाग्रिपा यिहूदिभि र्मम यद्यदभियुज्यते तत् सर्व्वमधि,
भवतः समक्षमद्य मयात्मपक्षं कथयितव्यम्, अनेन स्वं धन्यं मन्ये,
३ विशेषतो भवान् यिहूदिनामुचितेव्याचारेषु विवादेषु चाभिज्ञस्त-
स्माज्जानामि। अतः प्रार्थये, भवान् सहिष्णुभावेन मम कथां श्रोतु-
४ मर्हति। आदौ स्वजाते र्मध्ये यिरूशालेमे मम बाल्यकालमारभ्य
५ प्रदर्शितमाचारव्यवहारं सर्व्वयिहूदिनो जानन्ति, प्रथमान्मम परिच-
यप्राप्तत्वाच्च यदीच्छन्ति तर्हीदं साक्ष्यं दातुं शक्नुवन्ति, यदस्मदीय-
धर्म्मतस्य सूक्ष्मतमं पक्षमवलम्ब्याहं फरीशी भूत्वा जीवनमयापयम्,
६ अस्मत्पूर्व्वपुरुषान् प्रतीश्वरेण कृतमङ्गीकारमधि वाद्य ममात्र तिष्ठतो
७ विचारः क्रियते। तस्यैवाङ्गीकारस्य फलं प्राप्स्याम इत्याशयास्मदीय-
द्वादशवंशानां साकल्यं दिवानिशमेकाग्रामाराधनां करोति। भो
राजन्नाग्रिपा, तस्या एवाशायाः कारणाद् यिहूदिभि र्ममाभियोगः

क्रियते। ईश्वरेण मृतानामुत्थापनं भवतु किं विश्वासस्यायोग्यं ८
मन्यते? भवतु, मया हि नासरतीययीशोर्नाम्नो विरुद्धं बहुविधं ९
प्रतिकूलाचरणं कर्त्तव्यमिति निरचायि। अहञ्च यिरूशालेमे तदेव १०
कृतवान्, मुख्ययाजकेभ्यश्चाधिकारं लब्ध्वा पवित्राणां बहून् कारा-
गृहेषु बद्धवांस्तेषां हत्याकाले स्वसम्मतिं ज्ञापितवांश्च। सर्व्वेषु ११
समाजगृहेष्वहं भूयो भूयस्तेषां शासनं कुर्व्वंस्तान् धर्म्मनिन्दामकारयं।
तेषु सातिशयमुन्मत्तो भूत्वा च विदेशीयनगराणि यावत्, तान-
पीडयम्। इत्थमेकदा मुख्ययाजकेभ्योऽधिकारं प्रतिभूत्वञ्च लब्ध्वाहं १२
यदा दम्मेषकमगच्छं तदा, भो राजन्, मार्गे मध्याह्नकाले सूर्य्यस्य १३
तेजसोऽपि प्रखरतरा दीप्तिः स्वर्गादवरुह्य मम मदीयसहपथिका-
नाञ्च परितो विराजतीति मयादर्शि, सर्व्वेष्वस्मासु भूमौ पतितेषु १४
च मामालपन्त्येका वाणी मयाश्रावि, सा वाणीब्रीयभाषया मां
सम्बोधयन्त्यब्रवीत्, शौल शौल किमर्थं मां पीडयसि? कण्टकेषु १५
पादाहननं तव दुःसाध्यमिति, तदाहमवादिषं, को भवान्? प्रभो।
स व्याजहार, अहं स यीशु र्यस्त्वया पीड्यते। त्वमुत्तिष्ठ स्वचर- १६
णयोरेव तिष्ठ च, यतस्तुभ्यमेतदर्थं दर्शनं दत्तवानस्मि, त्वं यद्यद्
दृष्टवान् येषु विषयेष्वहं तुभ्यं दर्शनं दास्यामि च, तत्र त्वां भृत्यं
साक्षिणञ्च कृत्वाधिकरिष्यामि। स्वजातीयेभ्यः परजातीयेभ्यश्च मनु- १७
ष्येभ्यस्त्वबोद्धर्त्ता सन्नहमिदानीमेतदर्थं तेषां समीपं त्वां प्रहिणोमि
च, यत् त्वयोद्घाटितेषु तेषां नेत्रेषु ते तिमिराद् दीप्तिं प्रति १८
शैतानस्य कर्तृत्वाच्चेश्वरं प्रति परावृत्य मयि विश्वसनेन पापक्षमां
पवित्रीकृतानां मध्येऽधिकारञ्चांशञ्च लप्स्यन्त इति। अतो भो राज- १९
न्नाग्रिपा, अहं तस्य स्वर्गीयदर्शनस्याज्ञालङ्घी नाभवम् अपि तु प्रथमं २०
दम्मेषकनिवासिषु ततः परं यिरूशालेमनिवासिषु यिहूदियायाः

कृत्स्नं जनपदञ्च यावत् परजातीनां मध्ये च मनुष्यानिदमाज्ञापयं यत्
तैरनुतापः कर्त्तव्यं ईश्वरं प्रति मनांसि परावर्त्तयितव्यान्यनुतापोपयु-
२१ क्तानि कर्म्माणि च कर्त्तव्यानीति। एतत्कारणाद् यिहूदिनो धर्म्मधाम्नि
२२ मां धृत्वा व्यापादयितुम् उपचक्रमिरे। ईश्वरात्तु साहाय्यं प्राप्याहमद्य
यावत् स्थिरः सन् क्षुद्रेभ्यो महद्भ्यश्च साक्ष्यं ददामि, नान्यत् किमपि
तु व्याहरन् केवलं भाववादिभि र्मूसिना चोक्ता भाविकथा इमा
२३ वदामि, यत् ख्रीष्टः दुःखभोगस्य भाजनं, यत् प्रथमः स ईश्वरस्य प्रजायै
परजातिभ्यश्च मृतानां पुनरुत्थानेन दीप्तेः संवादं दातुं नियुक्त इति।
२४ पौलस्यैमं प्रतिवादं श्रुत्वा फीष्टः, प्रोच्चैरवादीत्, उन्मत्तोऽपि
२५ पौल, बहुविद्याभ्यासस्त्वाम् उन्मादं नयतीति। स त्वाह, भो महा-
महिम फीष्ट, नाहमुन्मत्तोऽपि तु सत्यस्य सुबोधस्य च कथा व्याह-
२६ रामि। राजा हि सर्व्वमेतदभिजानाति तमेवोद्दिश्य चाहं निर्भय-
तरं भाषे। यतो मन्ये, कथानामेतासां मध्ये तस्याविदिता कापि
२७ नास्ति, यतो नैव कोणे वृत्तमेतत्। भो राजन्नाग्रिपा भवान् किं
२८ भाववादिषु विश्वसिति? जानेऽहं यद् भवान् विश्वसिति। अनेना-
ग्रिपाः पौलमाह, स्वल्पायासेन मां ख्रीष्टीयानं भवितुं प्रवर्त्तयसि।
२९ पौलस्तु व्याजहार, ईश्वरमिदं प्रार्थये यत् स्वल्पेन वा महता वाया-
सेन न केवलो भवान् अपि तु यावन्तोऽद्य मम कथां शृण्वन्ति ते
सर्व्वे भवन्तोऽपि मत्तुल्या भवन्तु शृङ्खलानीमान्यपहायेति।
३० समाप्तायां तस्य कथायां देशाध्यक्षो राजा वर्णीकी च तैः
३१ सार्द्धमासीना नराश्च उत्तस्थुः स्थानान्तरं गत्वा च मिथः सम्भाष-
माणा अवदन्। नरोऽयं वधार्हं बन्धनार्हं वा किमपि न करोति
३२ स्म। आग्रिपाश्च फीष्टमाह, नरोऽयं चेत् कैसरं विचारं न प्रार्थ-
यिष्यत तर्हीतः पूर्व्वमपि मोचनं प्राप्तुमशक्ष्यत्।

पौलस्य रोमे गमनम् सुसमाचारप्रचारश्च ।

यदा तु समुद्रमार्गेणास्माकमितालियादेशमुद्दिश्य यात्रा २७ १
कर्त्तव्या प्रत्यभात् तदा पौलोऽन्ये केचिच्छृङ्खलबद्धा मनुष्याश्च राजा-
धिराजीयस्य सैन्यदलस्य यूलियनाम्नि शतपतौ समर्पयाञ्चक्रिरे,
वयञ्चाशियादेशस्योपकूलस्य स्थानानि गमिष्यन्तमाद्रामुत्तीयं पोत- २
मेकमारुह्य प्रतस्थिमहे। माकिदनियास्थथिषलनीकीनिवास्यारिष्टा-
र्खोऽप्यस्माभिः सार्द्धमासीत्। परदिने सीदोन्युपस्थायास्मासु विलम्ब- ३
मानेषु यूलियः पौलं प्रति सौजन्यं प्रदर्शयन् बन्धूनां समीपं तस्य
गमनं शुश्रूषासेवनञ्चानुयज्ञे। पुनस्ततः प्रस्थाय वयं वायूनां प्राति- ४
कूल्यात् कुप्रदीपस्य नैकट्येनागच्छाम। ततः परं किलिकियापा- ५
म्फुलियादेशयोः समीपस्थं समुद्रं तरित्वा लुकियादेशस्थां मुरा-
माजगाम। तत्र शतपतिरितालियां गन्तुमुद्यतं सिकन्दरियानगरी- ६
यमेकं पोतमासाद्यास्मांस्तमेवारोहयामास।

अनन्तरं बहुदिवसान् शनैः शनैर्गच्छन्तो महायासेन क्नीदस्य ७
सम्मुखमुपातिष्ठामहि, तत्स्थानं गमनात् तु वायुना निवारिताः सन्तः
साल्मोनीनिकटस्थे क्रीतीद्दीपस्योपकूल उपातिष्ठामहि। अनन्तरं ८
महायासेन तस्याः साल्मोन्याः समीपेनाग्रसरं भूत्वा सुन्दरपोता-
श्रयनामकमेकं स्थानं प्राप्नुम। लासेयापुरी तस्य निकटस्था। इत्थं ९
महाविलम्बे जाते तदा चाश्विनमासीयोपवासकालस्यातीतत्वात्
समुद्रयात्रायां सशङ्कीभूतायां पौलस्तान् प्रवर्त्तयन्नवादीत्, महेच्छाः १०
पश्यामि यत् समुद्रयात्रायां विपत्ति र्महाक्षतिश्च सम्भविष्यति, न
केवलं भारस्य पोतस्य च किन्त्वस्मत्प्राणानामपीति। शतपतिस्तु ११
पौलस्य कथाभ्यः कर्णधारस्य पोतस्वामिनश्च कथास्वधिकं व्यश्वसत्
अपि च स पोताश्रयः शीतकालयापनेऽनुपयोग्यासीत्, ततो हेतो- १२

रधिका नराः तस्मात् स्थानादपि प्रस्थातुं यदि शक्यं भवेत् तर्हि
फैनिकं गत्वा तत्र शीतकालं यापयितुं मतिमकार्षुः. तत् फैनिकं
क्रीत्याः पोताश्रयः, मुखात् तस्य तोयं दक्षिणपश्चिमदिशमुत्तर-
१३ पश्चिमदिशञ्च प्रति विस्तीर्णं दृश्यते। अनन्तरं दक्षिणसमीरणे वह-
माने ते स्वान् कृतार्थान् मत्वा पोतं मोचयित्वा क्रीत्याः समीपेना-
१४ गच्छन्। अनधिककालात्तु परं तस्यास्तटेनावरोहमाणोरक्लुदोननाम्नी
१५ वात्योत्पेदे। तयाक्रान्तः पोतो वायोरभिमुखः स्थातुं न शशाक, वयञ्च
१६ न प्रतिरुध्यावहामहे। ततः परं क्लौदानाम्नः क्षुद्रस्य द्वीपस्य निकटं
१७ गत्वा महतायासेन पोतस्य क्षुद्रां नौकां ग्रहीतुमशक्नुम। तान्तु
पोतस्योपरि गृहीत्वा नाविका रज्ज्वादिभिरुपायैः पोतस्याधोभागं
दृढीकर्त्तुमयतन्त। अनन्तरं सूर्त्तिनाम्नि सैकते बाधा सम्भविष्यतीति
१८ भयात् ते पोतस्य कूपकमवरोह्यावहन्त। अनन्तरं वात्ययास्मास्वात्य-
न्तिकं क्लिश्यमानेषु ते परस्मिन् दिने कतिपयद्रव्याणि समुद्रे क्षिक्षिपु-
१९ स्तृतीये दिने च स्वहस्तैः पोतस्य सज्जां निक्षिक्षिपुः। ततः परं कियन्ति
२० दिनानि यावत् न सूर्य्यस्य नक्षत्राणां वा प्रकाशे जाते महावात्या-
याञ्च प्रबलीभूतायां ततः प्रभृत्यस्माकं रक्षायाः समस्ताशापहारि।
२१ तदा गुरुतरेऽनाहारले जाते पौलो जनानां मध्ये तिष्ठन्
व्याजहार, महेच्छाः, भवन्तो मम मन्त्रणां गृहीत्वा चेत् क्रीतीतो
न प्रस्थाय विपत्तिक्षतीमे न प्राप्स्यंस्तर्हि तद् युक्तमभविष्यत्।
२२ इदानीन्तु भवन्त आश्वसितुमर्हथ, यतो भवतां कस्यापि प्राणानां
२३ हानि र्न भविष्यति, केवलं पोतस्य। यतोऽहं यस्यास्मि यस्य सेवां
करोमि च, तस्येश्वरस्यैको दूतो गतनिशायां मामुपस्थाय गदित-
२४ वान्, मा भैषीः, पौल, यतः कैसरस्य समक्षं त्वयोपस्थातव्यं। पश्य
२५ च, पोतस्थास्तव सर्व्वे सङ्गिन ईश्वरेण तुभ्यं दत्ताः। अतो महेच्छा

आश्वसन्तु, यतोऽहमीश्वरे विश्वसिमि, यदहं यदुक्तस्तदेव सम्भविष्यति।
अपि त्वस्माभिः कस्मिंश्चिद् द्वीपे पतितव्यमिति। २६

आद्रियाख्ये समुद्र इतस्ततो वहमानानामस्माकं चतुर्द्दशायां २७
निशायामुपस्थितायां .मध्यरात्रे पोतवाहकैरनुमीयत, यत् किमपि
स्थलं तेषां समीपवर्त्ति भवति। अतस्तोयं परिमाय विंशति व्यामास्ते २८
निर्णीताः। किञ्चिद्दूरं गत्वा च पुनः परिमाय पञ्चदश व्यामा
निर्णीताः। अतः पाषाणमयेषु स्थानेषु पतनभयात् ते पोतस्य पश्चा- २९
द्भागाच्चतुरः पोतभुजानवरोह्य दिवसारम्भं प्रार्थयन्त। तदा पोत- ३०
वाहेषु पोतात् पलायितुमिच्छतो मङ्गात् पोतभुजप्रसारणं छलं
कृत्वा क्षुद्रां नौकां समुद्रेऽवरोहितवत्सु पौलः शतपतिं योद्धॄंश्चा- ३१
वादीत्, इमे चेत् पोते नावतिष्ठन्ते तर्हि यूयं रक्षां प्राप्तुं न शक्नुथ।
योद्धारस्तदा नौकाया रज्जूश्छित्त्वा तस्या निपतनमनुजज्ञिरे। ३२
दिनारम्भस्य प्रतीक्षाकाले च पौलः सविनयं सर्व्वान् खाद्यानि भोक्तु- ३३
मादिशन्नवादीत्, चतुर्द्दशदिनानि प्रतीक्ष्य यूयमनाहारं कालं याप-
यन्तः किमपि न भुक्तवन्तः। अतोऽहं सविनयं ब्रवीमि, यूयं भक्ष्यं ३४
गृहीतुमर्हथ, तद्धि युष्माकं रक्षार्थमुपकारि। यतो युष्माकं कस्यापि
शिरसः केशो न पतिष्यति। इदमुक्त्वा स पूपमादाय सर्व्वेषां समक्ष- ३५
मीश्वरं धन्यं जगाद भङ्क्त्वा च भोक्तुमारेभे। तदा सर्व्वेषामाश्वासे ३६
जाते तेऽपि भक्ष्यमग्रहीषुः। तस्मिन् पोते वयं साकल्येन षट्सप्त- ३७
त्यधिकशतद्वयं प्राणिन आस्म। भक्षेण तृप्तिं प्राप्य ते गोधूमान् ३८
समुद्रे निक्षिपन्तः पोतं लघुतरमकार्षुः।

अनन्तरं दिने जाते ते तत् स्थलं नाभ्यजानन् वङ्कन्त्वेकन्तु ३९
समानतटविशिष्टमखातं यदि शक्नुमस्तर्हि पोतं प्रेरयन्तस्तं तट-
मारोहयाम इति मन्त्रणामकुर्व्वंश्च। अतएव ते पोतभुजांश्छित्त्वा ४०

समुद्रे पतितुं ददुः, युगपच्च कर्णयो र्बन्धनानि मुक्त्वा वायोः सम्मुख-
मग्रभागस्थं वातवसनं विस्तार्य्य तं समानं तटमुद्दिश्य पोतमचालयन्।
४१ द्विसमुद्रं स्थानं तु प्राप्य पोतं सैकतोपर्य्यप्रेरयन्। मङ्गस्तत्र निबद्धो
४२ निश्चलोऽतिष्ठत्, पश्चाद्भागस्तूर्म्मीणां प्रभावेण व्यलीयत। तदा योद्धृ-
णामियं मन्त्रणाजायत, यद् वन्दिनोऽस्माभि र्हन्तव्याः, नचेत् कोऽपि
४३ सन्तरणेन पलायिष्यत इति। शतपतिस्तु पौलं रक्षितुमिच्छन्
तन्मन्त्रणासाधनात् तान् निवर्त्तयन्निदमाज्ञापयामास, ये सन्तरणे
४४ सक्षमाः प्रथमं ते जले निपत्य स्थलं गच्छन्तु, अपरे तु केऽपि काष्ठ-
फलकानि केऽपि वा पोतात् पतितं किमपि वस्त्ववलम्ब्य यान्तु।
इत्थमेव च सर्व्वे रक्षिताः स्थलं प्रापुः।

२८ १ रक्षाप्राप्तेः परमस्माभिरज्ञायि यत् तस्य द्वीपस्य नाम
२ मिलितेति। तत्रत्या असभ्यजाते र्जनास्तास्मान् प्रत्यसामान्यं सौजन्यं
प्रदर्शयामासुः। फलतो वर्त्तमानाया वृष्टेः शीतस्य च हेतोरिन्धन-
३ राशिं प्रज्वाल्य सर्व्वानस्मान् अनुजगृहुः। तदा पौले बहून् लता-
खण्डान् सङ्गृह्येन्धनराशौ निक्षिप्तवति विषधर एकस्तापान्निर्गत्य तस्य
४ हस्तं दष्ट्वावलम्बितोऽतिष्ठत्। तेऽसभ्यजना यदा तं जन्तुं तस्य हस्ते
लम्बमानमपश्यंस्तदा मिथोऽब्रुवन् सर्व्वथा नरहन्तायं मनुष्यो यतः
समुद्राद् रक्षितस्यापि तस्य जीवनं प्रतिफलदात्रा नानुज्ञायते।
५ परन्तु स तं जन्तुमवधूय वह्नौ निक्षिप्य चानिष्टं किमपि न बुभुजे।
६ ते तु प्रतीक्षमाणा अमन्यत यत् स धक्ष्यते सहसा गतायु र्निपति-
ष्यति वेति। इत्थं दीर्घकालं प्रतीक्ष्य यदा तेऽपश्यन् यत् तस्य
किमप्यशुभं न सम्भवति तदा मतान्तरं कृत्वावदन् स देव इति।
७ तस्य स्थानस्य सन्निधौ द्वीपस्य प्रथमनरस्य भूम्यधिकारोऽवि-
द्यत। तस्य नाम पुब्लियः, सोऽस्माननुगृह्य दिनत्रयं यावत् प्रणये-

नास्माकमातिथ्यमकार्षीत्। तदा च पुब्लियस्य पिता ज्वरातिसारेण ८
पीडितः शय्यागतश्चासीत्। ततः पौलस्तस्यान्तिकमभ्यन्तरं गत्वा
प्रार्थनां हस्तार्पणञ्च कृत्वा तं रोगमुक्तमकार्षीत्। तथा सति तस्मिन् ९
द्वीपेऽपरे ये मनुष्या व्याधियुक्ता आसंस्ते सर्व्वेऽप्यागत्यारोगीकृताः।
ते हि बहुविधेन सम्मानेनास्मान् सम्मानयामासुः प्रस्थानकाले च १०
यद्यत् प्रयोज्यं तदस्मास्वर्पयामासुः।

तस्मिन् द्वीपे सिकन्दरीय एकः पोतः शीतकालमयापयत् तस्य ११
चिह्नमश्विनौ। मासत्रयेऽतीते वयं तमेव पोतमारुह्य प्रस्थिताः। १२
अनन्तरं सुराकूषीं प्राप्य दिनत्रयमवतस्थिमहे। ततश्च वक्रमार्गेण १३
वयं रीगियं प्राप्ताः। पुनरेकस्माद् दिवसात् परं दक्षिणवायौ
सञ्जाते वयं द्वितीये दिने पुतियल्यामुपतस्थिमहे। तत्र भ्रातृगणा- १४
साद्य वयं तेषां समीपं सप्तदिनान्यवस्थातुमाश्वासिताः। इत्थमेव
रोमायामुपतस्थिमहे। अस्माकं संवादं श्रुत्वा तु तत्रत्या भ्रातरो- १५
ऽस्मत्प्रत्युद्गमनार्थमाप्पियफरं त्रिष्टावर्णीञ्च यावद् आगतवन्तः। तान्
दृष्ट्वा पौल ईश्वरं धन्यं वदित्वाश्वासं लब्धवान्।

रोमायान्तूपस्थितेष्वस्मासु शतपति र्वन्दिजनान् स्कन्धावाराधि- १६
पतौ समर्पयामास। पौलस्तु स्वरक्षकेण पदातिना सार्द्धं स्वतन्त्रं
वस्तुमनुजज्ञे।

दिनत्रयात् परं पौलो यिहूदिनां मुख्यनरान् समाहाययामास। १७
समागतेषु च तेषु तान् अवादीत्, भो भ्रातरः अस्मदीयजातेः
पैतृकरीतीनां वा विरुद्धं मया किमपि नाकारि, तथाप्यहं शृङ्खल-
बद्धो यिरूशालेमे रोमीयाणां हस्ते समर्पितः। ते च विचारं कृत्वा १८
मां विस्रष्टुमैच्छन्, यतः प्राणदण्डार्हः कोऽपि दोषो मयि नावि-
द्यत। प्रतिवदमानेषु तु यिहूदिषु कैसरेण विचारस्य प्रार्थनं ममा- १९

वश्यकमभूत्, नास्ति तु स्वजाते विरुद्धं मया कर्त्तव्यः कोऽप्यभि-
२० योगः। अतस्तमेव विवादमधि युष्मान् द्रष्टुमालपितुञ्चेच्छन्नहं युष्मान्
आह्वतवान्, यत इस्रायेलस्य प्रत्याशायाः कारणादहं शृङ्खलेनानेन
२१ वेष्टितः। तदा ते तमूचुः, त्वामधि यिहूदियादेशाद् वयं पत्रिकां
न लब्धवन्तः, न वा भ्रातॄणां कोऽप्यागत्य तव कस्यापि दोषस्य
२२ संवादमानीतवान् कथां वा कथितवान्। तव तु मतं किं तत्
तवैव मुखाच्छ्रोतुमस्माभ्यं युक्तं मन्यते, यतस्तं सम्प्रदायमधि जानीमो
२३ यत् सर्व्वत्र तत्प्रतिकूलं कथ्यते। अतस्तैस्तस्य कृते दिवसे निश्चिते-
ऽधिकतराः पान्थशालां तस्यान्तिकमाजग्मुः, स च प्रातरारभ्य सन्ध्यां
यावत् साक्ष्यं दत्त्वा तान् ईश्वरराज्यस्य व्याख्यामबोधयत्, मोशे
र्व्यवस्थातो भाववादिनां ग्रन्थेभ्यश्चोद्धृता यीशोः कथा ग्रहीतुं प्राव-
२४ र्त्तयच्च। तदा केऽपि तस्य वाक्यानि जगृहुः केऽपि च तत्र न
२५ विशश्वसुः। शेषे ते परस्परमनैक्यमत्याः व्यसृज्यन्त। पौलस्तु तानि-
मामेकां वाणीमुक्तवान्, पवित्र आत्मा भाववादिना यिशायाहेन
युष्माकं पूर्व्वपुरुषानधि सम्यगिदं कथितवान्,

२६ जातेरस्याः समीपं त्वं गत्वा ब्रूहि कथामिमां।
श्रोष्यथ श्रवणेनैव किन्तु नानुभविष्यथ।
तथा द्रक्ष्यथ दृष्ट्या हि नैव लालक्षयिष्यथ॥

२७ स्थूलीभूतं मनुष्याणाम् एतेषां हृदयं यतः।
मन्दं शृण्वन्ति ते कर्णैः स्वनेत्रे मीलयन्ति च॥

न चेत् ते लोचनै र्दृष्ट्वा स्वकर्णै र्विनिशम्य च।
बोधं लब्ध्वा स्वचित्तैश्चावर्त्तयन्ति मनो यदि।
तर्हि तैर्मत्त आरोग्यं ग्रहीतव्यं भविष्यति॥

अतो युष्माभिरिदं ज्ञायतां यदीश्वरस्य परित्राणोपायः परजाती- २८
यानां समीपं प्रहितं ते च श्रोष्यन्तीति। तस्मिन्नेतत् कथितवति २९
यिहूदिनो मिथो भृशं विवदमानाः प्रतस्थिरे।

अनन्तरं पौलः सम्पूर्णं वर्षद्वयं भाटकीये गृहेऽवसत्, यावन्तश्च ३०
मनुष्यास्तत्र तमभ्यगच्छंस्ताम् परिगृह्य बाधां विना सम्पूर्णोत्साहेने- ३१
श्वरस्य राज्यमघोषयत् प्रभो यीशोः ख्रीष्टस्य कथाश्चाशिक्षयत्।

इति॥

# रोमिणः प्रति प्रेरितस्य पौलस्य पत्रं।

मङ्गलाचरणम् आभाषञ्च।

१ १ ईश्वरो निजपुत्त्रमधि यं सुसंवादं भाववादिभि र्धर्म्मग्रन्थे प्रति-
श्रुतवान् तं सुसंवादं प्रचारयितुं पृथक्कृत आहूतः प्रेरितश्च प्रभो
२ र्यीशुख्रीष्टस्य दासो यः पौलः स रोमानगरस्थान् ईश्वरप्रियान्
३ आहूतांश्च पवित्रलोकान् प्रति पत्रं लिखति। अस्माकं स प्रभु र्यीशुः
४ ख्रीष्टः शारीरिकसम्बन्धेन दायूदो वंशोद्भवः पवित्रस्यात्मनः सम्बन्धेन
चेश्वरस्य प्रभाववान् पुत्त्र इति श्मशानात् तस्योत्थानेन प्रतिपन्नं।
५ अपरं येषां मध्ये यीशुना ख्रीष्टेन यूयमप्याहूतास्ते ऽन्यदेशीयलोका-
६ स्तस्य नाम्नि विश्वस्य निदेशग्राहिणो यथा भवन्ति तदभिप्रायेण वयं
७ तस्माद् अनुग्रहं प्रेरितत्वपदञ्च प्राप्ताः। तातेनास्माकम् ईश्वरेण
प्रभुणा यीशुख्रीष्टेन च युष्मभ्यम् अनुग्रहः शान्तिश्च प्रदीयेतां।
८ प्रथमतः सर्व्वस्मिन् जगति युष्माकं विश्वासस्य प्रकाशितत्वाद् अहं
युष्माकं सर्व्वेषां निमित्तं यीशुख्रीष्टस्य नाम गृह्लन् ईश्वरस्य धन्यवादं
९ करोमि। अपरम् ईश्वरस्य प्रसादाद् बहुकालात् परं साम्प्रतं युष्माकं
समीपं यातुं कथमपि यत् सुयोगं प्राप्नोमि, एतदर्थं निरन्तरं
युष्माकं नामान्युच्चारयन् निजासु सर्व्वप्रार्थनासु सर्व्वदा निवेदयामि,
१० एतस्मिन् यमहं तत्पुत्त्रीयसुसंवादप्रचारणेन मनसा परिचरामि स
११ ईश्वरो मम साक्षी विद्यते। यतो युष्माकं मम च विश्वासेन वयम्
१२ उभये यथा शान्तियुक्ता भवाम इति कारणाद् युष्माकं स्थैर्य्यकरणार्थं
युष्मभ्यं किञ्चित्परमार्थदानदानाय युष्मान् साक्षात् कर्त्तुं मदीया
१३ वाञ्छा। हे भ्रातृगण भिन्नदेशीयलोकानां मध्ये यद्वत् तद्वद् युष्माकं

मध्येऽपि यथा फलं भुङ्क्ते तदभिप्रायेण मुहुर्मुहु र्युष्माकं समीपं
गन्तुम् उद्यतोऽहं किन्तु यावद् अद्य तस्मिन् गमने मम विघ्नो
जात इति यूयं यद् अज्ञातास्तिष्ठथ तदहम् उचितं न बुध्ये।
अहं सभ्यासभ्यानां विद्वदविद्वताञ्च सर्व्वेषाम् ऋणी विद्ये। १४
अतएव रोमानिवासिनां युष्माकं समीपेऽपि यथाशक्ति सुसंवादं १५
प्रचारयितुम् अहम् उद्यतोऽस्मि। यतः ख्रीष्टस्य सुसंवादो मम १६
लज्जास्पदं नहि स ईश्वरस्य शक्तिस्वरूपः सन् आयिहूदीयेभ्यो ऽन्य-
जातीयान् यावत् सर्व्वजातीयानां मध्ये यः कश्चिद् तत्र विश्वसिति
तस्यैव त्राणं जनयति। यतः विश्वासस्य समपरिमाणम् ईश्वरस्य १७
धार्म्मिकता तत्सुसंवादे प्रकाशते। तदधि धर्म्मपुस्तकेऽपि लिखित-
मिदं धार्म्मिको जनो विश्वासेन जीविष्यति।

### यीशुख्रीष्टेनैव धार्म्मिकतालाभ।

#### प्रतिमापूजकानां पापावस्थायाः कथनम्।

फलतो ये मानवाः पापकर्म्मणा सत्यतां रुन्धन्ति तेषां सर्व्वस्य १८
दुराचरणस्याधर्म्मस्य च विरुद्धं स्वर्गाद् ईश्वरस्य कोपः प्रकाशते। यत १९
ईश्वरमधि यद्यद् ज्ञेयं तद् ईश्वरः स्वयं तान् प्रति प्रकाशितवान्
तस्मात् तेषाम् अगोचरं नहि। फलतस्तस्यानन्तशक्तीश्वरत्वादीन्य- २०
दृश्यान्यपि सृष्टिकालम् आरभ्य कर्म्मसु प्रकाशमानानि दृश्यन्ते
तस्मात् तेषां दोषप्रक्षालनस्य पन्था नास्ति। अपरम् ईश्वरं ज्ञात्वापि २१
ते तम् ईश्वरज्ञानेन नाद्रियन्त कृतज्ञा वा न जाताः; तस्मात् तेषां
सर्व्वे तर्का विफलीभूताः, अपरञ्च तेषां संवेदशून्यानि मनांसि
तिमिरे मग्नानि। ते स्वान् ज्ञानिनो ज्ञात्वा ज्ञानहीना अभवन् २२
अनश्वरस्येश्वरस्य गौरवं विहाय नश्वरमनुष्यपशुपक्ष्युरोगामिप्रभृते- २३
राकृतिविशिष्टप्रतिमास्तेराश्रिताः।

२४ इत्थं त ईश्वरस्य सत्यतां विहाय मृषामतम् आश्रितवन्तः
सच्चिदानन्दं सृष्टिकर्त्तारं त्यक्त्वा सृष्टवस्तुनः पूजां सेवाञ्च कृतवन्तः;
२५ इति हेतोरीश्वरस्तान् कुक्रियायां समर्प्य निजनिजकुचिन्ताभिला-
२६ षाभ्यां स्वं स्वं शरीरं परस्परम् अपमानितं कर्त्तुम् अददात्। ईश्व-
रेण तेषु क्वभिलाषे समर्पितेषु तेषां योषितः स्वाभाविकाचरणम्
२७ अपहाय विपरीतकृत्ये प्रावर्त्तन्त; तथा पुरुषा अपि स्वाभाविक-
योषित्सङ्गमं विहाय परस्परं कामकृशानुना दग्धाः सन्तः पुमांसः
पुंभिः साकं कुकृत्ये समासज्य निजनिजभ्रान्तेः समुचितं फलम्
२८ अलभन्त। ते स्वेषां मनःस्वीश्वराय स्थानं दातुम् अनिच्छुकास्ततो
हेतोरीश्वरस्तान् प्रति दुष्टमनस्कत्वम् अविहितक्रियत्वञ्च दत्तवान्।
२९ अतएव ते सर्व्वे ऽन्यायो व्यभिचारो दुष्टत्वं लोभो जिघांसा ईर्ष्या
वधो विवादश्चातुरी कुमतिरित्यादिभि र्दुष्कर्म्मभिः परिपूर्णाः सन्तः
३० कर्णेजपा अपवादिन ईश्वरद्वेषका हिंसका अहङ्कारिण आत्मश्लाघिनः
३१ कुकर्म्मोत्पादकाः पित्रोराज्ञालङ्घका अविचारका नियमलङ्घिनः स्नेह-
३२ रहिता अतिद्वेषिणो निर्दयाश्च जाताः। ये जना एतादृशं कर्म्म
कुर्व्वन्ति त एव मृतियोग्या ईश्वरस्य विचारमीदृशं ज्ञात्वापि त
एतादृशं कर्म्म स्वयं कुर्व्वन्ति केवलमिति नहि किन्तु तादृशकर्म्म-
कारिषु लोकेष्वपि प्रीयन्ते।

पापेन यिहूद्यादीनां सर्व्वमनुष्याणां दण्डनीयत्वस्य कथनम्।

२ १ हे परदूषक मनुष्य, यः कश्चन त्वं भवसि तवोत्तरदानाय
पन्था नास्ति यतो यस्मात् कर्म्मणः परस्त्वया दूष्यते तस्मात् त्वमपि
२ दूष्यसे, यतस्तं दूषयन्नपि त्वं तद्वद् आचरसि। किन्त्वेतादृगाचारिभ्यो
३ यं दण्डम् ईश्वरो निश्चिनोति स यथार्थ इति वयं जानीमः। अत-
एव हे मानुष, त्वं यादृगाचारिणो दूषयसि स्वयं यदि तादृगाच-

रसि तर्हि त्वम् ईश्वरदण्डात् पलायितुं शक्ष्यसीति किं बुध्यसे?
अपरं तव मनसः परिवर्त्तनं कर्त्तुम् ईश्वरस्यानुग्रहो भवति तत् ४
बुद्ध्वा त्वं किं तदीयानुग्रहक्षमाचिरसहिष्णुत्वनिधिं तुच्छीकरोषि?
तथा स्वान्तःकरणस्य कठोरत्वात् खेदराहित्याच्चेश्वरस्य न्याय्यविचार- ५
प्रकाशनस्य क्रोधस्य च दिनं यावत् किं स्वार्थं कोपं सञ्चिनोषि?
किन्तु स एकैकमनुजाय तत्कर्म्मानुसारेण प्रतिफलं दास्यति; ६
वस्तुतस्तु ये जना धैर्य्यं धृत्वा सत्कर्म्म कुर्व्वन्तो महिमा सत्कारोऽम- ७
रत्वञ्चैतानि मृगयन्ते तेभ्योऽनन्तजीवनं दास्यति। अपरं ये जनाः ८
सत्यधर्म्मम् अगृहीत्वा विपरीतधर्म्मम् गृह्णन्ति तादृशा विरोधिजनाः
कोपं क्रोधञ्च भोक्ष्यन्ते। आ यिहूदिनो यूनानीयान् पर्य्यन्तं यावन्तः ९
कुकर्म्मकारिणः प्राणिनः सन्ति ते सर्व्वे दुःखं यातनाञ्च गमिष्यन्ति;
किन्तु आ यिहूदिनो यूनानीयपर्य्यन्ता यावन्तः सत्कर्म्मकारिणो १०
लोकाः सन्ति तान् प्रति महिमा सत्कारः शान्तिश्च भविष्यन्ति।

ईश्वरस्य विचारे पक्षपातो नास्ति। अलब्धव्यवस्थाशास्त्रै र्यैः ११
पापानि कृतानि व्यवस्थाशास्त्रालब्धत्वानुरूपस्तेषां विनाशो भवि- १२
ष्यति; किन्तु लब्धव्यवस्थाशास्त्रा ये पापान्यकुर्व्वन् व्यवस्थानुसारादेव
तेषां विचारो भविष्यति। व्यवस्थाश्रोतार ईश्वरस्य समीपे धार्म्मिका १३
भविष्यन्तीति नहि किन्तु व्यवस्थाचारिण एव धार्म्मिकीकरिष्यन्ते।
यतो ऽलब्धव्यवस्थाशास्त्रा परजातीयलोका यदि स्वभावतो व्यवस्था- १४
नुरूपान् आचारान् कुर्व्वन्ति तर्ह्यलब्धशास्त्राः सन्तोऽपि ते स्वेषां
व्यवस्थाशास्त्रमिव स्वयमेव भवन्ति। तेषां मनसि साक्षिस्वरूपे सति १५
तेषां वितर्केषु च कदा तान् दोषिणः कदा वा निर्दोषान् कृतवत्सु
ते स्वान्तर्लिखितस्य व्यवस्थाशास्त्रस्य प्रमाणं स्वयमेव ददति। यस्मिन् १६
दिने मया प्रकाशितस्य सुसंवादस्यानुसाराद् ईश्वरो यीशुख्रीष्टेन

मानुषाणाम् अन्तःकरणानां गूढाभिप्रायान् धृत्वा विचारयिष्यति
तस्मिन् विचारदिने तत् प्रकाशिष्यते।
१७ पश्य त्वं स्वयं यिहूदीति विख्यातो व्यवस्थोपरि विश्वासं करोषि,
१८ ईश्वरमुद्दिश्य स्वं श्लाघसे, तथा व्यवस्थया शिक्षितो भूत्वा तस्याभि-
१९ मतं जानासि, सर्व्वासां कथानां सारं विविंक्षे, अपरं ज्ञानस्य
सत्यतायाश्चाकारस्वरूपं शास्त्रं मम समीपे विद्यत अतो ऽन्धलोकानां
२० मार्गदर्शयिता तिमिरस्थितलोकानां मध्ये दीप्तिस्वरूपोऽज्ञानलोकेभ्यो
२१ ज्ञानदाता शिशूनां शिक्षयिताहमेवेति मन्यसे। परान् शिक्षयन्
स्वयं स्वं किं न शिक्षयसि? वस्तुतश्चौर्य्यनिषेधव्यवस्थां प्रचारयन् त्वं
२२ किं स्वयमेव चोरयसि? तथा परदारगमनं प्रतिषेधन् स्वयं किं
परदारान् गच्छसि? तथा त्वं स्वयं प्रतिमाद्वेषी सन् किं मन्दिरस्य
२३ द्रव्याणि हरसि? यस्त्वं व्यवस्थां श्लाघसे स त्वं किं व्यवस्थाम् अवमत्य
२४ नेश्वरं सम्मन्यसे? शास्त्रे यथा लिखति परजातीयानां समीपे
युष्माकं दोषाद् ईश्वरस्य नाम्नो निन्दा भवति।
२५ यदि व्यवस्थां पालयसि तर्हि तव त्वक्छेदक्रिया सफला
भवति; यदि व्यवस्थां लङ्घसे तर्हि तव त्वक्छेदोऽत्वक्छेदो भवि-
२६ ष्यति। यतो व्यवस्थाशास्त्रादिष्टधर्म्मकर्म्माचारी पुमान् अत्वक्छेदी
२७ सन्नपि किं त्वक्छेदिनां मध्ये न गणयिष्यते? किन्तु लब्धशास्त्र-
श्छिन्नत्वक् च त्वं यदि व्यवस्थालङ्घनं करोषि तर्हि व्यवस्थापालकाः
२८ स्वाभाविकाच्छिन्नत्वचो लोकास्त्वां किं न दूषयिष्यन्ति? तस्माद् यो
बाह्ये यिहूदी स यिहूदी नहि तथाङ्गस्य यस्त्वक्छेदः स त्वक्छेदो
२९ नहि; किन्तु यो जन आन्तरिको यिहूदी स एव यिहूदी अपरञ्च
केवललिखितया व्यवस्थया न किन्तु मानसिको यस्त्वक्छेदो यस्य च
प्रशंसा मनुष्येभ्यो न भूत्वा ईश्वराद् भवति स एव त्वक्छेदः।

अपरञ्च यिहूदिनः किं श्रेष्ठत्वं? तथा त्वक्छेदस्य वा किं फलं? ३ १
सर्व्वथा बहूनि फलानि सन्ति, विशेषत ईश्वरस्य शास्त्रं तेभ्योऽदीयत। २
केचिद् अविश्वसने कृते तेषाम् अविश्वसनात् किम् ईश्वरस्य विश्वास्य- ३
ताया हानिरुत्पत्स्यते? केनापि प्रकारेण नहि। यद्यपि सर्व्वे मनुष्या ४
मिथ्यावादिनस्तथापीश्वर, सत्यवादी। शास्त्रे यथा लिखितमास्ते,

अतस्त्वन्तु स्ववाक्येन निर्द्दोषो हि भविष्यसि।
विचारे चैव निष्पापो भविष्यसि न संशयः॥

अस्माकम् अन्यायेन यदीश्वरस्य न्यायः प्रकाशते तर्हि किं वदि- ५
ष्यामः? अहं मानुषाणां कथामिव कथां कथयामि, ईश्वरः समु-
चितं दण्डं दत्त्वा किम् अन्यायी भविष्यति? इत्थं न भवतु, तथा ६
सतीश्वरः कथं जगतो विचारयिता भविष्यति? मम मिथ्यावाक्य- ७
वदनाद् यदीश्वरस्य सत्यत्वेन तस्य महिमा वर्द्धते तर्हि कस्मादहं
विचारेऽपराधित्वेन गण्यो भवामि? मङ्गलार्थं पापमपि करणीय- ८
मिति वाक्यं त्वया कुतो नोच्यते? किन्तु यैरुच्यते ते नितान्तं
दण्डस्य पात्राणि भवन्ति; तथापि तद्वाक्यम् अस्माभिरप्युच्यत इत्य-
स्माकं ग्लानिं कुर्व्वन्तः कियन्तो लोका वदन्ति।

अन्यलोकेभ्यो वयं किं श्रेष्ठाः? कदाचन नहि यतो यिहूदिनो ९
यूनानीयाश्च सर्व्वएव पापस्यायत्ता इत्यस्य प्रमाणं वयं पूर्व्वम् अद-
दाम। लिपि र्यथास्ते, १०

'नैकोऽपि धार्म्मिको जनः।
तथा ज्ञानीश्वरज्ञानी मानवः कोऽपि नास्ति हि। ११
विमार्गगामिनः सर्व्वे सर्व्वे दुष्कर्म्मकारिणः। १२
एको जनोऽपि नो तेषां साधुकर्म्म करोति च।
तथा तेषान्तु वै कण्ठा अनावृतश्मशानवत्। १३

स्तुतिवादं प्रकुर्व्वन्ति जिह्वाभिस्ते तु केवलं।

१४ तेषामोष्ठस्य निम्ने तु विषं तिष्ठति सर्प्पवत्।

मुखं तेषां हि शापेन कपटेन च पूर्य्यते।

१५ रक्तपाताय तेषां तु पदानि क्षिप्रगानि च।

१६ पथि तेषां मनुष्याणां नाशः क्लेशश्च केवलः।

१७ ते जना नहि जानन्ति पन्थानं सुखदायिनं।

१८ परमेशाद् भयं यत्तत् तच्चक्षुषोरगोचरं।'

१९ व्यवस्थायां यद्यल्लिखति तद् व्यवस्थाधीनान् लोकान् उद्दिश्य लिखतीति वयं जानीमः। ततो मनुष्यमात्रो निरुत्तरः सन् ईश्व-
२० रस्य साक्षाद् अपराधी भवति। अतएव व्यवस्थानुरूपैः कर्म्मभिः कश्चिदपि प्राणीश्वरस्य साक्षात् धार्म्मिकीकृतो भवितुं न शक्ष्यति यतो व्यवस्थया पापज्ञानमात्रं जायते।

यीशुख्रीष्टे विश्वासेनैव धार्म्मिकतालाभः।

२१ किन्तु व्यवस्थायाः पृथग् ईश्वरेण देया धार्म्मिकता व्यवस्थाया भाववादिगणस्य च वचनैः प्रमाणीकृता सती इदानीं प्रकाश्यते।
२२ यीशुख्रीष्टे विश्वासकरणाद् ईश्वरेण दत्ता धार्म्मिकता सकलेषु
२३ प्रकाशिता सती सर्व्वान् विश्वासिनः प्रति वर्त्तते। तेषां कोऽपि प्रभेदो नास्ति, यतः सर्व्वएव पापिनः ईश्वरीयतेजोहीनाश्च जाताः।
२४ त ईश्वरस्यानुग्रहात् मूल्यं विना ख्रीष्टकृतेन परित्राणेन धार्म्मिकी-
२५ कृता भवन्ति। यस्मात् स्वशोणितेन विश्वासात् पापनाशको बली भवितुं स एव पूर्व्वम् ईश्वरेण निश्चितः, इत्थम् ईश्वरीयसहिष्णु-त्वात् पुराकृतपापानां मार्ज्जनकरणे स्वीयधार्म्मिकता तेन प्रकाश्यते,
२६ वर्त्तमानकालीयाऽपि स्वधार्म्मिकता तेन प्रकाश्यते, अपरं यीशौ विश्वा-
२७ सिनं धार्म्मिकीकुर्व्वन्नपि स धार्म्मिकस्तिष्ठति। तर्हि कुत्रात्मश्लाघा?

सा दूरीकृता; कया व्यवस्थया? किं क्रियारूपव्यवस्थया? इत्थं नहि
किन्तु तत् केवलविश्वासरूपया व्यवस्थयैव भवति। अतएव व्यवस्थानु- २८
रूपाः क्रिया विना केवलेन विश्वासेन मानवः धार्म्मिकीकृतो भवितुं
शक्नोतीत्यस्य राद्धान्तं दर्शयामः। स किं केवलयिहूदिनाम् ईश्वरो २९
भवति? परजातीयानाम् ईश्वरो न भवति? परजातीयानामपि
भवति; यस्माद् एक ईश्वरो विश्वासात् त्वक्छेदिनो विश्वासेनात्वक्- ३०
छेदिनश्च धार्म्मिकीकरिष्यति। तर्हि विश्वासेन वयं किं व्यवस्थां ३१
लुम्पाम? इत्थं न भवतु वयं व्यवस्थां संस्थापयाम एव।

अस्माकं पूर्व्वपुरुष अब्राहामः कायिकक्रियया किं लब्धवान् **४** १
एतदधि किं वदिष्यामः? स यदि निजक्रियाभ्यः धार्म्मिको भवेत् २
तर्हि तस्यात्मश्लाघां कर्त्तुं पन्था भवेदिति सत्यं, किन्त्वीश्वरस्य समीपे
नहि। शास्त्रे किं लिखति? अब्राहाम ईश्वरे विश्वसनात् स ३
विश्वासस्तस्मै धार्म्मिकतार्थं गणितो बभूव। कर्म्मकारिणो यद् वेतनं ४
तद् अनुग्रहस्य फलं नहि किन्तु तेनोपार्जितं मन्तव्यम्। किन्तु यः ५
पापिनं धार्म्मिकीकरोति तस्मिन् विश्वासिनः कर्म्महीनस्य जनस्य यो
विश्वासः स धार्म्मिकतार्थं गण्यो भवति। अपरं यं क्रियाहीनम् ६
ईश्वरः धार्म्मिकीकरोति तस्य धन्यवादं दायूद् वर्णयामास, यथा,

'स धन्योऽघानि मृष्टानि यस्यागांस्यावृतानि च। ७
स च धन्यः परेशेन पापं यस्य न गण्यते।' ८

एष धन्यवादस्त्वक्छेदिनम् अत्वक्छेदिनं वा कं प्रति भवति? ९
अब्राहामस्य विश्वासः धार्म्मिकतार्थं गणित इति वयं वदामः। स १०
विश्वासस्तस्य त्वक्छेदित्वावस्थायां किम् अत्वक्छेदित्वावस्थायां कस्मिन्
समये धार्म्मिकतेव गणितः? त्वक्छेदित्वावस्थायां नहि किन्त्वत्वक्-
छेदित्वावस्थायां। अपरञ्च स यत् सर्व्वेषाम् अत्वक्छेदिनां विश्वा- ११

१२ सिनाम् आदिपुरुषो भवेत्, ते च धार्म्मिका गण्येरन्; ये च लोकाः
केवलं छिन्नत्वचो न सन्तो ऽस्मत्पूर्व्वपुरुष अब्राहामोऽछिन्नत्वक् सन्
येन विश्वासमार्गेण गतवान् तेनैव तस्य पादचिह्नेन गच्छन्ति तेषां
त्वक्छेदिनामप्यादिपुरुषो भवेत् तदर्थम् अत्वक्छेदिनो मानवस्य
विश्वासात् धार्म्मिकता उत्पद्यत इति प्रमाणस्वरूपं त्वक्छेदचिह्नं स
१३ प्राप्नोत्। अब्राहामो जगतो ऽधिकारी भविष्यति यैषा प्रतिज्ञा
तं तस्य वंशञ्च प्रति पूर्व्वम् अक्रियत सा व्यवस्थामूलिका नहि
१४ किन्तु विश्वासजन्यधार्म्मिकतामूलिका। यतो व्यवस्थावलम्बिनो
यद्यधिकारिणो भवन्ति तर्हि विश्वासो विफलो जायते सा
१५ प्रतिज्ञापि लुप्तैव। अधिकन्तु व्यवस्था कोपं जनयति यतो
१६ ऽविद्यमानायां व्यवस्थायाम् आज्ञालङ्घनं न सम्भवति। अतएव
सा प्रतिज्ञा यद् अनुग्रहस्य फलं भवेत् तदर्थं विश्वासमूलिका
यतस्तथात्वे तद्वंशसमुदायं प्रति अर्थतो ये व्यवस्थया तद्वंशसम्भवाः
केवलं तान् प्रति नहि किन्तु य अब्राहामीयविश्वासेन तत्सम्भवा-
१७ स्तानपि प्रति सा प्रतिज्ञा स्थास्नुर्भवति। यो निर्जीवान् सजी-
वान् अविद्यमानानि वस्तूनि च विद्यमानानि करोति अब्राहामस्य
विश्वासभूमेस्तस्येश्वरस्य साक्षात् सोऽस्माकं सर्व्वेषाम् आदिपुरुष
आस्ते, यथा लिखितं विद्यते, 'अहं त्वां बहुजातीनाम् आदि-
पुरुषं कृत्वा नियुक्तवान्।'

१८ त्वदीयस्तादृशो वंशो जनिष्यते यदिदं वाक्यं प्रतिश्रुतं तदनु-
साराद् अब्राहामो बहुदेशीयलोकानाम् आदिपुरुषो यद् भवति
१९ तदर्थं सोऽनपेक्षितव्यमप्यपेक्षमाणो विश्वासं कृतवान्। अपरञ्च
क्षीणविश्वासो न भूत्वा शतवत्सरवयस्कत्वात् स्वशरीरस्य जरां
२० साराया: स्वभार्य्याया रजोनिवृत्तिञ्च तृणाय न मेने। अपरम्

अविश्वासाद् ईश्वरस्य प्रतिज्ञावचने कमपि संशयं न चकार;
किन्त्वीश्वरेण यत् प्रतिश्रुतं तत् साधयितुं शक्यत इति निश्चितं २१
विज्ञाय दृढविश्वासः सन् ईश्वरस्य महिमानं प्रकाशयाञ्चकार। इति
हेतोस्तस्य स विश्वासस्तदीयधार्म्मिकतेव गणयाञ्चक्रे। धार्म्मिकतेवा- २२
गण्यत तत् केवलस्य तस्य निमित्तं लिखितं नहि, अस्माकं निमित्त- २३
मपि, यतोऽस्माकं पापनाशार्थं समर्पितोऽस्माकं धार्म्मिकताप्राप्त्यर्थञ्चो- २४
त्थापितोऽभवत् योऽस्माकं प्रभु यीशुस्तस्योत्थापयितरीश्वरे यदि वयं २५
विश्वासमस्तर्ह्यस्माकमपि स एव विश्वासः धार्म्मिकतेव गणयिष्यते।

विश्वासेन धार्म्मिकीकृता वयम् ईश्वरेण सार्द्धं प्रभुणास्माकं ५ १
यीशुख्रीष्टेन मेलनं प्राप्ताः। अपरं वयं यस्मिन् अनुग्रहाश्रये २
तिष्ठामस्तन्मध्यं विश्वासमार्गेण तेनैवानीता वयम् ईश्वरीयविभव-
प्राप्तिप्रत्याशया समानन्दामः। तत् केवलं नहि किन्तु क्लेशभोगे- ३
ऽप्यानन्दामो यतः क्लेशाद् धैर्य्यं जायत इति वयं जानीमः, धैर्य्याच्च
परीक्षितत्वं जायते, परीक्षितत्वात् प्रत्याशा जायते, प्रत्याशातो- ४
व्रीडितत्वं न जायते, यस्माद् अस्मभ्यं दत्तेन पवित्रेणात्मनास्माकम् ५
अन्तःकरणानीश्वरस्य प्रेमवारिणा सिक्तानि। अस्मासु निरुपायेषु ६
सत्सु ख्रीष्ट उपयुक्ते समये पापिनां निमित्तं स्वीयान् प्राणान्
अत्यजत्। हितकारिणो जनस्य कृते कोऽपि प्राणान् त्यक्तुं साहसं ७
कर्त्तुं शक्नोति, किन्तु धर्म्मिकस्य कृते प्रायेण कोऽपि प्राणान् न
त्यजति। किन्त्वस्मासु पापिषु सत्स्वपि निमित्तमस्माकं ख्रीष्टः ८
स्वप्राणान् त्यक्तवान्, तत ईश्वरोस्मान् प्रति निजं परमप्रेमाणं
दर्शितवान्। अतएव तस्य रक्तपातेन धार्म्मिकीकृता वयं नितान्तं ९
तेन कोपाद् उद्धारिष्यामहे। फलतो वयं यदा रिपव आस्म १०
तदेश्वरस्य पुत्रस्य मरणेन तेन सार्द्धं यद्यस्माकं मेलनं जातं तर्हि

११ मेलनप्राप्ताः सन्तोऽवश्यं तस्य जीवनेन रक्षां लप्स्यामहे। तत्
केवलं नहि किन्तु येन मेलनम् अलभामहि तेनास्माकं प्रभुना
यीशुख्रीष्टेन साम्प्रतम् ईश्वरे समानन्दामश्च।

आदमा यथा पापं मृतिश्च तथा यीशुना धार्म्मिकता
अनन्तजीवनञ्च।

१२ तथा सति, एकेन मानुषेण पापं पापेन च मरणं जगति
प्राविशत् अपरं सर्व्वेषां पापित्वात् सर्व्वे मानुषा मृते र्निघ्ना अभवन्।
१३ यतो व्यवस्थादानसमयं यावत् जगति पापम् आसीत् किन्तु यत्र
१४ व्यवस्था न विद्यते तत्र पापस्यापि गणना न विद्यते। तथाप्यादमेन
यादृशं पापं कृतं तादृशं पापं यै र्नाकारि आदमम् आरभ्य मोशिं
यावत् तेषामप्युपरि मृत्यू राजत्वम् अकरोत् स आदमो भाव्या-
१५ दमस्य निदर्शनमेवास्ते। किन्तु पापकर्म्मणो यादृशो भावस्तादृग्
दानकर्म्मणो भावो न भवति यत एकस्य जनस्यापराधेन यदि बहूनां
मरणम् अघटत तथापीश्वरानुग्रहस्तदनुग्रहमूलकं दानञ्चैकेन जने-
नार्थाद् यीशुना ख्रीष्टेन बहुषु बाहुल्यातिबाहुल्येन फलति।
१६ अपरम् एकस्य जनस्य पापकर्म्म यादृक् फलयुक्तं दानकर्म्म तादृक् न
भवति यतो विचारकर्म्मैकं पापम् आरभ्य दण्डजनकं बभूव, किन्तु
१७ दानकर्म्म बहुपापान्यारभ्य धार्म्मिकताजनकं बभूव। यत एकस्य
जनस्य पापकर्म्मतस्तेनैकेन यदि मरणस्य राजत्वं जातं तर्हि ये जना
अनुग्रहस्य बाहुल्यं धार्म्मिकतादानञ्च प्राप्नुवन्ति त एकेन जनेन,
१८ अर्थात् यीशुख्रीष्टेन, जीवने राजत्वम् अवश्यं करिष्यन्ति। एको-
ऽपराधो यद्वत् सर्व्वमानवानां दण्डगामी मार्गो ऽभवत् तद्वद् एकं
धार्म्मिकतादानं सर्व्वमानवानां जीवनयुक्तधार्म्मिकतागामी मार्ग एव।
१९ अपरम् एकस्य जनस्याज्ञालङ्घनाद् यथा बहवो ऽपराधिनो जाता-

स्तद्वद् एकस्याज्ञाचरणाद् बहवो धार्म्मिकीकृता भवन्ति। अधिकन्तु २०
व्यवस्थागमनाद् अपराधस्य बाहुल्यं जातं किन्तु यत्र पापस्य
बाहुल्यं तत्रैव तस्माद् अनुग्रहस्य बाहुल्यम् अभवत्। तेन मृत्युना २१
यद्वत् पापस्य राजत्वम् अभवत् तद्वद् अस्माकं प्रभुयीशुख्रीष्ट-
द्वारानन्तजीवनदायिधार्म्मिकतयानुग्रहस्य राजत्वं भवति।

विश्वासस्य फलम् धर्म्माचरणम्।

प्रभूतरूपेण यद् अनुग्रहः प्रकाशते तदर्थं पापे तिष्ठाम इति ६ १
वाक्यं किं वयं वदिष्यामः? तन्न भवतु। पापं प्रति मृता वयं २
पुनस्तस्मिन् कथम् जीविष्यामः? वयं यावन्तो लोका यीशुख्रीष्टे ३
मज्जिता अभवाम तावन्त एव तस्य मरणे मज्जिता इति किं यूयं
न जानीथ? ततो यथा पितुः पराक्रमेण मृतानां मध्यात् ख्रीष्ट ४
उत्थापितस्तथा वयमपि यत् नूतनजीविन इवाचरामस्तदर्थं मज्जनेन
तेन सार्द्धं मृत्युरूपे श्मशानागारे संस्थापिताः। अपरं वयं यदि तेन ५
संयुक्ताः सन्तः स इव मरणभागिनो जातास्तर्हि स इवोत्थानभागिनो-
ऽपि भविष्यामः। वयं यत् पापस्य दासाः पुन र्न भवामस्तदर्थम् ६
अस्माकं पापरूपशरीरस्य विनाशार्थम् अस्माकं पुरातनपुरुषस्तेन
साकं क्रुशेऽहन्यतेति वयं जानीमः। यो हतः स पापात् मुक्त एव। ७
अतएव यदि वयं ख्रीष्टेन सार्द्धम् अहन्यामहि तर्हि पुनरपि तेन ८
सहिता जीविष्याम इत्यत्रास्माकं विश्वासो विद्यते। यतः मृतानां ९
मध्याद् उत्थापितः ख्रीष्टः पुन र्न म्रियत इति वयं जानीमः।
तस्मिन् कोप्यधिकारो मृत्यो र्नास्ति। अपरञ्च स यद् अम्रियत १०
तेनैकदा पापम् उद्दिश्याम्रियत, यच्च जीवति तेनेश्वरम् उद्दिश्य
जीवति; तद्वद् यूयमपि स्वान् पापम् उद्दिश्य मृतान् अस्माकं ११
प्रभुणा यीशुख्रीष्टेनेश्वरम् उद्दिश्य जीवन्तो जानीत।

१२ अपरञ्च कुत्सिताभिलाषान् पूरयितुं युष्माकं मर्त्यदेहेषु पापम्
१३ आधिपत्यं न करोतु । अपरं स्वं स्वम् अङ्गम् अधार्म्मिकताया अस्त्रं
कृत्वा पापसेवायां न समर्पयत, किन्तु मृतानां मध्याद् उत्थितानिव
स्वान् ईश्वरे समर्पयत स्वान्यङ्गानि च धर्म्मास्त्रस्वरूपाणीश्वरम् उद्दिश्य
१४ समर्पयत । युष्माकम् उपरि पापस्याधिपत्यं पुन र्न भविष्यति,
यस्माद् यूयं व्यवस्थाया अनायत्ता अनुग्रहस्य चायत्ता अभवत ।
१५ किन्तु वयं व्यवस्थाया अनायत्ता अनुग्रहस्य चायत्ता अभवाम, इति
१६ कारणात् किं पापं करिष्यामः ? तन्न भवतु । यतो मृतिजनकं
पापं धार्म्मिकताजनकं निदेशाचरणञ्चैतयोर्द्वयो र्यस्मिन् आज्ञापाल-
नार्थं भृत्यानिव स्वान् समर्पयथ, तस्यैव भृत्या भवथ, एतत् किं
१७ यूयं न जानीथ ? अपरञ्च पूर्व्वं यूयं पापस्य भृत्या आस्तेति सत्यं
किन्तु यस्यां शिक्षारूपायां मूषायां निक्षिप्ता अभवत तस्या आकृतिं
१८ मनोभि र्लब्धवन्त इति कारणाद् ईश्वरस्य धन्यवादो भवतु । इत्थं
१९ यूयं पापसेवातो मुक्ताः सन्तो धर्म्मस्य भृत्या जाताः । युष्माकं
शारीरिक्या दुर्ब्बलताया हेतो र्मानववद् अहम् एतद् ब्रवीमि;
पुनः पुनरधर्म्मकरणार्थं तद्वत् पूर्व्वं पापामेध्ययो र्भृत्यत्वे निजाङ्गानि
समार्पयत तद्वद् इदानीं पवित्रत्वार्थं धार्म्मिकताया भृत्यत्वे निजा-
२० ङ्गानि समर्पयत । यदा यूयं पापस्य भृत्या आस्त तदा धार्म्मिक-
२१ ताया नायत्ता आस्त । तर्हि यानि कर्म्माणि यूयम् इदानीं लज्जा-
जनकानि बुध्यध्वे पूर्व्वं तै र्युष्माकं को लाभ आसीत् ? तेषां कर्म्मणां
२२ फलं मरणमेव । किन्तु साम्प्रतं यूयं पापसेवातो मुक्ताः सन्त ईश्वरस्य
भृत्याऽभवत तस्माद् युष्माकं पवित्रत्वरूपं लभ्यम् अनन्तजीवनरूपञ्च
२३ फलम् आस्ते । यतः पापस्य वेतनं मरणं किन्त्वस्माकं प्रभुणा यीशु-
ख्रीष्टेनानन्तजीवनम् ईश्वरदत्तं दानम् आस्ते ।

### यीशुरेव परित्राता।

#### यीशुना व्यवस्थायाः मुक्तित्वकथनम्।

हे भ्रातृगण व्यवस्थाविदः प्रति ममेदं निवेदनं। विधिः ७ १
केवलं यावज्जीवं मानवोपर्य्यधिपतित्वं करोतीति यूयं किं न
जानीथ? यावत्कालं पति जीवति तावत्कालम् ऊढा भार्य्या २
व्यवस्थया तस्मिन् बद्धा तिष्ठति किन्तु यदि पति म्रियते तर्हि सा
नारी पत्यु र्व्यवस्थातो मुच्यते। एतत्कारणात् पत्युर्जीवनकाले नारी ३
यद्यन्यं पुरुषं विवहति तर्हि सा व्यभिचारिणी भवति किन्तु यदि
स पति म्रियते तर्हि सा तस्या व्यवस्थाया मुक्ता सती पुरुषान्तरेण
व्यूढापि व्यभिचारिणी न भवति। हे मम भ्रातृगण, ईश्वरनिमित्तं ४
यदस्माकं फलं जायते तदर्थं मृतानां मध्याद् उत्थापितेन पुरुषेण
सह युष्माकं विवाहो यद् भवेत् तदर्थं ख्रीष्टस्य शरीरेण यूयं
व्यवस्थां प्रति मृतवन्तः। यतोऽस्माकं शारीरिकाचरणसमये मरण- ५
निमित्तं फलम् उत्पादयितुं व्यवस्थया दूषितः पापाभिलाषो-
ऽस्माकम् अङ्गेषु जीवन् आसीत्। किन्तु तदा यस्या व्यवस्थाया ६
वशे आस्महि साम्प्रतं तां प्रति मृतत्वाद् वयं तस्या अधीनत्वात्
मुक्ता इति हेतोरीश्वरोऽस्माभिः पुरातनलिखितानुसारात् न सेवि-
तव्यः किन्तु नवीनस्वभावेनैव सेवितव्यः।

#### व्यवस्थया पापान्मुक्तिर्न भवति।

तर्हि वयं किं ब्रूमः? व्यवस्था किं पापजनिका भवति? नेत्थं ७
भवतु। व्यवस्थायाम् अविद्यमानायां पापं किम् इत्यहं नावेदं; किञ्च
लोभं मा कार्षीरिति चेद् व्यवस्थाग्रन्थे लिखितं नाभविष्यत् तर्हि
लोभः किम्भूतस्तदहं नाज्ञास्यं। किन्तु व्यवस्थया पापं छिद्रं प्राप्य ८
ममान्तः सर्व्वविधं कुत्सिताभिलाषम् अजनयत्; यतो व्यवस्थायाम्

९ अविद्यमानायां पापं मृतं। अपरं पूर्व्वं व्यवस्थायाम् अविद्यमा-
नायाम् अहम् अजीवं ततः परम् आज्ञायाम् उपस्थितायाम्
१० पापम् अजीवत् तदाहम् अम्रिये। इत्थं सति जीवननिमित्ता
११ याज्ञा सा मम मृत्युजनिकाभवत्। यतः पापं छिद्रं प्राप्य व्यवस्थि-
१२ तादेशेन मां वञ्चयित्वा तेन माम् अहन्। अतएव व्यवस्था पवित्रा,
आदेशश्च पवित्रो न्याय्यो हितकारी, च भवति।

१३ तर्हि यत् स्वयं हितकृत् तत् किं मम मृत्युजनकम् अभवत्?
नेत्थं भवतु; किन्तु पापं यत् पातकमिव प्रकाशते तथा निदेशेन
पापं यदतीव पातकमिव प्रकाशते तदर्थं हितोपायेन मम मरणम्
१४ अजनयत्। व्यवस्थात्मबोधिकेति वयं जानीमः किन्त्वहं शारीरता-
१५ चारी पापस्य क्रीतकिङ्करो विद्ये। यतो यत् कर्म्म करोमि तत्
मम मनोऽभिमतं नहि; अपरं यन् मम मनोऽभिमतं तन्न करोमि
१६ किन्तु यद् ऋतीये तत् करोमि। तथात्वे यन् ममानभिमतं तद्
१७ यदि करोमि तर्हि व्यवस्था सूत्तमेति स्वीकरोमि। अतएव
सम्प्रति तत् कर्म्म मया क्रियत इति नहि किन्तु मम शरीरस्थेन
१८ पापेनैव क्रियते। यतो मयि, अर्थतो मम शरीरे, किमप्युत्तमं न
वसति एतद् अहं जानामि; ममेच्छुकतायां तिष्ठन्त्यामप्यहम्
१९ उत्तमकर्म्मसाधने समर्थो न भवामि। यतो यामुत्तमां क्रियां
कर्त्तुमहं वाञ्छामि तां न करोमि किन्तु यत् कुत्सितं कर्म्म कर्त्तुम्
२० अनिच्छुकोऽस्मि तदेव करोमि। अतएव यद्यत् कर्म्म कर्त्तुं
ममेच्छा न भवति तद् यदि करोमि तर्हि तन् मया न क्रियते,
२१ ममान्तर्वर्त्तिना पापेनैव क्रियते। भद्रं कर्त्तुम् इच्छुकं मां यो
२२ ऽभद्रं कर्त्तुं प्रवर्त्तयति तादृशं स्वभावमेकं मयि पश्यामि। अहम्
२३ आन्तरिकपुरुषेणेश्वरव्यवस्थायां सन्तुष्ट आसे; किन्तु तद्विपरीतं

युध्यन्तं तदन्यमेकं स्वभावं मदीयाङ्गस्थितं प्रपश्यामि, स मदीयाङ्ग-
स्थितपापस्वभावस्यायत्तं मां कर्त्तुं चेष्टते। हा हा योऽहं दुर्भाग्यो २४
मनुजस्तं माम् एतस्मान् मृताच्छरीरात् को निस्तारयिष्यति?
अस्माकं प्रभुणा यीशुख्रीष्टेन निस्तारयितारम् ईश्वरं धन्यं वदामि। २५
अतएव शरीरेण पापव्यवस्थाया मनसा तु ईश्वरव्यवस्थायाः सेवनं
करोमि।

यीशुना सम्पूर्णपरित्राणलं प्राप्नोति।

ये जनाः ख्रीष्टं यीशुम् आश्रित्य शारीरिकं नाचरन्त ८ १
आत्मिकमाचरन्ति तेऽधुना दण्डार्हा न भवन्ति। जीवनदायकस्या- २
त्मनो व्यवस्था ख्रीष्टयीशुना पापमरणयो र्व्यवस्थातो माममोचयत्।
यस्माच्छरीरस्य दुर्ब्बलत्वाद् व्यवस्थया यत् कर्म्मासाध्यम् ईश्वरो ३
निजपुत्रं पापिशरीररूपं पापनाशकबलिरूपञ्च प्रेष्य तस्य शरीरे
पापस्य दण्डं कुर्व्वन् तत्कर्म्म साधितवान्। ततः शारीरिकं नाचरि- ४
त्वास्माभिरात्मिकम् आचरद्भि र्व्यवस्थाग्रन्थे निर्द्दिष्टानि धार्म्मिकता-
कर्म्माणि सर्व्वाणि साध्यन्ते। ये शारीरिकाचारिणस्ते शारीरिकान् ५
विषयान् भावयन्ति ये चात्मिकाचारिणस्ते आत्मनो विषयान्
भावयन्ति। शारीरिकभावस्य फलं मृत्युः किञ्चात्मिकभावस्य फलं ६
जीवनं शान्तिश्च। यतः शारीरिकभाव ईश्वरस्य विरुद्धः शत्रुताभाव ७
एव स ईश्वरस्य व्यवस्थाया अधीनो न भवति भवितुञ्च न शक्नोति।
एतस्मात् शारीरिकाचारिषु तोष्टुम् ईश्वरेण न शक्यं। किन्त्वी- ८
श्वरस्यात्मा यदि युष्माकं मध्ये वसति तर्हि यूयं शारीरिकाचारिणो ९
न सन्त आत्मिकाचारिणो भवथः। यस्मिन् तु ख्रीष्टस्यात्मा न
विद्यते स तत्सम्भवो नहि। यदि ख्रीष्टो युष्मान् अधितिष्ठति तर्हि १०
पापम् उद्दिश्य शरीरं मृतं किन्तु धार्म्मिकताम् उद्दिश्यात्मा जीवति।

११ मृतगणाद् यीशु र्येनोत्थापितस्तस्यात्मा यदि युष्मन्मध्ये वसति
तर्हि मृतगणात् ख्रीष्टस्य स उत्थापयिता युष्मन्मध्यवासिना स्वकी-
यात्मना युष्माकं मृतदेहानपि पुन र्जीवयिष्यति।

१२ हे भ्रातृगण शरीरस्य वयमधमर्णा न भवामोऽतः शारीरिका-
१३ चारोऽस्माभि र्न कर्त्तव्यः। यदि यूयं शारीरिकाचारिणो भवेत्
तर्हि युष्माभि र्मर्त्तव्यमेव किन्त्वात्मना यदि शारीरिककर्म्माणि
१४ घातयेत तर्हि जीविष्यथ। यतो यावन्तो लोका ईश्वरस्यात्मना-
१५ कृष्यन्ते ते सर्व्व ईश्वरस्य सन्ताना भवन्ति। यूयं पुनरपि भयजनकं
दास्यभावं न प्राप्ताः किन्तु येन भावेनेश्वरं पितः पितरिति प्रोच्य
१६ सम्बोधयथ तादृशं दत्तकपुत्त्रत्वभावम् प्राप्नुत। अपरञ्च वयम्
ईश्वरस्य सन्ताना एतस्मिन् पवित्र आत्मा स्वयम् अस्माकम् आत्मभिः
१७ सार्द्धं प्रमाणं ददाति। अतएव वयं यदि सन्तानास्तर्ह्यधिकारिणः,
अर्थाद् ईश्वरस्य स्वत्वाधिकारिणः ख्रीष्टेन सहाधिकारिणश्च भवामः;
अपरं तेन सार्द्धं यदि दुःखभागिनो भवामस्तर्हि तस्य विभवस्यापि
१८ भागिनो भविष्यामः। किन्त्वस्मासु यो भावी विभवः प्रकाशिष्यते
१९ तस्य समीपे वर्त्तमानकालीनं दुःखमहं तृणाय मन्ये। यतः
प्राणिगण ईश्वरस्य सन्तानानां विभवप्राप्तिम् आकाङ्क्षन् नितान्तम्
२० अपेक्षते। अपरञ्च प्राणिगणः स्वैरम् अलीकताया वशीकृतो
२१ नाभवत् किन्तु प्राणिगणोऽपि नश्वरताधीनत्वात् मुक्तः सन् ईश्वरस्य
२२ सन्तानानां परममुक्तिं प्राप्स्यतीत्यभिप्रायेण वशीकर्त्रा वशीचक्रे।
अपरञ्च प्रसूयमानावद् व्यथितः सन् इदानीं यावत् कृत्स्नः
२३ प्राणिगण आर्त्तस्वरं करोतीति वयं जानीमः। केवलः स इति नहि
किन्तु प्रथमजातफलस्वरूपम् आत्मानं प्राप्ता वयमपि दत्तकपुत्त्रत्व-
पदप्राप्तिम् अर्थात् शरीरस्य मुक्तिं प्रतीक्षमाणास्तदद् अन्तरार्त्तरावं

कुर्म्मः। वयं प्रत्याशया त्राणम् अलभामहि किन्तु प्रत्यक्षवस्तुनो २४
या प्रत्याशा सा प्रत्याशा नहि, यतो मनुष्यो यत् समीक्षते तस्य
प्रत्याशां कुतः करिष्यति? यद् अप्रत्यक्षं तस्य प्रत्याशां यदि वयं २५
कुर्व्वीमहि तर्हि धैर्य्यम् अवलम्ब्य प्रतीक्षामहे। तत आत्मापि २६
स्वयम् अस्माकं दुर्ब्बलतायाः सहायत्वं करोति; यतः किं प्रार्थि-
तव्यं तद् बोद्धुं वयं न शक्नुमः, किन्त्वस्पष्टैरार्त्तरावैरात्मा स्वयम्
अस्मन्निमित्तं निवेदयति। अपरम् ईश्वराभिमतरूपेण पवित्रलो- २७
कानां कृते निवेदयति य आत्मा तस्याभिप्रायोऽन्तर्य्यामिना
ज्ञायते। अपरम् ईश्वरीयनिरूपणानुसारेणाहूताः सन्तो ये २८
तस्मिन् प्रीयन्ते सर्व्वाणि मिलित्वा तेषां मङ्गलं साधयन्ति, एतद्
वयं जानीमः। यत ईश्वरो बहुभ्रातृणां मध्ये स्वपुत्रं ज्येष्ठं कर्त्तुम् २९
इच्छन् यान् पूर्व्वं लक्ष्यीकृतवान् तान् तस्य प्रतिमूर्त्त्याः सादृश्य-
प्राप्त्यर्थं न्ययुङ्क्त। अपरञ्च तेन ये नियुक्तास्त आहूता अपि ये ३०
च तेनाहूतास्ते धार्म्मिकीकृताः, ये च तेन धार्म्मिकीकृतास्ते
विभवयुक्ताः।

इत्यत्र वयं किं ब्रूमः? ईश्वरो यद्यस्माकं सपक्षो भवति तर्हि को ३१
विपक्षोऽस्माकं? आत्मपुत्रं न रक्षित्वा योऽस्माकं सर्व्वेषां कृते तं ३२
प्रदत्तवान् स किं तेन सहास्मभ्यम् अन्यानि सर्व्वाणि न दास्यति? ३३
ईश्वरस्याभिरुचितेषु केन दोष आरोपयिष्यते? य ईश्वरस्तान्
धार्म्मिकीकरोति किं तेन? अपरं तेभ्यो दण्डदानाज्ञा वा केन ३४
करिष्यते? योऽस्मन्निमित्तं प्राणान् त्यक्तवान् केवलं तन्न किन्तु
मृतगणमध्याद् उत्थितवान्, अपि चेश्वरस्य दक्षिणे पार्श्वे तिष्ठन्
अद्याप्यस्माकं निमित्तं प्रार्थत एवम्भूतो यः ख्रीष्टः किं तेन? अस्माभिः ३५
सह ख्रीष्टस्य प्रेमविच्छेदं जनयितुं कः शक्नोति? क्लेशो व्यसनं वा

ताडना वा दुर्भिक्षं वा वस्त्रहीनत्वं वा प्राणसंशयो वा खड्गो वा
३६ किमेतानि शक्नुवन्ति? किन्तु लिखितम् आस्ते, यथा,

'वयं तव निमित्तं स्मो मृत्युवक्त्रेऽखिलं दिनं।
बलिर्देयो यथा मेषो वयं गण्यामहे तथा।'

३७ अपरं योऽस्मासु प्रीयते तेनैतासु विपत्सु वयं सम्यग् विजया-
३८ महे। यतोऽस्माकं प्रभुना यीशुख्रीष्टेनेश्वरस्य यत् प्रेम तस्माद्
अस्माकं विच्छेदं जनयितुं मृत्यु र्जीवनं वा दिव्यदूता वा बलवन्तो
३९ मुख्यदूता वा वर्त्तमानो वा भविष्यन् कालो वा उच्चपदं वा नीच-
पदं वापरं किमपि सृष्टवस्तु वैतेषां केनापि न शक्यमित्यस्मिन्
दृढविश्वासो ममास्ते।

यिहूदिभि र्यीशुख्रीष्टमग्राह्यकरणात्त्वम्।

इस्रायेलस्य पतने ईश्वरस्य दोषो नास्ति।

९ १ अहं काञ्चिद् कल्पितां कथां न कथयामि, ख्रीष्टस्य साक्षात्
सत्यमेव ब्रवीमि पवित्रस्यात्मनः साक्षात् मदीयं मन एतत् साक्ष्यं
२ ददाति। ममान्तरतिशयदुःखं निरन्तरं खेदश्च तस्माद् अहं
३ स्वजातीयभ्रातृणां निमित्तात् स्वयं ख्रीष्टाच्छापाक्रान्तो भवितुम्
४ ऐच्छम्। यतस्त इस्रायेलस्य वंशा अपि च दत्तकपुत्रत्वं तेजो
नियमो व्यवस्थादानं मन्दिरे भजनं प्रतिज्ञाः पितृपुरुषगणश्चैतेषु
५ सर्व्वेषु तेषाम् अधिकारोऽस्ति। तत् केवलं नहि किन्तु सर्व्वाध्यक्षः
सर्व्वदा सच्चिदानन्द ईश्वरो यः ख्रीष्टः सोऽपि शारीरिकसम्बन्धेन
तेषां वंशसम्भवः।

६ ईश्वरस्य वाक्यं विफलं जातम् इति नहि यत्कारणाद् इस्राये-
७ लस्य वंशे ये जातास्ते सर्व्वे वस्तुत इस्रायेलीया न भवन्ति। अपरम्
इब्राहीमस्य वंशे जाता अपि सर्व्वे तस्यैव सन्ताना न भवन्ति

किन्तु इस्हाकस्य नाम्ना तव वंशो विख्यातो भविष्यति। अर्थात् ८
शारीरिकसंसर्गात् जाताः सन्ताना यावन्तस्तावन्त एवेश्वरस्य सन्ताना
न भवन्ति किन्तु प्रतिश्रवणाद् ये जायन्ते त एवेश्वरवंशो गण्यन्ते।
यतस्तत्प्रतिश्रुते वाक्यमेतत्, 'एतादृशे समये ऽहं पुनरागमिष्यामि ९
तत्पूर्वं सारायाः पुत्र एको जनिष्यते।' अपरमपि वदामि स्वम- १०
नोऽभिलाषत ईश्वरेण यन्निरूपितं तत् कर्म्मतो नहि किन्त्वाह्वयितु
र्ज्ञातमेतद् यथा सिद्ध्यति तदर्थं रिब्कानामिकया योषिता जने- ११
कस्माद् अर्थाद् अस्माकम् इस्हाकात् पूर्व्वपुरुषाद् गर्भे धृते तस्याः
सन्तानयोः प्रसवात् पूर्व्वं किञ्च तयोः शुभाशुभकर्म्मणः करणात् १२
पूर्व्वं तां प्रतीदं वाक्यम् उक्तं, ज्येष्ठः कनिष्ठं सेविष्यते, यथा लिखि- १३
तम् आस्ते, 'तथाप्येषावि न प्रीत्वा याकोवे प्रीतवान् अहं।'

तर्हि वयं किं ब्रूमः? ईश्वरः किम् अन्यायकारी? तथा न १४
भवतु। यतः स स्वयं मोशिम् अवदत्; 'अहं यस्मिन् अनुग्रहं १५
चिकीर्षामि तमेवानुगृह्लामि, यञ्च दयितुम् इच्छामि तमेव दये।'
अतएवेच्छता यतमानेन वा मानवेन तन्न साध्यते दयाकारिणेश्वरे- १६
णैव साध्यते। फिरौणि शास्त्रे लिखति, 'अहं त्वद्द्वारा मत्पराक्रमं १७
दर्शयितुं सर्व्वपृथिव्यां निजनाम प्रकाशयितुञ्च त्वां स्थापितवान्।'
अतः स यम् अनुग्रहीतुम् इच्छति तमेवानुगृह्लाति, यञ्च निग्रही- १८
तुम् इच्छति तं निगृह्लाति।

यदि वदसि तर्हि स दोषं कुतो गृह्लाति? तदीयेच्छायाः १९
प्रतिबन्धकत्वं कर्त्तुं कस्य सामर्थ्यं विद्यते? हे ईश्वरस्य प्रतिपक्ष २०
मर्त्य त्वं कः? एतादृशं मां कुतः सृष्टवान्? इति कथां सृष्टवस्तु
स्रष्ट्रे किं कथयिष्यति? एकस्मात् मृत्पिण्डाद् उत्कृष्टापकृष्टौ २१
द्विविधौ कलशौ कर्त्तुं किं कुलालस्य सामर्थ्यं नास्ति? ईश्वरः २२

कोपं प्रकाशयितुं निजशक्तिं ज्ञापयितुञ्चेच्छन् यदि विनाशस्य योग्यानि क्रोधभाजनानि प्रति बहुकालं दीर्घसहिष्णुताम् आश्र-
२३ यति; अपरञ्च विभवप्राप्त्यर्थं पूर्व्वं नियुक्तान्यनुग्रहपात्राणि प्रति
२४ निज विभवस्य बाहुल्यं प्रकाशयितुं केवलयिहूदिनां नहि परजाती-
२५ यानामपि मध्याद् अस्मानिव तान्याह्वयति तत्र तव किं? होशेय-
ग्रन्थे यथा लिखितम् आस्ते,

'यो लोको मम नासीत् तं वदिष्यामि मदीयकं।
या जाति र्मेऽप्रिया चासीत् तां वदिष्याम्यहं प्रियां।
२६ यूयं मदीयलोका न यत्रेति वाक्यमौच्यत।
अमरेशस्य सन्ताना इति ख्यास्यन्ति तत्र ते।'

२७ इस्रायेलीयलोकेषु यिशायियोऽपि वाचमेतां प्राचारयत्,

'इस्रायेलीयवंशानां या संख्या सा तु निश्चितं।
सामुद्रसिकतासंख्यासमाना यदि जायते।
तथापि केवलं लोकैरल्पैस्त्राणं व्रजिष्यते।
२८ यतो न्यायेन स्वं कर्म्म परेशः साधयिष्यति।
देशे स एव संक्षेपान्निजं कर्म्म करिष्यति।'

२९ यिशायियोऽपरमपि कथयामास,

'सैन्याध्यक्षपरेशेन चेत् किञ्चिन्नोदशिष्यत।
तदा वयं सिदोमेवाभविष्याम विनिश्चितं।
यद्वा वयम् अमोराया अगमिष्याम तुल्यतां।'

इस्रायेलस्य पतनस्य किं मूलं?

३० तर्हि वयं किं वक्ष्यामः? परजातीया लोका अपि धार्म्मिक-
३१ तार्थम् अयतमाना विश्वासेन धार्म्मिकताम् अलभन्त; किन्त्वि-
३२ स्रायेललोका व्यवस्थापालनेन धार्म्मिकतार्थं यतमानास्तन् नालभन्त।

तस्य किं कारणं? ते विश्वासेन नहि किन्तु व्यवस्थायाः क्रियया
चेष्टित्वा तस्मिन् स्खलनजनके पाषाणे पादस्खलनं प्राप्ताः। लिखितं ३३
यादृशम् आस्ते,

'पश्य पादस्खलार्थं हि सीयोनि प्रस्तरन्तथा।
बाधाकारञ्च पाषाणं परिस्थापितवानहम्।
विश्वसिष्यति यस्तत्र स जनो न त्रपिष्यते।'

हे भ्रातर इस्रायेलीयलोका यत् परित्राणं प्राप्नुवन्ति तदहं १० १
मनसाभिलषन् ईश्वरस्य समीपे प्रार्थये। यत ईश्वरे तेषां चेष्टा २
विद्यत इत्यत्राहं साक्ष्यस्मि; किन्तु तेषां सा चेष्टा सज्ञाना नहि,
यतस्त ईश्वरदत्तां धार्म्मिकताम् अविज्ञाय स्वकृतधार्म्मिकतां स्थाप- ३
यितुम् चेष्टमाना ईश्वरदत्तायाः धार्म्मिकताया निघ्नत्वं न स्वीकु-
र्व्वन्ति। ख्रीष्ट एकैकविश्वासिजनाय धार्म्मिकताम् दातुं व्यवस्थायाः ४
फलस्वरूपो भवति। व्यवस्थापालनेन या धार्म्मिकता तां मोशिर्वर्ण- ५
यामास, यथा, 'यो जनस्तां पालयिष्यति स तद्द्वारा जीविष्यति।'
किन्तु विश्वासेन या धार्म्मिकता ता एतादृशं वाक्यं वदति, 'कः ६
स्वर्गम् आरुह्य ख्रीष्टम् अवरोहयिष्यति? को वा प्रेतलोकम् ७
अवरुह्य ख्रीष्टं मृतगणमध्याद् आनेष्यतीति वाक् मनसि त्वया न
गदितव्या।' तर्हि किं ब्रवीति? 'तद् वाक्यं तव समीपस्थम् ८
अर्थात् तव वदने मनसि चास्ते,' तच्च वाक्यम् अस्माभिः प्रचार्य्य-
माणं विश्वासस्य वाक्यमेव। वस्तुतः प्रभुं यीशुं यदि वदनेन स्वीक- ९
रोषि, तथेश्वरस्तं मृतगणमध्याद् उदस्थापयद् इति यद्यन्तःकरणेन
विश्वसिषि तर्हि परित्राणं लप्स्यसे। यस्मात् धार्म्मिकता प्राप्त्यर्थम् १०
अन्तःकरणेन विश्वसितव्यं परित्राणार्थञ्च वदनेन स्वीकर्त्तव्यं। शास्त्रे ११
यादृशं लिखति 'विश्वसिष्यति यस्तत्र स जनो न त्रपिष्यते।' इत्यत्र १२

यिहूदिनि परजातीयलोके च कोपि विशेषो नास्ति यस्माद् यः
सर्व्वेषाम् अद्वितीयः प्रभुः स निजयाचकान् सर्व्वान् प्रति वदान्यो
भवति। यतः,

'यः कश्चित् परमेशस्य नाम्ना हि प्रार्थयिष्यते।
स एव मनुजो नूनं परित्रातो भविष्यति।'

१४ यस्मिन् ये जना न व्यश्वसिषुस्ते तमुद्दिश्य कथं प्रार्थयिष्यन्ते? ये वा
यस्याख्यानं कदापि न श्रुतवन्तस्ते तस्मिन् कथं विश्वसिष्यन्ति? अपरं
१५ यदि प्रचारयितारो न तिष्ठन्ति तदा कथं ते श्रोष्यन्ति? यदि वा
प्रेरिता न भवन्ति तदा कथं प्रचारयिष्यन्ति? यादृशं लिखितम्
आस्ते, यथा,

'माङ्गलिकं सुसंवादं ददत्यानीय ये नराः।
प्रचारयन्ति शान्तेश्च सुसंवादं जनास्तु ये।
तेषां चरणपद्मानि कीदृक् शोभान्वितानि हि'।

१६ किन्तु ते सर्व्वे तं सुसंवादं न गृहीतवन्तः। यिशायाहो यथा
लिखितवान्,

अस्मत्प्रचारिते वाक्ये विश्वासमकरोद्धि कः।'

१७ अतएव श्रवणाद् विश्वास ऐश्वरवाक्यप्रचारात् श्रवणञ्च भवति।
१८ तर्ह्यहं ब्रवीमि तैः किं नाश्रावि? अवश्यम् अश्रावि, यस्मात्

तेषां शब्दो महीं व्याप्नोद् वाक्यञ्च निखिलं जगत्।

१९ अपरमपि वदामि, इस्रायेलीयलोकाः किम् एतां कथां न
बुध्यन्ते? प्रथमतो मोशिरिदं वाक्यं प्रोवाच,

अहमुत्तापयिष्ये तान् अगण्यमानवैरपि।
क्लेक्ष्यामि जातिम् एताञ्च प्रोन्मत्तभिन्नजातिभिः।

२० अपरञ्च यिशायाहोऽतिशयाक्षोभेण कथयामास, यथा,

अधि मां यैस्तु नापेक्षि सम्प्राप्तस्तै र्जनैरहं।
अधि मां यै र्न सम्पृष्टं विज्ञातस्तै र्जनैरहं॥

किन्त्विस्रायेलीयलोकान् अधि कथयाञ्चकार, २१
यैराज्ञालङ्घिभि र्लोकै र्विरुद्धं वाक्यमुच्यते।
तान् प्रत्येव दिनं कृत्स्नं हस्तौ विस्तारयाम्यहं॥

पतितानां इस्रायेलीयानां परिशेषे परित्राणत्वं कथनम्।

ईश्वरेण स्वकीयलोका अपसारिता अहं किम् ईदृशं वाक्यं ११ १
ब्रवीमि? तन्न भवतु यतोऽहमपि बिन्यामीनगोत्रीय इब्राहीम-
वंशीय इस्रायेलीयलोकोऽस्मि। ईश्वरेण पूर्व्वं ये प्रदृष्टास्ते स्वकी- २
यलोका अपसारिता इति नहि। अपरम् एलियोपाख्याने शास्त्रे
यल्लिखितम् आस्ते तद् यूयं किं न जानीथ? 'हे परमेश्वर ३
लोकास्त्वदीयाः सर्व्वा यज्ञवेदीरभञ्जन् तथा तव भाववादिनः
सर्व्वान् अघ्नन् केवल एकोऽहम् अवशिष्ट आसे ते ममापि प्राणान्
नाशयितुं चेष्टन्ते,' एतां कथाम् इस्रायेलीयलोकानां विरुद्धम्
एलिय ईश्वराय निवेदयामास। ततस्तं प्रतीश्वरस्योत्तरं किं जातं? ४
बाल्नाम्नो देवस्य साक्षात् यै र्जानूनि न पातितानि तादृशाः सप्त
सहस्राणि लोका अवशेषिता मया। तद्वद् एतस्मिन् वर्त्तमान- ५
कालेऽपि अनुग्रहेणाभिरुचितास्तेषाम् अवशिष्टाः कतिपया लोकाः
सन्ति। अतएव तद् यद्यनुग्रहेण भवति तर्हि क्रियया न भवति ६
नो चेद् अनुग्रहोऽननुग्रह एव, यदि वा क्रियया भवति तर्ह्यनुग्रहेण
न भवति नो चेत् क्रिया क्रियैव न भवति।

तर्हि किं? इस्रायेलीयलोका यद् अमृगयन्त तन्न प्रापुः। ७
किन्त्वभिरुचितलोकास्तत् प्रापुस्तदन्ये सर्व्वे अन्धीभूताः। यथा ८
लिखितम् आस्ते,

घोरनिद्रालुताभावं दृष्टिहीने च लोचने ।
कर्णौ श्रुतिविहीनौ च प्रददौ तेभ्य ईश्वरः ॥
९ एतस्मिन् दायूदोऽपि लिखितवान् यथा,
अतो भुक्त्यासनं तेषाम् उन्माथवद् भविष्यति ।
वा वंशयन्त्रवद् बाधा दण्डवद् वा भविष्यति ॥
१० भविष्यन्ति तथान्धास्ते नेत्रैः पश्यन्ति नो यथा ।
वेपथुः कटिदेशस्य तेषां नित्यं भविष्यति ॥
११ पतनार्थं ते स्खलितवन्त इति वाचं किमहं वदामि? तन्न
भवतु किन्तु तान् उद्योगिनः कर्त्तुं तेषां पतनात् परजातीयलोकैः
१२ परित्राणं प्राप्तं । तेषां पतनं यदि जगतो लोकानां लाभजन-
कम् अभवत् तेषां ह्रासोऽपि यदि परजातीयानां लाभजनको-
१३ ऽभवत् तर्हि तेषां वृद्धिः कति लाभजनिका भविष्यति? अतो
हे परजातीया युष्मान् सम्बोध्य कथयामि निजानां ज्ञातिबन्धूनां
मनःसूद्योगं जनयन् तेषां मध्ये कियतां लोकानां यथा परित्राणं
१४ साधयामि तन्निमित्तं परजातीयानां निकटे प्रेरितः सन् अहं
१५ स्वपदस्य महिमानं प्रकाशयामि । तेषां निग्रहेण यदीश्वरेण सह
जगतो जनानां मेलनं जातं तर्हि तेषाम् अनुगृहीतत्वं मृतदेहे
१६ यथा जीवनलाभस्तद्वत् किं न भविष्यति? अपरं प्रथमजातं फलं
यदि पवित्रं भवति तर्हि सर्व्वमेव फलं पवित्रं भविष्यति; तथा
मूलं यदि पवित्रं भवति तर्हि शाखा अपि तथैव भविष्यन्ति ।
१७ कियतीनां शाखानां छेदने कृते त्वं वन्यजितवृक्षस्य शाखा भूत्वा
यदि तच्छाखानां स्थाने रोपिता सती जितवृक्षीयमूलस्य रसं
१८ भुंक्षे, तर्हि तासां भिन्नशाखानां विरुद्धं मा गर्व्वीः; यदि गर्व्वसि
तर्हि त्वं मूलं यन्न धारयसि किन्तु मूलं त्वां धारयतीति संस्मर ।

अपरञ्च यदि वदसि मां रोपयितुं ताः शाखा विभिन्ना अभवन्; १९
भद्रम्, अविश्वासकारणात् ते विभिन्ना जातास्तथा विश्वासकारणात् २०
त्वं रोपितो जातस्तस्माद् अहङ्कारम् अकृत्वा ससाध्वसो भव।
यत ईश्वरो यदि स्वाभाविकीः शाखा न रक्षति तर्हि सावधानो २१
भव चेत् त्वामपि न स्थापयति। इत्यत्रेश्वरस्य यादृशी कृपा तादृशं २२
भयानकत्वमपि त्वया दृश्यतां; ये पतितास्तान् प्रति तस्य भयानकत्वं
दृश्यतां, त्वञ्च यदि तत्कृपाश्रितस्तिष्ठसि तर्हि त्वां प्रति कृपा
द्रक्ष्यते; नो चेत् त्वमपि तद्वत् छिन्नो भविष्यसि।

अपरञ्च ते यद्यविश्वासे न तिष्ठन्ति तर्हि पुनरपि रोपयिष्यन्ते २३
यस्मात् तान् पुनरपि रोपयितुम् ईश्वरस्य शक्तिरास्ते। वन्यजित- २४
वृक्षस्य शाखा सन् त्वं यदि ततश्छिन्नो रीतिव्यत्ययेनोत्तमजितवृक्षे
रोपितोऽभवस्तर्हि तस्य वृक्षस्य स्वीया याः शाखास्ताः किं पुनः
स्ववृक्षे संलगितुं न शक्नुवन्ति? हे भ्रातरो युष्माकम् आत्माभि- २५
मानो यन्न जायते तदर्थं ममेदृशी वाञ्छा भवति यूयं एतन्नि-
गूढतत्त्वम् अजानन्तो यन्न तिष्ठथ; वस्तुतो यावत्कालं सम्पूर्णरूपेण
परजातीयानां संग्रहो न भविष्यति तावत्कालम् अंशत्वेन इस्रायेे-
लीयलोकानाम् अन्धता स्थास्यति; पश्चात् ते सर्व्वे परित्रास्यन्ते; २६
एतादृशं लिखितमप्यास्ते,

आगमिष्यति सीयोनाद् एको यस्त्राणदायकः।
अधर्म्मं याकोबो वंशात् स तु दूरीकरिष्यति।
तथा दूरीकरिष्यामि तेषां पापान्यहं यदा। २७
तदा तैरेव सार्द्धं मे नियमोऽयं भविष्यति।

सुसंवादात् ते युष्माकं विपक्षा अभवन् किन्त्वभिरुचितत्वात् ते २८
पितृलोकानां कृते प्रियपात्राणि भवन्ति। यत ईश्वरस्य दानाद् २९

३० आह्वानाच्च पश्चात्तापो न भवति । अतएव पूर्व्वम् ईश्वरेऽविश्वा-
सिनः सन्तोऽपि यूयं यद्वत् सम्प्रति तेषाम् अविश्वासकारणाद्
३१ ईश्वरस्य कृपापात्राणि जातास्तद्वद् इदानीं तेऽविश्वासिनः सन्ति
३२ किन्तु युष्माभि र्लब्धकृपाकारणात् तैरपि कृपा लप्स्यते । ईश्वरः
सर्व्वान् प्रति कृपां प्रकाशयितुं सर्व्वान् अविश्वासित्वेन गणयति ।
३३ अहो ईश्वरस्य ज्ञानबुद्धिरूपयो र्धनयोः कीदृक् प्राचुर्य्यं । तस्य
राजशासनस्य तत्त्वं कीदृग् अप्राप्यं । तस्य मार्गाश्च कीदृग्
३४ अनुपलक्ष्याः । परमेश्वरस्य सङ्कल्पं को ज्ञातवान् ? तस्य मन्त्री वा
३५ कोऽभवत् ? को वा तस्योपकारी भूत्वा तत्कृते तेन प्रत्युपकर्त्तव्यः ?
३६ यतो वस्तुमात्रमेव तस्मात् तेन तस्मै चाभवत् तदीयो महिमा
सर्व्वदा प्रकाशितो भवतु । इति ।

धर्म्माचरणविषयिणी नानाविधि ।

१२ १ हे भ्रातर ईश्वरस्य कृपयाहं युष्मान् विनये यूयं स्वं स्वं
शरीरं सजीवं पवित्रं ग्राह्यं बलिम् ईश्वरमुद्दिश्य समुत्सृजत, एषा सेवा
२ युष्माकं योग्या । अपरं यूयं सांसारिका इव माचरत, किन्तु
स्वं स्वं स्वभावं परावर्त्त्य नूतनाचारिणो भवत, तत ईश्वरस्य निदेशः
कीदृग् उत्तमो ग्रहणीयः सम्पूर्णश्चेति युष्माभिरनुभाविष्यते ।
३ कश्चिदपि जनो योग्यत्वादधिकं स्वं न मन्यतां किन्तु ईश्वरो यस्मै
विश्वासस्य यत्परिमाणम् अददात् स तदनुसारतो योग्यरूपं स्वं
मनुताम्, ईश्वराद् अनुग्रहं प्राप्तः सन् युष्माकम् एकैकं जनम् इत्या-
४ ज्ञापयामि । यतो यद्वदस्माकम् एकस्मिन् शरीरे बहून्यङ्गानि
५ सन्ति किन्तु सर्व्वेषामङ्गानां कार्य्यं समानं नहि; तद्वदस्माकं बहु-
त्वेऽपि सर्व्वे वयं ख्रीष्टे एकशरीराः परस्परम् अङ्गप्रत्यङ्गत्वेन
६ भवामः । अस्माद् ईश्वरानुग्रहेण विशेषं विशेषं दानम् अस्मासु

प्राप्तेषु सत्सु कोऽपि यदि भाववाक्यं वदति तर्हि विश्वासस्य परि-
माणानुसारतः स तद् वदतु; यद्वा यदि कश्चित् सेवनकारी भवति ७
तर्हि स तत्सेवनं करोतु; अथवा यदि कश्चिद् अध्यापयिता भवति
तर्हि सोऽध्यापयतु; तथा य उपदेष्टा भवति स उपदिशतु; यश्च ८
दाता स सरलतया ददातु, यस्त्वधिपतिः स यत्नेनाधिपतित्वं
करोतु, यश्च दयालुः स हृष्टमनसा दयताम्।
अपरञ्च युष्माकं प्रेम कापट्यवर्जितं भवतु; यद् अभद्रं तद् ९
ऋतीयध्वं यच्च भद्रं तस्मिन् अनुरज्यध्वम्। अपरं भ्रातृत्वप्रेम्ना १०
परस्परं प्रीयध्वं समादराद् एकोऽपरजनं श्रेष्ठं जानीध्वम्। तथा ११
कार्य्ये निरालस्या मनसि च सोद्योगाः सन्तः प्रभुं सेवध्वम् अपरं १२
प्रत्याशायाम् आनन्दिता दुःखसमये च धैर्य्ययुक्ता भवत; प्रार्थनायां
सततं प्रवर्त्तध्वं। पवित्राणां दीनतां दूरीकुरुध्वम् अतिथिसेवायाम् १३
अनुरज्यध्वम्। ये जना युष्मान् ताडयन्ति तान् आशिषं वदत, १४
शापम् अदत्त्वा दद्ध्वमाशिषम्। ये जना आनन्दन्ति तैः सार्द्धम् १५
आनन्दत ये च रुदन्ति तैः सह रुदित। अपरञ्च युष्माकं मनसां १६
परस्परम् एको भावो भवतु; अपरम् उच्चपदम् अनाकाङ्क्ष्य
नीचलोकैः सहापि मार्दवम् आचरत; स्वान् ज्ञानिनो न मन्यध्वं।
परस्माद् अपकारं प्राप्यापि परं नापकुरुत। सर्व्वेषां दृष्टितो १७
यत् कर्म्मोत्तमं तदेव कुरुत। यदि भवितुं शक्यते तर्हि यथाशक्ति १८
सर्व्वलोकैः सह निर्व्विरोधेन कालं यापयत। हे प्रियबन्धवः, १९
कस्मैचिद् अपकारस्य समुचितं दण्डं स्वयं न दद्ध्वं, किन्त्वीश्वरीय-
क्रोधाय स्थानं दत्त यतो लिखितमास्ते परमेश्वरः कथयति,

दानं फलस्य मत्कर्म सूचितं प्रददाम्यहं।

इतिकारणाद् २०

रिपु र्यदि क्षुधार्त्तस्ते तर्हि तं त्वं प्रभोजय।
तथा यदि तृषार्त्तः स्यात् तर्हि तं परिपायय।
तेन त्वं मस्तके तस्य ज्वलदग्निं निधास्यसि।

२१ कुक्रियया पराजिता न सन्त उत्तमक्रियया कुक्रियां पराजयत।

राजामानवशमाजं प्रति कर्त्तव्यम्।

१३ १ युष्माकम् एकैकजनः शासनपदस्य निघ्नो भवतु यतो यानि शासनपदानि सन्ति तानि सर्व्वाणीश्वरेण स्थापितानि; ईश्वरं
२ विना पदस्थापनं न भवति। इति हेतोः शासनपदस्य यत् प्रातिकूल्यं तद् ईश्वरीयनिरूपणस्य प्रातिकूल्यमेव; अपरं ये प्रातिकूल्यम् आचरन्ति ते स्वेषां समुचितं दण्डं स्वयमेव घटयन्ते।
३ शास्ता सदाचारिणां भयप्रदो नहि दुराचारिणामेव भयप्रदो
४ भवति; त्वं किं तस्मान् निर्भयो भवितुम् इच्छसि? तर्हि सत्कर्म्माचर, तस्माद् यशो लप्स्यसे, यतस्तव सदाचरणाय स ईश्वरस्य भृत्योऽस्ति। किन्तु यदि कुकर्म्माचरसि तर्हि त्वं शङ्कस्व यतः स निरर्थकं खड्गं न धारयति; कुकर्म्माचारिणं समुचितं
५ दण्डयितुम् स ईश्वरस्य दण्डदभृत्य एव। अतएव केवलदण्डभया-
६ न्नहि किन्तु सदसद्बोधादपि तस्य वश्येन भवितव्यं। एतस्माद् युष्माकं राजकरदानमप्युचितं यस्माद् ये करं गृह्णन्ति त ईश्वरस्य
७ किङ्करा भूत्वा सततम् एतस्मिन् कर्म्मणि निविष्टास्तिष्ठन्ति। अस्मात् करग्राहिणे करं दत्त, तथा शुल्कग्राहिणे शुल्कं दत्त, अपरं यस्माद् भेतव्यं तस्माद् बिभीत, यश्च समादरणीयस्तं समाद्रियध्वम्; इत्थं यस्य यत् प्राप्यं तत् तस्मै दत्त।

८ युष्माकं परस्परं प्रेम विनान्यत् किमपि देयम् ऋणं न भवतु,
९ यतो यः परस्मिन् प्रेम करोति तेन व्यवस्था सिध्यति। वस्तुतः

परदारान् मा गच्छ, नरहत्यां मा कार्षीः, चौर्य्यं मा कार्षीः,
मिथ्यासाक्ष्यं मा देहि, लोभं मा कार्षीः, एताः सर्व्वा आज्ञा
एताभ्यो भिन्ना या काचिद् आज्ञास्ति सापि स्वसमीपवासिनि
स्ववत् प्रेम कुर्व्वित्यनेन वचनेन वेदिता। यतः प्रेम समीपवासिनो- १०
ऽशुभं न जनयति तस्मात् प्रेम्ना सर्व्वा व्यवस्था पाल्यते।

विश्वासीभवनकालेऽस्माकं परित्राणस्य सामीप्याद् इदानीं तस्य ११
सामीप्यम् अव्यवहितं; अतः समयं विविच्यास्माभिः साम्प्रतम्
अवश्यमेव निद्रातो जागर्त्तव्यं। बहुतरा यामिनी गता प्रभातं १२
सन्निधिं प्राप्तं तस्मात् तामसीयाः क्रियाः परित्यज्यास्माभि र्वासरीया
सज्जा परिधातव्या। अतो हेतो र्वयं दिवा विहितं सदाचरणम् १३
आचरिष्यामः। रङ्गरसो मत्तत्वं लम्पटत्वं कामुकत्वं विवाद ईर्ष्या
चैतानि परित्यक्ष्यामः। यूयं प्रभुयीशुख्रीष्टरूपं परिच्छदं परिधद्ध्वं १४
सुखाभिलाषपूरणाय शारीरिकाचरणं माचरत।

दुर्ब्बलविश्वासिभ्रातॄणां प्रति कर्त्तव्यम्।

यो जनोऽदृढविश्वासस्तं युष्माकं सङ्गिनं कुरुत किन्तु सन्देह- १४ १
विचारार्थं नहि। यतो निषिद्धं किमपि खाद्यद्रव्यं नास्ति, कस्य- २
चिज्जनस्य प्रत्यय एतादृशो विद्यते किन्त्वदृढविश्वासः कश्चिदपरो
जनः केवलं शाकं भुङ्क्ते। तर्हि यो जनः साधारणं द्रव्यं भुङ्क्ते स ३
विशेषद्रव्यभोक्तारं नावजानीयात् तथा विशेषद्रव्यभोक्तापि साधा-
रणद्रव्यभोक्तारं दोषिणं न कुर्य्यात्, यस्माद् ईश्वरस्तम् अगृह्लात्।
हे परदासस्य दूषयितस्त्वं कः? निजप्रभोः समीपे तेन पदस्थेन ४
पदच्युतेन वा भवितव्यं स च पदस्थ एव भविष्यति यत ईश्वरस्तं
पदस्थं कर्त्तुं शक्नोति। अपरञ्च कश्चिज्जनो दिनाद् दिनं विशेषं ५
मन्यते कश्चित्तु सर्व्वाणि दिनानि समानानि मन्यते, एकैको जनः

६ स्वीयमनसि विविच्य निश्चिनोतु। यो जनः किञ्चन दिनं विशेषं
मन्यते स प्रभुभक्त्या तत् मन्यते, यश्च जनः किमपि दिनं विशेषं
न मन्यते सोऽपि प्रभुभक्त्या तन्न मन्यते; अपरञ्च यः सर्व्वाणि
भक्ष्यद्रव्याणि भुङ्क्ते स प्रभुभक्त्या तानि भुङ्क्ते यतः स ईश्वरं धन्यं
वक्ति, यश्च न भुङ्क्ते सोऽपि प्रभुभक्त्यैव न भुञ्जान ईश्वरं धन्यं ब्रूते।
७ अपरम् अस्माकं कश्चित् निजनिमित्तं प्राणान् धारयति निज-
८ निमित्तं म्रियते वा तन्न; किन्तु यदि वयं प्राणान् धारयामस्तर्हि
प्रभुनिमित्तं धारयामः, यदि च प्राणान् त्यजामस्तर्ह्यपि प्रभुनिमित्तं
९ त्यजामः, अतएव जीवने मरणे वा वयं प्रभोरेवास्महे। यतो
जीवन्तो मृताश्चेत्युभयेषां लोकानां प्रभुत्वप्राप्त्यर्थं ख्रीष्टो मृत
१० उत्थितः पुनर्जीवितश्च। किन्तु त्वं निजं भ्रातरं कुतो दूषयसि?
तथा त्वं निजं भ्रातरं कुतस्तुच्छं जानासि? ख्रीष्टस्य विचारसिंहासनस्य
११ सम्मुखे सर्व्वैरस्माभिरुपस्थातव्यं; यादृशं लिखितम् आस्ते,

परेशः शपथं कुर्व्वन् वाक्यमेतत् पुरावदत्।
सर्व्वो जनः समीपे मे जानुपातं करिष्यति।
जिह्वैकैका तथेशस्य निघ्नत्वं स्वीकरिष्यति।

१२ अतएव ईश्वरसमीपेऽस्माकम् एकैकजनेन निजा कथा कथयितव्या।
१३ इत्थं सति वयम् अद्यारभ्य परस्परं न दूषयन्तः स्वभ्रातु र्विघ्नो
१४ व्याघातो वा यन्न जायेत तादृशीमीहां कुर्म्महे। किमपि वस्तु
स्वभावतो नाशुचि भवतीत्यहं जाने तथा प्रभुना यीशुख्रीष्टेनापि
निश्चितं जाने, किन्तु यो जनो यद् द्रव्यम् अपवित्रं जानीते तस्य
१५ कृते तद् अपवित्रम् आस्ते। अतएव तव भक्ष्यद्रव्येण तव भ्राता
यदि शोकान्वितो भवति तर्हि त्वं भ्रातरं प्रति प्रेम्ना नाचरसि।
ख्रीष्टो यस्य कृते स्वप्राणान् व्ययितवान् त्वं निजेन भक्ष्यद्रव्येण तं

न नाशय। अपरं युष्माकम् उत्तमं कर्म्म निन्दितं न भवतु। १६
भक्ष्यं पेयञ्चेश्वरराज्यस्य सारो नहि, किन्तु धार्म्मिकता शान्तिश्च १७
पवित्रेणात्मना जात आनन्दश्च। एतै र्यो जनः ख्रीष्टं सेवते, स १८
एवेश्वरस्य तुष्टिकरो मनुष्यैश्च सुख्यात। अतएव येनास्माकं सर्व्वेषां १९
परस्परम् ऐक्यं निष्ठा च जायते तदेवास्माभि र्यतितव्यं। भक्ष्यार्थम् २०
ईश्वरस्य कर्म्मणो हानिं मा जनयत; सर्व्वं वस्तु पवित्रमिति सत्यं
तथापि यो जनो यद् भुक्त्वा विघ्नं लभते तदर्थं तद् भद्रं नहि।
तव मांसभक्षणसुरापानादिभिः क्रियाभि र्यदि तव भ्रातुः पाद- २१
स्खलनं विघ्नो वा चाञ्चल्यं वा जायते तर्हि तद्भोजनपानयोस्त्यागो
भद्रः। यदि तव प्रत्ययस्तिष्ठति तर्हीश्वरस्य गोचरे स्वान्तरे तं २२
गोपय; यो जनः स्वमतेन स्वं दोषिणं न करोति स एव धन्यः।
किन्तु यः कश्चित् संशय्य भुङ्क्तेऽर्थात् न प्रतीत्य भुङ्क्ते, स एवावश्यं २३
दण्डार्हो भविष्यति, यतो यत् प्रत्ययजं नहि तदेव पापमयं भवति।

बलवद्भिरस्माभि र्दुर्ब्बलानां दौर्ब्बल्यं सोढव्यं न च स्वेषाम् १५ १
इष्टाचार आचरितव्यः। अस्माकम् एकैको जनः स्वसमीपवासिनो २
हितार्थं निष्ठार्थञ्च तस्यैवेष्टाचारम् आचरतु। यतः ख्रीष्टोऽपि ३
निजेष्टाचारं नाचरितवान्, यथा लिखितम् आस्ते,

त्वन्निन्दकगणस्यैव निन्दाभि र्निन्दितोऽस्म्यहं।

अपरञ्च वयं यत् सहिष्णुतासान्त्वनयो र्जनकेन शास्त्रेण प्रत्याशां ४
लभेमहि तन्निमित्तं पूर्व्वकाले लिखितानि सर्व्ववचनान्यस्माकम्
उपदेशार्थमेव लिलिखिरे। सहिष्णुतासान्त्वनयोराकरो य ईश्वरः ५
स एवं करोतु यत् प्रभु र्यीशुख्रीष्ट इव युष्माकम् एकजनोऽन्य-
जनेन सार्द्धं मनस ऐक्यम् आचरेत्; यूयञ्च सर्व्वे एकचित्ता भूत्वा ६
मुखैकेनेवास्मत्प्रभुयीशुख्रीष्टस्य पितुरीश्वरस्य गुणान् कीर्त्तयेत्।

यिहूदीयानां परजातीयानाञ्च प्रति यीशुख्रीष्टस्य प्रेमकरणम्।

७ अपरम् ईश्वरस्य महिम्नः प्रकाशार्थं ख्रीष्टो यथा युष्मान् प्रत्य-
गृह्लात् तथा युष्माकमप्येको जनोऽन्यजनं प्रतिगृह्लातु।
८ ईश्वरस्य सत्यता पितृपुरुषान् प्रति तस्य प्रतिज्ञा च यत्
९ प्रामाण्यं गच्छेत् तस्य दयालुत्वाच्च परजातीया यद् ईश्वरस्य गुणान्
कीर्त्तयेयुस्तदर्थं यीशुः ख्रीष्टस्त्वक्छेदनियमस्य निघ्नोऽभवद् इत्यहं
वदामि। यथा लिखितम् आस्ते,

अतोऽहं सम्मुखे तिष्ठन् भिन्नदेशनिवासिनां।
स्तुवंस्त्वां परिगास्यामि तव नाम्नि परेश्वर॥

१० अपरमपि लिखितम् आस्ते,

हे परजातयो यूयं समं नन्दत तज्जनैः।

११ पुनश्च लिखितम् आस्ते,

हे सर्व्वदेशिनो यूयं धन्यं ब्रूत परेश्वरं।
हे तदीयनरा यूयं कुरुध्वं तत्प्रशंसनं॥

१२ अपर यीशायाहोऽपि लिलेख,

यीशयस्य तु यत् मूलं तत् प्रकाशिष्यते तदा।
सर्व्वजातीयनृणाञ्च शासकः समुदेष्यति।
तत्रान्यदेशिलोकैश्च प्रत्याशा प्रकरिष्यते॥

१३ अतएव यूयं पवित्रस्यात्मनः प्रभावाद् यत् सम्पूर्णां प्रत्याशां
लप्स्यध्वे तदर्थं तत्प्रत्याशाजनक ईश्वरो विश्वासेन युष्मान् शान्त्या-
नन्दाभ्यां सम्पूर्णान् करोतु।

उपसंहारः।

१४ हे भ्रातरो यूयं सद्भावयुक्ताः सर्व्वप्रकारेण ज्ञानेन च सम्पूर्णाः
१५ परस्परोपदेशे च तत्परा इत्यहं निश्चितं जानामि, तथाप्यहं यत्

प्रगल्भतरो भवन् युष्मान् प्रबोधयामि तस्यैकं कारणमिदं। परजा १६
तीयाः पवित्रेणात्मना पावितनैवेद्यरूपा भूत्वा यद् ग्राह्या भवेयुस्त-
न्निमित्तमहम् ईश्वरस्य सुसंवादं प्रचारयितुं परजातीयानां मध्ये
यीशुख्रीष्टस्य सेवकत्वं दानं ईश्वरात् लब्धवानस्मि। ईश्वरं प्रति १७
यीशुख्रीष्टेन मम श्लाघाकरणस्य कारणम् आस्ते। परजातीयान् १८
आज्ञाग्राहिणः कर्त्तुं ख्रीष्टो वाक्येन क्रियया च, आश्चर्य्यलक्षणैश्चित्र-
क्रियाभिः पवित्रस्यात्मनः प्रभावेन च यानि कर्म्माणि मया साधि-
तवान्, केवलं तान्येव विनान्यस्य कस्यचित् कर्म्मणो वर्णनां कर्त्तुं १९
प्रगल्भो न भवामि। तस्मात् आ यिरूशालेम इल्लूरिकं यावत्
सर्व्वत्र ख्रीष्टस्य सुसंवादं प्राचारयं। अन्येन निचितायां भित्तावहं २०
यन्न निचिनोमि तन्निमित्तं यत्र यत्र स्थाने ख्रीष्टस्य नाम कदापि
केनापि न ज्ञापितं तत्र तत्र सुसंवादं प्रचारयितुम् अहं यते।
यादृशं लिखितम् आस्ते, २१

ये र्वार्त्ता तस्य न प्राप्ता दर्शनं तैस्तु लप्स्यते।
यैश्च नैव श्रुतं किञ्चित् बोद्धुं शक्ष्यन्ति ते जनाः॥

तस्माद् युष्मत्समीपगमनाद् अहं मुहुर्मुहु र्निवारितोऽभवं। किन्त्वि- २२
दानीम् अत्र प्रदेशेषु मया न गतं स्थानं किमपि नावशिष्यते २३
युष्मत्समीपं गन्तुं बहुवत्सरानारभ्य मामकीनाकाङ्क्षा च विद्यत
इति हेतोः स्पानियादेशगमनकालेऽहं युष्मन्मध्येन गच्छन् युष्मान् २४
आलोकिष्ये, ततः परं युष्मत्सम्भाषणेन तृप्तिं परिलभ्य तद्देशगमनार्थं
युष्माभि र्विसर्जयिष्ये, ईदृशी मदीया प्रत्याशा विद्यते। किन्तु २५
साम्प्रतं पवित्रलोकानां सेवनाय यिरूशालेमनगरं व्रजामि। यतो २६
यिरूशालेमस्थपवित्रलोकानां मध्ये ये दरिद्रा अर्थविश्राणनेन
तानुपकर्त्तुं माकिदनियादेशीया आखायादेशीयाश्च लोका ऐच्छन्।

२७ एषा तेषां सदिच्छा यतस्ते तेषाम् ऋणिनः सन्ति यतो हेतोः
परजातीया येषां परमार्थस्यांशिनो जाता ऐहिकविषये तेषामुप-
२८ कारस्तैः कर्त्तव्यः। अतो मया तत् कर्म्म साधयित्वा तस्मिन् फले
२९ तेभ्यः समर्पिते युष्मन्मध्येन स्पानियादेशो गमिष्यते। युष्मत्समीपे
ममागमनसमये ख्रीष्टस्य सुसंवादस्य पूर्णवरेण सम्बलितः सन् अहम्
आगमिष्यामि इति मया ज्ञायते।
३० हे भ्रातृगण प्रभो यीशुख्रीष्टस्य नाम्ना पवित्रस्यात्मनः प्रेम्ना
३१ च विनयेऽहं यिहूदादेशस्थानाम् अविश्वासिलोकानां करेभ्यो यदहं
रक्षां लभेय मदीयैतेन सेवनकर्म्मणा च यद् यिरूशालेमस्थाः
३२ पवित्रलोकास्तुष्येयुः, तदर्थं यूयं मत्कृत ईश्वराय प्रार्थयमाणा यतध्वं
तेनाहम् ईश्वरेच्छया सानन्दं युष्मत्समीपं गत्वा युष्माभिः सहितः
३३ प्राणान् आप्यायितुं पारयिष्यामि। शान्तिदायक ईश्वरो युष्माकं
सर्व्वेषां सङ्गी भूयात् इति।

१६ १ किंक्रीयानगरीयमण्डल्याः परिचारिका या फैबीनामिका-
२ स्माकं धर्म्मभगिनी तस्याः कृतेऽहं युष्मान् निवेदयामि, यूयं तां
प्रभुमाश्रितां विज्ञाय तस्या आतिथ्यं पवित्रलोकार्हं कुरुध्वं, युष्म-
त्तस्तस्या य उपकारो भवितुं शक्नोति तं कुरुध्वं, यस्मात् तया
३ बहूनां मम चोपकारः कृतः। अपरञ्च ख्रीष्टस्य यीशोः कर्म्मणि मम
सहकारिणौ मम प्राणरक्षार्थञ्च स्वप्राणान् पणीकृतवन्तौ यौ
४ प्रिष्किल्लाक्किलौ तौ मम नमस्कारं ज्ञापयध्वं। ताभ्याम् उपका-
रासिः केवलं मया स्वीकर्त्तव्येति नहि परजातीयाभिः सर्व्वमण्ड-
५ लीभिरपि। अपरञ्च तयो र्गृहे स्थितान् मण्डलीलोकान् मम
नमस्कारं ज्ञापयध्वं। तद्वद् आशियादेशे ख्रीष्टस्य पक्षे प्रथमजा-
तफलस्वरूपो य इपेनितनामा मम प्रियबन्धुस्तमपि मम नमस्कारं

ज्ञापयध्वं। अपरं बहुश्रमेणास्मान् असेवत या मरियम् तामपि ६
नमस्कारं ज्ञापयध्वं। अपरञ्च प्रेरितेषु ख्यातकीर्त्ती मदग्रे ख्रीष्टा- ७
श्रितौ मम स्वजातीयौ सहबन्दिनौ च यावान्द्रनीकयूनियौ तौ
मम नमस्कारं ज्ञापयध्वं। तथा प्रभौ मत्प्रियतमम् आम्प्लियमपि ८
मम नमस्कारं ज्ञापयध्वं। अपरं ख्रीष्टसेवायां मम सहकारिणम् ९
ऊर्ब्बाणं मम प्रियतमं स्ताखुञ्च मम नमस्कारं ज्ञापयध्वं। अपरं १०
ख्रीष्टेन परीक्षितम् आपिल्लिं मम नमस्कारं वदत, आरिष्टबूलस्य
परिजनांश्च मम नमस्कारं ज्ञापयध्वं। अपरं मम ज्ञातिं हेरो- ११
दियोनं मम नमस्कारं वदत, तथा नार्किसस्य परिवाराणां मध्ये
ये प्रभुमाश्रितास्तान् मम नमस्कारं वदत। अपरं प्रभोः सेवायां १२
परिश्रमकारिण्यौ त्रुफेनात्रुफोषे मम नमस्कारं वदत, तथा प्रभोः
सेवायाम् अत्यन्तं परिश्रमकारिणी या प्रिया पर्षिस्तां नमस्कारं
ज्ञापयध्वं। अपरं प्रभोरभिरुचितं रूफं मम धर्म्ममाता या तस्य १३
माता तामपि नमस्कारं वदत। अपरम् असुंक्रितं फ्लिगोनं हर्म्मं १४
पात्रवं हर्म्मिम् एतेषां सङ्गिभ्रातृगणञ्च नमस्कारं ज्ञापयध्वं। अपरं १५
फिललगो यूलिया नीरियस्तस्य भगिन्यलुम्पा चैतान् एतैः सार्द्धं
यावन्तः पवित्रलोका आसते तानपि नमस्कारं ज्ञापयध्वं। यूयं १६
परस्परं पवित्रचुम्बनेन नमस्कुरुध्वं। ख्रीष्टस्य मण्डलीगणो युष्मान्
नमस्कुरुते।

हे भ्रातरो युष्मान् विनयेऽहं युष्माभि र्या शिक्षा लब्धा ताम् १७
अतिक्रम्य ये विच्छेदान् विघ्नांश्च कुर्व्वन्ति तान् निश्चिनुत तेषां
सङ्गं वर्जयत च। यतस्तादृशा लोका अस्माकं प्रभो र्यीशुख्रीष्टस्य १८
दासा इति नहि किन्तु स्वोदरस्यैव दासाः; अपरं प्रणयवचनै
र्मधुरवाक्यैश्च सरललोकानां मनांसि मोहयन्ति। युष्माकम् आज्ञा- १९

ग्राह्यिलं सर्व्वत्र सर्व्वैं र्ज्ञातं ततोऽहं युष्मासु सानन्दोऽभवं तथापि यूयं यत् सद्ज्ञानेन ज्ञानिनः कुज्ञाने चातत्परा भवेतेति ममाभि-
२० लाषः। अधिकन्तु शान्तिदायक ईश्वरः शैतानम् अविलम्बं युष्माकं पदानाम् अधो मर्द्दिष्यति। अस्माकं प्रभु यीशुख्रीष्टो युष्मासु प्रसादं क्रियात्। इति।

२१ मम सहकारी तीमथियो मम ज्ञातयो लूकियो यासोन्
२२ सोसिपात्रश्चेमे युष्मान् नमस्कुर्व्वन्ति। अपरम् एतत्पत्रलेखकस्तर्त्ति-
२३ यनामाहमपि प्रभो र्नाम्ना युष्मान् नमस्करोमि। तथा कृत्स्न-मण्डल्या मम चातिथ्यकारी गायो युष्मान् नमस्करोति। अपरम् एतन्नगरस्य धनरक्षक इरास्तः क्कार्त्तनामकश्चैको भ्राता तावपि
२४ युष्मान् नमस्कुरुतः। अस्माकं प्रभु यीशुख्रीष्टो युष्मासु सर्व्वेषु प्रसादं क्रियात्। इति।

२५ पूर्व्वकालिकयुगेषु प्रच्छन्ना या मन्त्रणाधुना प्रकाशिता भूत्वा भाववादिलिखितग्रन्थगणस्य प्रमाणाद् विश्वासेन ग्रहणार्थं सदातन-
२६ स्येश्वरस्याज्ञया सर्व्वदेशीयलोकान् ज्ञाप्यते, तस्या मन्त्रणाया ज्ञानं लब्ध्वा मया यः सुसंवादो यीशुख्रीष्टमधि प्रचार्य्यते, तदनुसाराद्
२७ युष्मान् धर्म्मे सुस्थिरान् कर्त्तुं समर्थो योऽद्वितीयः सर्व्वज्ञ ईश्वरस्तस्य धन्यवादो यीशुख्रीष्टेन सन्ततं भूयात्। इति।

# करिन्थिनः प्रति पौलस्य प्रथमं पत्रं।

आभाषः।

यावन्तः पवित्रा लोकाः स्वेषाम् अस्माकञ्च वसतिस्थानेष्वस्माकं १
प्रभो र्यीशोः ख्रीष्टस्य नाम्ना प्रार्थयन्ते तैः सहाहूतानां ख्रीष्टेन
यीशुना पवित्रीकृतानां लोकानां या ईश्वरीयमण्डली करिन्थनगरे २
विद्यते तं प्रतीश्वरस्येच्छयाहूतो यीशुख्रीष्टस्य प्रेरितः पौलः
सोस्थिनिनामा भ्राता च पत्रं लिखति। अस्माकं पित्रेश्वरेण प्रभुना ३
यीशुख्रीष्टेन च प्रसादः शान्तिश्च युष्मभ्यं दीयतां।

ईश्वरो यीशुख्रीष्टेन युष्मान् प्रति प्रसादं प्रकाशितवान्, ४
तस्मादहं युष्मन्निमित्तं सर्व्वदा मदीयेश्वरं धन्यं वदामि। ख्रीष्ट ५
सम्बन्धीयं साक्ष्यं युष्माकं मध्ये येन प्रकारेण सप्रमाणम् अभवत् ६
तेन यूयं ख्रीष्टात् सर्व्वविधवक्तृताज्ञानादीनि सर्व्वधनानि लब्धवन्तः।
ततोऽस्मत्प्रभो र्यीशुख्रीष्टस्य पुनरागमनं प्रतीक्षमाणानां युष्माकं ७
कस्यापि वरस्याभावो न भवति। अपरम् अस्माकं प्रभो र्यीशुख्री- ८
ष्टस्य दिवसे यूयं यन्निर्द्दोषा भवेत् तदर्थं स एव यावदन्तं युष्मान्
सुस्थिरान् करिष्यति। य ईश्वरः स्वपुत्रस्यास्मत्प्रभो र्यीशुख्रीष्टस्यां- ९
शिनः कर्त्तुं युष्मान् आहूतवान् स विश्वसनीयः।

भातृणामनैक्यविषये अनुयोगः।

हे भ्रातरः, अस्माकं प्रभुयीशुख्रीष्टस्य नाम्ना युष्मान् विनयेऽहं १०
सर्व्वै र्युष्माभिरेकरूपाणि वाक्यानि कथ्यन्तां युष्मन्मध्ये भिन्नसङ्घाता

११ न भवन्तु मनोविचारयोरैक्येन युष्माकं सिद्धत्वं भवतु। हे मम
भ्रातरो युष्मन्मध्ये विवादा जाता इति वार्त्तामहं क्लोय्याः परिजनै
१२ र्ज्ञापितः। ममाभिप्रेतमिदं युष्माकं कश्चित् कश्चिद् वदति पौलस्य
शिष्योऽहम् आपल्लोः शिष्योऽहं कैफाः शिष्योऽहं ख्रीष्टस्य शिष्योऽह-
१३ मिति च। ख्रीष्टस्य किं विभेदः कृतः? पौलः किं युष्मत्कृते क्रुशे
१४ हतः? पौलस्य नाम्ना वा यूयं किं स्नापिताः? क्रिष्पगायौ विना
युष्माकं मध्येऽन्यः कोऽपि मया न स्नापित इति हेतोरहम् ईश्वरं
१५ धन्यं वदामि। एतेन मम नाम्ना मानवा मया स्नापिता इति
१६ वक्तुं केनापि न शक्यते। अपरं स्तिफानस्य परिजना मया स्नापि-
तास्तदन्यः कश्चिद् यन्मया स्नापितस्तदहं न वेद्मि।
१७ ख्रीष्टेनाहं स्नापनार्थं न प्रेरितः किन्तु सुसंवादस्य प्रचारार्थमेव;
सोऽपि वाक्पटुतया मया न प्रचारितव्यः, यतस्तथा प्रचारिते
ख्रीष्टस्य क्रुशे मृत्युः फलहीनो भविष्यति।

सुसंवादीयगुणानां प्रशंसा।

१८ यतो हेतो र्ये विनश्यन्ति ते तां क्रुशस्य वार्त्तां प्रलापमिव
मन्यन्ते किञ्च परित्राणं लभमानेष्वस्मासु सा ईश्वरीयशक्तिस्वरूपा।
१९ तस्मादित्थं लिखितमास्ते,

ज्ञानवतान्तु यत् ज्ञानं तन्मया नाशयिष्यते।
विलोपयिष्यते तद्वद् बुद्धि र्बुद्धिमतां मया॥

२० ज्ञानी कुत्र? शास्त्राध्यापको वा कुत्र? इहलोकस्य विचारत-
२१ त्परो वा कुत्र? इहलोकस्य ज्ञानं किमीश्वरेण मोहीकृतं नहि?
ईश्वरस्य ज्ञानाद् इहलोकस्य मानवाः स्वज्ञानेनेश्वरस्य तत्त्वबोधं न
प्राप्नुवंस्तस्माद् ईश्वरः प्रचाररूपिणा प्रलापेन विश्वासिनः परित्रातुं
२२ रोचितवान्। यिहूदीयलोका लक्षणानि दिदृक्षन्ति परजातीयलो-

कास्तु विद्यां मृगयन्ते, वयञ्च क्रुशे हतं ख्रीष्टं प्रचारयामः। तस्य २३
प्रचारो यिहूदीयै र्विघ्न इव परजातीयैश्च प्रलाप इव मन्यते, किन्तु २४
यिहूदीयानां परजातीयानाञ्च मध्ये ये आहूतास्तेषु स ख्रीष्ट ईश्व-
रीयशक्तिरिवेश्वरीयज्ञानमिव च प्रकाशते। यत ईश्वरे यः प्रलाप २५
आरोप्यते स मानवातिरिक्तं ज्ञानमेव यच्च दौर्ब्बल्यम् ईश्वर आरो-
प्यते तत् मानवातिरिक्तं बलमेव।

हे भ्रातरः, आहूतयुष्मद्गणो युष्माभिरालोक्यतां तन्मध्ये सांसा- २६
रिकज्ञानेन ज्ञानवन्तः पराक्रमिणो वा कुलीना वा बहवो न
विद्यन्ते। यत ईश्वरो ज्ञानवतस्त्रपयितुं मूर्खलोकान् रोचितवान् २७
बलानि च त्रपयितुम् ईश्वरो दुर्ब्बलान् रोचितवान्। तथा वर्त्त- २८
मानलोकान् संस्थितिभ्रष्टान् कर्त्तुम् ईश्वरो जगतोऽपकृष्टान् हेयान्
अवर्त्तमानांश्चाभिरोचितवान्। तत ईश्वरस्य साक्षात् केनाप्यात्म- २९
श्लाघा न कर्त्तव्या। यूयञ्च तस्मात् ख्रीष्टे यीशौ संस्थितिं प्राप्तवन्तः ३०
स ईश्वराद् युष्माकं ज्ञानं धार्म्मिकत्वं पवित्रत्वं मुक्तिश्च जाता।
अतएव यद्वद् लिखितमास्ते तद्वत्,

यः कश्चित् श्लाघमानः स्यात् श्लाघतां प्रभुना स हि।

हे भ्रातरो युष्मत्समीपे ममागमनकालेऽहं वक्तृताया विद्याया २ १
वा नैपुण्येनेश्वरस्य साक्ष्यं प्रचारितवान् तन्नहि; यतो यीशुख्रीष्टं २
तस्य क्रुशे हतत्वञ्च विना नान्यत् किमपि युष्मन्मध्ये ज्ञापयितुं
विहितं बुद्धवान्। अपरञ्चातीव दौर्ब्बल्यभीतिकम्पयुक्तो युष्माभिः ३
सार्द्धमासं। अपरं युष्माकं विश्वासो यत् मानुषिकज्ञानस्य फलं न ४
भवेत् किन्त्वीश्वरीयशक्तेः फलं भवेत्, तदर्थं मम वक्तृता मदीय ५
प्रचारश्च मानुषिकज्ञानस्य मधुरवाक्यसम्बलितौ नास्तां किन्त्वात्मनः
शक्तेश्च प्रमाणयुक्तावास्तां।

ईश्वरीयज्ञानस्य श्रेष्ठत्वम् ।

६ वयं ज्ञानं भाषामहे तच्च सिद्धलोकै र्ज्ञानमिव मन्यते, तदिह-
लोकस्य ज्ञानं नहि, इहलोकस्य नश्वराणाम् अधिपतीनां वा ज्ञानं
७ नहि; किन्तु कालावस्थायाः पूर्व्वस्माद् यत् ज्ञानम् अस्माकं
विभवार्थम् ईश्वरेण निश्चित्य प्रच्छन्नं तन्निगूढम् ईश्वरीयं ज्ञानं
८ प्रभाषामहे। इहलोकस्याधिपतीनां केनापि तत् ज्ञानं न लब्धं, लब्धे
९ सति ते प्रभावविशिष्टं प्रभुं क्रुशे नाहनिष्यन्। तद्वल्लिखितमास्ते,

नेत्रेण क्वापि नो दृष्टं कर्णेनापि च न श्रुतं।
मनोमध्ये तु कस्यापि न प्रविष्टं कदापि यत्।
ईश्वरे प्रीयमाणानां कृते तत् तेन सञ्चितं।

१० अपरमीश्वरः स्वात्मना तदस्माकं साक्षात् प्राकाशयत्; यत
आत्मा सर्व्वमेवानुसन्धत्ते तेन चेश्वरस्य मर्म्मतत्त्वमपि बुध्यते।
११ मनुजस्यान्तःस्थमात्मानं विना केन मनुजेन तस्य मनुजस्य तत्त्वं
बुध्यते? तद्वदीश्वरस्यात्मानं विना केनापीश्वरस्य तत्त्वं न बुध्यते।
१२ वयञ्चेहलोकस्यात्मानं लब्धवन्तस्तन्नहि किन्त्वीश्वरस्यैवात्मानं लब्धवन्तः,
ततो हेतोरीश्वरेण स्वप्रसादाद् अस्मभ्यं यद् यद् दत्तं तत्सर्व्वम्
१३ अस्माभि र्ज्ञातुं शक्यते। तच्चास्माभि र्मानुषिकज्ञानस्य वाक्यानि
शिक्षित्वा कथ्यत इति नहि किन्त्वात्मतो वाक्यानि शिक्षित्वात्मिकै
१४ र्वाक्यैरात्मिकं भावं प्रकाशयद्भिः कथ्यते। प्राणी मनुष्य ईश्वरीया-
त्मनः शिक्षां न गृह्लाति यत आत्मिकविचारेण सा विचार्य्येति
१५ हेतोः स तां प्रलापमिव मन्यते बोद्धुञ्च न शक्नोति। आत्मिको
मानवः सर्व्वाणि विचारयति किन्तु स्वयं केनापि न विचार्य्यते।
१६ यत ईश्वरस्य मनो ज्ञात्वा तमुपदेष्टुं कः शक्नोति? किन्तु ख्रीष्टस्य
मनोऽस्माभि र्लब्धं।

प्रचारका ईश्वरस्य सहकर्म्मकारकाः, ईश्वरधनाध्यक्षत्वञ्च।

हे भ्रातरः, अहमात्मिकैरिव युष्माभिः समं सम्भाषितुं नाशक्नवं ३ १
किन्तु शारीरिकाचारिभिः ख्रीष्टधर्म्मे शिशुतुल्यैश्च जनैरिव
युष्माभिः सह समभाषे। युष्मान् कठिनभक्ष्यं न भोजयन् दुग्धम् २
अपाययं यतो यूयं भक्ष्यं ग्रहीतुं तदा नाशक्नुत इदानीमपि न
शक्नुथ, यतो हेतोरधुनापि शारीरिकाचारिण आध्वे। युष्मन्मध्ये ३
मात्सर्य्यविवादभेदा भवन्ति ततः किं शारीरिकाचारिणो नाध्वे
मानुषिकमार्गेण च न चरथ? पौलस्याहमित्यापल्लोरहमिति वा ४
यद्वाक्यं युष्माकं कैश्चित् कैश्चित् कथ्यते तस्माद् यूयं शारीरिका-
चारिण न भवथ ?

पौलः कः ? आपल्लु र्वा कः ? तौ परिचारकमात्रौ तयोरेकै- ५
कस्मै च प्रभु र्यादृक् फलमददात् तद्वत् तयोर्द्वारा यूयं विश्वासिनो
जाताः। अहं रोपितवान् आपल्लुश्च निषिक्तवान् ईश्वरश्चावर्द्धयत्। ६
अतो रोपयितृसेक्तारावसारौ वर्द्धयितेश्वर एव सारः। रोपयितृ- ७
सेक्तारौ च समौ तयोरेकैकश्च स्वश्रमयोग्यं स्ववेतनं लप्स्यते। ८
आवामीश्वरेण सह कर्म्मकारिणौ, यूयमीश्वरस्य क्षेत्रमीश्वरस्य ९
निर्म्मितिश्च। ईश्वरस्य प्रसादात् मया यत् पदं लब्धं तस्मात् १०
ज्ञानिना गृहकारिणेव मया भित्तिमूलं स्थापितं तदुपरि चान्येन
निचीयते। किन्तु येन यन्निचीयते तत् तेन विविच्यतां। यतो ११
यीशुख्रीष्टरूपं यद् भित्तिमूलं स्थापितं तदन्यत् किमपि भित्तिमूलं
स्थापयितुं केनापि न शक्यते। एतद्भित्तिमूलस्योपरि यदि केचित् १२
स्वर्णरूप्यमणिकाष्ठतृणनलान् निचिन्वन्ति, तर्ह्येकैकस्य कर्म्म प्रकाशि- १३
ष्यते यतः स दिवसस्तत् प्रकाशयिष्यति। यतो हेतोस्तेन दिवसेन
वह्निमयेनोदेतव्यं तत एकैकस्य कर्म्म कीदृशमेतस्य परीक्षा वह्निना

१४ भविष्यति। यस्य निचयनरूपं कर्म्म स्थास्नु भविष्यति स वेतनं
१५ लप्स्यते। यस्य च कर्म्म धक्ष्यते तस्य क्षतिर्भविष्यति किन्तु वह्ने
र्निर्गतजन इव स स्वयं परित्राणं प्राप्स्यति।
१६ यूयम् ईश्वरस्य मन्दिरं युष्मन्मध्ये चेश्वरस्यात्मा निवसतीति
१७ किं न जानीथ? ईश्वरस्य मन्दिरं येन विनाश्यते सोऽपीश्वरेण
विनाशयिष्यते यत ईश्वरस्य मन्दिरं पवित्रमेव यूयं तु तन्मन्दिरम्
१८ आध्वे। कोऽपि स्वं न वञ्चयतां। युष्माकं कश्चन चेदिहलोकस्य
ज्ञानेन ज्ञानवानहमिति बुध्यते तर्हि स यत् ज्ञानी भवेत् तदर्थं
१९ मूढो भवतु। यस्मादिहलोकस्य ज्ञानम् ईश्वरस्य साक्षात् मूढत्वमेव।
एतस्मिन् लिखितमप्यास्ते,

तीक्ष्णा या ज्ञानिनां बुद्धिस्तया तान् धरतीश्वरः।
२० पुनश्च। ज्ञानिनां कल्पना वेत्ति परमेशो निरर्थकाः।
२१ अतएव कोऽपि मनुजैरात्मानं न श्लाघतां यतः सर्व्वाणि युष्माक-
२२ मेव, पौल वा आपल्लो र्वा कैफा वा जगद् वा जीवनं वा मरणं
२३ वा वर्त्तमानं वा भविष्यद्वा सर्व्वाण्येव युष्माकं, यूयञ्च ख्रीष्टस्य,
ख्रीष्टश्चेश्वरस्य।

४ १ लोका अस्मान् ख्रीष्टस्य परिचारकान् ईश्वरस्य निगूढवाक्य-
२ धनस्याध्यक्षांश्च मन्यन्तां। किञ्च धनाध्यक्षेण विश्वसनीयेन भवि-
३ तव्यमेतदेव लोकै र्याच्यते। अतो विचारयद्भि र्युष्माभिरन्यैः कैश्चिन्
मनुजै र्वा मम परीक्षणं मयातीव लघु मन्यते ऽहमप्यात्मानं न
४ विचारयामि। मया किमप्यपराद्धमित्यहं न वेद्मि किन्त्वेतेन मम
५ निरपराधत्वं न निश्चीयते प्रभुरेव मम विचारयितास्ति। अत
उपयुक्तसमयात् पूर्व्वम् अर्थतः प्रभोरागमनात् पूर्व्वं युष्माभि र्विचारो
न क्रियतां। प्रभुरागत्य तिमिरेण प्रच्छन्नानि सर्व्वाणि दीपयि-

स्यति मनसां मन्त्रणाश्च प्रकाशयिष्यति तस्मिन् समय ईश्वराद् एकैकस्य प्रशंसा भविष्यति ।

हे भ्रातरः सर्व्वाण्येतानि मयात्मानम् आपल्लुश्चोद्दिश्य कथि- ६
तानि तस्यैतत् कारणं यूयं यथा शास्त्रीयविधिमतिक्रम्य मानवम् अतीव नादरिष्यध्व ईत्थञ्चैकेन वैपरीत्याद् अपरेण न श्लाघिष्यध्व एतादृशीं शिक्षामावयोर्दृष्टान्तात् लप्स्यध्वे। अपरात् कस्त्वां विशेष- ७
यति ? तुभ्यं यन्न दत्तं तादृशं किं धारयसि ? अदत्तेनेव दत्तेन वस्तुना कुतः श्लाघसे ? इदानीमेव यूयं किं तृप्ता लब्धधना वा ? ८
अस्मास्वविद्यमानेषु यूयं किं राजत्वपदं प्राप्ताः ? युष्माकं राजत्वं मयाभिलषितं यतस्तेन युष्माभिः सह वयमपि राज्यांशिनो भवि- ष्यामः। प्रेरिता वयं शेषा हन्तव्याश्चेवेश्वरेण निदर्शिताः । यतो ९
वयं सर्व्वलोकानाम् अर्थतः स्वर्गीयदूतानां मानवानाञ्च कौतुका- स्पदानि जाताः । ख्रीष्टस्य कृते वयं मूढाः किन्तु यूयं ख्रीष्टेन १०
ज्ञानिनः, वयं दुर्ब्बला यूयञ्च सबलाः, यूयं सम्मानिता वयञ्चा- पमानिताः । वयमद्यापि क्षुधार्त्तास्तृष्णार्त्ता वस्त्रहीनास्ताडिता ११
आश्रमरहिताश्च सन्तः कर्म्मणि स्वकरान् व्यापारयन्तश्च दुःखैः कालं १२
यापयामः । गर्ह्हितैरस्माभिराशीः कथ्यते दूरीकृतैः सह्यते निन्दितैः प्रसाद्यते । वयमद्यापि जगतः सम्मार्जनीयोग्या अवस्करा इव सर्व्वै १३
र्मन्यामहे ।

युष्मान् त्रपयितुमहमेतानि लिखामीति नहि किन्तु प्रिया- १४
त्मजानिव युष्मान् प्रबोधयामि । यतः ख्रीष्टधर्म्मे यद्यपि युष्माकं १५
दशसहस्राणि विनेतारो भवन्ति तथापि बहवो जनका न भवन्ति यतोऽहमेव सुसंवादेन यीशुख्रीष्टे युष्मान् अजनयं । अतो युष्मान् १६
विनयेऽहं यूयं मदनुगामिनो भवत। इत्यर्थं सर्व्वासु मण्डलीषु १७

सर्व्वत्र ख्रीष्टधर्म्मयोग्या ये विधयो मयोपदिश्यन्ते तान् यो युष्मान् स्मारयिष्यत्येवम्भूतं प्रभोः कृते प्रियं विश्वासिनञ्च मदीयतनयं तीमथियं युष्माकं समीपं प्रेषितवानहं।

१८ अपरमहं युष्माकं समीपं न गमिष्यामीति बुद्ध्वा युष्माकं
१९ कियन्तो लोका गर्व्वन्ति। किन्तु यदि प्रभोरिच्छा भवति तर्ह्य-हमविलम्बं युष्मत्समीपमुपस्थाय तेषां दर्पध्मातानां लोकानां वाचं
२० ज्ञास्यामीति नहि सामर्थ्यमेव ज्ञास्यामि। यस्मादीश्वरस्य राजत्वं
२१ वाग्युक्तं नहि किन्तु सामर्थ्ययुक्तं। युष्माकं का वाञ्छा? युष्मत्समीपे मया किं दण्डपाणिना गन्तव्यमुत प्रेमनम्रतात्मयुक्तेन वा?

मण्डलीशासनस्य कथा।

५ १ अपरं युष्माकं मध्ये व्यभिचारो विद्यते स च व्यभिचारस्ता-दृशो यद् देवपूजकानां मध्येऽपि तत्तुल्यो न विद्यते फलतो युष्मा-कमेको जनो विमातृगमनं कृरुत इति वार्त्ता सर्व्वत्र व्याप्ता।
२ तथाच यूयं दर्पध्माता आध्वे, तत् कर्म्म येन कृतं स यथा युष्मन्म-ध्याद् दूरीक्रियते तथा शोको युष्माभि र्न क्रियते किम् एतत्?
३ अविद्यमाने मदीयशरीरे ममात्मा युष्मन्मध्ये विद्यते ऽतोऽहं
४ विद्यमान इव तत्कर्मकारिणो विचारं निश्चितवान्, अस्मत्प्रभो
५ र्यीशुख्रीष्टस्य नाम्ना युष्माकं मदीयात्मनश्च मिलने जाते ऽस्मत्प्रभो र्यीशुख्रीष्टस्य शक्तेः साहाय्येन स नरः शरीरनाशार्थमस्माभिः शैतानस्य हस्ते समर्पयितव्यस्ततोऽस्माकं प्रभो र्यीशो र्दिवसे तस्यात्मा रक्षां गन्तुं शक्ष्यति।
६ युष्माकं दर्पो न भद्राय यूयं किमेतन्न जानीथ, यथा,
विकारः कृत्स्नशक्तूनां स्वल्पकिण्वेन जायते।
७ यूयं यत् नवीनशक्तुस्वरूपा भवेत तदर्थं पुरातनं किण्वम् अवमार्ज्जत

यतो युष्माभिः किण्वशून्यै र्भवितव्यं। अपरम् अस्माकं निस्तारोत्स-
वीयमेषशावको यः ख्रीष्टः सोऽस्मदर्थं बलीकृतो ऽभवत्। अतः ८
पुरातनकिण्वेनार्थतो दुष्टताजिघांसारूपेण किण्वेन नन्नहि किन्तु
सारल्यसत्यत्वरूपया किण्वशून्यतयास्माभिरुत्सवः कर्त्तव्यः।

व्यभिचारिणां संसर्गो युष्माभि र्विहातव्य इति मया पत्रे लिखितं। ९
किन्त्वैहिकलोकानां मध्ये ये व्यभिचारिणो लोभिन उपद्राविणो १०
देवपूजका वा तेषां संसर्गः सर्व्वथा विहातव्य इति नहि, विहातव्ये
सति युष्माभि र्जगतो निर्गन्तव्यमेव। किन्तु भ्रातृत्वेन विख्यातः ११
कश्चिज्जनो यदि व्यभिचारी लोभी देवपूजको निन्दको मद्यप उप-
द्रावी वा भवेत् तर्हि तादृशेन मानवेन सह भोजनपानेऽपि युष्माभि
र्न कर्त्तव्ये इत्यधुना मया लिखितं। समाजबहिःस्थितानां लोकानां १२
विचारकरणे मम कोऽधिकारः? किन्तु तदन्तर्गतानां विचारणं
युष्माभिः किं न कर्त्तव्यं भवेत्? बहिःस्थानां तु विचार ईश्वरेण १३
कारिष्यते। अतो युष्माभिः स पातकी स्वमध्याद् बहिष्क्रियतां।

विवादव्यभिचारयोर्विषयिणी कथा च।

युष्माकमेकस्य जनस्यापरेण सह विवादे जाते स पवित्रलोकै ६ १
र्विचारमकारयन् किम् अधार्म्मिकलोकै र्विचारयितुं प्रोत्सहते?
जगतोऽपि विचारणं पवित्रलोकैः कारिष्यत एतद् यूयं किं न २
जानीथ? अतो जगद् यदि युष्माभि र्विचारयितव्यं तर्हि क्षुद्र-
तमविचारेषु यूयं किमसमर्थाः? दूता अप्यस्माभि र्विचारयिष्यन्त ३
इति किं न जानीथ? अत ऐहिकविषयाः किम् अस्माभि र्न
विचारयितव्या भवेयुः? ऐहिकविषयस्य विचारे युष्माभिः कर्त्तव्ये ४
ये लोकाः मण्डल्यां क्षुद्रतमास्त एव नियुज्यन्तां। अहं युष्मान् ५
त्रपयितुमिच्छन् वदामि युष्मन्मध्ये किमेकोऽपि मनुष्यस्तादृग्

६ बुद्धिमानस्ति यो भ्रातृविवादविचारणे समर्थः स्यात्? किन्त्वेको भ्राता भ्रात्रान्येन किमविश्वासिनां विचारकाणां साक्षाद् विवदते?
७ युष्मन्मध्ये विवादा विद्यन्त एतदपि युष्माकं दोषः। यूयं कुतो-
८ ऽन्यायसहनं क्षतिसहनं वा श्रेयो न मन्यध्वे? किन्तु यूयमपि भ्रातॄनेव प्रत्यन्यायं क्षतिञ्च कुरुथ किमेतत्?

९ ईश्वरस्य राज्येऽन्यायकारिणां लोकानामधिकारो नास्त्येतद् यूयं किं न जानीथ? मा वञ्च्यध्वं, ये व्यभिचारिणो देवार्च्चिनः पार-
१० दारिकाः स्त्रीवदाचारिणः पुंमैथुनकारिणस्तस्करा लोभिनो मद्यपा निन्दका उपद्राविणो वा त ईश्वरस्य राज्यभागिनो न भविष्यन्ति।
११ यूयञ्चैवंविधा लोका आस्त किन्तु प्रभो र्यीशो र्नाम्नास्मदीश्वरस्यात्मना च यूयं प्रक्षालिताः पाविता धार्म्मिकीकृताश्च।

१२ मदर्थं सर्व्वं द्रव्यम् अप्रतिषिद्धं किन्तु न सर्व्वं हितजनकं। मदर्थं सर्व्वमप्रतिषिद्धं तथाप्यहं कस्यापि द्रव्यस्य वशीकृतो न
१३ भविष्यामि। उदराय भक्ष्याणि भक्ष्येभ्यश्चोदरं, किन्तु भक्ष्योदरे ईश्वरेण नाशयिष्येते; अपरं देहो न व्यभिचाराय किन्तु प्रभवे
१४ प्रभुश्च देहाय। यश्चेश्वरः प्रभुमुत्थापितवान् स स्वशक्त्यास्मानप्युत्था-
१५ पयिष्यति। युष्माकं यानि शरीराणि तानि ख्रीष्टस्याङ्गानीति किं यूयं न जानीथ? अतः ख्रीष्टस्य यान्यङ्गानि तानि मयापहृत्य
१६ वेश्याया अङ्गानि किं कारिष्यन्ते? तन्न भवतु। यः कश्चिद् वेश्यायाम् आसज्यते स तया सहैकदेहो भवति किं यूयमेतन्न जानीथ? यतो लिखितमास्ते, यथा, तौ द्वौ जनावेकाङ्गौ भवि-
१७ ष्यतः। यश्च प्रभावासज्यते स तेन सहैकात्मा भवति। अतो यूयं
१८ व्यभिचारात् पराङ्मुखा भवत। मानवा यान्यन्यानि कलुषाणि कुर्व्वते तानि वपु र्न समाविशन्ति किन्तु व्यभिचारिणा स्वविग्रहस्य

विरुद्धं कल्मषं क्रियते। युष्माकं यानि वपूंषि तानि युष्मदन्तःस्थित- १९
स्येश्वराल्लब्धस्य पवित्रस्यात्मनो मन्दिराणि यूयञ्च स्वेषां स्वामिनो
नाध्वे किमेतद् युष्माभि र्न ज्ञायते? यूयं मूल्येन क्रीता अतो
वपुर्मनोभ्याम् ईश्वरो युष्माभिः पूज्यतां यत ईश्वर एव तयोः स्वामी। २०

उद्वाहीया कथा।

अपरञ्च युष्माभि र्मां प्रति यत् पत्रमलेखि तस्योत्तरमेतत्, ७ १
योषितोऽस्पर्शनं मनुजस्य वरं; किन्तु व्यभिचारभयाद् एकैकस्य २
पुंसः स्वकीयभार्य्या भवतु तद्वद् एकैकस्या योषितोऽपि स्वकीय-
भर्त्ता भवतु। भार्य्यायै भर्त्रा यद्यद् वितरणीयं तद् वितीर्य्यतां ३
तद्वद् भर्त्रेऽपि भार्य्यया वितरणीयं वितीर्य्यतां। भार्य्यायाः स्वदेहे ४
स्वत्वं नास्ति भर्त्तुरेव, तद्वद् भर्त्तुरपि स्वदेहे स्वत्वं नास्ति भार्य्याया
एव। उपोषणप्रार्थनयोः सेवनार्थम् एकमन्त्रणानां युष्माकं किय- ५
त्कालं यावद् या पृथक्स्थिति र्भवति तदन्यो विच्छेदो युष्मन्मध्ये
न भवतु, ततः परम् इन्द्रियाणाम् अधैर्य्यात् शैतानो यद् युष्मान्
परीक्षां न नयेत् तदर्थं पुनरेकत्र मिलत। एतद् आदेशतो नहि ६
किन्त्वनुज्ञात एव मया कथ्यते, यतो ममावस्थेव सर्व्वमानवानाम- ७
वस्था भवत्विति मम वाञ्छा किन्त्वीश्वराद् एकेनैको वरोऽन्येन
चान्यो वर इत्थमेकैकेन स्वकीयवरो लब्धः।

अपरम् अकृतविवाहान् विधवाश्च प्रति ममैतन्निवेदनं ममेव ८
तेषामवस्थिति र्भद्रा; किञ्च यदि तैरिन्द्रियाणि नियन्तुं न शक्यन्ते ९
तर्हि विवाहः क्रियतां यतः कामदहनाद् व्यूढत्वं भद्रं। ये च १०
कृतविवाहास्ते मया नहि प्रभुनैवैतद् आज्ञाप्यन्ते भार्य्या भर्त्तृतः
पृथक् न भवतु। यदि वा पृथग्भूता स्यात् तर्हि निर्विवाहा ११
तिष्ठतु स्वीयपतिना वा सन्दधातु भर्त्तापि भार्य्यां न त्यजतु।

१२ इतरान् जनान् प्रति प्रभु र्न ब्रवीति किन्त्वहं ब्रवीमि; कस्यचिद्
भ्रातुर्योषिद् अविश्वासिनी सत्यपि यदि तेन सहवासे तुष्यति
१३ तर्हि सा तेन न त्यज्यतां। तद्वत् कस्याश्चिद् योषितः पतिरवि-
श्वासी सन्नपि यदि तया सहवासे तुष्यति तर्हि स तया न
१४ त्यज्यतां। यतोऽविश्वासी भर्त्ता भार्य्यया पवित्रीभूतः, तद्वदविश्वा-
सिनी भार्य्या भर्त्रा पवित्रीभूता; नोचेद् युष्माकमपत्यान्यशुचीन्य-
१५ भविष्यन् किन्त्वधुना तानि पवित्राणि सन्ति। अविश्वासी जनो
यदि वा पृथग् भवति तर्हि पृथग् भवतु; एतेन भ्राता भगिनी
१६ वा न निबध्यते तथापि वयमीश्वरेण शान्तये समाहूताः। हे नारि
तव भर्त्तुः परित्राणं त्वत्तो भविष्यति न वेति त्वया किं ज्ञायते?
हे नर तव जायायाः परित्राणं त्वत्तो भविष्यति न वेति त्वया
किं ज्ञायते?

१७ एकैको जनः परमेश्वराल्लब्धं यद् भजते यस्याञ्चावस्थायाम्
ईश्वरेणाह्वायि तदनुसारेणैवाचरतु तदहं सर्व्वमण्डलीस्थान् आदि-
१८ शामि। छिन्नत्वग् भूत्वा य आहूतः स प्रछन्नत्वग् न भवतु,
तद्वद् अच्छिन्नत्वग् भूत्वा य आहूतः स छिन्नत्वग् न भवतु।
१९ त्वक्छेदः सारो नहि तद्वदत्वक्छेदोऽपि सारो नहि किन्त्वीश्वर-
२० स्याज्ञानां पालनमेव। यो जनो यस्यामवस्थायामाह्वायि स
२१ तस्यामेवावतिष्ठतां। दासः सन् त्वं किमाहूतोऽसि? तन्मा चिन्तय,
२२ तथाच यदि स्वतन्त्रो भवितुं शक्नुयास्तर्हि तदेव वृणु। यतः प्रभु-
नाहूतो यो दासः स प्रभो र्मोचितजनः। तद्वत् तेनाहूतः स्वतन्त्रो
२३ जनोऽपि ख्रीष्टस्य दास एव। यूयं मूल्येन क्रीता अतो हेतो
२४ र्मानवानां दासा मा भवत। हे भ्रातरो यस्यामवस्थायां यस्याह्वा-
नमभवत् तया स ईश्वरस्य साक्षात् तिष्ठतु।

अपरम् अकृतविवाहान् जनान् प्रति प्रभोः कोऽप्यादेशो मया २५
न लब्धः किन्तु प्रभोरनुकम्पया विश्वास्यो भूतोऽहं यद् भद्रं मन्ये
तद् वदामि । वर्त्तमानात् क्लेशसमयात् मनुष्यस्यानूढत्वं भद्रमिति २६
मया बुध्यते । त्वं किं योषिति निबद्धोऽसि ? तर्हि मोचनं प्राप्तुं २७
मा यतस्व । किं वा योषितो मुक्तोऽसि? तर्हि जायां मा गवेषय।
विवाहं कुर्व्वता त्वया किमपि नापराध्यते तद्वद् व्यूह्यमानया २८
युवत्यापि किमपि नापराध्यते तथाच तादृशौ द्वौ जनौ शारी-
रिकं क्लेशं लप्स्येते किन्तु युष्मान् प्रति मम करुणा विद्यते । हे २९
भ्रातरोऽहमिदं ब्रवीमि, इतः परं समयोऽतीव संक्षिप्तः, अतः कृत- ३०
दारैरकृतदारैरिव रुदद्भिश्चारुदद्भिरिव सानन्दैश्च निरानन्दैरिव
क्रेतृभिश्चाभागिभिरिवाचरितव्यं ये च संसारे चरन्ति तै र्नातिच- ३१
रितव्यं यत इहलोकस्य कौतुको विचलति । किन्तु यूयं यन्नि- ३२
श्चिन्ता भवेतेति मम वाञ्छा । अकृतविवाहो जनो यथा प्रभुं
परितोषयेत् तथा प्रभुं चिन्तयति, किन्तु कृतविवाहो जनो यथा ३३
भार्य्यां परितोषयेत् तथा संसारं चिन्तयति । तद्वत् ऊढयोषितो ३४
ऽनूढा विशिष्यते । यानूढा सा यथा कायमनसोः पवित्रा भवेत्
तथा प्रभुं चिन्तयति या चोढा सा यथा भर्त्तारं परितोषयेत्
तथा संसारं चिन्तयति । अहं यद् युष्मान् मृगबन्धिन्या परिक्षिपेयं ३५
तदर्थं नहि किन्तु यूयं यदनिन्दिता भूत्वा प्रभोः सेवनेऽबाधम्
आसक्ता भवेत तदर्थमेतानि सर्व्वाणि युष्माकं हिताय मया कथ्यन्ते।

कस्यचित् कन्यायां यौवनप्राप्तायां यदि स तस्या अनूढत्वं निन्द- ३६
नीयं विवाहश्च साधयितव्य इति मन्यते तर्हि यथाभिलाषं करोतु,
एतेन किमपि नापराध्स्यति विवाहः क्रियतां । किन्तु दुःखेनाक्लिष्टः ३७
कश्चित् पिता यदि स्थिरमनोगतः स्वमनोऽभिलाषसाधने समर्थश्च

स्यात् मम कन्या मया रक्षितव्येति मनसि निश्चिनोति च तर्हि स
३८ भद्रं कर्म्म करोति। अतो यो विवाहं करोति स भद्रं कर्म्म करोति
यश्च विवाहं न करोति स भद्रतरं कर्म्म करोति।
३९ यावत्कालं पति र्जीवति तावद् भार्य्या व्यवस्थया निबद्धा तिष्ठति
किन्तु पत्यौ महानिद्रां गते सा मुक्तीभूय यमभिलषति तेन सह
तस्या विवाहो भवितुं शक्नोति, किन्त्वेतत् केवलं प्रभुभक्तानां मध्ये।
४० तथाच सा यदि निष्पतिका तिष्ठति तर्हि तस्याः क्षेमं भविष्यतीति
मम भावः। अपरम् ईश्वरस्यात्मा ममाप्यन्त र्विद्यत इति मया बुध्यते।

प्रतिमाप्रसादविषयिणी कथा।

८ १ देवप्रसादे सर्व्वेषाम् अस्माकं ज्ञानमास्ते तदयं विद्मः। तथापि
२ ज्ञानं गर्व्वं जनयति किन्तु प्रेमतो निष्ठा जायते। अतः कश्चन
यदि मन्यते मम ज्ञानमास्त इति तर्हि तेन यादृशं ज्ञानं चेष्टितव्यं
३ तादृशं किमपि ज्ञानमद्यापि न लब्धं। किन्तु य ईश्वरे प्रीयते
४ स ईश्वरेणापि ज्ञायते। देवताबलिप्रसादभक्षणे वयमिदं विद्मो
यत् जगन्मध्ये कोऽपि देवो न विद्यते, एकश्चेश्वरो द्वितीयो
५ नास्तीति। स्वर्गे पृथिव्यां वा यद्यपि केषुचिद् ईश्वर इति नामा-
६ रोप्यते तादृशाश्च बहव ईश्वरा बहवश्च प्रभवो विद्यन्ते तथाप्य-
स्माकमद्वितीय ईश्वरः स पिता यस्मात् सर्व्वेषां यदर्थञ्चास्माकं
सृष्टि र्जाता, अस्माकञ्चाद्वितीयः प्रभुः स यीशुः ख्रीष्टो येन सर्व्व-
वस्तूनां येनास्माकमपि सृष्टिः कृता।
७ अधिकन्तु ज्ञानं सर्व्वेषां नास्ति यतः केचिदद्यापि देवतां सम्मन्य
देवप्रसादमिव तद् भक्ष्यं भुञ्जते तेन दुर्ब्बलतया तेषां संवेदो मली-
८ मसो भवति। किन्तु भक्ष्यद्रव्याद् वयम् ईश्वरेण ग्राह्या भवामस्तन्नहि
यतो भुक्त्वा वयमुत्कृष्टा न भवामस्तद्वदभुक्त्वाप्यपकृष्टा न भवामः।

अतो युष्माकं या क्षमता सा दुर्ब्बलानाम् उन्माथस्वरूपा यन्न भवेत् ९
तदर्थं सावधना भवत । यतो ज्ञानविशिष्टस्त्वं यदि देवालये उप- १०
विष्टः केनापि दृश्यसे तर्हि तस्य दुर्ब्बलस्य मनसि किं प्रसादभक्षण
उत्साहो न जनिष्यते ? तथा सति यस्य कृते ख्रीष्टो ममार तव ११
स दुर्ब्बलो भ्राता तव ज्ञानात् किं न विनंक्ष्यति ? इत्यनेन
प्रकारेण भ्रातृणां विरुद्धम् अपराध्यद्भिस्तेषां दुर्ब्बलानि मनांसि १२
व्याघातयद्भिश्च युष्माभिः ख्रीष्टस्य वैपरीत्येनापराध्यते । अतो हेतोः
पिशिताशनं यदि मम भ्रातु र्विघ्नस्वरूपं भवेत् तर्ह्यहं यत् स्वभ्रातु १३
र्विघ्नजनको न भवेयं तदर्थं यावज्जीवनं पिशितं न भोक्ष्ये ।

### पौलस्य प्रेरितत्वविषयिणी कथा ।

अहं किम् एकः प्रेरितो नास्मि? किमहं स्वतन्त्रो नास्मि ? ९ १
अस्माकं प्रभु र्यीशुः ख्रीष्टः किं मया नादर्शि ? यूयमपि किं
प्रभुना मदीयश्रमफलस्वरूपा न भवथ ? अन्यलोकानां कृते यद्यप्यहं २
प्रेरितो न भवेयं तथाच युष्मत्कृते प्रेरितोऽस्मि यतः प्रभुना मम
प्रेरितत्वपदस्य मुद्रास्वरूपा यूयमेवाध्वे । ये लोका मयि दोषमा- ३
रोपयन्ति तान् प्रति मम प्रत्युत्तरमेतत् । भोजनपानयोः किम- ४
स्माकं क्षमता नास्ति ? अन्ये प्रेरिताः प्रभो र्भ्रातरौ कैफाश्च यत् ५
कुर्व्वन्ति तद्वत् काञ्चित् धर्म्मभगिनीं व्यूह्य तया सार्द्धं पर्य्यटितुं
वयं किं न शक्नुमः? सांसारिकश्रमस्य परित्यागात् किं केवलमहं ६
बार्णब्बाश्च निवारितौ ? निजधनव्ययेन कः संग्रामं करोति ? को ७
वा द्राक्षाक्षेत्रं कृत्वा तत्फलानि न भुङ्क्ते ? को वा पशुव्रजं
पालयन् तत्पयो न पिवति ? किमहं केवलां मानुषिकां वाचं ८
वदामि ? व्यवस्थायां किमेतादृशं वचनं न विद्यते? मोशिव्यवस्था- ९
ग्रन्थे लिखितमास्ते, त्वं शस्यमर्द्दकवृषस्यास्यं न भंत्स्यसीति ! ईश्वरेण

१० बलीवर्द्दानामेव चिन्ता किं क्रियते? किं वा सर्व्वथास्माकं कृते
तद्वचनं तेनोक्तं? अस्माकमेव कृते तल्लिखितं। यः क्षेत्रं कर्षति तेन
प्रत्याशायुक्तेन कर्ष्टव्यं, यश्च शस्यानि मर्द्दयति तेन लाभप्रत्याशा-
११ युक्तेन मर्द्दितव्यं। युष्मत्कृतेऽस्माभिः पारत्रिकाणि बीजानि रोपि-
तानि, अतो युष्माकमैहिकफलानां वयम् अंशिनो भविष्यामः
१२ किमेतत् महत् कर्म्म? युष्मासु योऽधिकारस्तस्य भागिनो यद्यन्ये
भवेयुस्तर्ह्यस्माभिस्ततोऽधिकं किं तस्य भागिभि र्न भवितव्यं?
अधिकन्तु वयं तेनाधिकारेण न व्यवहृतवन्तः किन्तु ख्रीष्टीयसुसं-
वादस्य कोऽपि व्याघातोऽस्माभिर्यन्न जायेत तदर्थं सर्व्वं सहामहे।
१३ अपरं ये पवित्रवस्तूनां परिचर्य्यां कुर्व्वन्ति ते पवित्रवस्तुतो भक्ष्याणि
लभन्ते, ये च वेद्याः परिचर्य्यां कुर्व्वन्ति ते वेदिस्थवस्तूनाम्
१४ अंशिनो भवन्त्येतद् यूयं किं न विद? तद्वद् ये सुसंवादं घोषयन्ति
तैः सुसंवादेन जीवितव्यमिति प्रभुनादिष्टं।

१५ अहमेतेषां सर्व्वेषां किमपि नाश्रितवान् मां प्रति तदनुसारात्
आचरितव्यमित्याशयेनापि पत्रमिदं मया न लिख्यते यतः केनापि
१६ जनेन मम यशसो मुधाकरणात् मम मरणं वरं। सुसंवादघोषणात्
मम यशो न जायते यतस्तद्घोषणं ममावश्यकं यद्यहं सुसंवादं न
१७ घोषयेयं तर्हि मां धिक्। इच्छुकेन तत् कुर्व्वता मया फलं लप्स्यते
१८ किन्त्वनिच्छुकेऽपि मयि तत्कर्म्मणो भारोऽर्पितोऽस्ति। एतेन मया
लभ्यं फलं किं? सुसंवादेन मम योऽधिकार आस्ते तं यदभद्र-
भावेन नाचरेयं तदर्थं सुसंवादघोषणसमये तस्य ख्रीष्टीयसुसंवादस्य
निर्व्ययीकरणमेव मम फलं।

१९ सर्व्वेषाम् अनायत्तोऽहं यद् भूरिशो लोकान् प्रतिपद्ये तदर्थं
२० सर्व्वेषां दासत्वमङ्गीकृतवान्। यिहूदीयान् यत् प्रतिपद्ये तदर्थं

यिहूदीयानां कृते यिहूदीयइवाभवं। ये च व्यवस्थायत्तास्तान्
यत् प्रतिपद्ये तदर्थं व्यवस्थानायत्तो योऽहं सोऽहं व्यवस्थायत्तानां
कृते व्यवस्थायत्तइवाभवं। ये चालब्धव्यवस्थास्तान् यत् प्रतिपद्ये २१
तदर्थम् ईश्वरस्य साक्षाद् अलब्धव्यवस्थो न भूत्वा ख्रीष्टेन लब्धव्यवस्थो
योऽहं सोऽहम् अलब्धव्यवस्थानां कृतेऽलब्धव्यवस्थ इवाभवं। दुर्ब्ब- २२
लान् यत् प्रतिपद्ये तदर्थमहं दुर्ब्बलानां कृते दुर्ब्बलइवाभवं।
इत्थं केनापि प्रकारेण कतिपया लोका यन्मया परित्राणं प्राप्नु-
युस्तदर्थं यो यादृश आसीत् तस्य कृते ऽहं तादृशइवाभवं।
ईदृश आचारः सुसंवादार्थं मया क्रियते यतोऽहं तस्य फलानां २३
सहभागी भवितुमिच्छामि।

पणलाभार्थं ये धावन्ति धावतां तेषां सर्व्वेषां केवल एकः २४
पणं लभते युष्माभिः किमेतन्न ज्ञायते? अतो यूयं यथा पणं
लप्स्यध्वे तथैव धावत। मल्ला अपि सर्व्वभोगे परिमितभोगिनो २५
भवन्ति ते तु म्लानां स्रजं लिप्सन्ते किन्तु वयम् अम्लानां
लिप्सामहे। तस्माद् अहमपि धावामि किन्तु लक्ष्यमनुद्दिश्य २६
धावामि तन्नहि। अहं मल्लइव युध्यामि च किन्तु छायामाघात-
यन्निव युध्यामि तन्नहि। इतरान् प्रति सुसंवादं घोषयित्वाहं यत् २७
स्वयमग्राह्यो न भवामि तदर्थं देहम् आहन्मि वशीकुर्व्वे च।

मन्दात् पृथक् स्थातुं कथनम्।

१० हे भ्रातरः, अस्मत्पितृपुरुषानधि यूयं यदज्ञाता न तिष्ठतेति १
मम वाञ्छा, ते सर्व्वे मेघाधःस्थिता बभूवुः सर्व्वे समुद्रमध्येन २
वव्रजुः, सर्व्वे मोशिमुद्दिश्य मेघसमुद्रयोः स्नापिता बभूवुः सर्व्वे ३
एकम् आत्मिकं भक्ष्यं बुभुजिर एकम् आत्मिकं पेयं पपुश्च यतस्ते- ४
ऽनुचरत आत्मिकाद् अचलात् लभ्यं तोयं पपुः सोऽचलः ख्रीष्टएव।

५ तथा सत्यपि तेषां मध्येऽधिकेषु लोकेष्वीश्वरो न सन्तुतोषेति
हेतोस्ते प्रान्तरे निपातिताः।
६ एतस्मिन् ते ऽस्माकं निदर्शनस्वरूपा बभूवुः; अतस्ते यथा
कुत्सिताभिलाषिणो बभूवुरस्माभिस्तथा कुत्सिताभिलाषिभि र्न
७ भवितव्यं। लिखितमास्ते, लोका भोक्तुं पातुञ्चोपविविशुस्ततः
क्रीडितुमुत्थिता इत्यनेन प्रकारेण तेषां कैश्चिद् यद्वद् देवपूजा
८ कृता युष्माभिस्तद्वत् न क्रियतां। अपरं तेषां कैश्चिद् यद्वद्
व्यभिचारः कृतस्तेन चैकस्मिन दिने त्रयोविंशतिसहस्राणि लोका
९ निपातितास्तद्वद् अस्माभि र्व्यभिचारो न कर्त्तव्यः। तेषां केचिद्
यद्वत् ख्रीष्टं परीक्षितवन्तस्तस्माद् भुजङ्गै र्नष्टाश्च तद्वद् अस्माभिः
१० ख्रीष्टो न परीक्षितव्यः। तेषां केचिद् यथा वाक्कलहं कृतवन्तस्तत्-
कारणात् हन्त्रा विनाशितास्च युष्माभिस्तद्वद् वाक्कलहो न क्रियतां।
११ तान् प्रति यान्येतानि जघटिरे तान्यस्माकं निदर्शनानि जगतः
शेषयुगे वर्त्तमानानाम् अस्माकं शिक्षार्थं लिखितानि च बभूवुः।
१२ अतएव यः कश्चिद् सुस्थिरं मन्यः स यन्न पतेत् तत्र सावधानो
१३ भवतु। मानुषिकपरीक्षातिरिक्ता कापि परीक्षा युष्मान् नाक्रामत्,
ईश्वरश्च विश्वास्यः सोऽतिशक्त्यां परीक्षायां पतनाद् युष्मान् रक्षिष्यति,
परीक्षा च यद् युष्माभिः सोढुं शक्यते तदर्थं तया सह निस्तारस्य
पन्थानं निरूपयिष्यति।
१४ हे प्रियभ्रातरः, देवपूजातो दूरम् अपसरत। अहं युष्मान्
१५ विज्ञान् मत्वा प्रभाषे मया यत् कथ्यते तद् युष्माभि र्विविच्यतां।
१६ यद् धन्यवादपात्रम् अस्माभि र्धन्यं गद्यते तत् किं ख्रीष्टस्य शोणि-
तस्य सहभोगित्वं नहि? यश्च पूपोऽस्माभि र्भज्यते स किं ख्रीष्टस्य
१७ वपुषः सहभागित्वं नहि? वयं बहवः सन्तोऽप्येकपूपस्वरूपा एकवपुः

स्वरूपाश्च भवामः, यतो वयं सर्व्वे एकपूपस्य सहभागिनः। यूयं १८
शारीरिकम् इस्रायेलीयवंशं निरीक्षध्वं। ये बलीनां मांसानि
भुञ्जते ते किं यज्ञवेद्याः सहभागिनो न भवन्ति? इत्यनेन मया १९
किं कथ्यते? देवता वास्तविकी देवतायै बलिदानं वा वास्तविकं
किं भवेत्? तन्नहि किन्तु परजातीयै र्ये बलयो दीयन्ते त ईश्व- २०
राय तन्नहि भूतेभ्यएव दीयन्ते तस्माद् यूयं यद् भूतानां
सहभागिनो भवथेत्यहं नाभिलषामि। प्रभोः कंसेन भूतानामपि २१
कंसेन पानं युष्माभिरसाध्यं; यूयं प्रभो र्भोज्यस्य भूतानामपि भोज्यस्य
सहभागिनो भवितुं न शक्नुथ। वयं किं प्रभुं स्पर्द्धिष्यामहे? वयं २२
किं तस्माद् बलवन्तः?

मां प्रति सर्व्वं कर्म्माप्रतिषिद्धं किन्तु न सर्व्वं हितजनकं सर्व्वम् २३
अप्रतिषिद्धं किन्तु न सर्व्वं निष्ठाजनकं। आत्महितः केनापि न २४
चेष्टितव्यः किन्तु सर्व्वैः परहितश्चेष्टितव्यः। आपणे यत् क्रय्यं तद् २५
युष्माभिः संवेदस्यार्थं किमपि न पृष्ट्वा भुज्यतां यतः 'पृथिवी २६
तन्मध्यस्थञ्च सर्व्वं परमेश्वरस्य।' अपरम् अविश्वासिलोकानां २७
केनचित् निमन्त्रिता यूयं यदि तत्र जिगमिषथ तर्हि तेन यद्
यद् उपस्थाप्यते तद् युष्माभिः संवेदस्यार्थं किमपि न पृष्ट्वा भुज्यतां।
किन्तु तत्र यदि कश्चिद् युष्मान् वदेत् भक्ष्यमेतद् देवतायाः २८
प्रसाद इति तर्हि तस्य ज्ञापयितुरनुरोधात् संवेदस्यार्थञ्च तद्
युष्माभि र्न भोक्तव्यं। 'पृथिवी तन्मध्यस्थञ्च सर्व्वं परमेश्वरस्य,' सत्य- २९
मेतत्, किन्तु मया यः संवेदो निर्द्दिश्यते स तव नहि परस्यैव।
मम या स्वतन्त्रता सा परस्य संवेदेन कुतो दूषयिष्यते? अनुग्रह- ३०
पात्रेण मया धन्यवादं कृत्वा यद् भुज्यते तत्कारणाद् अहं कुतो
निन्दिष्ये? तस्माद् भोजनं पानम् अन्यद्वा कर्म्म कुर्व्वद्भि र्युष्माभिः ३१

३३ सर्व्वमेवेश्वरस्य महिम्नः प्रकाशार्थं क्रियतां। यिहूदीयानां परजा-
तीयानाम् ईश्वरस्य मण्डल्या वा विघ्नजनकै र्युष्माभि र्न भवितव्यं।
३३ अहमप्यात्महितम् अचेष्टमानो बहूनां परित्राणार्थं तेषां हितं
१४ चेष्टमानः सर्व्वविषये सर्व्वेषां तुष्टिकरो भवामीत्यनेनाहं यद्वत्
ख्रीष्टस्यानुगामी तद्वद् यूयं ममानुगामिनो भवत।

ईश्वराराधनाविषयिणी कथा।

११ १ हे भ्रातरः, यूयं सर्व्वस्मिन् कार्य्ये मां स्मरथ मया च यादृ-
२ गुपदिष्टास्तादृगाचरथैतत्कारणात् मया प्रशंसनीया आध्वे। तथापि
३ ममेषा वाञ्छा यद् यूयमिदम् अवगता भवथ, एकैकस्य पुरुष-
स्योत्तमाङ्गस्वरूपः ख्रीष्टः, योषितश्चोत्तमाङ्गस्वरूपः पुमान्, ख्रीष्टस्य
४ चोत्तमाङ्गस्वरूप ईश्वरः। अपरम् आच्छादितोत्तमाङ्गेन येन पुंसा
प्रार्थना क्रियते भाववाणी कथ्यते वा तेन स्वीयोत्तमाङ्गम्
५ अवज्ञायते। अनाच्छादितोत्तमाङ्गया यया योषिता च प्रार्थना
क्रियते भाववाणी कथ्यते वा तयापि स्वीयोत्तमाङ्गम् अवज्ञायते
६ यतः सा मुण्डितशिरःसदृशा। अनाच्छादितमस्तका या योषित्
तस्याः शिरः मुण्डनीयमेव किन्तु योषितः केशच्छेदनं शिरोमुण्डनं
वा यदि लज्जाजनकं भवेत् तर्हि तया स्वशिर आच्छाद्यतां।
७ पुमान् ईश्वरस्य प्रतिमूर्त्तिः प्रतितेजःस्वरूपश्च तस्मात् तेन शिरो
८ नाच्छादनीयं किन्तु सीमन्तिनी पुंसः प्रतिबिम्बस्वरूपा। यतो
योषातः पुमान् नोदपादि किन्तु पुंसो योषिद् उदपादि।
९ अधिकन्तु योषितः कृते पुंसः सृष्टि र्न बभूव किन्तु पुंसः कृते
१० योषितः सृष्टि र्बभूव। इति हेतो र्दूतानाम् आदराद् योषिता
११ शिरस्यधीनता सूचकम् आवरणं धर्त्तव्यं। तथापि प्रभो र्विधिना
पुमांसं विना योषिन्न जायते योषितञ्च विना पुमान् न जायते।

यतो यथा पुंसो योषिद् उत्पादि तथा योषितः पुमान् जायते, १२
सर्व्ववस्तूनि चेश्वराद् उत्पद्यन्ते। युष्माभिरेवैतद् विविच्यतां, अना- १३
वृतया योषिता प्रार्थनं किं सुदृश्यं भवेत्? पुरुषस्य दीर्घकेशत्वं १४
तस्य लज्जाजनकं, किन्तु योषितो दीर्घकेशत्वं तस्या गौरवजनकं १५
यत आच्छादनाय तस्यै केशा दत्ता इति किं युष्माभिः स्वभावतो
न शिक्ष्यते? अत्र यदि कश्चिद् विवदितुम् इच्छेत् तर्ह्यस्माकम् १६
ईश्वरीयमण्डलीनाञ्च तादृशी रीति र्न विद्यते।

प्रभो र्भोज्यविषयिणी कथा।

युष्माभि र्न भद्राय किन्तु कुत्सिताय समागम्यते तस्माद् १७
एतानि भाषमाणेन मया यूयं न प्रशंसनीया। प्रथमतः मण्डल्यां १८
समागतानां युष्माकं मध्ये भेदाः सन्तीति वार्त्ता मया श्रूयते
तन्मध्ये किञ्चित् सत्यं मन्यते च। यतो हेतो र्युष्मन्मध्ये ये परी- १९
क्षितास्ते यत् प्रकाश्यन्ते तदर्थं भेदै र्भवितव्यमेव। एकत्र समागतै २०
र्युष्माभिः प्राभवं भोज्यं भुज्यत इति नहि, यतो भोजनकाले २१
युष्माकमेकैकेन स्वकीयं भक्ष्यं तूर्णं ग्रस्यते तस्माद् एको जनो
बुभुक्षितस्तिष्ठति, अन्यश्च परितृप्तो भवति। भोजनपानार्थं युष्माकं २२
किं वेश्मानि न सन्ति? युष्माभि र्वा किम् ईश्वरस्य मण्डलीं
तुच्छीकृत्य दीना लोका अवज्ञायन्ते? इत्यनेन मया किं वक्तव्यं?
यूयं किं मया प्रशंसनीयाः? एतस्मिन् यूयं न प्रशंसनीयाः।

प्रभुतो य उपदेशो मया लब्धो युष्मासु समर्पितश्च स एषः। २३
परकरसमर्पणक्षपायां प्रभु र्यीशुः पूपमादायेश्वरं धन्यं व्याहृत्य तं २४
भङ्क्त्वा भाषितवान् युष्माभिरेतद् गृह्यतां भुज्यताञ्च तद् युष्मत्कृते
भग्नं मम शरीरं; मम स्मरणार्थं युष्माभिरेतत् क्रियतां। पुनश्च २५
भोजनात् परं तथैव कंसम् आदाय तेनोक्तं कंसोऽयं मम शोणि-

तेन स्थापितो नूतननियमः; यतिवारं युष्माभिरेतत् पीयते
२५ ततिवारं मम स्मरणार्थं पीयतां। यतिवारं युष्माभिरेष पूपो
भुज्यते भाजनेनानेन पीयते च ततिवारं प्रभोरागमनं यावत् तस्य
२७ मृत्युः प्रकाश्यते। अपरञ्च यः कश्चिद् अयोग्यत्वेन प्रभोरिमं पूपम्
अश्नाति तस्यानेन भाजनेन पिवति च स प्रभोः कायरुधिरयो
२८ र्दण्डदायी भविष्यति। तस्मात् मानवेनाग्र आत्मानं परीक्ष्य पश्चाद्
२९ एष पूपो भुज्यतां कंसेनानेन च पीयतां। येन चानर्हत्वेन भुज्यते
पीयते च प्रभोः कायम् अविमृश्यता तेन दण्डप्राप्तये भुज्यते पीयते
३० च। एतत्कारणाद् युष्माकं भूरिशो लोका दुर्ब्बला रोगिणश्च
३१ सन्ति बहवश्च महानिद्रां गताः। अस्माभि र्यद्यात्मविचारोऽकारि-
३२ ष्यत तर्हि दण्डो नालप्स्यत; किन्तु यदास्माकं विचारो भवति
तदा वयं जगतो जनैः समं यद् दण्डं न लभामहे तदर्थं प्रभुना
शास्तिं भुंज्महे।

३३ हे मम भ्रातरः, भोजनार्थं मिलितानां युष्माकम् एकेनेतरो-
३४ ऽनुगृह्यतां। यश्च बुभुक्षितः स स्वगृहे भुङ्क्तां। दण्डप्राप्तये युष्माभि
र्न समागम्यतां। एतद्भिन्नं यद् आदेष्टव्यं तद् युष्मत्समीपागमन-
काले मयादेक्ष्यते।

### पवित्रात्मनो विविधानुग्रहदानकथनम्।

१२ १ हे भ्रातरः, यूयं यद् आत्मिकान् दायान् अनवगतास्तिष्ठथ
२ तदहं नाभिलषामि। पूर्व्वं परजातीया यूयं यद्वद् विनीतास्तद्वद्
३ अवाक्प्रतिमानाम् अनुगामिन आध्वम् इति जानीथ। इति
हेतोरहं युष्मभ्यं निवेदयामि, ईश्वरस्यात्मना भाषमाणः कोऽपि
यीशुं शप्त इति न व्याहरति पुनश्च पवित्रेणात्मना विनीतं विनान्यः
४ कोऽपि यीशुं प्रभुरिति व्याहर्त्तुं न शक्नोति। दाया बहुविधाः

किन्त्वेक आत्मा परिचर्य्यास्तु बहुविधाः किन्त्वेकः प्रभुः। साध- ५
नानि बहुविधानि किन्तु सर्व्वेषु सर्व्वसाधक ईश्वर एकः। एकै- ६
कस्मै तस्यात्मनो दर्शनं परहितार्थं दीयते। एकस्मै तेनात्मना ७
ज्ञानवाक्यं दीयते, अन्यस्मै तेनैवात्मनादिष्टं विद्यावाक्यम्, अन्यस्मै ८
तेनैवात्मना विश्वासः, अन्यस्मै तेनैवात्मना स्वास्थ्यदानशक्तिरन्यस्मै ९
दुःसाध्यसाधनशक्तिरन्यस्मै च भाववाणी, अन्यस्मै चात्मनां विचार-
सामर्थ्यम्, अन्यस्मै परभाषाभाषणशक्तिरन्यस्मै च भाषार्थभाषणसा-
मर्थ्यं दीयते। एकेनाद्वितीयेनात्मना यथाभिलाषम् एकैकस्मै १०
जनायैकैकं दानं वितरता तानि सर्व्वाणि साध्यन्ते।

देह एकः सन्नपि यद्वद् बह्वङ्गयुक्तो भवति, तस्यैकस्य वपुषो ११
ऽङ्गानां बहुत्वेन यद्वद् एकं वपु र्भवति, तद्वत् ख्रीष्टः। यतो १२
हेतो र्यिहूदिपरजातीयदासस्वतन्त्रा वयं सर्व्वे स्नापनेनैकेनात्मनै- १३
कदेहीकृताः सर्व्वे चैकात्मभुक्ता अभवाम। एकेनाङ्गेन वपु र्न १४
भवति किन्तु बहुभिः। तत्र चरणं यदि वदेत् नाहं हस्तस्तस्मात् १५
शरीरस्य भागो नास्मीति तर्ह्यनेन शरीरात् तस्य वियोग न भवति।
श्रोत्रं वा यदि वदेत् नाहं नयनं तस्मात् शरीरस्यांशो नास्मीति १६
तर्ह्यनेन शरीरात् तस्य वियोगो न भवति। कृत्स्नं शरीरं यदि १७
दर्शनेन्द्रियं भवेत् तर्हि श्रवणेन्द्रियं कुत्र स्थास्यति? तत् कृत्स्नं
यदि वा श्रवणेन्द्रियं भवेत् तर्हि घ्राणेन्द्रियं कुत्र स्थास्यति?
किन्त्विदानीम् ईश्वरेण यथाभिलषितं तथैवाङ्गप्रत्यङ्गानाम् एकैकं १८
शरीरे स्थापितं। तत् कृत्स्नं यद्येकाङ्गरूपि भवेत् तर्हि शरीरं कुत्र १९
स्थास्यति?, तस्माद् अङ्गानि बहूनि सन्ति शरीरं त्वेकमेव। २०
अतएव त्वया मम प्रयोजनं नास्तीति वाचं पाणिं वदितुं नयनं २१
न शक्नोति, यथा युवाभ्यां मम प्रयोजनं नास्तीति मूर्द्धा चरणौ

२२ वदितुं न शक्नोति; वस्तुतस्तु विग्रहस्य यान्यङ्गान्यस्माभि र्दुर्ब्बलानि
२३ बुध्यन्ते तान्येव सप्रयोजनानि सन्ति। यानि च शरीरमध्येऽवम-
२४ न्यानि बुध्यन्ते तान्यस्माभिरधिकं शोभ्यन्ते। यानि च कुदृश्यानि
तानि सुदृश्यतराणि क्रियन्ते किन्तु यानि स्वयं सुदृश्यानि तेषां
२५ शोभनम् निष्प्रयोजनं। शरीरमध्ये यद् भेदो न भवेत् किन्तु
सर्व्वाण्यङ्गानि यद् ऐक्यभावेन सर्व्वेषां हितं चिन्तयन्ति तदर्थम्
२६ ईश्वरेणाप्रधानम् आदरणीयं कृत्वा शरीरं विरचितं। तस्माद्
एकस्याङ्गस्य पीडायां जातायां सर्व्वाण्यङ्गानि तेन सह पीड्यन्ते,
२७ एकस्य समादरे जाते च सर्व्वाणि तेन सह संहृष्यन्ति। यूयञ्च
२८ ख्रीष्टस्य शरीरं, युष्माकम् एकैकश्च तस्यैकैकम् अङ्गं। केचित् केचित्
मण्डल्यामीश्वरेण प्रथमतः प्रेरिता द्वितीयतो भाववादिनस्तृतीयत
उपदेष्टारो नियुक्ताः, ततः परं केभ्योपि चित्रकार्य्यसाधनसामर्थ्यम्
अनामयकरणशक्तिरुपकृतौ लोकशासने वा नैपुण्यं नानाभाषा-
२९ भाषणसामर्थ्यं वा तेन व्यतारि। सर्व्वे किं प्रेरिताः? सर्व्वे किम्
भाववादिनः सर्व्वे किम् उपदेष्टारः? सर्व्वे किं चित्रकार्य्यसाधकाः?
३० सर्व्वे किम् अनामयकरणशक्तियुक्ताः? सर्व्वे किं परभाषावादिनः?
३१ सर्व्वे वा किं परभाषार्थप्रकाशकाः? यूयं श्रेष्ठदायान् लब्धुं यतध्वं।
अनेन यूयं मया सर्व्वोत्तममार्गं दर्शयितव्याः।

प्रेमदानस्योत्तमत्वम्।

१३ १ मर्त्यस्वर्गीयाणां भाषा भाषमाणोऽहं यदि प्रेमहीनो भवेयं
२ तर्हि वादकतालस्वरूपो निनादकारिभेरीस्वरूपश्च भवामि। अपरञ्च
यद्यहम् भाववाणीविशिष्टः स्यां सर्व्वाणि गुप्तवाक्यानि सर्व्वविद्याश्च
जानीयां पूर्णविश्वासः सन् शैलान् स्थानान्तरीकर्त्तुं शक्नुयाञ्च किन्तु
३ यदि प्रेमहीनो भवेयं तर्ह्यगणनीय एव भवामि। अपरं यद्यहम्

अन्नदानेन सर्व्वस्वं त्यजेयं दाहनाय स्वशरीरं समर्पयेयञ्च किन्तु
यदि प्रेमहीनो भवेयं तर्हि तत्सर्व्वं मदर्थं निष्फलं भवति।
प्रेम चिरसहिष्णु हितैषि च, प्रेम निर्द्वेषम् अशठं निर्गर्व्वञ्च। ४
अपरं तत् कुत्सितं नाचरति, आत्मचेष्टां न कुरुते सहसा न ५
क्रुध्यति परानिष्टं न चिन्तयति, अधर्म्मे न तुष्यति सत्य एव ६
सन्तुष्यति। तत् सर्व्वं तितिक्षते सर्व्वत्र विश्वासिति सर्व्वत्र भद्रं ७
प्रतीक्षते सर्व्वं सहते च। प्रेम्नो लोपः कदापि न भविष्यति, ८
भाववाण्यो लोप्स्यन्ते परभाषाभाषणं निवर्त्तिष्यते ज्ञानमपि लोपं
यास्यति। यतोऽस्माकं ज्ञानं खण्डमात्रम् भाववाणीकथनमपि ९
खण्डमात्रं। किन्त्वस्मासु सिद्धतां गतेषु तानि खण्डमात्राणि लोपं १०
यास्यन्ते। बाल्यकालेऽहं बाल इवाभाषे बाल इवाचिन्तयञ्च किन्तु ११
यौवने जाते तत्सर्व्वं बाल्याचरणं परित्यक्तवान्। इदानीम् अभ्र- १२
मध्येनास्पष्टं दर्शनम् अस्माभि र्लभ्यते किन्तु तदा साक्षात् दर्शनं
लप्स्यते। अधुना मम ज्ञानम् अल्पिष्ठं किन्तु तदाहं यथावगम्य-
स्तथैवावगतो भविष्यामि। इदानीं प्रत्ययः प्रत्याशा प्रेम च त्रीण्ये- १३
तानि तिष्ठन्ति तेषां मध्ये च प्रेम श्रेष्ठं।

भावोक्तिं कथयितुं विशेषभाषया कथयितुञ्च कथाकथनम्।

यूयं प्रेमाचरणे प्रयतध्वम् आत्मिकान् दायानपि विशेषत **१४** १
भावोक्तिकथनसामर्थ्यं प्राप्तुं चेष्टध्वं। यो जनः परभाषां भाषते २
स मानुषान् न सम्भाषते किन्त्वीश्वरमेव यतः केनापि किमपि न
बुध्यते स चात्मना निगूढवाक्यानि कथयति; किन्तु यो जनो ३
भावोक्तिं कथयति स परेषां निष्ठायै हितोपदेशाय सान्त्वनायै च
भाषते। परभाषावाद्यात्मन एव निष्ठां जनयति किन्तु भाववादी ४
मण्डल्या निष्ठां जनयति। युष्माकं सर्व्वेषां परभाषाभाषणम् ५

इच्छाम्यहं किन्तु भावोक्तिकथनम् अधिकमपीच्छामि। यतः
मण्डल्या निष्ठायै येन स्ववाक्यानाम् अर्थो न क्रियते तस्मात्
परभाषावादितो भाववादी श्रेयान्।
६ हे भ्रातरः इदानीं मया यदि युष्मत्समीपं गम्यते तर्हीश्व-
रीयदर्शनस्य ज्ञानस्य वा भाववाण्या वा शिक्षाया वा वाक्यानि न
७ भाषित्वा परभाषां भाषमाणेन मया यूयं किमुपकारिष्यध्वे? अपरं
वंशीवल्लक्यादिषु निष्प्राणिषु वाद्ययन्त्रेषु वादितेषु यदि क्वणा न
विशिष्यन्ते तर्हि किं वाद्यं किं वा गानं भवति तत् केन बोद्धुं,
८ शक्यते? अपरं रणतूर्य्या निस्वणो यद्यव्यक्तो भवेत् तर्हि युद्धाय
९ कः सज्जिष्यते? तद्वत् जिह्वाभि र्यदि सुगम्या वाक् युष्माभि र्न
गद्येत तर्हि यद् गद्यते तत् केन भोत्स्यते? वस्तुतो यूयं दिगा-
१० लापिन इव भविष्यथ। जगति कतिप्रकारा उक्तयो विद्यन्ते?
११ तासामेकापि निरर्थिका नहि; किन्तूक्तेरर्थो यदि मया न बुध्यते
तर्ह्यहं वक्ता म्लेच्छ इव मंस्ये वक्तापि मया म्लेच्छ इव मंस्यते।
१२ तस्माद् आत्मिकदायलिप्सवो यूयं मण्डल्या निष्ठार्थं प्राप्तबहुवरा
१३ भवितुं यतध्वं, अतएव परभाषावादी यद् अर्थकरोऽपि भवेत् तत्
१४ प्रार्थयतां। यद्यहं परभाषया प्रार्थनां कुर्य्यां तर्हि मदीय आत्मा
१५ प्रार्थयते, किन्तु मम बुद्धि र्निष्फला तिष्ठति। इत्यनेन किं
करणीयं? अहम् आत्मना प्रार्थयिष्ये बुद्ध्यापि प्रार्थयिष्ये; अपरं
१६ आत्मना गास्यामि बुद्ध्यापि गास्यामि। त्वं यदात्मना धन्यवादं
करोषि तदा यद् वदसि तद् यदि शिष्येनेवोपस्थितेन जनेन
न बुध्यते तर्हि तव धन्यवादस्यान्ते तथास्त्विति तेन वक्तुं कथं
१७ शक्यते? त्वं सम्यग् ईश्वरं धन्यं वदसीति सत्यं तथापि तत्र परस्य
१८ निष्ठा न भवति। युष्माकं सर्व्वेभ्योऽहं परभाषाभाषणे समर्थोऽस्मीति

कारणाद् ईश्वरं धन्यं वदामि; तथापि मण्डल्यां परोपदेशार्थं १९
मया कथितानि पञ्च वाक्यानि वरं न च लक्षं परभाषीयानि
वाक्यानि ।

हे भ्रातरः, यूयं बुद्ध्या बालकाइव मा भूत परन्तु दुष्टतया २०
शिशवइव भूत्वा बुद्ध्या सिद्धा भवत । शास्त्र इदं लिखितमास्ते, २१
यथा,

इत्यवोचत् परेशोऽहम् आभाषिष्य इमान् जनान् ।
भाषाभिः परकीयाभि र्वक्त्रैश्च परदेशिभिः ।
तथा मया कृतेऽपीमे न ग्रहीष्यन्ति मद्वचः ॥

अतएव तत् परभाषाभाषणं अविश्वासिनः प्रति अभिज्ञानरूपं २२
भवति न च विश्वासिनः प्रति; किन्तु भाववाणी नाविश्वासिनः
प्रति तद् विश्वासिनः प्रत्येव । मण्डलीभुक्तेषु सर्व्वेषु एकस्मिन् स्थाने २३
मिलित्वा परभाषां भाषमाणेषु यदि ज्ञानाकाङ्क्षिणोऽविश्वासिनो वा
तत्रागच्छेयुस्तर्हि युष्मान् उन्मत्तान् किं न वदिष्यन्ति? किन्तु २४
सर्व्वेषु भावोक्तिं प्रकाशयत्सु यद्यविश्वासी ज्ञानाकाङ्क्षी वा कश्चित्
तत्रागच्छति तर्हि सर्व्वैरेव तस्य पापज्ञानं परीक्षा च जायते, २५
ततस्तस्यान्तःकरणस्य गुप्तकल्पनासु व्यक्तीभूतासु सोऽधोमुखः पतन्
ईश्वरमाराध्य युष्मन्मध्य ईश्वरो विद्यते इति सत्यं कथामेतां कथ-
यिष्यति ।

हे भ्रातरः, सम्मिलितानां युष्माकम् एकेन गीतम् अन्येनोप- २६
देशोऽन्येन परभाषान्येन ऐश्वरिकदर्शनम् अन्येनार्थबोधकं वाक्यं
लभ्यते किमेतत्? सर्व्वमेव परनिष्ठार्थं युष्माभिः क्रियतां । यदि २७
कश्चिद् भाषान्तरं विवक्षति तर्ह्येकस्मिन् दिने द्विजनेन त्रिजनेन
वा परभाषा कथ्यतां, तदधिकैर्न कथ्यतां तैरपि पर्य्यायानुसारात्

२८ कथ्यतां, एकेन च तदर्थो बोध्यतां। किन्त्वर्थाभिधायकः कोऽपि
यदि न विद्यते तर्हि स मण्डल्यां वाचंयमः स्थित्वेश्वरायात्मने च
२९ कथां कथयतु। अपरं द्वौ त्रयो वा भाववादिनः स्वं स्वमादेशं
३० कथयन्तु तदन्ये च तं विचारयन्तु। किन्तु तत्रापरेण केनचिद्
जनेनेश्वरीयादेशे लब्धे प्रथमेन कथनात् निवर्त्तितव्यं। सर्व्वे यत्
३१ शिक्षां सान्त्वनाञ्च लभन्ते तदर्थं यूयं सर्व्वे पर्य्यायेण भावोक्तिं
३२ कथयितुं शक्नुथ। भाववादिनां मनांसि तेषाम् अधीनानि
३३ भवन्ति। यत ईश्वरः कुशासनजनको नहि सुशासनजनक एवेति
पवित्रलोकानां सर्व्वमण्डलीषु प्रकाशते।
३४ अपरञ्च युष्माकं वनिताः मण्डलीषु तूष्णीम्भूतास्तिष्ठन्तु यतः
शास्त्रलिखितेन विधिना ताः कथाप्रचारणात् निवारितास्ताभि
३५ र्निघ्नाभि र्भवितव्यं। अतस्ता यदि किमपि जिज्ञासन्ते तर्हि गेहेषु
पतीन् पृच्छन्तु यतः मण्डलीमध्ये योषितां कथाकथनं निन्दनीयं।
३६ ऐश्वरं वचः किं युष्मत्तो निरगमत्? केवलं युष्मान् वा तत्
३७ किम् उपागतं? यः कश्चिद् आत्मानम् भाववादिनम् आत्मना-
विष्टं वा मन्यते स युष्मान् प्रति मया यद् यत् लिख्यते तत्प्रभु-
३८ नाज्ञापितम् इत्युररी करोतु। किन्तु यः कश्चित् अज्ञो भवति
३९ सोऽज्ञ एव तिष्ठतु। अतएव हे भ्रातरः, यूयम् भावोक्तिकथनमा-
४० मर्थं लब्धुं यतध्वं परभाषाभाषणमपि युष्माभि र्न निवार्य्यतां।
सर्व्वकर्म्माणि च विध्यनुसारतः सुपरिपाट्या क्रियन्तां।

### विश्वासीनां शेषकालीनपुनरुत्थानत्वम्।

१५ १ हे भ्रातरः, यः सुसंवादो मया युष्मत्समीपे निवेदितो यूयञ्च
२ यं गृहीतवन्त आश्रितवन्तश्च तं पुन र्युष्मान् विज्ञापयामि। युष्माकं
विश्वासो यदि वितथो न भवेत् तर्हि सुसंवादयुक्तानि मम

वाक्यानि स्मरतां युष्माकं तेन सुसंवादेन परित्राणं जायते। २
यतोऽहं यद् यत् ज्ञापितस्तदनुसारात् युष्मासु मुख्यां यां शिक्षां
समार्पयं सेयं, शास्त्रानुसारात् ख्रीष्टोऽस्माकं पापमोचनार्थं प्राणान् ४
त्यक्तवान्, श्मशाने स्थापितश्च तृतीयदिने शास्त्रानुसारात् पुनरु-
त्थापितः। स चाग्रे कैफै ततः परं द्वादशशिष्येभ्यो दर्शनं दत्तवान्। ५
ततः परं पञ्चशताधिकसंख्यकेभ्यो भ्रातृभ्यो युगपद् दर्शनं दत्तवान् ६
तेषां केचित् महानिद्रां गता बहुतराश्चाद्यापि वर्त्तन्ते। तदनन्तरं ७
याकोबाय तत्पश्चात् सर्व्वेभ्यः प्रेरितेभ्यो दर्शनं दत्तवान्। सर्व्वशेषे- ८
ऽकालजाततुल्यो योऽहं, सोऽहमपि तस्य दर्शनं प्राप्तवान्। ईश्वरस्य ९
मण्डलीं प्रति दौरात्म्याचरणाद् अहं प्रेरितनाम धर्त्तुम् अयोग्य-
स्तस्मात् प्रेरितानां मध्ये क्षुद्रतमश्चास्मि। यादृशोऽस्मि तादृश ईश्वर- १०
स्यानुग्रहेणैवास्मि; अपरं मां प्रति तस्यानुग्रहो निष्फलो नाभवत्,
अन्येभ्यः सर्व्वेभ्यो मयाधिकः श्रमः कृतः, किन्तु स मया कृतस्तन्नहि
मत्सहकारिणेश्वरस्यानुग्रहेणैव। अतएव मया भवेत् तै र्वा भवेत् ११
अस्माभिस्तादृशी वार्त्ता घोष्यते सैव च युष्माभि र्विश्वासेन गृहीता।
मृत्युदशातः ख्रीष्ट उत्थापित इति वार्त्ता यदि तमधि घोष्यते १२
तर्हि मृतलोकानाम् उत्थिति र्नास्तीति वाग् युष्माकं मध्ये कैश्चित्
कुतः कथ्यते? मृतानाम् उत्थिति र्यदि न भवेत् तर्हि ख्रीष्टोऽपि १३
नोत्थापितः ख्रीष्टश्च यद्यनुत्थापितः स्यात् तर्ह्यस्माकं घोषणं वितथं १४
युष्माकं विश्वासोऽपि वितथः। वयञ्चेश्वरस्य मृषासाक्षिणो भवामः, १५
यतः ख्रीष्टस्तेनोत्थापितः इति साक्ष्यम् अस्माभिरीश्वरमधि दत्तं
किन्तु मृतानामुत्थिति र्यदि न भवेत् तर्हि स तेन नोत्थापितः १६
यतो मृतानामुत्थिति र्यदि न भवेत् तर्हि ख्रीष्टोऽप्युत्थापितत्वं न
गतः। ख्रीष्टश्च यद्यनुत्थापितः स्यात् तर्हि युष्माकं विश्वासो वितथः, १७

१८ यूयम् अद्यापि स्वपापेषु मग्नास्तिष्ठथ। अपरं ख्रीष्टाश्रिता ये मानवा
१९ महानिद्रां गतास्तेऽपि नाशं गताः। ख्रीष्टो यदि केवलमिहलोके
ऽस्माकं प्रत्याशाभूमिः स्यात् तर्हि सर्व्वमर्त्त्येभ्यो वयमेव दुर्भाग्याः।
२० इदानीं ख्रीष्टो मृत्युदशात उत्थापितो महानिद्रागतानां मध्ये
२१ प्रथमफलस्वरूपो जातश्च। यतो यद्वत् मानुषद्वारा मृत्युः प्रादुर्भूत-
२२ स्तद्वत् मानुषद्वारा मृतानां पुनरुत्थितिरपि प्रादुर्भूता। आदमेन यथा
२३ सर्व्वे मरणाधीना जातास्तथा ख्रीष्टेन सर्व्वे जीवयिष्यन्ते। किन्त्वेकै-
केन अनेन निजे निजे पर्य्याय उत्थातव्यं प्रथमत प्रथमजातफल-
२४ स्वरूपेन ख्रीष्टेन, द्वितीयतस्तस्यागमनसमये ख्रीष्टस्य लोकैः। ततः
परम् अन्तो भविष्यति तदानीं स सर्व्वं शासनम् अधिपतित्वं
२५ पराक्रमञ्च लुप्त्वा स्वपितरीश्वरे राजत्वं समर्पयिष्यति। यतः ख्रीष्टस्य
रिपवः सर्व्वे यावत् तेन स्वपादयोरधो न निपातयिष्यन्ते तावत्
२६ तेनैव राजत्वं कर्त्तव्यं। तेन विजेतव्यो यः शेषरिपुः स मृत्युरेव।
२७ लिखितमास्ते 'सर्व्वाणि तस्य पादयो र्वशीकृतानि।' किन्तु सर्व्वा-
ण्येव तस्य वशीकृतानीत्युक्ते सति सर्व्वाणि येन तस्य वशीकृतानि स
२८ स्वयं तस्य वशीभूतो न जात इति व्यक्तं। सर्व्वेषु तस्य वशीभूतेषु
सर्व्वाणि येन पुत्रस्य वशीकृतानि स्वयं पुत्रोपि तस्य वशीभूतो
भविष्यति तत ईश्वरः सर्व्वेषु सर्व्व एव भविष्यति।
२९ अपरं मृतानां विनिमयेन ये स्नाप्यन्ते तैः किं लप्स्यते? येषां
मृतानाम् उत्थितिः केनापि प्रकारेण न भविष्यति तेषां विनि-
३० मयेन कुतो स्नापनमपि तैरङ्गीक्रियते? वयमपि कुतः प्रतिदण्डं
३१ प्राणभीतिम् अङ्गीकुर्म्महे? अस्मत्प्रभुना यीशुख्रीष्टेन युष्मत्तो मम
या श्लाघास्ते तस्याः शपथं कृत्वा कथयामि दिने दिनेऽहं मृत्युं
३२ गच्छामि। इफिषनगरे वन्यपशुभिः सार्द्धं यदि लौकिकभावात्

मया युद्धं कृतं तर्हि तेन मम को लाभः? मृतानाम् उत्थिति
र्यदि न भवेत् तर्हि,

कुर्म्मो भोजनपानेऽद्य श्वस्तु मृत्यु र्भविष्यति।

इत्यनेन धर्म्मात् मा भ्रंशध्वं। ३३

कुसंसर्गेण लोकानां सदाचारो विनश्यति।

यूयं यथोचितं सचैतन्यास्तिष्ठत, पापं मा कुरुध्वं, यतो युष्माकं ३४
मध्य ईश्वरीयज्ञानहीनाः केऽपि विद्यन्ते युष्माकं त्रपायै मयेदं गद्यते।

अपरं मृतलोकाः कथम् उत्थास्यन्ति? कीदृशं वा शरीरं ३५
लब्ध्वा पुनरेष्यन्तीति वाक्यं कश्चित् प्रक्ष्यति। हे अज्ञ त्वया यद् ३६
बीजम् उप्यते तद् यदि न म्रियेत तर्हि न जीवयिष्यते। यथा ३७
मूर्त्या निर्गन्तव्यं सा त्वया नोप्यते किन्तु शुष्कं बीजमेव; तच्च
गोधूमादीनां किमपि बीजं भवितुं शक्नोति। ईश्वरेणेव यथाभिलाषं ३८
तस्मै मूर्त्ति र्दीयते, एकैकस्मै बीजाय स्वा स्वा मूर्त्तिरेव दीयते।
सर्व्वाणि पललानि नैकविधानि सन्ति, मनुष्यपशुपक्षिमत्स्यादीनां ३९
भिन्नरूपाणि पललानि सन्ति। अपरं स्वर्गीया मूर्त्तयः पार्थिवा ४०
मूर्त्तयश्च विद्यन्ते किन्तु स्वर्गीयानाम् एकरूपं तेजः पार्थिवानाञ्च
तदन्यरूपं तेजोऽस्ति। सूर्य्यस्य तेज एकविधं चन्द्रस्य तेजस्तदन्यविधं ४१
ताराणाञ्च तेजोऽन्यविधं, ताराणां मध्येऽपि तेजसस्तारतम्यं विद्यते।
इत्थं मृतलोकानाम् उत्थितिरपि भविष्यति।

यद् उप्यते तत् क्षयं यच्चोत्थास्यति तद् अक्षयं। यद् उप्यते ४२
तत् तुच्छं यच्चोत्थास्यति तद् गौरवान्वितं; यद् उप्यते तन्निर्ब्बलं ४३
यच्चोत्थास्यति तत् शक्तियुक्तं। यत् शरीरम् उप्यते तत् प्राणानां ४४
सद्म, यच्च शरीरम् उत्थास्यति तद् आत्मनः सद्म। प्राणसद्मस्वरूपं
शरीरं विद्यते, आत्मसद्मस्वरूपमपि शरीरं विद्यते। तत्र लिखित- ४५

मास्ते यथा, 'आदिपुरुष आदमो जीवत्प्राणी बभूव,' किन्त्वन्तिम
४६ आदमः (ख्रीष्टो) जीवनदायक आत्मा बभूव। आत्मसद्म न प्रथमं
४७ किन्तु प्राणसद्मैव तत्पश्चाद् आत्मसद्म। आद्यः पुरुषो मृद उत्पन्न-
४८ त्वात् मृण्मयो द्वितीयश्च पुरुषः स्वर्गाद् आगतः प्रभुः। मृण्मयो
यादृश आसीत् मृण्मयाः सर्व्वे तादृशा भवन्ति स्वर्गीयश्च
४९ यादृशोऽस्ति स्वर्गीयाः सर्व्वे तादृशा भवन्ति। मृण्मयस्य रूपं
यद्वद् अस्माभि र्धारितं तद्वत् स्वर्गीयस्य रूपमपि धारयिष्यते।

५० हे भ्रातरः, युष्मान् प्रति व्याहरामि, ईश्वरस्य राज्ये रक्तमांसयो-
रधिकारो भवितुं न शक्नोति, अक्षयत्वे च क्षयस्याधिकारो न
५१ भविष्यति। पश्यताहं युष्मभ्यं निगूढां कथां निवेदयामि। सर्व्वै-
५२ रस्माभि र्महानिद्रा न गमिष्यते किन्त्वन्तिमदिने तूर्य्यां वादिता-
याम् एकस्मिन् विपले निमिषैकमध्ये सर्व्वै रूपान्तरं गमिष्यते,
यतस्तूरी वादिष्यते, मृतलोकाश्चाक्षयीभूता उत्थास्यन्ति वयञ्च
५३ रूपान्तरं गमिष्यामः। यतः क्षयणीयेनैतेन शरीरेणाक्षयत्वं परि-
५४ हितव्यं, मरणाधीनेनैतेन देहेन चामरत्वं परिहितव्यं। एतस्मिन्
क्षयणीये शरीरे ऽक्षयत्वं गते, एतस्मिन् मरणाधीने देहे चामरत्वं
गते शास्त्रे लिखितं वचनमिदं सेत्स्यति, यथा,

———जयेन ग्रस्यते मृत्युः।

५५ मृत्यो ते कण्टकं कुत्र परलोक जयः क्व ते॥

५६ मृत्यो कण्टकं पापमेव पापस्य च बलं व्यवस्था। ईश्वरस्य धन्यो
५७ भवतु यतः सोऽस्माकं प्रभुना यीशुख्रीष्टेनास्मान् जययुक्तान्
५८ विधापयति। अतो हे मम प्रियभ्रातरः यूयं सुस्थिरा निश्चलाश्च
भवत प्रभोः सेवायां युष्माकं परिश्रमो निष्फलो न भविष्यतीति
ज्ञात्वा प्रभोः कार्य्ये सदा तत्परा भवत।

दानसंग्रहविधिः। पत्रस्योपसंहारः।

पवित्रलोकानां कृते योऽर्थसंग्रहस्तमधि गालातीयदेशस्थमण्डलो १६ १
मया यद् आदिष्टास्तद् युष्माभिरपि क्रियतां। ममागमनकाले २
यद् अर्थसंग्रहो न भवेत् तन्निमित्तं युष्माकमेकैकेन स्वसम्पदानुसारात्
सञ्चयं कृत्वा सप्ताहस्य प्रथमदिवसे स्वसमीपे किञ्चित् निक्षिप्यतां।
ततो ममागमनसमये यूयं यानेव विश्वास्या इति वेदिष्यथ तेभ्योऽहं ३
पत्राणि दत्त्वा युष्माकं तद्दानस्य यिरूशालेमं नयनार्थं तान्
प्रेषयिष्यामि। किन्तु यदि तत्र ममापि गमनम् उचितं भवेद् ४
तर्हि ते मया सह यास्यन्ति। साम्प्रतं माकिदनिया देशमहं ५
पर्य्यटामि तं पर्य्यट्य युष्मत्समीपम् आगमिष्यामि। अनन्तरं किं ६
जानामि युष्मत्सन्निधिम् अवस्थास्ये शीतकालमपि यापयिष्यामि च
पश्चात् मम यत् स्थानं गन्तव्यं तत्रैव युष्माभिरहं प्रेरयितव्यः।
यतोऽहं यात्राकाले क्षणमात्रं युष्मान् द्रष्टुं नेच्छामि किन्तु प्रभु ७
र्यद्यनुजानीयात् तर्हि किञ्चिद् दीर्घकालं युत्समीपे प्रवस्तुम्
इच्छामि। तथापि निस्तारोत्सवात् परं पञ्चाशत्तमदिनं यावद् ८
इफिषपुर्य्यां स्थास्यामि। यस्माद् अत्र कार्य्यसाधनार्थं ममान्तिके ९
बृहद् द्वारं मुक्तं बहवो विपक्षा अपि विद्यन्ते।

तिमथि र्यदि युष्माकं समीपम् आगच्छेत् तर्हि येन निर्भयं १०
युष्मन्मध्ये वर्त्तेत तत्र युष्माभि र्मनो निधीयतां यस्माद् अहं यादृक्
सोऽपि तादृक् प्रभोः कर्म्मणे यतते। कोऽपि तं प्रत्यनादरं नकरोतु ११
किन्तु स ममान्तिकं यद् आगन्तुं शक्नुयात् तदर्थं युष्माभिः सकु-
शलं प्रेष्यतां। भ्रातृभिः सार्द्धमहं तं प्रतीक्षे। आपल्लुं भ्रातरमध्यहं १२
निवेदयामि भ्रातृभिः साकं सोऽपि यद् युष्माकं समीपं व्रजेत्
तदर्थं मया स पुनः पुनर्याचितः किन्त्विदानीं गमनं सर्व्वथा

१३ तस्मै नारोचत, इतःपरं सुसमयं प्राप्य स गमिष्यति। यूयं जागृत
१४ विश्वासे सुस्थिरा भवत पौरुषं प्रकाशयत बलवन्तो भवत। युष्माभिः
सर्व्वाणि कर्म्माणि प्रेम्ना निष्पाद्यन्तां।
१५ हे भ्रातरः, अहं युष्मान् इदम् अभियाचे स्तिफानस्य परिजना
आखायादेशस्य प्रथमजातफलस्वरूपाः, पवित्रलोकानां परिचर्य्यायै
१६ च त आत्मनो न्यवेदयन् इति युष्माभि र्ज्ञायते। अतो यूयमपि
तादृशलोकानाम् अस्मत्सहायानां श्रमकारिणाञ्च सर्व्वेषां वश्या
१७ भवत। स्तिफानः फर्तुनात आखायिकश्च यद् अत्रागमन् तेनाहम्
१८ आनन्दामि यतो युष्माभिर्यत् न्यूनितं तत् तैः सम्पूरितं। तै
१९ र्युष्माकं मम च मनांस्याप्यायितानि। तस्मात् तादृशा लोका
युष्माभिः सम्मन्तव्याः। युष्मभ्यम् आशियादेशस्थमण्डलीनां नमस्कृतिम्
२० आक्किलप्रिस्किल्लयोस्तन्मण्डपस्थमण्डल्याश्च बहुनमस्कृतिं प्रजानीत।
सर्व्वे भ्रातरो युष्मान् नमस्कुर्व्वन्ते। यूयं पवित्रचुम्बनेन मिथो नमत।
२१ पौलोऽहं स्वकरलिखितं नमस्कृतिं युष्मान् वेदये। यदि कश्चिद्
२२ यीशुख्रीष्टे न प्रीयते तर्हि स शापग्रस्तो भवेत् प्रभुरायाति। अस्माकं
२३ प्रभो र्यीशुख्रीष्टस्यानुग्रहो युष्मान् प्रति भूयात्। ख्रीष्टं यीशुम्
२४ आश्रितान् युष्मान् प्रति मम प्रेम तिष्ठतु। इति॥

# करिन्थिनः प्रति पौलस्य द्वितीयं पत्रं।

मङ्गलाचरणम्। प्राप्तोपकारत्वात् ईश्वरस्य धन्यवादत्वम्।

ईश्वरस्येच्छया यीशुख्रीष्टस्य प्रेरितः पौलस्तिमथिर्भ्राता च 1 १
द्वावेतौ करिन्थनगरस्थायै ईश्वरीयमण्डल्याय आखायादेशस्थेभ्यः
सर्व्वेभ्यः पवित्रलोकेभ्यश्च पत्रं लिखतः। अस्माकं तातस्येश्वरस्य २
प्रभोर्यीशुख्रीष्टस्य चानुग्रहः शान्तिश्च युष्मासु वर्त्ततां।

कृपालुः पिता सर्व्वसान्त्वनाकरेश्वरश्च योऽस्मत्प्रभोर्यीशुख्रीष्टस्य ३
तात ईश्वरः स धन्यो भवतु। यतो वयम् ईश्वरात् सान्त्वनां ४
प्राप्य तया सान्त्वनया यत् सर्व्वविधक्लिष्टान् लोकान् सान्त्वयितुं
शक्नुयाम तदर्थं सोऽस्माकं सर्व्वक्लेशसमयेऽस्मान् सान्त्वयति। यतः ५
ख्रीष्टस्य क्लेशा यद्वद् बाहुल्येनास्मासु वर्त्तन्ते तद्वद् वयं ख्रीष्टेन
बहुसान्त्वनाढ्या अपि भवामः। वयं यदि क्लिश्यामहे तर्हि ६
युष्माकं सान्त्वनापरित्राणयोः कृते क्लिश्यामहे यतोऽस्माभि र्यादृ-
शानि दुःखानि सह्यन्ते युष्माकं तादृशदुःखानां सहनेन तौ
साधयिष्येते इत्यस्मिन् युष्मानधि मम दृढा प्रत्याशा भवति।
यदि वा वयं सान्त्वनां लभामहे तर्हि युष्माकं सान्त्वनापरित्राणयोः ७
कृते तामपि लभामहे। यतो यूयं यादृग् दुःखानां भागिनोऽभवत
तादृक् सान्त्वनाया अपि भागिनो भविष्यथेति वयं जानीमः। हे ८
भ्रातरः, आशियादेशे यः क्लेशोऽस्मान् आक्राम्यत् तं यूयं यद्
अनवगतास्तिष्ठत तन्मया भद्रं न मन्यते। तेनातिशक्तिक्लेशेन ९
वयमतीव पीडितास्तस्मात् जीवनरक्षणे निरुपाया जाताश्च, अतो

वयं स्वेषु न विश्वस्य मृतलोकानाम् उत्थापयितरीश्वरे यद् विश्वासं
कुर्म्मस्तदर्थम् अस्माभिः प्राणदण्डो भोक्तव्य इति स्वमनसि
१० निश्चितं। एतादृशभयङ्करात् मृत्यो र्यो ऽस्मान् अत्रायतेदानीमपि
त्रायते स इतः परमप्यस्मान् त्रास्यते ऽस्माकम् एतादृशी प्रत्याशा
११ विद्यते। एतदर्थमस्मत्कृते प्रार्थनया वयं युष्माभिरुपकर्त्तव्यास्तथा
कृते बहुभि र्याचितो यो ऽनुग्रहोऽस्मासु वर्त्तिष्यते तत्कृते
बहुभिरीश्वरस्य धन्यवादो ऽपि कारिष्यते।

### करिन्थे पौलस्य गमननिश्चयः।

१२ अपरञ्च संसारमध्ये विशेषतो युष्मन्मध्ये वयं सांसारिक्या धिया
नहि किन्त्वीश्वरस्यानुग्रहेणाकुटिलताम् ईश्वरीयसारल्यञ्चाचरित-
वन्तोऽत्रास्माकं मनो यत् प्रमाणं ददाति तेन वयं श्लाघामहे।
१३ युष्माभि र्यद् यत् पठ्यते गृह्यते च तदन्यत् किमपि युष्मभ्यम्
अस्माभि र्न लिख्यते तच्चान्तं यावद् युष्माभि र्ग्रहीष्यत इत्यस्माकम्
१४ आशा। यूयमितः पूर्व्वमप्यस्मान् अंशतो गृहीतवन्तः, यतः प्रभो
र्यीशुख्रीष्टस्य दिने यद्वद् युष्मास्वस्माकं श्लाघा तद्वद् अस्मासु
युष्माकमपि श्लाघा भविष्यति।

१५ अपरं यूयं यद् द्वितीयं वरं लभध्वे तदर्थमितः पूर्व्वं तया
१६ प्रत्याशया युष्मत्समीपं गमिष्यामि युष्मद्देशेन माकिदनियादेशं
व्रजित्वा पुनस्तस्मात् माकिदनियादेशात् युष्मत्समीपम् एत्य युष्माभि
१७ र्यिहूदादेशं प्रेषयिष्ये चेति मम वाञ्छासीत्। एतादृशी मन्त्रणा
मया किं चाञ्चल्येन कृता? यद् यद् अहं मन्त्रये तत् किं
विषयिलोकइव मन्त्रयाण आदौ स्वीकृत्य पश्चाद् अस्वीकुर्व्वे?
१८ युष्मान् प्रति मया कथितानि वाक्यान्यग्रे स्वीकृतानि शेषेऽस्वीकृ-
१९ तानि नाभवन् एतेनेश्वरस्य विश्वस्तता प्रकाश्यते। मया सिल्वानेन

तिमथिना चेश्वरस्य पुत्रो यो यीशुख्रीष्टो युष्मन्मध्ये घोषितः स
तेन स्वीकृतः पुनरस्वीकृतश्च तन्नहि किन्तु स तस्य स्वीकारस्वरूप-
एव। ईश्वरस्य महिमा यद् अस्माभिः प्रकाशेत तदर्थम् ईश्वरेण २०
यद् यत् प्रतिज्ञातं तत्सर्व्वं ख्रीष्टेन स्वीकृतं सत्यीभूतञ्च। युष्मान् २१
अस्मांश्चाभिषिच्य यः ख्रीष्टे स्थासून् करोति स ईश्वर एव। स २२
चास्मान् मुद्राङ्कितान् अकार्षीत् सत्यङ्कारस्य पणस्वरूपम् आत्मानं
अस्माकम् अन्तःकरणेषु निरक्षिपच्च।

अपरं युष्मासु करुणां कुर्व्वन् अहम् एतावत्कालं यावत् करिन्थ- २३
नगरं न गतवान् इति सत्यमेतस्मिन् ईश्वरं साक्षिणं कृत्वा मया
स्वप्राणानां शपथः क्रियते। वयं युष्माकं विश्वासस्य नियन्तारो न २४
भवामः किन्तु युष्माकम् आनन्दस्य सहाया भवामः, यस्माद्
विश्वासे युष्माकं स्थिति र्भवति।

अपरञ्चाहं पुनः शोकाय युष्मत्सन्निधिं न गमिष्यामीति २ १
मनसि निरचैषं। यस्माद् अहं यदि युष्मान् शोकयुक्तान् करोमि २
तर्हि मया यः शोकयुक्तीकृतस्तं विना केनापरेणाहं हर्षयिष्ये? मम ३
यो हर्षः स युष्माकं सर्व्वेषां हर्ष एवेति निश्चितं मयाबोधि; अत-
एव यैरहं हर्षयितव्यस्तै र्मदुपस्थितिसमये यन्मम शोको न जाये-
त तदर्थमेव युष्मभ्यम् एतादृशं पत्रं मया लिखितं। वस्तुतस्तु बहु- ४
क्लेशस्य मनःपीडायाश्च समयेऽहं बह्वश्रुपातेन पत्रमेकं लिखित-
वान् युष्माकं शोकार्थं तन्नहि किन्तु युष्मासु मदीयप्रेमबाहुल्यस्य
ज्ञापनार्थं। येनाहं शोकयुक्तीकृतस्तेन केवलमहं शोकयुक्तीकृतस्त- ५
न्नहि किन्त्वंशतो यूयं सर्व्वेऽपि यतोऽहमत्र कस्मिंश्चिद् दोषमारो-
पयितुं नेच्छामि। बहूनां यत् तर्ज्जनं तेन जनेनालम्भि तत् ६
तदर्थं प्रचुरं। अतः स दुःखसागरे यन्न निमज्जति तदर्थं युष्माभिः ७

८ स ज्ञन्तव्यः सान्त्वयितव्यश्च । इति हेतोः प्रार्थयेऽहं युष्माभिस्तस्मिन्
९ दया क्रियतां । यूयं सर्व्वकर्म्मणि ममादेशं गृह्णीथ न वेति
१० परीक्षितुम् अहं युष्मान् प्रति लिखितवान् । यस्य यो दोषो
युष्माभिः क्षम्यते तस्य स दोषो मयापि क्षम्यते यश्च दोषो मया
११ क्षम्यते स युष्माकं कृते ख्रीष्टस्य साक्षात् क्षम्यते । शैतानः
कल्पनास्माभिरज्ञाता नहि, अतो वयं यत् तेन न वञ्च्यामहे
तदर्थम् अस्माभिः सावधानै र्भवितव्यं ।

### ईश्वरीयनूतननियमस्य श्रेष्ठत्वम् ।

१२ अपरञ्च ख्रीष्टस्य सुसंवादघोषणार्थं मयि त्रोयानगरमागते
१३ प्रभोः कर्म्मणे च मदर्थं द्वारे मुक्ते सत्यपि स्वभ्रातुस्तीतस्याविद्यमा-
नत्वात् मदीयात्मनः कापि शान्ति र्न बभूव, तस्माद् अहं तान्
१४ विसर्ज्जनं याचित्वा माकिदनियादेशं गन्तुं प्रस्थानम् अकरवं । य
ईश्वरः सर्वदा ख्रीष्टेनास्मान् जयिनः करोति सर्वत्र चास्माभिस्तदी-
१५ यज्ञानस्य गन्धं प्रकाशयति स धन्यः । यस्माद् ये त्राणं लप्स्यन्ते ये
च विनाशं गमिष्यन्ति तान् प्रति वयम् ईश्वरेण ख्रीष्टस्य सौगन्ध्यं
१६ भवामः । वयम् एकेषां मृत्यवे मृत्युगन्धा अपरेषाञ्च जीवनाय
जीवनगन्धा भवामः, किन्त्वेतादृशकर्म्मसाधने कः समर्थोऽस्ति ?
१७ अन्ये बहवो लोका यद्वद् ईश्वरस्य वाक्यं मृषाशिक्षया मिश्रयन्ति
वयं तद्वत् तन्न मिश्रयन्तः सरलभावेनेश्वरस्य साक्षाद् ईश्वरस्यादे-
शात् ख्रीष्टेन कथां भाषामहे ।

३ १ वयं किम् आत्मप्रशंसनं पुनरारभामहे ? युष्मान् प्रति युष्मत्तो
वा परेषां केषाञ्चिद् इवास्माकमपि किं प्रशंसापत्रेषु प्रयोजनम्
२ आस्ते ? यूयमेवास्माकं प्रशंसापत्रं तच्चास्माकम् अन्तःकरणेषु लिखितं
३ सर्वमानवैश्च ज्ञेयं पठनीयञ्च । यतोऽस्माभिः सेवितं ख्रीष्टस्य पत्रं

यूयमेव, तच्च न मस्या किन्त्वमरस्येश्वरस्यात्मना लिखितं पाषाणपत्रेषु तन्नहि किन्तु क्रव्यमयेषु हृत्पत्रेषु लिखितमिति सुस्पष्टं।

ख्रीष्टेनेश्वरं प्रत्यस्माकम् ईदृशो दृढविश्वासो विद्यते; वयं ४
निजगुणेन किमपि कल्पयितुं समर्था इति नहि किन्त्वीश्वरादस्माकं ५
सामर्थ्यं जायते। तेन वयं नूतननियमस्यार्थतो ऽक्षरसंस्थानस्य ६
तन्नहि किन्त्वात्मन एव सेवनसामर्थ्यं प्राप्ताः। अक्षरसंस्थानं मृत्यु- ७
जनकं किन्त्वात्मा जीवनदायकः। अक्षरै र्विलिखितपाषाणरूपिणी
या मृत्योः सेवा सा यदीदृक् तेजस्विनी जाता यत्तस्याचिरस्था-
यिनस्तेजसः कारणात् मोशे र्मुखम् इस्रायेलीयलोकैः संद्रष्टुं ८
नाशक्यत, तर्ह्यात्मनः सेवा किं ततोऽपि बहुतेजस्विनी न भवेत्?
दण्डजनिका सेवा यदि तेजोयुक्ता भवेत् तर्हि धार्म्मिकताजनिका ९
सेवा ततोऽधिकं बहुतेजोयुक्ता भविष्यति। उभयोस्तुलनायां १०
कृतायाम् एकस्यास्तेजो द्वितीयायाः प्रखरतरेण तेजसा हीनतेजो
भवति। यस्माद् यत् लोपनीयं तद् यदि तेजोयुक्तं भवेत् तर्हि ११
यत् चिरस्थायि तद् बहुतरतेजोयुक्तमेव भविष्यति।

### ईश्वरसहकार्य्यकारीणां परिचार्य्यापदत्वम्।

ईदृशीं प्रत्याशां लब्ध्वा वयं महतीं प्रगल्भतां प्रकाशयामः। १२
इस्रायेलीयलोका यत् तस्य लोपनीयस्य तेजसः शेषं न १३
विलोकयेयुस्तदर्थं मोशि र्यादृग् आवरणेन स्वमुखम् आच्छादयत्
वयं तादृक् न कुर्म्मः। तेषां मनांसि कठिनीभूतानि यतस्तेषां १४
पठनसमये स पुरातनो नियमस्तेनावरणेनाद्यापि प्रच्छन्नस्तिष्ठति।
तच्च न दूरीभवति यतः ख्रीष्टेनैव तत् लुप्यते मोशेः शास्त्रस्य १५
पाठसमयेऽद्यापि तेषां मनांसि तेनावरणेन प्रच्छाद्यन्ते किन्तु प्रभुं १६
प्रति मनसि परावृत्ते तद् आवरणं दूरीकारिष्यते। यः प्रभुः स १७

१८ एव स आत्मा यत्र च प्रभोरात्मा तत्रैव मुक्तिः। वयञ्च सर्व्वेऽनाच्छादितेनास्येन प्रभोस्तेजसः प्रतिबिम्बं गृह्णन्त आत्मास्वरूपेण प्रभुना रूपान्तरीकृता वर्द्धमानतेजोयुक्तां तामेव प्रतिमूर्त्तिं प्राप्नुमः।

तेषां सारल्यसाहसिकताच।

४ १ अपरञ्च वयं करुणाभाजो भूत्वा यद् एतत् परिचारकपदम्

२ अलभामहि नात्र क्लाम्यामः, किन्तु त्रपायुक्तानि प्रच्छन्नकर्म्माणि विहाय कुटिलताचरणमकुर्व्वन्त ईश्वरीयवाक्यं मिथ्यावाक्यैरमिश्रयन्तः सत्यधर्मस्य प्रकाशनेनेश्वरस्य साक्षात् सर्व्वमानवानां संवेदगो-

३ चरे स्वान् प्रशंसनीयान् दर्शयामः। अस्माभि र्घोषितः सुसंवादो यदि प्रच्छन्नः स्यात् तर्हि ये विनंक्ष्यन्ति तेषामेव दृष्टितः स

४ प्रच्छन्नः; यत ईश्वरस्य प्रतिमूर्त्ति र्यः ख्रीष्टस्तस्य तेजसः सुसंवादस्य प्रभा यत् तान् न दीपयेत् तदर्थम् इह लोकस्य देवोऽविश्वासिनां

५ ज्ञाननयनम् अन्धीकृतवान् एतस्योदाहरणं ते भवन्ति। वयं स्वान् घोषयाम इति नहि किन्तु ख्रीष्टं यीशुं प्रभुमेवास्मांश्च यीशोः

६ कृते युष्माकं परिचारकान् घोषयामः। य ईश्वरो मध्येतिमिरं प्रभां दीपनाया दिशत् स यीशुख्रीष्टस्यास्य ईश्वरीयतेजसो ज्ञानप्रभाया उदयार्थम् अस्माकम् अन्तःकरणेषु दीपितवान्।

तेषां दौर्बल्यस्थैर्य्यञ्च।

७ अपरं तद् धनम् अस्माभि र्मृण्मयेषु भाजनेषु धार्य्यते यतः

८ साद्भुता शक्ति र्नास्माकं किन्त्वीश्वरस्यैवेति ज्ञातव्यं। वयं पदे पदे पीड्यामहे किन्तु नावसीदामः, वयं व्याकुलाः सन्तोऽपि निरुपाया

९ न भवामः, वयं प्रद्राव्यमाना अपि न क्लाम्यामः, निपातिता अपि

१० न विनश्यामः। अस्माकं शरीरे ख्रीष्टस्य जीवनं यत् प्रकाशेत तदर्थं

११ तस्मिन् शरीरे यीशो र्मरणमपि धारयामः। यीशो र्जीवनं यद्

अस्माकं मर्त्त्यदेहे प्रकाशेत तदर्थं जीवन्तो वयं यीशोः कृते नित्यं
मृत्यौ समर्प्यामहे । इत्थं वयं मृत्याक्रान्ता यूयञ्च जीवनाक्रान्ताः । १२

विश्वासकारणादेव समभाषि मया वचः । १३

इति यथा शास्त्रे लिखितं तथैवास्माभिरपि विश्वासजनकम्
आत्मानं प्राप्य विश्वासः क्रियते तस्माच्च वचांसि भाष्यन्ते । प्रभु १४
र्यीशुर्येनोत्थापितः स यीशुनास्मानप्युत्थापयिष्यति युष्माभिः सार्द्धं
स्वसमीप उपस्थापयिष्यति च, वयम् एतत् जानीमः । अतएव युष्माकं १५
हिताय सर्व्वमेव भवति तस्माद् बहूनां प्रचुरानुग्रहप्राप्ते र्बहुलो-
कानां धन्यवादेनेश्वरस्य महिमा सम्यक् प्रकाशिष्यते ।

परकालमपेक्ष्य तेषां प्रत्याशा ।

ततो हेतो र्वयं न क्लाम्यामः किन्तु वाह्यपुरुषो यद्यपि क्षीयते १६
तथाप्यान्तरिकः पुरुषो दिने दिने नूतनायते । क्षणमात्रस्थायि १७
यदेतत् लघिष्ठं दुःखं तद् अतिबाहुल्येनास्माकम् अनन्तकालस्थायि
गरिष्ठसुखं साधयति, यतो वयं प्रत्यक्षान् विषयान् अनुद्दिश्या-
प्रत्यक्षान् उद्दिशामः । यतो हेतोः प्रत्यक्षविषयाः क्षणमात्रस्थायिनः १८
किन्त्वप्रत्यक्षा अनन्तकालस्थायिनः ।

अपरम् अस्माकम् एतस्मिन् पार्थिवे दूष्यरूपे वेश्मनि जीर्णे १ ५
सतीश्वरेण निर्म्मितम् अकरकृतम् अस्माकम् अनन्तकालस्थायि
वेश्मैकं स्वर्गे विद्यत इति वयं जानीमः । यतो हेतोरेतस्मिन् वेश्मनि २
तिष्ठन्तो वयं तं स्वर्गीयं वासं परिधातुम् आकाङ्क्षमाणा निःश्व-
सामः । तथापीदानीमपि वयं तेन न नग्नाः किन्तु परिहितवसना ३
मन्यामहे । एतस्मिन् दूष्ये तिष्ठन्तो वयं क्लिश्यमाना निःश्वसामः, ४
यतो वयं वासं त्यक्तुम् इच्छामस्तन्नहि किन्तु तं द्वितीयं वासं
परिधातुम इच्छामः, यतस्तथा कृते जीवनेन मर्त्त्यं ग्रसिष्यते । एत- ५

इत्थं वयं येन सृष्टाः स ईश्वर एव स चास्मभ्यं सत्यङ्कारस्य पण-
६ स्वरूपम् आत्मानं दत्तवान्। अतएव वयं सर्व्वदोत्सुका भवामः
किञ्च शरीरे यावद् अस्माभि र्न्युष्यते तावत् प्रभुतो दूरे प्रोष्यत
७ इति जानीमः, यतो वयं दृष्टिमार्गे न चरामः किन्तु विश्वास-
८ मार्गे। अपरञ्च शरीराद् दूरे प्रवस्तुं प्रभोः सन्निधौ निवस्तुञ्चा-
काङ्क्षमाणा उत्सुका भवामः। तस्मादेव कारणाद् वयं तस्य सन्निधौ
निवसन्तस्तस्माद् दूरे प्रवसन्तो वा तस्मै रोचितुं यतामहे।
१० यस्मात् शरीरावस्थायाम् एकैकेन कृतानां कर्म्मणां शुभाशुभफल-
प्राप्तये सर्व्वैरस्माभिः ख्रीष्टस्य विचारासनसम्मुख उपस्थातव्यं।

ते ख्रीष्टस्य राजदूताः।

११ अतएव प्रभो र्भयानकत्वं विज्ञाय वयं मनुजान् अनुनयामः
किञ्चेश्वरस्य गोचरे सप्रकाशा भवामः, युष्माकं संवेदगोचरेऽपि
१२ सप्रकाशा भवाम इत्याशंसामहे। अनेन वयं युष्माकं सन्निधौ पुनः
स्वान् प्रशंसाम इति नहि किन्तु ये मनो विना मुखैः श्लाघन्ते
तेभ्यः प्रत्युत्तरदानाय यूयं यथास्माभिः श्लाघितुं शक्नुथ तादृशम्
१३ उपायं युष्मभ्यं वितरामः। यदि वयं हतज्ञाना भवामस्तर्हि तद्
१४ ईश्वरार्थकं यदि च सज्ञाना भवामस्तर्हि तद् युष्मदर्थकं। वयं
ख्रीष्टस्य प्रेम्ना समाकृष्यामहे यतः सर्व्वेषां विनिमयेन यद्येको जनो-
१५ ऽम्रियत तर्हि ते सर्व्वे मृता इत्यस्माभि र्बुध्यते। अपरञ्च ये जीवन्ति
ते यत् स्वार्थं न जीवन्ति किन्तु तेषां कृते यो जनो मृतः पुनरुत्था-
पितश्च तमुद्दिश्य यत् जीवन्ति तदर्थमेव स सर्व्वेषां कृते मृतवान्।
१६ अतो हेतोरितः परं कोऽप्यस्माभि र्जातितो न प्रतिज्ञातव्यः। यद्यपि
पूर्व्वं ख्रीष्टो जातितोऽस्माभिः प्रतिज्ञातस्तथापीदानीं जातितः पुन
१७ र्न प्रतिज्ञायते। केनचित् ख्रीष्ट आश्रिते नूतना सृष्टि र्भवति

पुरातनानि लुप्यन्ते पश्य निखिलानि नवीनानि भवन्ति। सर्व्व- १८
मेतद् ईश्वरस्य कर्म्म यतो यीशुख्रीष्टेन स एवास्मान् स्वेन सार्द्धं
संहितवान् सन्धानसम्बन्धीयां परिचर्य्याम् अस्मासु समर्पितवांश्च।
यत ईश्वरः ख्रीष्टम् अधिष्ठाय जगतो जनानाम् आगांसि तेषाम् १९
ऋणमिव न गणयन् स्वेन सार्द्धं तान् संहितवान् सन्धिवार्त्ताम्
अस्मासु समर्पितवांश्च। अतो वयं ख्रीष्टस्य विनिमयेन दौत्यं कर्म्म २०
सम्पादयामहे, ईश्वरश्चास्माभि र्युष्मान् यायाच्यते ततः ख्रीष्टस्य
विनिमयेन वयं युष्मान् प्रार्थयामहे यूयमीश्वरेण सन्धत्त। यतो २१
वयं तेन यद् ईश्वरीयधार्म्मिकता भवामस्तदर्थं पापेन सह यस्य
ज्ञातेयं नासीत् स एव तेनास्माकं विनिमयेन पापः कृतः।

तेषां दुःखभोगकरणं, सद्भावस्थापनं, धर्म्मास्त्रविजयश्च।

तस्य सहाया वयं युष्मान् प्रार्थयामहे, ईश्वरस्यानुग्रहो युष्माभि ६ १
र्वृथा न गृह्यतां। तेनोक्तमेतत्, २

संश्रोष्यामि शुभे काले त्वदीयां प्रार्थनाम् अहं।
उपकारं करिष्यामि परित्राणदिने तव।

पश्यतायं शुभकालः पश्यतेदं त्राणदिनं। अस्माकं परिचर्य्या ३
यन्निष्कलङ्का भवेत् तदर्थं वयं कुत्रापि विघ्नं न जनयामः,
किन्तु प्रचुरसहिष्णुता क्लेशो दैन्यं विपत् ताड़ना कारावन्धनं निवा- ४
सहीनत्वं परिश्रमो जागरणम् उपवसनं निर्म्मलत्वं ज्ञानं मृदुशीलता ५
हितैषिता पवित्र आत्मा निष्कपटं प्रेम सत्यालाप ईश्वरीयशक्ति ६
र्दक्षिणवामाभ्यां कराभ्यां धर्म्मास्त्रधारणं मानापमानयोरख्याति- ७
सुख्यात्यो र्भागित्वम् एतैः सर्व्वैरीश्वरस्य प्रशंस्यान् परिचारकान् ८
स्वान् प्रकाशयामः। भ्रामकसमा वयं सत्यवादिनो भवामः, अपरि- ९
चितसमा वयं सुपरिचिता भवामः, मृतकल्पा वयं जीवामः, दण्ड्य-

माना वयं न हन्यामहे, शोकयुक्ताश्च वयं सदानन्दामः, दरिद्रा
१० वयं बहून् धनिनः कुर्म्मः, अकिञ्चनाश्च वयं सर्व्वं धारयामः।

करिन्थीयानां सद्भावे पौलस्यानन्दत्वम्।

११ हे करिन्थिनः, युष्माकं प्रति ममास्यं मुक्तं ममान्तःकरणञ्च
१२ विकसितं। यूयं ममान्तरे न सङ्कोचिताः किञ्च यूयमेव सङ्कोचि-
१३ तचित्ताः। किन्तु मह्यं न्याय्यफलदानार्थं युष्माभिरपि विकसितै
र्भवितव्यम् इत्यहं निजबालकानिव युष्मान् वदामि।
१४ अपरम् अप्रत्ययिभिः सार्द्धं यूयम् एकयुगे बद्धा मा भूत,
यस्माद् धर्म्माधर्म्मयोः कः सम्बन्धोऽस्ति? तिमिरेण सार्द्धं प्रभाया
१५ वा का तुलनास्ति? बिलीयालदेवेन सार्कं ख्रीष्टस्य वा का सन्धिः?
१६ अविश्वासिना सार्द्धं वा विश्वासिलोकस्यांशः कः? ईश्वरस्य मन्दिरेण
सह वा देवप्रतिमानां का तुलना? अमरस्येश्वरस्य मन्दिरं
यूयमेव। ईश्वरेण तदुक्तं यथा, 'तेषां मध्येऽहं स्वावासं निधास्यामि
तेषां मध्ये च यातायातं कुर्व्वन् तेषाम् ईश्वरो भविष्यामि ते च
१७ मल्लोका भविष्यन्ति। अतो हेतोः परमेश्वरः कथयति यूयं तेषां
मध्याद् बहिर्भूय पृथग् भवत, किमप्यमेध्यं न स्पृशत: तेनाहं
१८ यूष्मान् ग्रहीष्यामि, युष्माकं पिता भविष्यामि च, यूयञ्च मम
१९ कन्यापुत्रा भविष्यथेति सर्व्वशक्तिमता परमेश्वरेणोक्तं।' अतएव हे
प्रियतमाः, एतादृशीः प्रतिज्ञाः प्राप्तैरस्माभिः शरीरात्मनोः सर्व्व-
मालिन्यम् अपमृज्येश्वरस्य भक्त्या पवित्राचारः साध्यतां।

७ १ यूयम् अस्मान् गृह्लीत। अस्माभिः कस्याप्यन्यायो न कृतः
२ कोऽपि न भ्रंशित कोऽपि न वञ्चितः। युष्मान् दोषिणः कर्त्तुमहं
३ वाक्यमेतद् वदामीति नहि युष्माभिः सह जीवनाय मरणाय वा
४ वयं युष्मान् स्वान्तःकरणै धारयाम इति पूर्व्वं मयोक्तं। युष्मान्

प्रति मम महोत्साहो जायते युष्मान् अध्यहं बहु श्लाघे च तेन
सर्व्वक्लेशसमयेऽहं सान्त्वनया पूर्णो हर्षेण प्रफुल्लितश्च भवामि।
अस्मासु माकिदनियादेशम् आगतेष्वस्माकं शरीरस्य काचिदपि ५
शान्ति र्नाभवत् किन्तु सर्व्वतो वहि र्विरोधेनान्तश्च भीत्या वयम्
अपीड्यामहि। किन्तु नम्राणां सान्त्वयिता य ईश्वरः स तीतस्यागम- ६
मनेनास्मान् असान्त्वयत्। केवलं तस्यागमनेन तन्नहि किन्तु युष्मत्तो ७
जातया तस्य सान्त्वनयापि, यतोऽस्मासु युष्माकं हार्द्दविलापासक्त-
त्वेष्वस्माकं समीपे वर्णितेषु मम महानन्दो जातः। अहं पत्रेण ८
युष्मान् शोकयुक्तान् कृतवान् इत्यस्माद् अन्वतप्ये किन्त्वधुना नानु-
तप्ये। तेन पत्रेण यूयं क्षणमात्रं शोकयुक्तीभूता इति मया
दृश्यते। इत्यस्मिन् युष्माकं शोकेनाहं हृष्यामि तन्नहि किन्तु मनः- ९
परिवर्त्तनाय युष्माकं शोकोऽभवद् इत्यनेन हृष्यामि यतोऽस्मत्तो
युष्माकं कापि हानि र्यन्न भवेत् तदर्थं युष्माकम् ईश्वरीयः शोको
जातः। स ईश्वरीयः शोकः परित्राणजनकं निरनुतापं मनःपरि- १०
वर्त्तनं साधयति किन्तु सांसारिकः शोको मृत्युं साधयति। पश्यत ११
तेनेश्वरीयेण शोकेन युष्माकं किं न साधितं? यत्नो दोषप्रक्षालनम्
असन्तुष्टत्वं हार्द्दम् आसक्तत्वं फलदानञ्चैतानि सर्व्वाणि। तस्मिन्
कर्म्मणि यूयं निर्म्मला इति प्रमाणं सर्व्वेण प्रकारेण युष्माभि र्दत्तं।
येनापराद्धं तस्य कृते किंवा यस्यापराद्धं तस्य कृते मया पत्रम् १२
अलेखि तन्नहि किन्तु युष्मानध्यस्माकं यत्नो यद् ईश्वरस्य साक्षाद्
युष्मत्समीपे प्रकाशेत तदर्थमेव। उक्तकारणाद् वयं सान्त्वनां १३
प्राप्ताः; तस्याः सान्त्वनां विनापरो महाह्लादस्तीतस्याह्लादादस्माभि
र्लब्धः, यतस्तस्यात्मा सर्व्वै र्युष्माभिस्तृप्तः। पूर्व्वं तस्य समीपेऽहं १४
युष्माभिर्यद् अश्लाघे तेन नालज्जे किन्तु वयं यद्वद् युष्मान् प्रति

सत्यभावेन सकलम् अभाषामहि तद्वत् तीतस्य समीपेऽस्माकं श्लाघ-
१५ नमपि सत्यं जातं। यूयं कीदृक् तस्याज्ञा अपालयत भयकम्पाभ्यां
तं गृहीतवन्तश्चैतस्य स्मरणाद् युष्मासु तस्य स्नेहो बाहुल्येन वर्त्तते।
१६ युष्मास्वहं सर्व्वमाशंसे, इत्यस्मिन् ममाह्लादो जायते।

दानशीलतोत्कर्ष्यसुफलानि च।

माकिदनियमण्डलीनां दानशीलत्वम्।

८ १ हे भ्रातरः, माकिदनियादेशस्थासु मण्डलीषु प्रकाशितो य
२ ईश्वरस्यानुग्रहस्तमहं युष्मान् ज्ञापयामि। वस्तुतो बहुक्लेशपरीक्षासमये
तेषां महानन्दोऽतीवदीनता च वदान्यतायाः प्रचुरफलम् अफल-
३ यतां। ते स्वेच्छया यथाशक्ति किञ्चातिशक्ति दान उद्युक्ता अभवन्
४ इति मया प्रमाणीक्रियते। वयञ्च यत् पवित्रलोकेभ्यस्तेषां दानम्
उपकारार्थकम् अंशनञ्च गृह्लामस्तद् बहुनुनयेनास्मान् प्रार्थितवन्तः।
५ वयं यादृक् प्रत्यैक्षामहि तादृग् अकृत्वा तेऽग्रे प्रभवे ततः परम्
६ ईश्वरस्येच्छयास्मभ्यमपि स्वान् न्यवेदयन्। अतो हेतोस्त्वं यथारब्धवान्
तथैव करिन्थिनां मध्येऽपि तद् दानग्रहणं साधयेति युष्मान् अधि
वयं तीतं प्रार्थयामहि।

भ्रातॄणां परस्परोपकारमुचितम्।

प्रभुयीशोः दानशीलतायामादर्शत्वम्।

७ अतो विश्वासो वाक्पटुता ज्ञानं सर्व्वोत्साहोऽस्मासु प्रेम चैतै
८ र्गुणै र्यूयं यथापरान् अतिशेध्वे तथैवैतेन गुणेनाप्यतिशेध्वं। एतद्
अहम् आज्ञया कथयामीति नहि किन्त्वन्येषाम् उत्साहकारणाद्
युष्माकमपि प्रेम्नः सारल्यं परीक्षितुमिच्छता मयैतत् कथ्यते।
९ यूयञ्चास्मत्प्रभो र्यीशुख्रीष्टस्यानुग्रहं जानीथ यतस्तस्य निर्धनत्वेन
यूयं यद् धनिनो भवथ तदर्थं स धनी सन्नपि युष्मत्कृते निर्धनो-

ऽभवत्। एतस्मिन् अहं युष्मान् स्वविचारं ज्ञापयामि। गतं संवत्सरम् १०
आरभ्य यूयं केवलं कर्म्म कर्त्तुं तन्नहि किन्त्विच्छुकतां प्रकाशयितुम-
प्युपाक्राम्यध्वं ततो हेतो र्युष्मत्कृते मम मन्त्रणा भद्रा। अतोऽधुना ११
तत्कर्म्मसाधनं युष्माभिः क्रियतां तेन यद्वद् इच्छुकतायाम् उत्साह-
स्तद्वद् एकैकस्य सम्पदनुसारेण कर्म्मसाधनम् अपि जनिष्यते।
यस्मिन् इच्छुकता विद्यते तेन यन्न धार्य्यते तस्मात् सोऽनुगृह्यत १२
इति नहि किन्तु यद् धार्य्यते तस्मादेव। यत इतरेषां विरामेण १३
युष्माकञ्च क्लेशेन भवितव्यं तन्नहि किन्तु समतयैव। वर्त्तमानसमये १४
युष्माकं धनाधिक्येन तेषां धनन्यूनता पूरयितव्या तस्मात् तेषा-
मप्याधिक्येन युष्माकं न्यूनता पूरयिष्यते तेन समता जनिष्यते।
तद्देव शास्त्रेऽपि लिखितम् आस्ते यथा, येनाधिकं संगृहीतं १५
तस्याधिकं नाभवत् येन चाल्पं संगृहीतं तस्याल्पं नाभवत्।

युष्माकं हिताय तीतस्य मनसि य ईश्वर इमम् उद्योगं जनि- १६
तवान् स धन्यो भवतु। तीतोऽस्माकं प्रार्थनां गृहीतवान् किञ्च १७
स्वयम् उद्युक्तः सन् स्वेच्छया युष्मत्समीपं गतवान्। तेन सह योऽ- १८
पर एको भ्रातास्माभिः प्रेषितः सुसंवादात् तस्य सुख्यात्या सर्व्वाः
मण्डल्यो व्याप्ताः। प्रभो र्गौरवाय युष्माकम् इच्छुकतायै च स १९
मण्डलीभिरेतस्यै दानसेवायै अस्माकं सङ्गिले न्ययोज्यत। यतो या २०
महोपायनसेवास्माभि र्विधीयते तामधि वयं यत् केनापि न
निन्द्यामहे तदर्थं यतामहे। यतः केवलं प्रभोः साक्षात् तन्नहि २१
किन्तु मानवानामपि साक्षात् सदाचारं कर्त्तुम् आलोचामहे।
ताभ्यां सहापर एको यो भ्रातास्माभिः प्रेषितः सोऽस्माभि र्बहु- २२
विषयेषु बहुवारान् परीक्षित उद्योगीव प्रकाशितश्च किन्त्वधुना
युष्मासु दृढविश्वासात् तस्योत्साहो बहु ववृधे। यदि कश्चित् तीतस्य २३

तत्त्वं जिज्ञासते तर्हि स मम सहभागी युष्मन्मध्ये सहकारी च,
अपरयो र्भ्रात्रोस्तत्त्वं वा यदि जिज्ञासते तर्हि तौ मण्डलीनां दूतौ
२४ ख्रीष्टस्य प्रतिबिम्बौ चेति तेन ज्ञायतां। अतो हेतोः मण्डलीनां
समक्षं युष्मत्प्रेम्नोऽस्माकं श्लाघायाश्च प्रामाण्यं तान् प्रति युष्माभिः
प्रकाशयितव्यं।

९ १ पवित्रलोकानाम् उपकारार्थकसेवामधि युष्मान् प्रति मम लिखनं
२ निष्प्रयोजनं। यत आखायादेशस्था लोका गतवर्षम् आरभ्य तत्कार्य्ये
उद्यताः सन्तीति वाक्येनाहं माकिदनीयलोकानां समीपे युष्माकं
याम् इच्छुकतामधि श्लाघे ताम् अवगतोऽस्मि युष्माकं तस्माद् उत्सा-
३ हाच्चापरेषां बहूनाम् उद्योगो जातः। किञ्चैतस्मिन् युष्मान् अध्य-
स्माकं श्लाघा यद् अतथ्या न भवेत् यूयञ्च मम वाक्यानुसाराद्
४ यद् उद्यतास्तिष्ठेत तदर्थमेव ते भ्रातरो मया प्रेषिताः। यस्मात्
मया सार्द्धं केचित् माकिदनीयभ्रातृभिरागत्य यूयमनुद्यता इति
यदि दृश्यते तर्हि तस्माद् दृढविश्वासाद् युष्माकं लज्जा जनिष्यत
५ इत्यस्माभि र्न वक्तव्यं किन्त्वस्माकमेव लज्जा जनिष्यते। अतः प्राक्
प्रतिज्ञातं युष्माकं दानं यत् सञ्चितं भवेत् तच्च यद् ग्राहकतायाः
फलम् अभूत्वा दानशीलताया एव फलं भवेत् तदर्थं ममाग्रे गमनाय
तत्सञ्चयनाय च तान् भ्रातॄन् आदेष्टुमहं प्रयोजनम् अमन्ये।

दानफलनिर्णयः।

६ अपरमपि व्याहरामि केनचित् क्षुद्रभावेन वीजेषूप्तेषु स्वल्पानि
शस्यानि कर्त्तिष्यन्ते, किञ्च केनचिद् बहुदभावेन वीजेषूप्तेषु बहूनि
७ शस्यानि कर्त्तिष्यन्ते। एकैकेन स्वमनसि यथा निश्चीयते तथैव दीयतां
केनापि कातरेण भीतेन वा न दीयतां यत ईश्वरो हृष्टमानसे
८ दातरि प्रीयते। अपरम् ईश्वरो युष्मान् प्रति सर्व्वविधं बहुप्रदं

प्रसादं प्रकाशयितुम् अर्हति तेन यूयं सर्व्वविषये यथेष्टं प्राप्य सर्व्वेण
सत्कर्म्मणा बहुफलवन्तो भविष्यथ। एतस्मिन् लिखितमास्ते, यथा, ९

व्ययते स जनोरायं दुर्गतेभ्यो ददाति च।

नित्यस्थायी च तद्धर्म्मः——

बीजं भोजनीयम् अन्नञ्च वप्त्रे येन विश्राण्यते स युष्मभ्यम् अपि १०
बीजं विश्राण्य बहुलीकरिष्यति युष्माकं धर्म्मफलानि वर्द्धयिष्यति ११
च। तेन सर्व्वविषये सधनीभूतै र्युष्माभिः सर्व्वविषये दानशीलतायां
प्रकाशितायाम् अस्माभिरीश्वरस्य धन्यवादः साधयिष्यते। एतयोप- १२
कारसेवया पवित्रलोकानाम् अर्थाभावस्य प्रतीकारो जायत
इति केवलं नहि किन्त्वीश्वरस्य धन्यवादोऽपि बाहुल्येनोत्पाद्यते।
यत एतस्माद् उपकारकरणाद् युष्माकं परीक्षितत्वं बुद्ध्वा बहुभिः १३
ख्रीष्टसुसंवादाङ्गीकरणे युष्माकम् आज्ञाग्राहित्वात् तद्भागित्वे च
तान् अपरांश्च प्रति युष्माकं दातृत्वाद् ईश्वरस्य धन्यवादः कारि-
ष्यते, युष्मदर्थं प्रार्थनां कृत्वा च युष्मास्वीश्वरस्य गरिष्ठानुग्रहाद् १४
युष्मासु तैः प्रेम कारिष्यते। अपरम् ईश्वरस्यानिर्व्वचनीयदानात् १५
स धन्यो भूयात्।

पौलस्य प्रेरितत्वं क्षमता च।

युष्मत्प्रत्यक्षे नम्रः किन्तु परोक्षे प्रगल्भः पौलोऽहं ख्रीष्टस्य १० १
क्षान्त्या विनीत्या च युष्मान् प्रार्थये। मम प्रार्थनीयमिदं वयं यैः २
शारीरिकाचारिणो मन्यामहे तान् प्रति यां प्रगल्भतां प्रकाशयितुं
निश्चिनोमि सा प्रगल्भता समागतेन मयाचरितव्या न भवतु।
यतः शरीरे चरन्तोऽपि वयं शारीरिकं युद्धं न कुर्म्मः। अस्माकं ३
युद्धास्त्राणि च न शारीरिकाणि किन्त्वीश्वरेण दुर्गभञ्जनाय प्रब- ४
लानि भवन्ति, तैश्च वयं वितर्कान् ईश्वरीयतत्त्वज्ञानस्य प्रतिबन्धिकां ५

सर्व्वां चित्तसमुन्नतिञ्च निपातयामः सर्व्वसङ्कल्पञ्च वन्दिनं कृत्वा
ख्रीष्टस्याज्ञाग्राहिणं कुर्म्मः युष्माकम् आज्ञाग्राहित्वे सिद्धे सति
६ सर्व्वस्याज्ञालङ्घनस्य प्रतीकारं कर्त्तुम् उद्यता आस्महे च ।
७ यद् दृष्टिगोचरं तद् युष्माभि र्दृश्यतां । अहं ख्रीष्टस्य लोक
इति स्वमनसि येन विज्ञायते स यथा ख्रीष्टस्य भवति वयम्
अपि तथा ख्रीष्टस्य भवाम इति पुनर्विविच्य तेन बुध्यतां ।
८ युष्माकं निपाताय तन्नहि किन्तु निष्ठायै प्रभुना दत्तं यदस्माकं
सामर्थ्यं तेन यद्यपि किञ्चिद् अधिकं श्लाघे तथापि तस्मान्न
९ त्रपिष्ये । अहं पत्रै र्युष्मान् त्रासयामि युष्माभिरेतन्न मन्यतां ।
१० तस्य पत्राणि गुरुतराणि प्रबलानि च भवन्ति किन्तु तस्य शरीर-
११ साक्षात्कारो दुर्ब्बल आलापश्च तुच्छनीय इति कैश्चिद् उच्यते । किन्तु
परोक्षे पत्रै र्भाषमाणा वयं यादृशाः प्रकाशामहे प्रत्यक्षे कर्म्म
कुर्व्वन्तोऽपि तादृशा एव प्रकाशिष्यामहे तत् तादृशेन वाचालेन
१२ ज्ञायतां । स्वप्रशंसकानां केषाञ्चिन्मध्ये स्वान् गणयितुं तैः स्वान् उ-
पमातुं वा वयं प्रगल्भा न भवामः, यतस्ते स्वपरिमाणेन स्वान्
परिमिमते स्वैश्च स्वान् उपमिमते तस्मात् निर्ब्बोधा भवन्ति च ।
१३ वयम् अपरिमितेन न श्लाघिष्यामहे किन्त्वीश्वरेण स्वरज्ज्वा युष्म-
द्देशगामि यत् परिमाणम् अस्मदर्थं निरूपितं तेनैव श्लाघिष्यामहे ।
१४ युष्माकं देशोऽस्माभिरगन्तव्यस्तस्माद् वयं स्वसीमाम् उल्लङ्घामहे तन्न-
हि यतः ख्रीष्टस्य सुसंवादेनापरेषां प्राग् वयमेव युष्मान् प्राप्तवन्तः ।
१५ वयं स्वसीमाम् उल्लङ्घ्य परक्षेत्रेण श्लाघामहे तन्नहि, किञ्च युष्माकं
विश्वासे वृद्धिं गते युष्मद्देशेऽस्माकं सीमा युष्माभिर्दीर्घं विस्तारयिष्यते,
१६ तेन वयं युष्माकं पश्चिमदिक्स्थेषु स्थानेषु सुसंवादं घोषयिष्यामः,
इत्थं परसीमायां परेण यत् परिष्कृतं तेन न श्लाघिष्यामहे ।

यः कश्चित् श्लाघमानः स्यात् श्लाघतां प्रभुना स हि। स्वेन यः प्रशं- १७
स्यते स परीक्षितो नहि किन्तु प्रभुना यः प्रशंस्यते स एव परीक्षितः। १८

यूयं ममाज्ञानतां क्षणं यावत् सोढुम् अर्हथ, अतः सा ११ १
युष्माभिः सह्यतां। ईश्वरे ममासक्तत्वाद् अहं युष्मानधि तपे यस्मात् २
सतीं कन्यामिव युष्मान् एकस्मिन् वरेऽर्थतः ख्रीष्टे समर्पयितुम्
अहं वाग्दानम् अकार्षं। किन्तु सर्पेण स्वखलतया यद्वद् हवा ३
वञ्चयाञ्चक्रे तद्वत् ख्रीष्टं प्रति सतीत्वाद् युष्माकं भ्रंशः सम्भविष्यतीति
बिभेमि। अस्माभिरनाख्यापितोऽपरः कश्चिद् यीशु र्यदि केन- ४
चिद् आगन्तुकेनाख्याप्यते युष्माभिः प्रागलब्ध आत्मा वा यदि
लभ्यते प्रागगृहीतः सुसंवादो वा यदि गृह्यते तर्हि मन्ये यूयं
सम्यक् सहिष्यध्वे। किन्तु मुख्येभ्यः प्रेरितेभ्योऽहं केनचित् प्रकारेण ५
न्यूनो नास्मीति बुध्ये। मम वाक्पटुताया न्यूनत्वे सत्यपि ज्ञानस्य ६
न्यूनत्वं नास्ति किन्तु सर्व्वविषये वयं युष्मद्गोचरे प्रकाशामहे। युष्माकम् ७
उन्नत्यै मया नम्रतां स्वीकृत्येश्वरस्य सुसंवादो विना वेतनं युष्माकं
मध्ये यद् अघोष्यत तेन मया किं पापम् अकारि? युष्माकं सेवनायाहम् ८
अन्यमण्डलीभ्यो भृतिं गृह्णन् धनमपहृतवान्, यदा च युष्मन्मध्येऽवर्त्ते ९
तदा ममार्थाभावे जाते युष्माकं कोऽपि मया न पीडितः; यतो मम
सोऽर्थाभावो माकिदनियादेशाद् आगतै र्भ्रातृभिः न्यवार्य्यत, इत्थमहं
क्वापि विषये यथा युष्मासु भारो न भवामि तथा मयात्मरक्षा कृता
कर्त्तव्या च। ख्रीष्टस्य सत्यता यदि मयि तिष्ठति तर्हि ममैषा श्लाघा १०
निखिलाखायादेशे केनापि न रोत्स्यते। एतस्य कारणं किं? युष्मासु ११
मम प्रेम नास्त्येतत् किं तत्कारणं? तद् ईश्वरो वेत्ति। ये छिद्र- १२
मन्विष्यन्ति ते यत् किमपि छिद्रं न लभन्ते तदर्थमेव तत् कर्म्म
मया क्रियते कारिष्यते च तस्मात् ते येन श्लाघन्ते तेनास्माकं समाना

१३ भविष्यन्ति। तादृशा भाक्तप्रेरिताः प्रवञ्चकाः कारवो भूत्वा ख्रीष्टस्य
१४ प्रेरितानां वेशं धारयन्ति। तच्चाश्चर्य्यं नहि; यतः स्वयं शैतानो ऽपि
१५ तेजस्विदूतस्य वेशं धारयति, ततस्तस्य परिचारका अपि धर्म्मपरि-
चारकाणां वेशं धारयन्तीत्यद्भुतं नहि; किन्तु तेषां कर्म्माणि
यादृशानि फलान्यपि तादृशानि भविष्यन्ति।

ख्रीष्टार्थं पौलस्य दुःखभोगकरणम्।

१६ अहं पुन र्वदामि कोऽपि मां निर्ब्बोधं न मन्यतां किञ्च यद्यपि
निर्ब्बोधो भवेयं तथापि यूयं निर्ब्बोधमिव मामनुगृह्य क्षणैकं
१७ यावत् ममात्मश्लाघाम् अनुजानीत। एतस्याः श्लाघाया निमित्तं
मया तत् कथितव्यं तत् प्रभुनादिष्टेनेव कथ्यते तन्नहि किन्तु
१८ निर्ब्बोधेनेव। अपरे बहवः शारीरिकश्लाघां कुर्व्वते तस्माद् अहमपि
१९ श्लाघिष्ये। बुद्धिमन्तो यूयं सुखेन निर्ब्बोधानाम् आचारं सहध्वे।
२० कोऽपि यदि युष्मान् दासान् करोति यदि वा युष्माकं सर्व्वस्वं
ग्रसति यदि वा युष्मान् हरति यदि वात्माभिमानी भवति यदि
२१ वा युष्माकं कपोलम् आहन्ति तर्हि तदपि यूयं सहध्वे। दौर्ब्बल्याद्
युष्माभिरवमानिता इव वयं भाषामहे, किन्त्वपरस्य कस्यचिद्
येन प्रगल्भता जायते तेन ममापि प्रगल्भता जायत इति
२२ निर्ब्बोधेनेव मया वक्तव्यं। ते किम् इब्रिलोकाः? अहमपीब्री। ते
किम् इस्रायेलियाः? अहमपीस्रायेलीयः। ते किम् अब्राहामस्य
२३ वंशाः? अहमप्यब्राहामस्य वंशः। ते किं ख्रीष्टस्य परिचारकाः?
अहं तेभ्योऽपि तस्य महापरिचारकः; किन्तु निर्ब्बोध इव भाषे,
तेभ्योऽप्यहं बहुपरिश्रमे बहुप्रहारे बहुवारं कारायां, बहुवारं
२४ प्राणनाशसंशये च पतितवान्। यिहूदीयैरहं पञ्चकृत्व ऊनचत्वारिं-
शत्प्रहारैराहतस्त्रिर्वेत्राघातम् एककृत्वः प्रस्तराघातञ्च प्राप्तवान्।

वारत्रयं पोतभञ्जनेन क्लिष्टोऽहम् अगाधसलिले दिनमेकं रात्रि- २५
मेकाञ्च यापितवान्। बहुवारं यात्राभि र्नदीनां सङ्कटे दस्यूनां २६
सङ्कटैः स्वजातीयानां सङ्कटे परजातीयानां सङ्कटे नगरस्य सङ्कटे
मरुभूमेः सङ्कटैः सागरस्य सङ्कटे भाक्तभ्रातॄणां सङ्कटैश्च परिश्रम-
क्लेशाभ्यां वारं वारं जागरणेन क्षुधातृष्णाभ्यां बहुवारं निराहारेण २७
शीतनग्नताभ्याञ्चाहं कालं यापितवान्। तादृशं नैमित्तिकं दुःखं २८
विनाहं प्रतिदिनम् आकुलो भवामि सर्व्वासां मण्डलीनां चिन्ता
च मयि वर्त्तते। येनाहं न दुर्ब्बलीभवामि तादृशं दौर्ब्बल्यं कः २९
प्राप्नोति? येनाहं न तपे तादृशं विघ्नं वा कः प्राप्नोति? यदि ३०
मया श्लाघितव्यं तर्हि स्वदुर्ब्बलतामधि श्लाघिष्ये। मया मृषावाक्यं ३१
न कथ्यत इति नित्यं प्रशंसनीयोऽस्माकं प्रभो र्यीशुख्रीष्टस्य तात
ईश्वरो जानाति। दम्मेषकनगरेऽरिताराजस्य कार्य्याध्यक्षो मां ३२
धर्त्तुम् ऐच्छन् यदा सैन्यैस्तद् दम्मेषकनगरम् अरक्षयत् तदाहं लोकैः
पिटकमध्ये प्राचीरगवाक्षेणावरोहितस्तस्य करात् त्राणं प्राप्तं। ३३

### पौलस्य स्वर्गीयदर्शनम्।

आत्मश्लाघा ममानुपयुक्ता किन्त्वहं प्रभो र्दर्शनादेशानाम् १२ १
आख्यानं कथयितुं प्रवर्त्ते। इतश्चतुर्दशवत्सरेभ्यः पूर्व्वं मया परि- २
चित एको जनस्तृतीयं स्वर्गमनीयत, स सशरीरेण निःशरीरेण
वा तत् स्थानमनीयत तदहं न जानामि किन्त्वीश्वरो जानाति।
स मानवः स्वर्गं नीतः सन् अकथ्यानि मर्त्यवागतीतानि च ३
वाक्यानि श्रुतवान्। किन्तु तदानीं स सशरीरो निःशरीरो ५
वासीत् तन्मया न ज्ञायते तद् ईश्वरेणैव ज्ञायते। तमध्यहं ४
श्लाघिष्ये मामधि नान्येन केनचिद् विषयेण श्लाघिष्ये केवलं स्व- ६
दौर्ब्बल्येन श्लाघिष्ये। यद्यहम् आत्मश्लाघां कर्त्तुम् इच्छेयं तथापि

निर्ब्बोध इव न भविष्यामि यतः सत्यमेव कथयिष्यामि, किन्तु लोका मां यादृशं पश्यन्ति मम वाक्यं श्रुत्वा वा यादृशं मां मन्यन्ते तस्मात् श्रेष्ठं मां यन्न गणयन्ति तदर्थमहं ततो विरंस्यामि।

पौलस्य स्वदौर्ब्बल्ये यीशुदत्तबलानिच।

७ अपरम् उत्कृष्टदर्शनप्राप्तितो यदहम् आत्माभिमानी न भवामि
तदर्थं शरीरवेधकम् एकं शूलं मह्यम् अदायि तत् मदीयात्माभि-
८ माननिवारणार्थं मम ताडयिता शैतानस्य दूतः। मत्तस्तस्य
९ प्रस्थानं याचितुमहं त्रिस्तमधि प्रभुमुद्दिश्य प्रार्थनां कृतवान्। ततः
स मामुक्तवान् ममानुग्रहस्तव सर्व्वसाधकः, यतो दौर्ब्बल्यात् मम
शक्तिः पूर्णतां गच्छतीति। अतः ख्रीष्टस्य शक्ति र्यन्माम् आश्रयति
१० तदर्थं स्वदौर्ब्बल्येन मम श्लाघनं सुखदं। तस्माद् ख्रीष्टहेतो
र्दौर्ब्बल्यनिन्दादरिद्रताविपक्षताकष्टादिषु सन्तुष्याम्यहं। यदाहं दुर्ब्ब-
११ लोऽस्मि तदैव सबलो भवामि। एतेनात्मश्लाघनेनाहं निर्ब्बोध
इवाभवं किन्तु यूयं तस्य कारणं यतो मम प्रशंसा युष्माभिरेव
कर्त्तव्यासीत्। यद्यप्यहम् अगण्यो भवेयं तथापि मुख्यतमेभ्यः प्रेरि-
१२ तेभ्यः केनापि प्रकारेण नाहं न्यूनोऽस्मि। सर्व्वथाद्भुतक्रियाशक्तिलक्षणैः
प्रेरितस्य चिह्नानि युष्माकं मध्ये सधैर्य्यं मया प्रकाशितानि।
१३ मम पालनार्थं यूयं मया भाराक्रान्ता नाभवतैतद् एकं न्यूनत्वं
विनापराभ्यः मण्डलीभ्यो युष्माकं किं न्यूनत्वं जातं? अनेन मम
दोषं क्षमध्वं।

करिन्थीयान् प्रति शेषनिवेदनम्।

१४ पश्यत तृतीयवारं युष्मत्समीपं गन्तुमुद्यतोऽस्मि तत्राप्यहं युष्मान्
भाराक्रान्तान् न करिष्यामि। युष्माकं सम्पत्तिमहं न मृगये किन्तु
युष्मानेव, यतः पित्रोः कृते सन्तानानां धनसञ्चयोऽनुपयुक्तः किन्तु

सन्तानानां कृते पित्रो र्धनसञ्चय उपयुक्तः। अपरञ्च युष्मासु बहु १५
प्रियमाणोऽप्यहं यदि युष्मत्तोऽल्पं प्रेम लभे तथापि युष्माकं
प्राणरक्षार्थं सानन्दं बहुव्ययं सर्व्वव्ययञ्च करिष्यामि। यूयं मया १६
किञ्चिदपि न भाराक्रान्ता इति सत्यं, किन्त्वहं धूर्त्तः सन् छलेन
युष्मान् वञ्चितवान् एतत् किं केनचिद् वक्तव्यं? युष्मत्समीपं मया १७
ये लोकाः प्रहितास्तेषामेकेन किं मम कोऽप्यर्थलाभो जातः? अहं
तीतं विनीय तेन सार्द्धं भ्रातरमेकं प्रेषितवान् युष्मत्तस्तीतेन १८
किम् अर्थो लब्धः? एकस्मिन् भाव एकस्य पदचिह्नेषु चावां किं
न चरितवन्तौ? युष्माकं समीपे वयं पुन र्दोषक्षालनकथां कथयाम १९
इति किं बुध्यध्वे? हे प्रियतमाः, युष्माकं निष्ठार्थं वयमीश्वरस्य
समक्षं ख्रीष्टेन सर्व्वाण्येतानि कथयामः। अहं यदागमिष्यामि तदा २०
युष्मान् यादृशान् द्रष्टुं नेच्छामि तादृशान् द्रक्ष्यामि, यूयमपि मां
यादृशं द्रष्टुं नेच्छथ तादृशं द्रक्ष्यथ, युष्मन्मध्ये विवाद ईर्ष्या क्रोधो
विपक्षता परापवादः कर्णेजपनं दर्पः कलहश्चैते भविष्यन्ति; तेनाहं २१
युष्मत्समीपं पुनरागत्य मदीयेश्वरेण नमयिष्ये, पूर्व्वं कृतपापान्
लोकान् स्वीयाशुचितावेश्यागमनलम्पटताचरणाद् अनुतापम् अकृत-
वन्तो दृष्ट्वा च तानधि मम शोको जनिष्यत इति बिभेमि।

एतत्तृतीयवारम् अहं युष्मत्समीपं गच्छामि तेन सर्व्वा कथा १३ १
द्वयोस्त्रयाणां वा साक्षिणां मुखेन निश्चेष्यते। पूर्व्वं ये कृत- २
पापास्तेभ्योऽन्येभ्यश्च सर्व्वेभ्यो मया पूर्व्वं कथितं, पुनरपि विद्यमाने-
नेवेदानीम् अविद्यमानेन मया कथ्यते, यदा पुनरागमिष्यामि
तदाहं न क्षमिष्ये। ख्रीष्टो मया कथां कथयत्येतस्य प्रमाणं यूयं ३
मृगयध्वे, स तु युष्मान् प्रति दुर्ब्बलो नहि किन्तु सबल एव।
यद्यपि स दुर्ब्बलतया क्रुश आरोप्यत तथापीश्वरीयशक्त्या जीवति; ४

वयमपि तस्मिन् दुर्ब्बला भवामः, तथापि युष्मान् प्रति प्रकाशि-
५ तयेश्वरीयशक्त्या तेन सह जीविष्यामः। अतो यूयं विश्वासयुक्ता
आध्वे न वेति ज्ञातुमात्मपरीक्षां कुरुध्वं स्वानेवानुसन्धत्त। यीशुः
ख्रीष्टो युष्मन्मध्ये विद्यते स्वानधि तत् किं न प्रतिजानीथ?
६ तस्मिन् अविद्यमाने यूयं निष्प्रमाणा भवथ। किन्तु वयं निष्प्र-
माणा न भवाम इति युष्माभि र्भोत्स्यते तत्र मम प्रत्याशा
७ जायते। यूयं किमपि कुत्सितं कर्म्म यन्न कुरुथ तदहम् ईश्वर-
मुद्दिश्य प्रार्थये। वयं यत् प्रामाणिका इव प्रकाशामहे तदर्थं
तत् प्रार्थयामह इति नहि, किन्तु यूयं यत् सदाचारं कुरुथ
८ वयञ्च निष्प्रमाणा इव भवामस्तदर्थं। यतः सत्यताया विपक्षतां
९ कर्त्तुं वयं न समर्थाः किन्तु सत्यतायाः साहाय्यं कर्त्तुमेव। वयं
यदा दुर्ब्बला भवामस्तदा युष्मान् सबलान् दृष्ट्वानन्दामो युष्माकं
१० सिद्धत्वं प्रार्थयामहे च। अतो हेतोः प्रभु र्युष्माकं विनाशाय नहि
किन्तु निष्ठायै यत् सामर्थ्यम् अस्मभ्यं दत्तवान् तेन यद् उपस्थिति-
काले काठिन्यं मयाचरितव्यं न भवेत् तदर्थम् अनुपस्थितेन
११ मया सर्व्वाण्येतानि लिख्यन्ते। हे भ्रातरः शेषे वदामि यूयम्
आनन्दत सिद्धा भवत परस्परं प्रबोधयत, एकमनसो भवत
प्रणयभावम् आचरत। प्रेमशान्त्योराकर ईश्वरो युष्माकं सहायो
१२ भूयात्। यूयं पवित्रचुम्बनेन परस्परं नमस्कुरुध्वं। पवित्रलोकाः
१३ सर्व्वे युष्मान् नमन्ति। प्रभो यीशुख्रीष्टस्यानुग्रह ईश्वरस्य प्रेम
पवित्रस्यात्मनो भागित्वञ्च सर्व्वान् युष्मान् प्रति भूयात्। तथास्तु।

# गालातिनः प्रति पौलस्य प्रेरितस्य पत्रं।

पौलस्य प्रेरितत्वपदम्।

मनुष्येभ्यो नहि मनुष्यैरपि नहि किन्तु यीशुख्रीष्टेन मृतगणमध्यात् १ १
तस्योत्थापयित्रा पित्रेश्वरेण च प्रेरितो योऽहं पौलः सोऽहं मत्सह-
वर्त्तिनो भ्रातरश्च वयं गालातीयदेशस्थाः मण्डलीः प्रति पत्रं २
लिखामः। पित्रेश्वरेणास्माकं प्रभुना यीशुना ख्रीष्टेन च युष्मभ्यम् ३
अनुग्रहः शान्तिश्च दीयतां। अस्माकं तातेश्वरस्येच्छानुसारेण वर्त्त- ४
मानात् कुत्सितसंसाराद् अस्मान् निस्तारयितुं यो यीशुरस्माकं
पापहेतोरात्मोत्सर्गं कृतवान् स सर्व्वदा धन्यो भूयात्। तथास्तु। ५

ख्रीष्टस्यानुग्रहेण यो युष्मान् आहूतवान् तस्मान्निवृत्य यूयम ६
अतितूर्णम् अन्यं सुसंवादम् अन्ववर्त्तत तत्राहं विस्मयं मन्ये।
सोऽन्यसुसंवादः सुसंवादो नहि किन्तु केचित् मानवा युष्मान् ७
चञ्चलीकुर्व्वन्ति ख्रीष्टीयसुसंवादस्य विपर्य्ययं कर्त्तुं चेष्टन्ते च।
युष्माकं सन्निधौ यः सुसंवादोऽस्माभि र्घोषितस्तस्माद् अन्यः सुसं- ८
वादोऽस्माकं स्वर्गीयदूतानां वा मध्ये केनचिद् यदि घोष्यते तर्हि
स शप्तो भवतु। पूर्व्वं यद्वद् अकथयाम, इदानीमहं पुनस्तद्वत् ९
कथयामि यूयं यं सुसंवादं गृहीतवन्तस्तस्माद् अन्यो येन केनचिद्
युष्मत्सन्निधौ घोष्यते स शप्तो भवतु। साम्प्रतं कमहम् अनु- १०
नयामि? ईश्वरं किंवा मानवान्? अहं किं मानुषेभ्यो रोचितुं
यते? यद्यहम् इदानीमपि मानुषेभ्यो रुरुचिषेय तर्हि ख्रीष्टस्य
परिचारको न भवामि।

११ हे भ्रातरः, मया यः सुसंवादो घोषितः स मानुषान्न लब्ध-
१२ स्तदहं युष्मान् ज्ञापयामि। अहं कस्माच्चित् मनुष्यात् तं न
गृहीतवान् न वा शिक्षितवान् केवलं यीशोः ख्रीष्टस्य प्रकाशना-
१३ देव। पुरा यिहूदिमताचारी यदाहम् आसं तदा यादृशम्
आचरणम् अकरवम् ईश्वरस्य मण्डलीं प्रत्यतीवोपद्रवं कुर्व्वन्
१४ यादृक् तां व्यनाशयं तदवश्यं श्रुतं युष्माभिः। अपरञ्च पूर्व्वपु-
रुषपरम्परागतेषु वाक्येष्वन्यापेक्षातीवासक्तः सन् अहं यिहूदि-
१५ धर्म्ममते मम समवयस्कान् बहून् स्वजातीयान् अत्यशयि। किन्तु
य ईश्वरो मातृगर्भस्थं मां पृथक् कृत्वा स्वीयानुग्रहेणाहूतवान्
१६ स यदा मयि स्वपुत्रं प्रकाशयितुं परदेशीयानां समीपे मया
तं घोषयितुञ्चाभ्यलषत् तदाहं क्रव्यशोणिताभ्यां सह न मन्त्रयित्वा
१७ पूर्व्वनियुक्तानां प्रेरितानां समीपं यिरूशालमं न गत्वारवदेशं
गतवान् पश्चात् तत्स्थानाद् दम्मेषकनगरं परावृत्यागतवान्।
१८ ततः परं वर्षत्रये व्यतीतेऽहं पितरं सम्भाषितुं यिरूशालमं गत्वा
१९ पञ्चदशदिनानि तेन सार्द्धम् अतिष्ठं। किन्तु तं प्रभो र्भ्रातरं
२० याकोबञ्च विना प्रेरितानां नान्यं कमप्यपश्यं। यान्येतानि वाक्यानि
मया लिख्यन्ते तान्यनृतानि न सन्ति तद् ईश्वरो जानाति।
२१ ततः परम् अहं सुरियां किलिकियाञ्च देशौ गतवान्। तदानीं
२२ यिहूदादेशस्थानां ख्रीष्टस्य मण्डलीनां लोकाः साक्षात् मम परि-
चयमप्राप्य केवलं जनश्रुतिमिमां लब्धवन्तः, यो जनः पूर्व्वम्
२३ अस्मान् प्रत्युपद्रवमकरोत् स तदा यं धर्म्ममनाशयत् तमेवेदानीं
प्रचारयतीति। तस्मात् ते मामधीश्वरं धन्यमवदन्।

२ १ अनन्तरं चतुर्दशसु वत्सरेषु गतेष्वहं बार्णबा सह यिरूशालेम-
२ नगरं पुनरगच्छं, तदानीं तीतमपि स्वसङ्गिनम् अकरवं। तत्काले-

ऽहम् ईश्वरदर्शनाद् यात्राम् अकरवं मया यः परिश्रमोऽकारि
कारिष्यते वा स यन्निष्फलो न भवेत् तदर्थं परजातीयानां मध्ये
मया घोष्यमाणः सुसंवादस्तत्रत्येभ्यो लोकेभ्यो विशेषतो मान्येभ्यो
नरेभ्यो मया न्यवेद्यत। ततो मम यूनानीयः सहचरस्तीतस्य ३
त्वक्छेदोऽप्यावश्यको न बभूव। यतश्छलेनागता अस्मान् दासान् ४
कर्त्तुम् इच्छवः कतिपया भाक्तभ्रातरः ख्रीष्टेन यीशुनास्मभ्यं दत्तं
स्वातन्त्र्यम् अनुसन्धातुं चारा इव समाजं प्राविशन्। अतः ५
प्रकृते सुसंवादे युष्माकम् अधिकारो यत् तिष्ठेत् तदर्थं वयं
दण्डैकमपि यावद् आज्ञाग्रहणेन तेषां वश्या नाभवाम। परन्तु ६
ये लोका मान्यास्ते ये केचिद् भवेयुस्तानहं न गणयामि यत
ईश्वरः कस्यापि मानवस्य पक्षपातं न करोति, ये च मान्यास्ते
मां किमपि नवीनं नाज्ञापयन्। किन्तु छिन्नत्वचां मध्ये सुसंवाद- ७
प्रचारणस्य भारः पितरे यथा समर्पितस्तथैवाच्छिन्नत्वचां मध्ये
सुसंवादप्रचारणस्य भारो मयि समर्पित इति तै र्बुबुधे। यत- ८
श्छिन्नत्वचां मध्ये प्रेरितत्वकर्म्मणे यस्य या शक्तिः पितरमाश्रित-
वती तस्यैव सा शक्तिः परजातीयानां मध्ये तस्मै कर्म्मणे माम-
प्याश्रितवती। अतो मह्यं दत्तम् अनुग्रहं प्रतिज्ञाय स्तम्भा इव ९
गणिता ये याकोवः कैफा योहनो चैते सहायतासूचकं दक्षिण-
हस्तग्रहणं विधाय मां बार्णब्बाञ्च जगदुः, युवां परजातीयानां
सन्निधिं गच्छतं वयं छिन्नत्वचां सन्निधिं गच्छामः, केवलं दरिद्रा १०
युवाभ्यां स्मरणीया इति। अतस्तदेव कर्त्तुम् अहं यते स्म।

### विश्वासेन परित्राणं भवति।

अपरम् आन्तियखियानगरं पितर आगतेऽहं तस्य दोषि- ११
त्वात् समक्षं तम् अभर्त्सयं। यतः स पूर्व्वम् परजातीयैः सा- १२

र्द्धम् आहारमकरोत् ततः परं याकोबस्य: समीपात् कतिपयजने-
ष्वागतेषु स छिन्नत्वङ्मनुष्येभ्यो भयेन निवृत्य पृथग् अभवत्।
१३ ततोऽपरे सर्व्वे यिहूदिनोऽपि तेन सार्द्धं कपटाचारम् अकुर्व्वन्
१४ बार्णबा अपि तेषां कापट्येन विपथगाम्यभवत्। ततस्ते प्रकृत-
सुसंवादरूपे सरलपथे न चरन्तीति दृष्ट्वाहं सर्व्वेषां साक्षात्
पितरम् उक्तवान् त्वं यिहूदी सन् यदि यिहूदिमतं विहाय पर-
जातीय इवाचरसि तर्हि यिहूदिमताचरणाय परजातीयान् कुतः
१५ प्रवर्त्तयसि? आवां जन्मना यिहूदिनौ भवावो परजातीयौ पापिनौ
१६ न भवावः किन्तु व्यवस्थापालनेन मनुष्यः धार्म्मिको न भवति
केवलं यीशौ ख्रीष्टे यो विश्वासस्तेनैव धार्म्मिको भवतीति बुद्ध्वा-
वामपि व्यवस्थापालनं विना केवलं ख्रीष्टे विश्वासेन धार्म्मिकता-
प्राप्तये ख्रीष्टे यीशौ व्यश्वसिव यतो व्यवस्थापालनेन कोऽपि मानवः
१७ धार्म्मिकतां प्राप्तुं न शक्नोति। परन्तु यीशुना धार्म्मिकताप्राप्तये
यतमानावप्यावां यदि पापिनौ भवावस्तर्हि किं वक्तव्यं? ख्रीष्टः
१८ पापस्य परिचारक इति? तन्न भवतु। मया यद् भग्नं तद्
१९ यदि मया पुनर्निर्म्मीयते तर्हि मयैवात्मदोषः प्रकाश्यते। अहं
२० यद् ईश्वराय जीवामि तदर्थं व्यवस्थाया व्यवस्थायै अम्रिये। ख्रीष्टेन
सार्द्धं क्रुशे हतोऽस्मि तथापि जीवामि किन्त्वहं जीवामीति नहि
ख्रीष्ट एव मदन्त र्जीवति। साम्प्रतं सशरीरेण मया यज्जीवितं
धार्य्यते तत् मम दयाकारिणि मदर्थं स्वीयप्राणत्यागिनि चेश्वर-
२१ पुत्रे विश्वसता मया धार्य्यते। अहमीश्वरस्यानुग्रहं नावजानामि यस्माद्
व्यवस्थाया यदि धार्म्मिकता भवति तर्हि ख्रीष्टो निरर्थकमम्रियत।
३ १ हे निर्ब्बोधा गालातिलोकाः, युष्माकं मध्ये क्रुशे हत इव
यीशुः ख्रीष्टो युष्माकं समक्षं प्रकाशित आसीत् अतो यूयं यथा

सत्यं वाक्यं न गृह्णीथ तथा केनामुह्यत? अहं युष्मत्तः कथा- २
मेकां जिज्ञासे यूयम् आत्मानं केनालभध्वं? व्यवस्थापालनेन
किं वा विश्वासवाक्यस्य श्रवणेन? यूयं किम् ईदृग् अबोधा यद् ३
आत्मना कर्म्मारभ्य शरीरेण तत् साधयितुं यतध्वे? तर्हि युष्माकं ४
गुरुतरो दुःखभोगः किं निष्फलो भविष्यति? कुफलयुक्तो वा
किं भविष्यति? यो युष्मभ्यम् आत्मानं दत्तवान् युष्मन्मध्य ५
आश्चर्य्याणि कर्म्माणि च साधितवान् स किं व्यवस्थापालनेन
विश्वासवाक्यस्य श्रवणेन वा तत् कृतवान्? लिखितमास्ते, "इब्रा- ६
हीम ईश्वरे व्यश्वसीत् स च विश्वासस्तस्मै धार्म्मिकतार्थं गणितो
बभूव," अतो ये विश्वासाश्रितास्त एवाब्राहीमस्य सन्ताना इति ७
युष्माभिः ज्ञायतां। ईश्वरो परजातीयान् विश्वासेन धार्म्मिकी- ८
करिष्यतीति पूर्व्वं ज्ञात्वा शास्त्रदाता पूर्व्वम् इब्राहीमं सुसंवादं
श्रावयन् जगाद, "त्वत्तो परजातीयाः सर्व्व आशिषं प्राप्स्य-
न्तीति।" अतो ये विश्वासाश्रितास्ते विश्वासिनाब्राहीमेन सार्द्धम् ९
आशिषं लभन्ते। यावन्तो लोका व्यवस्थायाः कर्म्मण्याश्रयन्ति १०
ते सर्व्वे शापाधीना भवन्ति यतो लिखितमास्ते, यथा, "यः
कश्चिद् एतस्य व्यवस्थाग्रन्थस्य सर्व्ववाक्यानि निश्छिद्रं न पालयति
स शप्त इति।" ईश्वरस्य साक्षात् कोऽपि व्यवस्थया धार्म्मिको न ११
भवति तद् व्यक्तं, यतः "धार्म्मिको मानवो विश्वासेन जीवि-
ष्यतीति" शास्त्रीयं वचः। व्यवस्था तु विश्वाससम्बन्धिनी न भवति १२
किन्त्वेतानि यः पालयिष्यति स एव तै र्जीविष्यतीतिनियमसम्ब-
न्धिनी। ख्रीष्टोऽस्मान् परिक्रीय व्यवस्थायाः शापात् मोचितवान् १३
यतोऽस्माकं विनिमयेन स स्वयं शापास्पदमभवत् तदधि लिखित-
मास्ते, यथा, "यः कश्चित् तरावुल्लम्ब्यते सोऽभिशप्त इति।"

१४ तस्माद् ख्रीष्टेन यीशुनाब्राहामस्याशीः परजातीयलोकेषु वर्त्तते
१५ तेन वयं प्रतिज्ञातम् आत्मानं विश्वासेन लब्धुं शक्नुमः। हे
भ्रातृगण मानुषाणां रीत्यनुसारेणाहं कथयामि केनचित् मा-
नवेन यो नियमो निरचायि तस्य विकृति र्वृद्धि र्वा केनापि न
१६ क्रियते। परन्त्वब्राहामाय तस्य वंशाय च प्रतिज्ञाः प्रतिशुश्रु-
विरे तत्र वंशशब्दं बहुवचनान्तम् अभूत्वा तव वंशायेत्येकवचनान्तं
१७ बभूव स च वंशः ख्रीष्ट एव। अतएवाहं वदामि, ईश्वरेण यो
नियमः पुरा ख्रीष्टमधि निरचायि ततः परं त्रिंशदधिकचतुः-
शतवत्सरेषु गतेषु स्थापिता व्यवस्था तं नियमं निरर्थकीकृत्य
१८ तदीयप्रतिज्ञां लोप्तुं न शक्नोति। यस्मात् दायांशलाभो यदि
व्यवस्थया भवति तर्हि प्रतिज्ञया न भवति किन्त्वीश्वरः प्रतिज्ञया
१९ दायांशम् अब्राहामायाददात्। तर्हि व्यवस्था किम्भूता? प्रतिज्ञा
यस्मै प्रतिश्रुता तस्य वंशस्यागमनं यावद् व्यभिचारनिवारणार्थं
व्यवस्थापि दत्ता, सा च दूतैराज्ञापिता मध्यस्थस्य करे समर्पिता
२० च। नैकस्य मध्यस्थो विद्यते किन्त्वीश्वर एक एव। तर्हि व्यवस्था
२१ किम् ईश्वरस्य प्रतिज्ञानां विरुद्धा? तन्न भवतु यस्माद् यदि
सा व्यवस्था जीवनदाने समर्थाभविष्यत् तर्हि व्यवस्थयैव धार्म्मिकता-
२१ लाभोऽभविष्यत्। किन्तु यीशुख्रीष्टे यो विश्वासस्तत्सम्बन्धिन्याः
प्रतिज्ञायाः फलं यद् विश्वासिलोकेभ्यो दीयते तदर्थं शास्त्रदाता
२३ सर्व्वान् पापाधीनान् गणयति। अतएव विश्वासस्यानागतसमये
वयं व्यवस्थाधीनाः सन्तो विश्वासस्योदयं यावद् रुद्धा इवारक्ष्या-
२४ महे। इत्थं वयं यद् विश्वासेन धार्म्मिकीभवामस्तदर्थं ख्रीष्टस्य
२५ समीपम् अस्मान् नेतुं व्यवस्थाग्रन्थोऽस्माकं विनेता बभूव। किन्त्व-
२६ धुनागते विश्वासे वयं तस्य विनेतुरनधीना अभवाम। ख्रीष्टे

यीशौ विश्वसनात् सर्व्वे यूयम् ईश्वरस्य सन्ताना जाताः। यूयं २७
यावन्तो लोकाः ख्रीष्टे स्नापिता अभवत सर्व्वे ख्रीष्टं परिहित-
वन्तः। अतो युष्मन्मध्ये यिहूदियूनानिनो र्दासस्वतन्त्रयो र्योषा- २८
पुरुषयोश्च कोऽपि विशेषो नास्ति; सर्व्वे यूयं ख्रीष्टे यीशावेक
एव। किञ्च यूयं यदि ख्रीष्टस्य भवथ तर्हि सुतराम् अब्राहामस्य २९
सन्तानाः प्रतिज्ञया दायहराश्चाध्वे।

अहं वदामि दायहरो यावद् बालस्तिष्ठति तावत् सर्व्वस्वस्या- ४ १
धिपतिः सन्नपि स दासात् केनापि विषयेण न विशिष्यते किन्तु पित्रा
निरूपितं समयं यावत् पालकानां धनाध्यक्षाणाञ्च निघ्नस्तिष्ठति। २
तद्वद् वयमपि बाल्यकाले दासा इव संसारस्याक्षरमालाया अधीना ३
आस्महे। अनन्तरं समये सम्पूर्णतां गतवति व्यवस्थाधीनानां मोच- ४
नार्थम् अस्माकं पुत्त्रत्वप्राप्त्यर्थञ्चेश्वरः स्त्रिया जातं व्यवस्थाया ५
अधीनीभूतञ्च स्वपुत्त्रं प्रेषितवान्।

यूयं सन्ताना अभवत तत्कारणाद् ईश्वरः स्वपुत्त्रस्यात्मानं ६
युष्माकम् अन्तःकरणानि प्रहितवान् स चात्मा पितः पितरित्या-
ह्वानं कारयति। अत इदानीं त्वं न दासः किन्तु सन्तान एव ७
तस्मात् सन्तानत्वाच्च ख्रीष्टेनेश्वरीय दायहरोऽप्याध्वे।

ईश्वरानुग्रहे स्थिर स्थातुं विनयः।

अपरञ्च पूर्व्वं यूयम् ईश्वरं न ज्ञात्वा ये स्वभावतोऽनीश्वरास्तेषां
दासत्वेऽतिष्ठत। इदानीम् ईश्वरं ज्ञात्वा यदि वेश्वरेण ज्ञाता यूयं ९
कथं पुनस्तानि विफलानि तुच्छानि चाक्षराणि प्रति परावर्त्तितुं
शक्नुथ? यूयं किं पुनस्तेषां दासा भवितुमिच्छथ? यूयं दिवसान् १०
मासान् तिथीन् संवत्सरांश्च सम्मन्यध्वे। युष्मदर्थं मया यः परिश्रमो- ११
ऽकारि स विफलो जात इति युष्मानध्यहं बिभेमि।

हे भ्रातरः, अहं यादृशोऽस्मि यूयमपि तादृशा भवतेति प्रा-
र्थये यतोऽहमपि युष्मत्तुल्योऽभवं युष्माभि र्मम किमपि नाप-
१३ राद्धं। पूर्व्वमहं कलेवरस्य दौर्ब्बल्येन युष्मान् सुसंवादम् अज्ञापय-
१४ मिति यूयं जानीथ। तदानीं मम परीक्षकं शारीरक्लेशं दृष्ट्वा यूयं
माम् अवज्ञाय ऋतीयितवन्तस्तन्नहि किन्त्वीश्वरस्य दूतमिव सा-
१५ क्षात् ख्रीष्टं यीशुमिव वा मां गृहीतवन्तः। अतस्तदानीं युष्माकं
या धन्यताभवत् सा क्व गता? तदानीं यूयं यदि स्वेषां नयना-
न्युत्पाट्य मह्यं दातुम् अशक्ष्यत तर्हि तदप्यकरिष्यतेति प्रमाणम्
१६ अहं ददामि। साम्प्रतमहं सत्यवादित्वात् किं युष्माकं रिपु र्जा-
१७ तोऽस्मि? ते युष्मत्कृते स्पर्द्धन्ते किन्तु सा स्पर्द्धा कुत्सिता यतो यूयं
तानधि यत् स्पर्द्धध्वं तदर्थं ते युष्मान् पृथक् कर्त्तुम् इच्छन्ति।
१८ केवलं युष्मत्समीपे ममोपस्थितिसमये तन्नहि, किन्तु सर्व्वदैव भद्र-
१९ मधि स्पर्द्धनं भद्रं। हे मम बालकाः, युष्मदन्त र्यावत् ख्रीष्टो
मूर्त्तिमान् न भवति तावद् युष्मत्कारणात् पुनः प्रसववेदनेव मम
२० वेदना जायते। अहमिदानीं युष्माकं सन्निधिं गत्वा स्वरान्तरेण
युष्मान् सम्भाषितुं कामये यतो युष्मानधि व्याकुलोऽस्मि।
२१ हे व्यवस्थाधीनताकाङ्क्षिणः, यूयं किं व्यवस्थाया वचनं न
२२ गृह्णीथ? तन्मां वदत। लिखितमास्ते, इब्राहीमस्य द्वौ पुत्त्रावासाते
२३ तयोरेको दास्यां द्वितीयश्च पत्न्यां जातः। तयो र्यो दास्यां जातः
स शारीरिकनियमेन जज्ञे यस्तु पत्न्यां जातः स प्रतिज्ञया जज्ञे।
२४ इदमाख्यानं दृष्टान्तस्वरूपं। ते द्वे योषितावीश्वरीयसन्धी तयोरेका
सीनयपर्व्वताद् उत्पन्ना दासजनयित्री च सा तु हाजिरा। यस्माद्
२५ हाजिराशब्देनारवदेशस्थसीनयपर्व्वतो बोध्यते, सा च वर्त्तमानाया
यिरूशालेम पुर्य्याः सदृशी। यतः स्वबालैः सहिता सा दासत्वम्

आस्ते। किन्तु स्वर्गीया यिरूशालेमपुरी पत्नी सर्व्वेषाम् अस्माकं २६
माता चास्ते। यादृशं लिखितम् आस्ते, २७

बन्ध्ये सन्तानहीने त्वं स्वरं जयजयं कुरु।
अप्रसूते लयोल्लासो जयशब्दस्य गीयतां।
यत एव सनाथाया योषितः सन्तते र्गणात्।
अनाथा या भवेन्नारी तदपत्यानि भूरिशः॥

हे भ्रातृगण, इस्हाक इव वयं प्रतिज्ञया जाताः सन्तानाः। २८
किन्तु तदानीं शारीरिकनियमेन जातः पुत्रो यद्वद् आत्मि- २९
कनियमेन जातं पुत्रम् उपाद्रवत् तथाधुनापि। किन्तु शास्त्रे ३०
किं लिखितं? 'त्वम् इमां दासीं तस्याः पुत्रञ्चापसारय यत
एष दासीपुत्रः पत्नीपुत्रेण समं न दायहरो भविष्यतीति।' अतएव
हे भ्रातरः, वयं दास्याः सन्ताना न भूत्वा पत्न्याः सन्ताना भवामः। ३१

ख्रीष्टोऽस्मभ्यं यत् स्वातन्त्र्यं दत्तवान् यूयं तत्र स्थिरास्ति- ५ १
ष्ठत दासत्वयुगेन पुन र्न निबध्यध्वं। पश्यताहं पौलो युष्मान् २
वदामि यदि छिन्नत्वचो भवथ तर्हि ख्रीष्टेन किमपि नोपका-
रिष्यध्वे। अपरं यः कश्चित् छिन्नत्वग् भवति स कृत्स्नव्यव- ३
स्थायाः पालनम् ईश्वराय धारयतीति प्रमाणं ददामि। युष्माकं ४
यावन्तो लोका व्यवस्थया धार्म्मिकीभवितुं चेष्टन्ते ते सर्व्वे ख्रीष्टाद्
भ्रष्टा अनुग्रहात् पतिताश्च। यतो वयम् आत्मना विश्वा- ५
सात् धार्म्मिकतालाभाशासिद्धं प्रतीक्षामहे। ख्रीष्टे यीशौ त्वक्- ६
छेदात्वक्छेदयोः किमपि गुणं नास्ति किन्तु प्रेम्ना सफलो विश्वास
एव गुणयुक्तः। पूर्व्वं यूयं सुन्दरम् अधावत किन्त्विदानीं केन ७
बाधां प्राप्य सत्यतां न गृह्णीथ? युष्माकं सा मति र्युष्मदाह्वान- ८
कारिण ईश्वरान्न जाता।

९ विकारः कृत्स्नशक्तूनां स्वल्पकिण्वेन जायते।
१० युष्माकं मति विकारं न गमिष्यतीत्यहं युष्मानधि प्रभुनाशंसे;
किन्तु यो युष्मान् विचालयति स यः कश्चिद् भवेत् समुचितं
११ दण्डं प्राप्स्यति। परन्तु हे भ्रातरः, यद्यहम् इदानीम् अपि
त्वक्छेदं प्रचारयेयं तर्हि कुत उपद्रवं भुञ्जीय? तत्कृते क्रुशं
१२ निर्ब्बाधम् अभविष्यत्। ये जना युष्माकं चाञ्चल्यं जनयन्ति तेषां
छेदनमेव मयाभिलष्यते।
१३ हे भ्रातरः, यूयं स्वातन्त्र्यार्थम् आहूता आध्वे किन्तु तत्स्वा
तन्त्र्यद्वारेण शारीरिकभावो युष्मान् न प्रविशतु। यूयं प्रेम्ना पर-
१४ स्परं परिचर्य्यां कुरुध्वं। यस्मात् त्वं समीपवासिनि स्ववत् प्रेम
१५ कुर्य्या इत्येकाज्ञा कृत्स्नाया व्यवस्थायाः सारसंग्रहः। किन्तु यूयं
यदि परस्परं दंदश्यध्वे ऽशाश्यध्वे च तर्हि युष्माकम् एकोऽन्येन
यन्न ग्रस्यते तत्र युष्माभिः सावधानै र्भवितव्यं।

शारीरिककर्म्मात्मिककर्म्मणोः कथनञ्च।

१६ अहं ब्रवीमि यूयम् आत्मिकाचारं कुरुत शारीरिकाभि-
१७ लाषं मा पूरयत। यतः शारीरिकाभिलाष आत्मनो विपरीतः,
आत्मिकाभिलाषश्च शरीरस्य विपरीतः, अनयोरुभयोः परस्परं
विरोधो विद्यते तेन युष्माभि र्यद् अभिलष्यते तन्न कर्त्तव्यं।
१८ यूयं यद्यात्मना विनीयध्वे तर्हि व्यवस्थाया अधीना न भवथ।
१९ अपरं परदारगमनं वेश्यागमनम् अशुचिता कामुकता प्रतिमापूजनम्
२० इन्द्रजालं शत्रुत्वं विवादोऽन्तर्ज्वलनं क्रोधः कलहोऽनैक्यं पार्थक्यम्
२१ ईर्ष्या बधो मत्तत्वं लम्पटत्वमित्यादीनि स्पष्टत्वेन शारीरिकभावस्य
कर्म्माणि सन्ति। पूर्व्वं यद्वत् मया कथितं तद्वत् पुनरपि कथ्यते
ये जना एतादृशानि कर्म्माण्याचरन्ति तैरीश्वरस्य राज्येऽधिकारः

कदाच न लप्स्यते। किन्तु प्रेमानन्दः शान्तिश्चिरसहिष्णुता हितै- २२
षिता भद्रत्वं विश्वास्यता तितिक्षा परिमितभोजित्वमित्यादीन्यात्मनः
फलानि सन्ति तेषां विरुद्धा कापि व्यवस्था नहि। ये तु ख्रीष्टस्य २३
लोकास्ते रिपुभिरभिलाषैश्च सहितं शारीरिकभावं क्रुशे निहतवन्तः। २४
यदि वयम् आत्मना जीवामस्तर्ह्यात्मिकाचारोऽस्माभिः कर्त्तव्यः, दर्पः २५
परस्परं निर्भर्त्सनं द्वेषश्चास्माभि र्न कर्त्तव्यानि। २६

हे भ्रातरः, युष्माकं कश्चिद् यदि कस्मिंश्चित् पापे पतति ६ १
तर्ह्यात्मिकभावयुक्तै र्युष्माभिस्तितिक्षाभावं विधाय स पुनरुत्थाप्यतां
यूयमपि यथा तादृक्परीक्षायां न पतथ तथा सावधाना भवत।
युष्माकम् एकैको जनः परस्य भारं वहत्वनेन प्रकारेण ख्रीष्टस्य २
विधिं पालयत। यदि कश्चन क्षुद्रः सन् स्वं महान्तं मन्यते तर्हि ३
तस्यात्मवञ्चना जायते। अत एकैकेन जनेन स्वकीयकर्म्मणः परीक्षा ४
क्रियतां तेन परं नालोक्य केवलम् आत्मालोकनाद् तस्य श्लाघा ५
सम्भविष्यति। यत एकैको जनः स्वकीयं भारं वक्ष्यति।

यो जनो धर्म्मोपदेशं लभते स उपदेष्टारं स्वीयसर्व्वसम्पत्ते ६
र्भागिनं करोतु। युष्माकं भ्रान्ति र्न भवतु, ईश्वरो नोपहसि- ७
तव्यः, येन यद् बीजम् उप्यते तेन तज्जातं शस्यं कर्त्तिष्यते। स्वशरी- ८
रार्थं येन बीजम् उप्यते तेन शरीराद् विनाशरूपं शस्यं लप्स्यते
किन्त्वात्मनः कृते येन बीजम् उप्यते तेनात्मतोऽनन्तजीवितरूपं
शस्यं लप्स्यते। सत्कर्म्मकरणेऽस्माभिरश्रान्तै र्भवितव्यं यतोऽक्लान्ते- ९
स्तिष्ठद्भिरस्माभिरुपयुक्तसमये तत् फलानि लप्स्यन्ते। अतो यावत् १०
समयस्तिष्ठति तावत् सर्व्वान् प्रति विशेषतो विश्वासवेश्मवासिनः
प्रत्यस्माभि र्हिताचारः कर्त्तव्यः।

हे भ्रातरः, अहं स्वहस्तेन युष्मान् प्रति कियद्वृहत् पत्रं ११

१२ लिखितवान् तद् युष्माभिः दृश्यतां। ये शारीरिकविषये सुदृश्या
भवितुमिच्छन्ति ते यत् ख्रीष्टस्य क्रुशस्य कारणादुपद्रवस्य भागिनो
१३ न भवन्ति केवलं तदर्थं त्वक्छेदे युष्मान् प्रवर्त्तयन्ति। ते त्वक्-
छेदग्राहिणोऽपि व्यवस्थां न पालयन्ति किन्तु युष्मच्छरीरात् श्लाघा
१४ लाभार्थं युष्माकं त्वक्छेदम् इच्छन्ति। किन्तु येनाहं संसाराय
हतः संसारोऽपि मह्यं हतस्तदस्मत्प्रभो र्यीशुख्रीष्टस्य क्रुशं विना-
१५ न्यत्र कुत्रापि मम श्लाघनं कदापि न भवतु। ख्रीष्टे यीशौ
त्वक्छेदात्वक्छेदयोः किमपि गुणं नास्ति किन्तु नवीना सृष्टिरेव
१६ गुनयुक्ता। अपरं यावन्तो लोका एतस्मिन् मार्गे चरन्ति तेषाम्
१७ ईश्वरीयस्य कृत्स्नस्येस्रायेलस्य च शान्ति र्दयालाभश्च भूयात्। इतः
परं कोऽपि मां न क्लिश्नातु यस्माद् अहं खगात्रे प्रभो
१८ र्यीशुख्रीष्टस्य चिह्नानि धारये। हे भ्रातरः, अस्माकं प्रभो
र्यीशुख्रीष्टस्य प्रसादो युष्माकम् आत्मनि स्थेयात्। तथास्तु।

# इफिषिणः प्रति पौलस्य प्रेरितस्य पत्रं।

ईश्वरसाधितपरित्राणकथा ।

मङ्गलाचरणम् ।

ईश्वरस्येच्छया यीशुख्रीष्टस्य प्रेरितः पौल इफिषनगरस्थान् १ १
पवित्रान् ख्रीष्टयीशौ विश्वासिनो लोकान् प्रति पत्रं लिखति ।
अस्माकं तातस्येश्वरस्य प्रभो यींशुख्रीष्टस्य चानुग्रहः शान्तिश्च २
युष्मासु वर्त्ततां ।

विश्वासिलोकानाम् ईश्वरमनोनीतत्वकथनम् ।

अस्माकं प्रभो यींशोः ख्रीष्टस्य तात ईश्वरो धन्यो भवतु; ३
यतः स ख्रीष्टेनास्मभ्यं सर्व्वम् आध्यात्मिकं स्वर्गीयवरं दत्तवान् ।
वयं यत् तस्य समक्षं प्रेम्ना पवित्रा निष्कलङ्काश्च भवामस्तदर्थं ४
स जगतः सृष्टेः पूर्व्वं तेनास्मान् अभिरोचितवान्, निजाभिलषिता-
नुरोधाच्च यीशुना ख्रीष्टेन स्वस्य निमित्तं पुत्रत्वपदेऽस्मान् ५
स्वकीयानुग्रहस्य महत्त्वस्य प्रशंसार्थं पूर्व्वं नियुक्तवान् । तस्माद् ६
अनुग्रहात् स येन प्रियतमेन पुत्रेणास्मान् अनुगृहीतवान्, वयं
तस्य शोणितेन मुक्तिम् अर्थतः पापक्षमां लब्धवन्तः । तस्य य ७
ईदृशोऽनुग्रहनिधिस्तस्मात् सोऽस्मभ्यं सर्व्वविधं ज्ञानं बुद्धिञ्च बाहुल्य- ८
रूपेण वितरितवान् । स्वर्गपृथिव्यो र्यद्यद् विद्यते तत्सर्व्वं स ख्रीष्टे ९
संग्रहीष्यतीति हितैषिणा तेन कृतो यो मनोरथः सम्पूर्णतां गत- १०
वत्सु समयेषु साधयितव्यस्तमधि स स्वकीयाभिलाषस्य निगूढं
भावम् अस्मान् ज्ञापितवान् । पूर्व्वं ख्रीष्टे विश्वासिनो ये वयम् ११

अस्मत्तो यत् तस्य महिम्नः प्रशंसा जायते, तदर्थं यः स्वकीयेच्छायाः
११ मन्त्रणातः सर्व्वाणि साधयति तस्य मनोरथाद् वयं ख्रीष्टेन पूर्व्वं
१२ निरूपिताः सन्तोऽधिकारिणो जाताः। यूयमपि सत्यं वाक्यम्
अर्थतो युष्मत्परित्राणस्य सुसंवादं निशम्य तस्मिन्नेव ख्रीष्टे विश्वसितवन्तः
प्रतिज्ञातेन पवित्रेणात्मना मुद्रयेवाङ्किताश्च। यतस्तस्य महिम्नः
१४ प्रकाशाय तेन क्रीतानां लोकानां मुक्ति र्यावन्न भविष्यति तावत्
स आत्मास्माकम् अधिकारित्वस्य सत्यङ्कारस्य पणस्वरूपो भवति।

इफिषीयानामर्थं पौलस्य प्रार्थनम्।

१५ प्रभौ यीशौ युष्माकं विश्वासः सर्व्वेषु पवित्रलोकेषु प्रेम चास्त
१६ इति वार्त्तां श्रुत्वाहमपि युष्मानधि निरन्तरम् ईश्वरं धन्यं वदन्
प्रार्थनासमये च युष्मान् स्मरन् वरमिमं याचामि। अस्माकं प्रभो
१७ र्यीशुख्रीष्टस्य तातो यः प्रभावाकर ईश्वरः स स्वकीयतत्त्वज्ञानाय
१८ युष्मभ्यं ज्ञानजनकम् प्रकाशितवाक्यबोधकञ्चात्मानं देयात्। युष्माकं
ज्ञानचक्षूंषि च दीप्तियुक्तानि कृत्वा तस्याह्वानं कीदृश्या प्रत्याशया
सम्बलितं पवित्रलोकानां मध्ये तेन दत्तोऽधिकारः कीदृशः
१९ प्रभावनिधि र्विश्वासिषु चास्मासु प्रकाशमानस्य तदीयमहापराक्रमस्य
२० महत्त्वं कीदृग् अनुपमं तत् सर्व्वं युष्मान् ज्ञापयतु। यतः स यस्याः
शक्तेः प्रबलतां ख्रीष्टे प्रकाशयन् मृतगणमध्यात् तम् उत्थापितवान्,
२१ अधिपतित्वपदं शासनपदं पराक्रमो राजत्वञ्चेतिनामानि यावन्ति
पदानीह लोके परलोके च विद्यन्ते तेषां सर्व्वेषाम् ऊर्द्ध्वे स्वर्गे
२२ निजदक्षिणपार्श्वे तम् उपवेशितवान्, सर्व्वाणि तस्य चरणयोरधो
निहितवान् या मण्डली तस्य शरीरं सर्व्वत्र सर्व्वेषां पुरयितुं पूरकञ्च
२३ भवति तं तस्या मूर्द्धानं कृत्वा सर्व्वेषाम् उपर्य्युपरि नियुक्तवांश्च सैव
शक्तिरस्मास्वपि तेन प्रकाश्यते।

विश्वासिलोकः स्वभावतः कीदृग् अनुग्रहेण च कीदृक् तदाख्यानम्।

पुरा यूयम् अपराधैः पापैश्च मृताः सन्तस्तान्याचरन्त इह- २ १
लोकस्य संसारानुसारेणाकाशराज्यस्याधिपतिम् अर्थतः साम्प्रतम् २
आज्ञालङ्घिवंशेषु कर्म्मकारिणम् आत्मानम् अन्वव्रजत। तेषां मध्ये ३
सर्व्वे वयमपि पूर्व्वं शरीरस्य मनस्कामनायाश्चेहां साधयन्तः
स्वशरीरस्याभिलाषान् आचराम सर्व्वेऽन्य इव च स्वभावतः क्रोध-
भाजनान्यभवाम। किन्तु करुणानिधिरीश्वरो येन महाप्रेम्नास्मान् ४
दयितवान् तस्य स्वप्रेम्नो बाहुल्याद् अपराधै र्मृतानप्यस्मान् ख्रीष्टेन ५
सह जीवितवान् यतोऽनुग्रहाद् यूयं परित्राणं प्राप्ताः। स च ख्रीष्टेन ६
यीशुनास्मान् तेन सार्द्धम् उत्थापितवान् स्वर्ग उपवेशितवांश्च।
इत्थं स ख्रीष्टेन यीशुनास्मान् प्रति स्वहितैषितया भावियुगेषु ७
स्वकीयानुग्रहस्यानुपमं निधिं प्रकाशयितुम् इच्छति। यूयम् अनु- ८
ग्रहाद् विश्वासेन परित्राणं प्राप्ताः, तच्च युष्मन्मूलकं नहि किन्त्वी-
श्वरस्यैव दानं, तत् कर्म्मणां फलम् अपि नहि, अतः केनापि ९
न श्लाघितव्यं। यतो वयं तस्य कार्य्यं प्राग् ईश्वरेण निरूपिताभिः १०
सत्क्रियाभिः कालयापनाय ख्रीष्टे यीशौ तेन सृष्टाश्च।

ख्रीष्टमध्यस्थाम् यिहूदीयानां परजातीयानाञ्च ऐकमत्यम्।

पुरा जन्मना परजातीया हस्तकृतं त्वक्छेदं प्राप्तै र्लोकै- ११
श्चाच्छिन्नत्वच इतिनाम्ना ख्याता ये यूयं तै र्युष्माभिरिदं स्मर्त्तव्यं
यत् तस्मिन् समये यूयं ख्रीष्टाद् भिन्ना इस्रायेललोकानां १२
सहवासाद् दूरस्थाः प्रतिज्ञासम्बलितनियमानां बहिः स्थिताः सन्तो
निराशा निरीश्वराश्च जगत्याध्वम् इति। किन्त्वधुना ख्रीष्टे यीशा- १३
वाश्रयं प्राप्य पुरा दूरवर्त्तिनो यूयं ख्रीष्टस्य शोणितेन निकट-
वर्त्तिनोऽभवत। यतः स एवास्माकं सन्धिः स द्वयम् एकीकृतवान् १४

शत्रुतारूपिणीं मध्यवर्त्तिनीं प्रभेदकभित्तिं भग्नवान् दण्डाज्ञायुक्तं
१५ विधिशास्त्रं स्वशरीरेण लुप्तवांश्च। यतः स सन्धिं विधाय तौ
द्वौ स्वस्मिन् एकं नूतनं मानवं कर्त्तुं स्वकीयक्रुशे शत्रुतां निहत्य
१६ तेनैवैकस्मिन् शरीरे तयो र्द्वयोरीश्वरेण सन्धिं कारयितुं निश्चित-
१७ वान्। स चागत्य दूरवर्त्तिनो युष्मान् निकटवर्त्तिनो ऽस्मांश्च
१८ सन्धे र्मङ्गलवार्त्तां ज्ञापितवान्। यतस्तस्माद् उभयपक्षीया वयम्
एकेनात्मना पितुः समीपं गमनाय सामर्थ्यं प्राप्तवन्तः।

१९ अत इदानीं यूयम् असम्पर्कीया विदेशिनश्च न तिष्ठन्तः
२० पवित्रलोकैः सहवासिन ईश्वरस्य वेश्मवासिनश्चाध्वे। अपरं प्रेरिता
भाववादिनश्च यत्र भित्तिमूलस्वरूपास्तत्र यूयं तस्मिन् मूले निचीय-
२१ ध्वे तत्र च स्वयं यीशुः ख्रीष्टः प्रधानः कोणस्थप्रस्तरः। तेन कृत्स्ना
२२ निर्म्मितिः संग्रथ्यमाना प्रभोः पवित्रं मन्दिरं भवितुं वर्द्धते। यूयमपि
तत्र संग्रथ्यमाना आत्मनेश्वरस्य वासस्थानं भवथ।

३ १ अतो हेतोः परजातीयानां युष्माकं निमित्तं यीशुख्रीष्टस्य
२ बन्दी यः सोऽहं पौलो ब्रवीमि। युष्मदर्थम् ईश्वरेण मह्यं
३ दत्तस्य वरस्य नियमः कीदृशस्तद् युष्माभिरश्रावीति मन्ये। अर्थतः
पूर्व्वं मया संक्षेपेण यथा लिखितं तथाहं प्रकाशितवाक्येनेश्वरस्य
४ निगूढं भावं ज्ञापितोऽभवं। अतो युष्माभिस्तत् पठित्वा ख्रीष्टमधि
५ तस्मिन्निगूढे भावे मम ज्ञानं कीदृशं तद् भोत्स्यते। पूर्व्वयुगेषु
मानवसन्तानास्तं ज्ञापिता नासन् किन्त्वधुना स भावस्तस्य पवि-
६ त्रान् प्रेरितान् भाववादिनश्च प्रत्यात्मना प्रकाशितोऽभवत्; अर्थत
ईश्वरस्य शक्तेः प्रकाशात् तस्यानुग्रहेण यो वरो मह्यम् अदायि
७ तेनाहं यस्य सुसंवादस्य परिचारकोऽभवं, तद्द्वारा ख्रीष्टेन परजातीया
अन्यैः सार्द्धम् एकाधिकारा एकशरीरा एकस्याः प्रतिज्ञायाः अंशि-

नस्य भविष्यन्तीति। सर्व्वेषां पवित्रलोकानां चुद्रतमाय मह्यं ८
वरोऽयम् अदायि यद् परजातीयानां मध्ये बोधागम्यस्य गुण-
निधेः ख्रीष्टस्य मङ्गलवार्त्तां प्रचारयामि, कालावस्थातः पूर्व्वस्माच्च ९
यो निगूढभाव ईश्वरे गुप्त आसीत् तदीयनियमं सर्व्वान् ज्ञाप-
यामि। यत ईश्वरस्य नानारूपं ज्ञानं यत् साम्प्रतं मण्डल्या १०
स्वर्गे प्राधान्यपराक्रमयुक्तानां दूतानां निकटे प्रकाश्यते तदर्थं स
यीशुना ख्रीष्टेन सर्व्वाणि सृष्टवान्। यतो वयं यस्मिन् विश्वस्य ११
दृढभक्त्या निर्भयताम् ईश्वरस्य समागमे सामर्थ्यञ्च प्राप्तवन्त- १२
स्तमस्माकं प्रभुं यीशुं ख्रीष्टमधि स कालावस्थायाः पूर्व्वं तं मनो-
रथं कृतवान्। अतोऽहं युष्मन्निमित्तं दुःखभोगेन क्लान्तिं यन्न १३
गच्छामीति प्रार्थये यतस्तदेव युष्माकं गौरवं।

प्रार्थनाधन्यवादनञ्च।

अतो हेतोः स्वर्गपृथिव्योः स्थितः कृत्स्नो वंशो यस्य नाम्ना १४
विख्यातस्तम् अस्मत्प्रभो यीशुख्रीष्टस्य पितरमुद्दिश्याहं जानुनी १५
पातयित्वा तस्य प्रभावनिधितो वरमिमं प्रार्थये। तस्यात्मना १६
युष्माकम् आन्तरिकपुरुषस्य शक्तेे र्वृद्धिः क्रियतां। ख्रीष्टस्तु विश्वासेन १७
युष्माकं हृदयेषु निवसतु। प्रेमणि युष्माकं बद्धमूलत्वं सुस्थिरत्वञ्च १८
भवतु। इत्थं प्रस्थताया दीर्घताया गभीरताया उच्चतायाश्च बोधाय
सर्व्वैः पवित्रलोकैः प्राप्यं सामर्थ्यं युष्माभि र्लभ्यतां, ज्ञानातिरिक्तं १९
ख्रीष्टस्य प्रेम ज्ञायताम् ईश्वरस्य सम्पूर्णवृद्धिपर्य्यन्तं युष्माकं वृद्धि
र्भवतु च।

अस्माकम् अन्तरे या शक्तिः प्रकाशते तया सर्व्वातिरिक्तं कर्म्म २०
कुर्व्वन् अस्माकं प्रार्थनां कल्पनाञ्चातिक्रमितुं यः शक्नोति ख्रीष्ट-
यीशुना मण्डल्या मध्ये सर्व्वेषु युगेषु तस्य धन्यवादो भवतु। इति। २१

ईश्वरभक्तोपयोग्याचरितुं विनयः।

४ १ अतो बन्दिरहं प्रभो र्नाम्ना युष्मान् विनये यूयं येनाह्वाने-
२ नाहूतास्तदुपयुक्तरूपेण सर्व्वथा नम्रतां मृदुतां तितिक्षां परस्परं
३ प्रेम्ना सहिष्णुताञ्चाचरत। प्रणयबन्धनेन चात्मन ऐक्यं रक्षितुं
४ यतध्वं। यूयम् एकशरीरा एकात्मानश्च तद्वद् आह्वानेन यूयम्
५ एकप्रत्याशाप्राप्तये समाहूताः। युष्माकम् एकः प्रभुरेको विश्वास
६ एकं स्नापनं, सर्व्वेषां तातः सर्व्वोपरिस्थः सर्व्वव्यापी सर्व्वेषां युष्माकं
७ मध्यवर्त्ती चैक ईश्वर आस्ते। किन्तु ख्रीष्टस्य दानपरिमाणानुसाराद्
८ अस्माकम् एकैकस्मै विशेषो वरोऽदायि। यथा लिखितम् आस्ते,

ऊर्द्ध्वम् आरुह्य जेतॄन् स विजित्य बन्दिनोऽकरोत्।
ततः स मनुजेभ्योऽपि स्वीयान् व्यश्राणयद् वरान्॥

९ ऊर्द्ध्वम् आरुह्येतिवाक्यस्यायमर्थः स पूर्व्वं पृथिवीरूपं सर्व्वाधः-
१० स्थितं स्थानम् अवतीर्णवान्; यश्चावतीर्णवान् स एव स्वर्गा-
११ णाम् उपर्य्युपर्य्यारूढवान् यतः सर्व्वाणि तेन पूरयितव्यानि। स
एव च कांश्चन प्रेरितान् अपरान् भाववादिनोऽपरान् सुसं-
वादप्रचारकान् अपरान् पालकान् उपदेशकांश्च नियुक्तवान्।
१२ यावद् वयं सर्व्वे विश्वासस्येश्वरपुत्रविषयकस्य तत्त्वज्ञानस्य चैक्यं
सम्पूर्णं पुरुषार्थञ्चार्थतः ख्रीष्टस्य सम्पूर्णपरिमाणस्य समं परिमाणं
१३ न प्राप्नुमस्तावत् स परिचर्य्याकर्म्मसाधनाय ख्रीष्टस्य शरीरस्य निष्ठायै
१४ च पवित्रलोकानां सिद्धतायास्तादृशम् उपायं निश्चितवान्। अत-
एव मानुषाणां चातुरीतो भ्रमकधूर्त्ततायाश्छलाच्च जातेन सर्व्वेण
शिक्षावायुना वयं यद् बालका इव दोलायमाना न भ्राम्याम
१५ इत्यस्माभि र्यतितव्यं, प्रेम्ना सत्यताम् आचरद्भिः सर्व्वविषये ख्रीष्टम्
१६ उद्दिश्य वर्द्धितव्यञ्च, यतः स मूर्द्धा, तस्माच्चैकैकस्याङ्गस्य स्वस्वपरि-

माणानुसारेण साहाय्यकरणाद् उपकारकैः सर्व्वैः सन्धिभिः कृत्स्नस्य शरीरस्य संयोगे सम्मिलने च जाते प्रेम्ना निष्ठां लभमानं कृत्स्नं शरीरं वृद्धिं प्राप्नोति।

युष्मान् अहं प्रभुनेदं ब्रवीम्यादिशामि च, अन्ये परजातीया १७
इव यूयं पुन र्माचरत। यतस्ते स्वमनोमायाम् आचरन्त्यान्त- १८
रिकाज्ञानात् मानसिककाठिन्याच्च तिमिरावृतबुद्धय ईश्वरीय-
जीवनस्य बहिर्भूताश्च भवन्ति, स्वान् चैतन्यशून्यान् कृत्वा च लोभेन १९
सर्व्वविधाशौचाचरणाय लम्पटतायां स्वान् समर्पितवन्तः। किन्तु २०
यूयं ख्रीष्टं न तादृशं परिचितवन्तः, यतो यूयं तं श्रुतवन्तो या
सत्या शिक्षा यीशुतो लभ्या तदनुसारात् तदीयोपदेशं प्राप्तवन्त- २१
श्चेति मन्ये। तस्मात् पूर्व्वकालिकाचारकारी यः पुरातनपुरुषो २२
मायाभिलाषै र्नश्यति तं त्यक्त्वा युष्माभि र्मानसिकभावो नूतनी- २३
कर्त्तव्यः, यो नवपुरुष ईश्वरानुरूपेण धार्म्मिकत्वेन सत्यतासहितेन २४
साधुत्वेन च सृष्टः स एव परिधातव्यश्च।

अतो यूयं सर्व्वे मिथ्याकथनं परित्यज्य समीपवासिभिः सह २५
सत्यालापं कुरुत यतो वयं परस्परम् अङ्गप्रत्यङ्गा भवामः। अपरं २६
क्रोधे जाते पापं मा कुरुध्वम्, अशान्ते युष्माकं रोषे सूर्य्योऽस्तं
न गच्छतु। अपरं शैतानाय स्थानं मा दत्त। चोरः पुनश्चौर्य्यं २७
न करोतु किन्तु दीनाय दाने सामर्थ्यं यज्जायते तदर्थं स्वकराभ्यां २८
सद्वृत्त्या परिश्रमं करोतु। अपरं युष्माकं वदनेभ्यः कोऽपि कदा- २९
लापो न निर्गच्छतु, किन्तु येन श्रोतुरुपकारो जायते तादृशः
प्रयोजनीयनिष्ठायै फलदायक आलापो युष्माकं भवतु। अपरञ्च ३०
यूयं मुक्तिदिनपर्य्यन्तम् ईश्वरस्य येन पवित्रेणात्मना मुद्रयाङ्किता
अभवत तं शोकान्वितं मा कुरुत। अपरं कटुवाक्यं रोषः कोपः ३१

कलहो निन्दा सर्व्वविधद्वेषश्चैतानि युष्माकं मध्याद् दूरीभवन्तु।
३२ यूयं परस्परं हितैषिणः कोमलान्तःकरणाश्च भवत। अपरम्
ईश्वरः ख्रीष्टेन यद्वद् युष्माकं दोषान् क्षमितवान् तद्वद् यूयमपि
परस्परं क्षमध्वं।

५ १ अतो यूयं प्रियबालका इवेश्वरस्यानुकारिणो भवत, ख्रीष्ट
२ इव प्रेमाचारं कुरुत च, यतः सोऽस्मासु प्रेम कृतवान् अस्माकं
विनिमयेन चात्मनिवेदनं कृत्वा ग्राह्यसुगन्धार्थकम् उपहारं बलिं-
३ श्चेश्वराय दत्तवान्। किन्तु वेश्यागमनं सर्व्वविधाशौचक्रिया लोभ-
श्चैतेषाम् उच्चारणमपि युष्माकं मध्ये न भवतु, एतदेव पवित्र-
४ लोकानाम् उचितं। अपरं कुत्सितालापः प्रलापः श्लेषोक्तिश्च
न भवतु यत एतान्यनुचितानि किन्त्वीश्वरस्य धन्यवादो भवतु।
५ वेश्यागाम्यशौचाचारी देवपूजक इव गण्यो लोभी चैतेषां कोपि
ख्रीष्टस्य राज्येऽर्थत ईश्वरस्य राज्ये कमप्यधिकारं न प्राप्स्यतीति
६ युष्माभिः सम्यक् ज्ञायतां। अनर्थकवाक्येन कोऽपि युष्मान् न
वञ्चयतु यतस्तादृगाचारहेतोरनाज्ञाग्राहिषु लोकेष्वीश्वरस्य कोपो
७ वर्त्तते। तस्माद् यूयं तैः सहभागिनो न भवत। पूर्व्वं यूयम्
८ अन्धकारस्वरूपा आध्वं किन्त्विदानीं प्रभुना दीप्तिस्वरूपा भवथ
९ तस्माद् दीप्तेः सन्ताना इव समाचरत। दीप्तेः र्यत् फलं तत्
१० सर्व्वविधहितैषितायां धार्म्मिकत्वे सत्यालापे च प्रकाशते। प्रभवे
११ यद् रोचते तत् परीक्षध्वं। यूयं तिमिरस्य विफलकर्म्मणाम् अंशिनो
१२ न भूत्वा तेषां दोषित्वं प्रकाशयत। यतस्ते लोका रहसि यद्
१३ यद् आचरन्ति तदुच्चारणम् अपि लज्जाजनकं। यतो दीप्त्या
यद् यत् प्रकाश्यते तत् तया चकाश्यते यच्च चकास्ति तद्
१४ दीप्तिस्वरूपं भवति। एतत्कारणाद् उक्तम् आस्ते,

हे निद्रित प्रबुध्यस्व मृतेभ्यश्चोत्थितिं कुरु।
तत्कृते सूर्य्यवत् ख्रीष्टः स्वयं त्वां द्योतयिष्यति।

अतः सावधाना भवत, अज्ञाना इव माचरत किन्तु ज्ञानिन १५
इव सतर्कम् आचरत। समयं बहुमूल्यं गणयध्वं यतः काला १६
अभद्राः। तस्माद् यूयम् अज्ञाना न भवत किन्तु प्रभोरभिमतं १७
किं तदवगता भवत। सर्व्वनाशजनकेन सुरापानेन मत्ता मा भवत १८
किन्त्वात्मना पूर्य्यध्वं। अपरं गीतै गानैः पारमार्थिककीर्त्तनैश्च १९
परस्परम् आलपन्तो मनसा सार्द्धं प्रभुम् उद्दिश्य गायत वादयत च।
सर्व्वदा सर्व्वविषयेऽस्मत्प्रभो यीशोः ख्रीष्टस्य नाम्ना तातम् ईश्वरं धन्यं २०
वदत। यूयम् ईश्वराद् भीताः सन्त अन्येऽपरेषां वशीभूता भवत। २१

स्त्रीपुरुषयोः कर्त्तव्यकर्म्मकथनञ्च।

हे योषितः, यूयं यथा प्रभोस्तथा स्वस्वस्वामिनो वशङ्गता २२
भवत। यतः ख्रीष्टो यद्वत् समित्या मूर्द्धा शरीरस्य त्राता च २३
भवति तद्वत् स्वामी योषितो मूर्द्धा। अतः समितिर्यद्वत् २४
ख्रीष्टस्य वशीभूता तद्वद् योषिद्भिरपि स्वस्वस्वामिनो वशता स्वीक-
र्त्तव्या। अपरञ्च हे पुरुषाः, यूयं ख्रीष्ट इव स्वस्वयोषित्सु प्रीयध्वं। २५
स ख्रीष्टोऽपि समित्यां प्रीतवान् तस्याः कृते च स्वप्राणान् त्यक्त- २६
वान् यतः स वाक्ये जलमज्जनेन तां परिष्कृत्य पावयितुम् अपरं
तिलकवल्यादिविहीनां पवित्रां निष्कलङ्काञ्च तां समितिं तेज- २७
स्विनीं कृत्वा स्वहस्ते समर्पयितुञ्चाभिलषितवान्। तस्मात् स्वतनुवत् २८
स्वयोषिति प्रेमकरणं पुरुषस्योचितं, येन स्वयोषिति प्रेम क्रियते
तेनात्मप्रेम क्रियते। कोऽपि कदापि न स्वकीयां तनुम् ऋतीयितवान् २९
यितवान् किन्तु सर्व्वे तां बिभ्रति पुष्णन्ति च। ख्रीष्टोऽपि
समितिं प्रति तदेव करोति, यतो वयं तस्य शरीरस्याङ्गानि

३० मांसास्थीनि च भवामः। एतदर्थं मानवः स्वमातापितरौ परि-
३१ त्यज्य स्वभार्य्यायाम् आसंक्ष्यति तौ द्वौ जनावेकाङ्गौ भवि-
३२ ष्यतः। एतन्निगूढवाक्यं गुरुतरं मया च ख्रीष्ट मण्डल्यावधि तद्
३३ उच्यते। अतएव युष्माकम् एकैको जन आत्मवत् स्वयोषिति
प्रीयतां भार्य्यापि स्वामिनं समादर्त्तुं यततां।

६ १ हे बालकाः, यूयं प्रभुम् उद्दिश्य पित्रोराज्ञाग्राहिणो भवत
२ यतस्तत् न्याय्यं। त्वं निजपितरं मातरञ्च सम्मन्यस्वेति यो विधिः
३ स प्रतिज्ञायुक्तः प्रथमो विधिः फलतस्तस्मात् तव कल्याणं देशे
४ च दीर्घकालम् आयु र्भविष्यतीति। अपरं हे पितरः, यूयं स्वबाल-
कान् मा रोषयत किन्तु प्रभो र्विनीत्यादेशाभ्यां तान् विन-
५ यत। हे दासाः यूयं ख्रीष्टम् उद्दिश्य सभयाः कम्पान्विताश्च
६ भूत्वा सरलान्तःकरणैरैहिकप्रभूनाम् आज्ञाग्राहिणो भवत। दृष्टि-
गोचरीयपरिचर्य्यया मानुषेभ्यो रोचितुं मा यतध्वं किन्तु ख्रीष्टस्य
७ दासा इव निविष्टमनोभिरीश्वरस्येच्छां साधयत। मानवान् अनु-
८ द्दिश्य प्रभुमेवोद्दिश्य सद्भावेन दास्यकर्म्म कुरुध्वं। दासस्वाधीनयो
र्येन यत् सत्कर्म्म क्रियते तेन तस्य फलं प्रभुतो लप्स्यत इति
९ जानीत च। अपरं हे प्रभवः, युष्माभि र्भर्त्सनं विहाय तान्
प्रति न्याय्याचरणं क्रियतां यश्च कस्यापि पक्षपातं न करोति
युष्माकमपि तादृश एकः प्रभुः स्वर्गे विद्यत इति ज्ञायतां।

धर्म्मयुद्धसज्जायां सज्जीभूतत्वम्।

१० अधिकन्तु हे भ्रातरः, यूयं प्रभुना तस्य विक्रमयुक्तशक्त्या
११ च बलवन्तो भवत। यूयं यत् शैतानस्य छलानि निवारयितुं
१२ शक्नुथ तदर्थम् ईश्वरीयसुसज्जां परिधद्ध्वं। यतः केवलं रक्तमांसा-
भ्याम् इति नहि किन्तु कर्त्तृत्वपराक्रमयुक्तैस्तिमिरराज्यस्येहलोक-

स्याधिपतिभिः स्वर्गाद्भवे दुष्टात्मभिरेव सार्द्धम् अस्माभि र्युद्धं
क्रियते। अतो हेतो र्यूयं यथा संकुले दिनेऽवस्थातुं सर्व्वाणि १३
पराजित्य दृढाः स्थातुञ्च शक्नुथ ताम् ईश्वरीयसुसज्जां गृह्णीत।
वस्तुतस्तु सत्यत्वेन शृङ्खलेन कटिं बद्धा धार्म्मिकत्वेन वर्म्मणा वक्ष १४
आच्छाद्य शान्तेः सुवार्त्तया जातम् उत्साहं पादुकायुगलं पदे १५
समर्प्य तिष्ठत। येन च दुष्टात्मनोऽग्निबाणान् सर्व्वान् निर्व्वाप- १६
यितुं शक्नुथ तादृशं सर्व्वाच्छादकं फलकं विश्वासं धारयत।
शिरस्त्रं परित्राणम् आत्मनः खड्गञ्चेश्वरस्य वाक्यं धारयत। १७
सर्व्वसमये सर्व्वयाचनेन सर्व्वप्रार्थनेन चात्मना प्रार्थनां कुरुध्वं १८
तदर्थं दृढाकाङ्क्षया जाग्रतः सर्व्वेषां पवित्रलोकानां कृते सदा
प्रार्थनां कुरुध्वं। अहञ्च यस्य सुसंवादस्य शृङ्खलबद्धः प्रचारक- १९
दूतोऽस्मि तम् उपयुक्तेनोत्साहेन प्रचारयितुं यथा शक्नुयां तथा
निर्भयेन स्वरेणोत्साहेन च सुसंवादस्य निगूढवाक्यप्रचाराय वक्तृता २०
यत् मह्यं दीयते तदर्थं ममापि कृते प्रार्थनां कुरुध्वं।

उपसंहारः।

अपरं मम यावस्थास्ति यच्च मया क्रियते तत् सर्व्वं यद् २१
युष्माभि र्ज्ञायते तदर्थं प्रभुना प्रियभ्राता विश्वास्यः परिचार-
कश्च तुखिको युष्मान् तत् ज्ञापयिष्यति। यूयं यद् अस्माकम् २२
अवस्थां जानीथ युष्माकं मनांसि च यत् सान्त्वनां लभन्ते
तदर्थमेवाहं युष्माकं सन्निधिं तं प्रेषितवान्। अपरम् ईश्वरः २३
प्रभु र्यीशुख्रीष्टश्च सर्व्वेभ्यो भ्रातृभ्यः शान्तिं विश्वाससहितं प्रेम
च देयात्। ये केचित् प्रभौ यीशुख्रीष्टेऽक्षयं प्रेम कुर्व्वन्ति तान् २४
प्रति प्रसादो भूयात्। तथास्तु।

# फिलिपिनः प्रति पौलस्य प्रेरितस्य पत्रं।

मङ्गलाचरणम्। फिलिपीयानां सन्निधौ नानाविधाश्वासवाक्यम्।

१ १ पौलतीमथिनामानौ यीशुख्रीष्टस्य दासौ फिलिपिनगरस्थान्
ख्रीष्टयीशोः सर्व्वान् पवित्रलोकान् मण्डल्याध्यक्षान् परिचारकांश्च
२ प्रति पत्रं लिखतः। अस्माकं तात ईश्वरः प्रभु यीशुख्रीष्टश्च युष्मभ्यं
प्रसादस्य शान्तेश्च भोगं देयास्तां।
३ अहं निरन्तरं निजसर्व्वप्रार्थनासु युष्माकं सर्व्वेषां कृते सानन्दं
४ प्रार्थनां कुर्व्वन् यति वारान् युष्मान् स्मरामि तति वारान् आ
५ प्रथमाद् अद्य यावद् युष्माकं सुसंवादभागित्वकारणाद् ईश्वरं धन्यं
६ वदामि। युष्मन्मध्ये येनोत्तमं कर्म्म कर्त्तुम् आरम्भि तेनैव यीशुख्रीष्टस्य
दिनं यावत् तत् साधयिष्यत इत्यस्मिन् दृढविश्वासो ममास्ते।
७ युष्मान् सर्व्वान् अधि मम तादृशो भावो यथार्थो यतोऽहं
कारावस्थायां प्रत्युत्तरकरणे सुसंवादस्य प्रामाण्यकरणे च युष्मान्
सर्व्वान् मया सार्द्धम् एकानुग्रहस्य भागिनो मत्वा स्वहृदये
८ धारयामि। अपरम् अहं ख्रीष्टयीशोः स्नेहवत् स्नेहेन युष्मान्
९ कीदृशं काङ्क्षामि तदधीश्वरो मम साक्षी विद्यते। मया यत्
१० प्रार्थ्यते तद् इदं युष्माकं प्रेम नित्यं वृद्धिं गत्वा ज्ञानस्य विशिष्टानां
११ परीक्षिकायाश्च सर्व्वविधबुद्धेर्बाहुल्यं फलतु, ख्रीष्टस्य दिनं यावद्
युष्माकं सारल्यं निर्विघ्नत्वञ्च भवतु, ईश्वरस्य गौरवाय प्रशंसायै च
यीशुना ख्रीष्टेन धार्म्मिकत्वफलानां पूर्णतां युष्मभ्यं दीयताम् इति।

हे भ्रातरः, मां प्रति यद् यद् घटितं तेन सुसंवादप्रचारस्य १२
बाधा नहि किन्तु वृद्धिरेव जाता तद् युष्मान् ज्ञापयितुं कामयेऽहं।
अपरम् अहं ख्रीष्टस्य कृते बद्धोऽस्मीति राजपुर्य्याम् अन्यस्थानेषु १३
च सर्व्वेषां निकटे सुस्पष्टम् अभवत्, प्रभुसम्बन्धीया अनेके भ्रातरश्च १४
मम बन्धनाद् आश्वासं प्राप्य वर्द्धमानेनोत्साहेन निःक्षोभं कथां
प्रचारयन्ति। केचिद् द्वेषाद् विरोधाच्चापरे केचिच्च सद्भावात् ख्रीष्टं १५
घोषयन्ति; ये विरोधात् ख्रीष्टं घोषयन्ति ते पवित्रभावात् तन्न १६
कुर्व्वन्तो मम बन्धनानि बहुतरक्लेशदायीनि कर्त्तुम् इच्छन्ति। ये च १७
प्रेम्ना घोषयन्ति ते सुसंवादस्य प्रामाण्यकरणेऽहं नियुक्तोऽस्मीति ज्ञात्वा
तत् कुर्व्वन्ति। किं बहुना? कापट्यात् सरलभावाद् वा भवेत्, येन १८
केनचित् प्रकारेण ख्रीष्टस्य घोषणा भवतीत्यस्मिन् अहम् आनन्दाम्या-
नन्दिष्यामि च। युष्माकं प्रार्थनया यीशुख्रीष्टस्यात्मनश्चोपकारेण तत् १९
मन्निस्तारजनकं भविष्यतीति जानामि। तत्र च ममाकाङ्क्षा प्रत्याशा २०
च सिद्धिं गमिष्यति फलतोऽहं केनापि प्रकारेण न लज्जिष्ये किन्तु
गते सर्व्वस्मिन् काले यद्वत् तद्वद् इदानीमपि सम्पूर्णोत्साहद्वारा मम
शरीरेण ख्रीष्टस्य महिमा जीवने मरणे वा प्रकाशिष्यते। यतो २१
मम जीवनं ख्रीष्टाय मरणञ्च लाभाय। किन्तु यदि शरीरे मया २२
जीवितव्यं तर्हि तत् कर्म्मफलं फलिष्यति तस्मात् किं वरितव्यं
तन्मया न ज्ञायते। द्वाभ्याम् अहं सम्पीड्ये, देहवासत्यजनाय ख्रीष्टेन २३
सहवासाय च ममाभिलाषो भवति यतस्तत् सर्व्वोत्तमं। किन्तु देहे २४
ममावस्थित्या युष्माकम् अधिकप्रयोजनं। अहम् अत्रस्थास्ये युष्माभिः २५
सर्व्वैः सार्द्धम् अवस्थितिं करिष्ये च तथा च विश्वासे युष्माकं वृद्ध्यानन्दौ
जनिष्येते तदहं निश्चितं जानामि। तेन च मत्तोऽर्थतो युष्मत्समीपे मम २६
पुनरुपस्थितत्वात् यूयं ख्रीष्टेन यीशुना बहुतरम् आह्लादं लप्स्यध्वे।

२७ यूयं सावधाना भूत्वा ख्रीष्टस्य सुसंवादस्योपयुक्तम् आचारं कुरुध्वं
यतोऽहं युष्मान् उपागत्य साक्षात् कुर्वन् किं वा दूरे तिष्ठन् युष्माकं
यां वार्त्तां श्रोतुम् इच्छामि सेयं यूयम् एकात्मानस्तिष्ठथ, एकमनसा
सुसंवादसम्बन्धीयविश्वासस्य पक्षे यतध्वे, विपक्षैश्च केनापि प्रकारेण
२८ न व्याकुलीक्रियध्व इति। तत् तेषां विनाशस्य लक्षणं युष्माकञ्चेश्वरदत्तं
२९ परित्राणस्य लक्षणं भविष्यति। यतो येन युष्माभिः ख्रीष्टे केवलविश्वासः
क्रियते तन्नहि किन्तु तस्य कृते क्लेशोऽपि सह्यते तादृशो वरः
३० ख्रीष्टस्यानुरोधाद् युष्माभिः प्रापि, तस्मात् मम यादृशं युद्धं
युष्माभिरदर्शि साम्प्रतं श्रूयते च तादृशं युद्धं युष्माकम् अपि भवति।

यीशुना त्यागस्वीकारस्य श्रेष्ठतमादर्शप्रदर्शनम्।

२ १ ख्रीष्टाद् यदि किमपि सान्त्वनं कस्यचित् प्रेमजातो हर्षः किञ्चिद्
आत्मनः समभागित्वं काचिद् अनुकम्पा कृपा वा जायते तर्हि
२ यूयं ममाह्लादं पूरयन्त एकभावा एकप्रेमाण एकमनस एकचेष्टाश्च
३ भवत। विरोधाद् दर्पाद् वा किमपि मा कुरुत किन्तु नम्रतया
४ स्वेभ्यो ऽपरान् विशिष्टान् मन्यध्वं। केवलम् आत्महिताय न
चेष्टमानाः परहितायापि चेष्टध्वं।

५ ख्रीष्टस्य यीशो र्यादृशः स्वभावो युष्माकम् अपि तादृशो भवतु।
६ स ईश्वररूपी सन् स्वकीयाम् ईश्वरतुल्यतां श्लाघास्पदं नामन्यत,
७ किन्तु स्वं शून्यं कृत्वा दासरूपी बभूव नराकृतिं लेभे च। इत्थं
८ नरमूर्त्तिम् आश्रित्य नम्रतां स्वीकृत्य मृत्योरर्थतः क्रुशीयमृत्योरेव
९ भोगायाज्ञाग्राही बभूव। तत्कारणाद् ईश्वरोऽपि तं सर्व्वोन्नतं
चकार यच्च नाम सर्व्वेषां नाम्नां श्रेष्ठं तदेव तस्मै ददौ,
१० ततस्तस्मै यीशुनाम्ने स्वर्गमर्त्यपातालस्थितैः सर्व्वै र्जानुपातः कर्त्तव्यः, तातस्येश्वरस्य
११ महिम्ने च यीशुख्रीष्टः प्रभुरिति जिह्वाभिः स्वीकर्त्तव्यं।

अतो हे प्रियतमाः, युष्माभि र्यद्वत् सर्व्वदा क्रियते तद्वत् १२
केवले ममोपस्थितिकाले तन्नहि किन्त्विदानीम् अनुपस्थितेऽपि
मयि बहुतरयत्नेनाज्ञां गृहीत्वा भयकम्पाभ्यां स्वस्वपरित्राणं
साध्यतां । यत ईश्वर एव स्वकीयानुरोधाद् युष्मन्मध्ये मनस्कामनां १३
कर्म्मसिद्धिञ्च विदधाति । यूयं कलहविवादवर्जितम् आचारं कुर्व्वन्तो १४
ऽनिन्दनीया अकुटिला ईश्वरस्य निष्कलङ्काश्च सन्ताना इव वक्र- १५
भावानां कुटिलाचारिणाञ्च लोकानां मध्ये तिष्ठत, यतस्तेषां मध्ये
यूयं जीवनवाक्यं धारयन्तो जगतो दीपका इव दीप्यध्वे । युष्मा- १६
भिस्तथा कृते मम यत्नः परिश्रमो वा न निष्फलो जात इत्यहं
ख्रीष्टस्य दिने श्लाघां कर्त्तुं शक्ष्यामि ।

युष्माकं विश्वासार्थकाय बलिदानाय सेवनाय च यद्यप्यहं निवे- १७
दितव्यो भवेयं तथापि तेनानन्दामि सर्व्वेषां युष्माकम् आनन्दस्यांशी
भवामि च । तद्वद् यूयमप्यानन्दत मदीयानन्दस्यांशिनो भवत च । १८

तीमथियेपाफ्रादीतयो र्विषयः ।

युष्माकम् अवस्थाम् अवगत्याहमपि यत् सान्त्वनां प्राप्नुयां तदर्थं १९
तीमथियं त्वरया युष्मत्समीपं प्रेषयिष्यामीति प्रभौ प्रत्याशां कुर्व्वे ।
यः सत्यरूपेण युष्माकं हितं चिन्तयति तादृश एकभावस्तस्मादन्यः २०
कोऽपि मम सन्निधौ नास्ति । यतोऽपरे सर्व्वे यीशोः ख्रीष्टस्य २१
विषयान् न चिन्तयन्त आत्मविषयान् चिन्तयन्ति । किन्तु तस्य २२
परीक्षितत्वं युष्माभि र्ज्ञायते यतः पुत्रो यादृक् पितुः सहकारी
भवति तथैव सुसंवादस्य परिचर्य्यायां स मम सहकारी जातः ।
अतएव मम भाविदशां ज्ञात्वा तत्क्षणात् तमेव प्रेषयितुं प्रत्याशां २३
कुर्व्वे स्वयम् अहमपि तूर्णं युष्मत्समीपं गमिष्यामीत्याशां प्रभुना २४
कुर्व्वे । अपरं य इपाफ्रदीतो मम भ्राता कर्म्मयुद्धाभ्यां मम २५

सहायश्च युष्माकं दूतो मदीयोपकाराय प्रतिनिधिश्चास्ति युष्मत्समीपे
२६ तस्य प्रेषणम् आवश्यकम् अमन्ये। यतः स युष्मान् सर्व्वान् अकाङ्क्षत
२७ युष्माभिस्तस्य रोगस्य वार्त्ताश्रावीति बुद्ध्वा पर्य्यशोचच्च। स पीडया
मृतकल्पोऽभवदिति सत्यं किन्त्वीश्वरस्तं दयितवान् मम च दुःखात्
परं पुनर्दुःखं यन्न भवेत् तदर्थं केवलं तं न दयित्वा मामपि
२८ दयितवान्। अतएव यूयं तं विलोक्य यत् पुनरानन्देत ममापि
२९ दुःखस्य ह्रासो यद् भवेत् तदर्थम् अहं त्वरया तम् अप्रेषयं। अतो
यूयं प्रभोः कृते सम्पूर्णेनानन्देन तं गृह्लीत तादृशान् लोकांश्चादरणी-
३० यान् मन्यध्वं। यतो मम सेवने युष्माकं त्रुटिं पूरयितुं स प्राणान्
पणीकृत्य ख्रीष्टस्य कार्य्यार्थं मृतप्रायोऽभवत्।

### पौलस्य ख्रीष्टजीवनम्।

३ १ हे भ्रातरः, शेषे वदामि यूयं प्रभावानन्दत। पुनः पुन-
रेकस्य वचो लेखनं मम क्लेशदं नहि युष्मदर्थञ्च भ्रमनाशकं
२ भवति। यूयं कुक्कुरेभ्यः सावधाना भवत दुष्कर्म्मकारिभ्यः साव-
३ धाना भवत छिन्नमूलेभ्यो लोकेभ्यश्च सावधाना भवत। वयमेव
छिन्नत्वचो लोका यतो वयम् आत्मनेश्वरं सेवामहे ख्रीष्टेन यीशुना
४ श्लाघामहे शरीरेण च प्रगल्भतां न कुर्व्वामहे। किन्तु शरीरे
मम प्रगल्भतायाः कारणं विद्यते, अपरः कश्चिद् यदि शरीरेण
प्रगल्भतां चिकीर्षति तर्हि तस्माद् अपि मम प्रगल्भताया गुरु-
५ तरं कारणं विद्यते। यतोऽहम् अष्टमदिवसे त्वक्छेदप्राप्त इस्रा-
येलवंशीयो बिन्यामीनगोष्ठीय इब्रिकुलजात इब्रीयो व्यवस्थाचरणे
६ फिरूशी धर्म्मोत्साहकारणात् मण्डल्या उपद्रवकारी व्यवस्थातो लभ्ये
७ धार्म्मिकत्वे चानिन्दनीयः। किन्तु मम यद्यत् लभ्यम् आसीत् तत्
८ सर्व्वम् अहं ख्रीष्टस्यानुरोधात् क्षतिम् अमन्ये। किञ्चाधुनाप्यहं

मत्प्रभोः ख्रीष्टस्य यीशो र्ज्ञानस्योत्कृष्टतां बुद्ध्वा तत् सर्व्वं क्षतिं मन्ये।
यतो हेतोरहं यत् ख्रीष्टं लभेय व्यवस्थातो जातं स्वकीयधार्म्मिकत्वञ्च ९
न धारयन् किन्तु ख्रीष्टे विश्वसनात् लभ्यं यत् धार्म्मिकत्वम् ईश्वरेण
विश्वासं दृष्ट्वा दीयते तदेव धारयन् यत् ख्रीष्टे विद्येय तदर्थं
तस्यानुरोधात् सर्व्वेषां क्षतिं स्वीकृत्य तानि सर्व्वाण्यवकरानिव
मन्ये। यतो हेतोरहं ख्रीष्टं तस्य पुनरुत्थितेे गुणं तस्य दुःखानां १०
भागित्वञ्च ज्ञात्वा तस्य मृत्योराकृतिञ्च गृहीत्वा येन केनचित्
प्रकारेण मृतानां मध्यात् पुनरुत्थितिं प्राप्तुं यते। मया तत् ११
सर्व्वम् अधुना प्रापि सिद्धता वालम्भि तन्नहि किन्तु यदर्थम् १२
अहं ख्रीष्टेन धारितस्तद् धारयितुं धावामि। हे भ्रातरः, मया तद् १३
धारितम् इति न मन्यते किन्त्वेतदेकमात्रं वदामि यानि पश्चात्
स्थितानि तानि विस्मृत्याहम् अग्रस्थितान्युद्दिश्य पूर्णयत्नेन लक्ष्यं प्रति १४
धावन् ख्रीष्टयीशुनोर्द्ध्वात् माम् आह्वयत ईश्वरात् जेतृपणं प्राप्तुं
चेष्टे। अस्माकं मध्ये ये सिद्धास्तैः सर्व्वैस्तदेव भाव्यतां, यदि च १५
कञ्चन विषयम् अधि युष्माकम् अपरो भावो भवति तर्हीश्वर-
स्तमपि युष्माकं प्रति प्रकाशयिष्यति। किन्तु वयं यद्यद् अवगता १६
आस्मस्तत्रास्माभिरेको विधिराचरितव्य एकभावै र्भवितव्यञ्च।

हे भ्रातरः, यूयं ममानुगामिनो भवत वयञ्च यादृगाच- १७
रणस्य निदर्शनस्वरूपा भवामस्तादृगाचारिणो लोकान् आलोक-
यध्वं। यतोऽनेके विपथे चरन्ति ते च ख्रीष्टस्य क्रुशस्य शत्रव १८
इति पुरा मया पुनः पुनः कथितम् अधुनापि रुदता मया
कथ्यते। तेषां शेषदशा सर्व्वनाश उदरश्चेश्वरो लज्जा च श्लाघा १९
पृथिव्याञ्च लग्नं मनः। किन्त्वस्माकं जनपदः स्वर्गे विद्यते तस्माच्चा- २०
गमिष्यन्तं त्रातारं प्रभुं यीशुख्रीष्टं वयं प्रतीक्षामहे। स च यया २१

शक्त्या सर्व्वाण्येव स्वस्य वशीकर्त्तुं पारयति तयास्माकम् अधमं शरीरं
रूपान्तरीकृत्य स्वकीयतेजोमयशरीरस्य समाकारं करिष्यति ।

४ १ हे मदीयानन्दमुकुटस्वरूपाः प्रियतमा अभीष्टतमा भ्रातरः,
२ हे मम स्नेहपात्राः, यूयम् इत्थं प्रभौ स्थिरास्तिष्ठत । हे इवदिये हे
३ सुन्तुखि युवां प्रभौ एकभावे भवतम् एतद् अहं प्रार्थये । हे मम
सत्य सहकारिन् त्वामपि विनीय वदामि एतयोरुपकारस्त्वया
क्रियतां यतस्ते क्लीमिनादिभिः सहकारिभिः सार्द्धं सुसंवादप्रचार-
णाय मम साहाय्यार्थं परिश्रमम् अकुर्व्वतां तेषां सर्व्वेषां नामानि
च जीवनपुस्तके लिखितानि विद्यन्ते ।

प्रभौ आनन्दत्वम् ।

४ यूयं प्रभौ सर्व्वदानन्दत । पुन र्वदामि यूयम् आनन्दत ।
५ युष्माकं विनीतत्वं सर्व्वमानवै र्ज्ञायतां, प्रभुः सन्निधौ विद्यते । यूयं
६ किमपि न चिन्तयत किन्तु धन्यवादयुक्ताभ्यां प्रार्थनायाच्ञाभ्यां
७ सर्व्वविषये स्वप्रार्थनीयम् ईश्वराय निवेदयत । तथा कृत ईश्वरीया
या शान्तिः सर्व्वां बुद्धिम् अतिशेते सा युष्माकं चित्तानि मनांसि
८ च ख्रीष्टे यीशौ रक्षिष्यति । हे भ्रातरः, शेषे वदामि यद्यत् सत्यम्
आदरणीयं न्याय्यं साधु प्रियं सुख्यातम् अन्येन येन केनचित्
प्रकारेण वा गुणयुक्तं प्रशंसनीयं वा भवति तत्रैव मनांसि निधध्वं।
९ यूयं मां दृष्ट्वा श्रुत्वा च यद्यत् शिक्षितवन्तो गृहीतवन्तश्च तदेवा-
चरत तस्मात् शान्तिदायक ईश्वरो युष्माभिः सार्द्धं स्थास्यति ।

१० ममोपकाराय युष्माकं या चिन्ता पूर्व्वम् आसीत् किन्तु
कर्म्मद्वारं न प्राप्नोत् इदानीं सा पुनरफलत् इत्यस्मिन् प्रभौ मम
११ परमाह्लादोऽजायत । अहं यद् दैन्यकारणाद् इदं वदामि तन्नहि
यतो मम या काचिद् अवस्था भवेत् तस्यां सन्तोष्टुम् अशिक्षयं ।

दरिद्रतां भोक्तुं शक्नोमि धनाढ्यताम् अपि भोक्तुं शक्नोमि सर्व्वथा १२
सर्व्वविषयेषु विनीतोऽहं प्रचुरतां क्षुधाञ्च धनं दैन्यञ्चावगतोऽस्मि।
मम शक्तिदायकेन ख्रीष्टेन सर्व्वमेव मया शक्यं भवति। किन्तु १३
युष्माभि र्दैन्यनिवारणाय माम् उपकृत्य सत्कर्म्माकारि। हे १४
फिलिपीयलोकाः, सुसंवादस्योदयकाले यदाहं माकिदनियादेशात् १५
प्रतिष्ठे तदा केवलान् युष्मान् विनापरया कयापि मण्डल्या सह
दानादानयो र्मम कोऽपि सम्बन्धो नासीद् इति यूयमपि जानीथ।
यतो युष्माभि र्मम प्रयोजनाय थिषलनीकीनगरमपि मां प्रति १६
पुनः पुनर्दानं प्रेषितं। अहं यद् दानं मृगये तन्नहि किन्तु १७
युष्माकं लाभवर्द्धकं फलं मृगये। किन्तु मम कस्याप्यभावो नास्ति १८
सर्व्वं प्रचुरम् आस्ते यत ईश्वरस्य ग्राह्यं तुष्टिजनकं सुगन्धिनैवेद्य-
स्वरूपं युष्माकं दानं इपाफ्रदितात् गृहीत्वाहं परितृप्तोऽस्मि।
ममेश्वरोऽपि ख्रीष्टेन यीशुना स्वकीयविभवनिधितः प्रयोजनीयं १९
सर्व्वविषयं पूर्णरूपं युष्मभ्यं देयात्। अस्माकं पितुरीश्वरस्य धन्य- २०
वादोऽनन्तकालं यावद् भवतु। आमेन्। यूयं यीशुख्रीष्टस्यैकैकं पवि- २१
त्रजनं नमस्कुरुत। मम सङ्गिभ्रातरो युष्मान् नमस्कुर्व्वते। सर्व्वे
पवित्रलोका विशेषतः कैसरस्य परिजना युष्मान् नमस्कुर्व्वते। अस्माकं २२
प्रभो र्यीशुख्रीष्टस्य प्रसादः सर्व्वान् युष्मान् प्रति भूयात्। आमेन्। २३

# कलसिनः प्रति पौलस्य प्रेरितस्य पत्रं।

मङ्गलाचरणम्। कलसीयलोकानां निमित्तं
ईश्वरस्य धन्यवदनं।

१ १ ईश्वरस्येच्छया यीशुख्रीष्टस्य प्रेरितः पौलस्तीमथियो भ्राता
च कलसीनगरस्थान् पवित्रान् विश्वस्तान् ख्रीष्टाश्रितभ्रातृन् प्रति
२ पत्रं लिखतः। अस्माकं तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मान्
प्रति प्रसादं शान्तिञ्च क्रियास्तां।

३ ख्रीष्टे यीशौ युष्माकं विश्वासस्य सर्व्वान् पवित्रलोकान् प्रति
४ प्रेम्नश्च वार्त्तां श्रुत्वा वयं सदा युष्मदर्थं प्रार्थनां कुर्व्वन्तः स्वर्गे
निहिताया युष्माकं भाविसम्पदः कारणात् स्वकीयप्रभो र्यीशुख्रीष्टस्य
५ तातम् ईश्वरं धन्यं वदामः। यूयं तस्या भाविसम्पदो वार्त्तां यया
६ सुसंवादरूपिण्या सत्यवाण्या ज्ञापिताः सा यद्वत् कृत्स्नं जगद्
अभिगच्छति तद्वद् युष्मान् अप्यभ्यगमत्, यूयञ्च यद् दिनम्
आरभ्येश्वरस्यानुग्रहस्य वार्त्तां श्रुत्वा सत्यरूपेण ज्ञातवन्तस्तदारभ्य
७ युष्माकं मध्येऽपि फलति वर्द्धते च। अस्माकं प्रियः सहदासो
युष्माकं कृते च ख्रीष्टस्य विश्वस्तपरिचारको य इपफ्रास्तद् वाक्यं
युष्मान् आदिष्टवान् स एवास्मान् आत्मना जनितं युष्माकं प्रेम
ज्ञापितवान्।

ख्रीष्टस्य माहात्म्यं परित्राणसाधककर्म्मञ्च।

वयं यद् दिनम् आरभ्य तां वार्त्तां श्रुतवन्तस्तदारभ्य निरन्तरं
युष्माकं कृते प्रार्थनां कुर्म्मः फलतो यूयं यत् पूर्णाभ्याम् आत्मिक-

ज्ञानबुद्धिभ्याम् ईश्वरस्याभिमतं सम्पूर्णरूपेणावगच्छेत, प्रभो र्योग्यं १०
सर्व्वथा सन्तोषजनकञ्चाचारं कुर्य्यातार्थत ईश्वरज्ञाने वर्द्धमानाः
सर्व्वसत्कर्म्मरूपं फलं फलेत, यथा चेश्वरस्य महिमयुक्तया शक्त्या ११
सानन्देन पूर्णां सहिष्णुतां तितिक्षाञ्चाचरितुं शक्नुय तादृशेन
पूर्णबलेन यद् बलवन्तो भवेत, यश्च पिता तेजोवासिनां पवित्र- १२
लोकानाम् अधिकारस्यांशिलायास्मान् योग्यान् कृतवान् तं यद् धन्यं
वदेत वरम् एनं याचामहे। यतः सोऽस्मान् तिमिरस्य कर्त्तृत्वाद् १३
उद्धृत्य स्वकीयस्य प्रियपुत्रस्य राज्ये स्थापितवान्। तस्मात् पुत्राद् १४
वयं परित्राणम् अर्थतः पापमोचनं प्राप्तवन्तः। स चादृश्यस्येश्वरस्य १५
प्रतिमूर्त्तिः कृत्स्नायाः सृष्टेरादिकर्त्ता च। यतः सर्व्वमेव तेन ससृजे १६
सिंहासनराजत्वपराक्रमादीनि स्वर्गमर्त्त्यस्थितानि दृश्यादृश्यानि
वस्तूनि सर्व्वाणि तेनैव तस्मै च ससृजिरे। स सर्व्वेषाम् आदिः १७
सर्व्वेषां स्थितिकारकश्च। सएव मण्डलीरूपायास्तनो र्मूर्द्धा किञ्च १८
सर्व्वविषये स यद् अग्रियो भवेत् तदर्थं स एव मृतानां मध्यात्
प्रथमत उत्थितोऽग्रश्च। यत ईश्वरस्य कृत्स्नं पूर्णत्वं तमेवावासयितुं १९
क्रुशे पातितेन तस्य रक्तेन सन्धिं विधाय तेनैव स्वर्गमर्त्त्यस्थितानि २०
सर्व्वाणि स्वेन सह सन्धापयितुञ्चेश्वरेणाभिलेषे। पूर्व्वं दूरस्था २१
दुष्क्रियारतमनस्कत्वात् तस्य रिपवश्चास्त ये यूयं तान् युष्मान् अपि
स इदानीं तस्य मांसलशरीरे मरणेन स्वेन सह सन्धापितवान्।
यतः स स्वसम्मुखे पवित्रान् निष्कलङ्कान् अनिन्दनीयांश्च युष्मान् २२
स्थापयितुम् इच्छति। किन्त्वेतदर्थं युष्माभि र्बद्धमूलैः सुस्थिरैश्च २३
भवितव्यम्, आकाशमण्डलस्याधःस्थितानां सर्व्वलोकानां मध्ये च
घुष्यमाणो यः सुसंवादो युष्माभिरश्रावि तज्जातायां प्रत्याशायां
युष्माभिरचलै र्भवितव्यं।

प्रभौ स्थिरं स्थातुं निवेदनम्।

२४ तस्य सुसंवादस्यैकः परिचारको योऽहं पौलः सोऽहम् इदानीम्
आनन्देन युष्मदर्थं दुःखानि सहे ख्रीष्टस्य क्लेशभोगस्य योंशोऽपूर्णस्तमेव
२५ तस्य तनोः मण्डल्याः कृते स्वशरीरे पूरयामि च। यत ईश्वरस्य
मन्त्रणया युष्मदर्थम् ईश्वरीयवाक्यस्य प्रचारस्य भारो मयि समर्पित-
२६ स्तस्माद् अहं तस्याः मण्डल्याः परिचारकोऽभवं। तत् निगूढं वाक्यं
पूर्व्वयुगेषु पूर्व्वपुरुषेभ्यः प्रच्छन्नम् आसीत् किन्त्विदानीं तस्य
२७ पवित्रलोकानां सन्निधौ तेन प्राकाश्यत। यतो परजातीयानां मध्ये
तत् निगूढवाक्यं कीदृग्गौरवनिधिसम्बलितं तत् पवित्रलोकान्
ज्ञापयितुम् ईश्वरोऽभ्यलषत्। युष्मन्मध्यवर्त्ती ख्रीष्ट एव स निधि
२८ र्गौरवाशाभूमिश्च। तस्माद् वयं तमेव घोषयन्तो यद् एकैकं मानवं
सिद्धीभूतं ख्रीष्टे स्थापयेम तदर्थमेकैकं मानवं प्रबोधयामः पूर्णज्ञानेन
२९ चैकैकं मानवं उपदिशामः। एतदर्थं तस्य या शक्तिः प्रबलरूपेण
मम मध्ये प्रकाशते तयाहं यतमानः श्राम्यामि।

२ १ युष्माकं लायदिकेयास्थभ्रातृणाञ्च कृते यावन्तो भ्रातरश्च मम
शारीरिकमुखं न दृष्टवन्तस्तेषां कृते मम कियान् यत्नो भवति
२ तद् युष्मान् ज्ञापयितुम् इच्छामि। फलतः पूर्णबुद्धिरूपधनभोगाय
प्रेम्ना संयुक्तानां तेषां मनांसि यत् पितुरीश्वरस्य ख्रीष्टस्य च
३ निगूढवाक्यस्य ज्ञानार्थं सान्त्वनां प्राप्नुयुरित्यर्थमहं यते। यतो
४ विद्याज्ञानयोः सर्व्वे निधयः ख्रीष्टे गुप्ताः सन्ति। कोऽपि युष्मान्
५ विनयवाक्येन यन्न वञ्चयेत् तदर्थम् एतानि मया कथ्यन्ते। युष्मत्सन्निधौ
मम शरीरेऽवर्त्तमानेऽपि ममात्मा वर्त्तते तेन युष्माकं सुरीतिं
६ ख्रीष्टविश्वासे स्थिरत्वञ्च दृष्ट्वाहम् आनन्दामि। अतो यूयं प्रभुं
ष्टं यादृग् गृहीतवन्तस्तादृक् तम् अनुचरत। तस्मिन्

बद्धमूलाः स्थापिताश्च भवत या च शिक्षा युष्माभि र्लब्धा तदनुसाराद्
विश्वासे सुस्थिराः सन्तस्तेनैव नित्यं धन्यवादं कुरुत।

खीष्टेन सह संयोगस्य शुभफलम्।

सावधाना भवत मानुषिकशिक्षात इहलोकस्य वर्णमाला- ८
तश्चोत्पन्ना खीष्टस्य विपक्षा या दर्शनविद्या मिथ्याप्रतारणा च तया
कोऽपि युष्माकं क्षतिं न जनयतु। यत ईश्वरस्य कृत्स्ना पूर्णता ९
मूर्त्तिमती खीष्टे वसति। यूयञ्च तेन पूर्णा भवथ यतः स सर्व्वेषां १०
राजत्वकर्त्तृत्वपदानां मूर्द्धास्ति, तेन च यूयम् अहस्तकृतत्वक्छेदेनार्थतो ११
येन शारीरपापानां विग्रहस्त्यज्यते तेन खीष्टस्य त्वक्छेदेन छिन्नत्वचो
जाता स्नापने च तेन सार्द्धं श्मशानागारे संस्थापिताः पुन र्मृतानां १२
मध्यात् तस्योत्थापयितुरीश्वरस्य शक्तेः फलं यो विश्वासस्तद्द्वारा
तस्मिन्नेव स्नापने तेन सार्द्धम् उत्थापिता अभवत। स च युष्मान् १३
अपराधैः शारीरिकात्वक्छेदेन च मृतान् दृष्ट्वा तेन सार्द्धं जीवितवान्
युष्माकं सर्व्वान् अपराधान् क्षमितवान्, यच्च दण्डाज्ञारूपं ऋणपत्रम् १४
अस्माकं विरुद्धम् आसीत् तत् प्रमार्जितवान् शलाकाभिः क्रुशे
बद्ध्वा दूरीकृतवांश्च। किञ्च तेन राजत्वकर्त्तृत्वपदानि निस्तेजांसि १५
कृत्वा पराजितान् रिपूनिव प्रगल्भतया सर्व्वेषां दृष्टिगोचरे
हृपितवान्।

अतो हेतोः खाद्याखाद्ये पेयापेये उत्सवः प्रतिपद् विश्राम- १६
वारश्चैतेषु सर्व्वेषु युष्माकं न्यायाधिपतिरूपं कमपि मा गृह्णीत।
यत एतानि छायास्वरूपाणि किन्तु सत्या मूर्त्तिः खीष्टः। अपरञ्च १७
नम्रता स्वर्गदूतानां सेवा चैतादृशम् इष्टकर्म्माचरन् यः कश्चित् १८
परोक्षविषयान् प्रविशति स्वकीयशारीरिकभावेन च मुधा गर्व्वितः
सन् सन्धिभिः शिराभिश्चोपकृतं संयुक्तञ्च कृत्स्नं शरीरं यस्मात् १९

मूर्द्धत ईश्वरीयवृद्धिं प्राप्नोति तं मूर्द्धानं न धारयति तेन मानवेन युष्मत्तः फलापहरणं नानुजानीत।

ख्रीष्टेन सह उत्थापितलोकानां उपयुक्ताचारव्यवहारलक्षणं।

२० यदि यूयं ख्रीष्टेन सार्द्धं संसारस्य वर्णमालायै मृता अभवत
२१ तर्हि ये द्रव्ये भोगेन क्षयं गन्तव्यं तानि मा स्पृश मा भुंक्ष्व मा
२२ गृहाणेति मानवैरादिष्टान् शिक्षितांश्च विधीन् आचरन्तो यूयं
२३ कुतः संसारे जीवन्त इव भवथ? ते विधयः स्वेच्छाभक्त्या नम्रतया शरीरक्लेशनेन च ज्ञानविधिवत् प्रकाशन्ते तथापि तेऽगण्याः शारीरिकभाववर्द्धकाश्च सन्ति।

३ १ यदि यूयं ख्रीष्टेन सार्द्धम् उत्थापिता अभवत तर्हि यस्मिन् स्थाने ख्रीष्ट ईश्वरस्य दक्षिणपार्श्वे उपविष्ट आस्ते तस्योर्द्ध्वस्थानस्य
२ विषयान् चेष्टध्वं; पार्थिवविषयेषु न यतमाना ऊर्द्ध्वस्थविषयेषु
३ यतध्वं। यतो यूयं मृतवन्तो युष्माकं जीवितञ्च ख्रीष्टेन सार्द्धम्
४ ईश्वरे गुप्तम् अस्ति। अस्माकं जीवनस्वरूपः ख्रीष्टो यदा प्रकाशिष्यते तदा तेन सार्द्धं यूयमपि विभवेन प्रकाशिष्यध्वे।

५ अतो वेश्यागमनम् अशुचिक्रिया रागः कुत्सिताभिलाषो देवपूजातुल्यो लोभश्चैतानि पार्थिवपुरुषस्याङ्गानि युष्माभि र्निहन्यन्तां।
६ यत एतेभ्यः कर्म्मभ्य आज्ञालङ्घिनो लोकान् प्रतीश्वरस्य क्रोधो
७ वर्त्तते। पूर्व्वं यदा यूयं तान्युपाजीवत तदा यूयमपि तान्येवाचरत;
८ किन्त्विदानीं क्रोधो रोषो जिहिंसिषा दुर्मुखता वदननिर्गतकदा-
९ लापश्चैतानि सर्व्वाणि दूरीकुरुध्वं। यूयं परस्परं मृषाकथां न वदत
१० यतो यूयं स्वकर्म्मसहितं पुरातनपुरुषं त्यक्तवन्तः स्वस्रष्टुः प्रतिमूर्त्या
११ तत्त्वज्ञानाय नूतनीकृतं नवीनपुरुषं परिहितवन्तश्च। तेन च यिहूदिपरजातीययोश्छिन्नत्वगच्छिन्नत्वचो र्म्लेच्छस्कुथीययो र्दास-

स्वाधीनयोश्च कोऽपि विशेषो नास्ति किन्तु सर्व्वेषु सर्व्वः ख्रीष्ट
एवास्ते। अतएव यूयम् ईश्वरस्य मनोभिलषिताः पवित्राः प्रियाश्च १२
लोका इव स्नेहयुक्ताम् अनुकम्पां हितैषितां नम्रतां तितिक्षां
सहिष्णुताञ्च परिधद्ध्वं। यूयम् एकैकस्याचरणं सहध्वं येन च यस्य १३
किमप्यपराध्यते तस्य तं दोषं स क्षमतां, ख्रीष्टो युष्माकं दोषान्
यद्वत् क्षमितवान् यूयमपि तद्वत् कुरुध्वं। विशेषतः सिद्धिजनकेन १४
प्रेमबन्धनेन बद्धा भवत। यस्याः प्राप्तये यूयम् एकस्मिन् शरीरे १५
समाहूता अभवत सेश्वरीया शान्ति र्युष्माकं मनांस्यधितिष्ठतु यूयञ्च
कृतज्ञा भवत। ख्रीष्टस्य वाक्य सर्व्वविधज्ञानाय सम्पूर्णरूपेण युष्मदन्तरे १६
निवसतु, यूयञ्च गीतै र्गानैः पारमार्थिकसङ्कीर्त्तनैश्च परस्परम्
आदिशत प्रबोधयत च अनुगृहीतत्वात् प्रभुम् उद्दिश्य स्वमनोभि
र्गायत च। वाचा कर्म्मणा वा यद् यत् कुरुत तत् सर्व्वं प्रभो १७
र्यीशो र्नाम्ना कुरुत तेन पितरम् ईश्वरं धन्यं वदत च।

हे योषितः, यूयं स्वामिनां वश्या भवत यतस्तदेव प्रभवे १८
रोचते। हे स्वामिनः, यूयं भार्य्यासु प्रीयध्वं ताः प्रति परुषालापं १९
मा कुरुध्वं। हे बालाः, यूयं सर्व्वविषये पित्रोराज्ञाग्राहिणो भवत २०
यतस्तदेव प्रभोः सन्तोषजनकं। हे पितरः, युष्माकं सन्ताना यत् २१
कातरा न भवेयुस्तदर्थं तान् प्रति मा रोषयत। हे दासाः, यूयं २२
सर्व्वविषय ऐहिकप्रभूनाम् आज्ञाग्राहिणो भवत दृष्टिगोचरीयसेवया
मानवेभ्यो रोचितुं मा यतध्वं किन्तु सरलान्तःकरणैः प्रभो र्भीत्या
कार्य्यं कुरुध्वं। यच्च कुरुध्वे तत् मानुषमनुद्दिश्य प्रभुम् उद्दिश्य २३
प्रफुल्लमनसा कुरुध्वं, यतो वयं प्रभुतः स्वर्गाधिकाररूपं फलं लप्स्यामह २४
इति यूयं जानीथ यस्माद् यूयं प्रभोः ख्रीष्टस्य दासा भवथ।
किन्तु यः कश्चिद् अनुचितं कर्म्म करोति स तस्यानुचितकर्म्मणः फलं २५

२५ लप्स्यते तत्र कोऽपि पक्षपातो न भविष्यति। अपरञ्च हे अधिपतयः,
यूयं दासान् प्रति न्याय्यं यथार्थञ्चाचरणं कुरुध्वं युष्माकमप्येको-
ऽधिपतिः स्वर्गे विद्यत इति जानीत ।

४ १ यूयं प्रार्थनायां नित्यं प्रवर्त्तध्वं धन्यवादं कुर्व्वन्तस्तत्र प्रबुद्धा-
२ स्तिष्ठत च । प्रार्थनाकाले ममापि कृते प्रार्थनां कुरुध्वं, फलतः
३ ख्रीष्टस्य यन्निगूढवाक्यकारणाद् अहं बद्धोऽभवं तत्प्रकाशायेश्वरो
४ यत् मदर्थं वाग्द्वारं कुर्य्यात्, अहञ्च यथोचितं तत् प्रकाशयितुं
५ शक्नुयाम् एतत् प्रार्थयध्वं । यूयं समयं बहुमूल्यं ज्ञात्वा बहिःस्थान्
६ लोकान् प्रति ज्ञानाचारं कुरुध्वं । युष्माकम् आलापः सर्व्वदानु-
ग्रहसूचको लवणेन सुस्वादुश्च भवतु यस्मै यदुत्तरं दातव्यं तद्
युष्माभिरवगम्यतां ।

### शेषकथनम् ।

७ मम या दशास्ति तां तुखिकनामा प्रभौ प्रियो मम भ्राता
८ विश्वसनीयः परिचारकः सहदासश्च युष्मान् ज्ञापयिष्यति । स यद्
युष्माकं दशां जानीयात् युष्माकं मनांसि सान्त्वयेच्च तदर्थमेवाहं
९ तम् ओनीषिमनामानञ्च युष्मद्देशीयं विश्वस्तं प्रियञ्च भ्रातरं प्रेषितवान्
१० तौ युष्मान् अत्रत्यां सर्व्ववार्त्तां ज्ञापयिष्यतः । आरिष्टार्खनामा मम
सहबन्दी बर्णबा भागिनेयो मार्को युष्टनाम्ना विख्यातो यीशुश्चैते
छिन्नत्वचो भ्रातरो युष्मान् नमस्कारं ज्ञापयन्ति, तेषां मध्ये
मार्कमधि यूयं पूर्व्वम् आज्ञापिताः स यदि युष्मत्समीपम्
११ उपतिष्ठेत् तर्हि युष्माभि र्गृह्यतां । केवलमेत ईश्वरराज्ये मम
१२ सान्त्वनाजनकाः सहकारिणोऽभवन् । ख्रीष्टस्य दासो यो युष्मद्देशीय
इपफ्राः स युष्मान् नमस्कारं ज्ञापयति यूयञ्चेश्वरस्य सर्व्वस्मिन्
मनोऽभिलाषे यत् सिद्धाः पूर्णाश्च भवेत तदर्थं स नित्यं प्रार्थनया

युष्माकं कृते यतते। युष्माकं लायदिकेयास्थितानां हियरापलि- १३
स्थितानाञ्च भ्रातृणां हिताय सोऽतीव चेष्टत इत्यस्मिन् अहं तस्य
साक्षी भवामि। लूकनामा प्रियश्चिकित्सको दीमाश्च युष्मभ्यं १४
नमस्कुर्व्वाते। यूयं लायदिकेयास्थान् भ्रातृन् नुम्फां तद्गृहस्थितां १५
मण्डलीञ्च मम नमस्कारं ज्ञापयत। अपरं युष्मत्सन्निधौ पत्रस्यास्य १६
पाठे कृते लायदिकेयास्थमण्डल्यामपि तस्य पाठो यथा भवेत्
लायदिकेयाञ्च यत् पत्रं मया प्रहितं तद् यथा युष्माभिरपि
पठ्येत तथा चेष्टध्वं। अपरम् आर्ख्रिप्पं वदत प्रभो र्यत् परिचर्य्या- १७
पदं त्वयाप्रापि तत्साधनाय सावधानो भव। अहं पौलः स्वहस्ता- १८
क्षरेण युष्मान् नमस्कारं ज्ञापयामि यूयं मम बन्धनं स्मरत।
युष्मान् प्रत्यनुग्रहो भूयात्। आमेन।

# थिषलनीकिनः प्रति पौलस्य प्रेरितस्य प्रथमं पत्रं ।

मङ्गलाचरणम् । थिषलनीकिनां प्रत्ययप्रत्याशाप्रेमाचरणस्य प्रशंसनम् ।

१ १ पौलः सिल्वानस्तीमथियश्च पितुरीश्वरस्य प्रभो र्यीशुख्रीष्टस्य
चाश्रयं प्राप्तां थिषलनीकीयमण्डलीं प्रति पत्रं लिखन्ति । अस्माकं
तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मान् प्रत्यनुग्रहं शान्तिञ्च क्रियास्तां ।
२ वयं सर्व्वेषां युष्माकं कृते नित्यम् ईश्वरं धन्यं वदामः प्रार्थना-
३ समये युष्माकं नामोच्चारयामः, अस्माकं तातस्येश्वरस्य साक्षात्
प्रभौ यीशुख्रीष्टे युष्माकं विश्वासेन यत् कार्य्यं प्रेम्ना यः परिश्रमः
४ प्रत्याशया च या तितिक्षा जायते तत् सर्व्वं निरन्तरं स्मरामश्च ।
हे प्रियभ्रातरः, यूयम् ईश्वरेणाभिरुचिता लोका इति वयं
५ जानीमः । यतोऽस्माकं सुसंवादः केवलशब्देन युष्मान् न प्रविश्य
शक्त्या पवित्रेणात्मना महोत्साहेन च युष्मान् प्राविशत् । वयन्तु
युष्माकं कृते युष्मन्मध्ये कीदृशा अभवाम तद् युष्माभि र्ज्ञायते ।
६ यूयमपि बहुक्लेशभोगेन पवित्रेणात्मना दत्तेनानन्देन च वाक्यं
७ गृहीत्वास्माकं प्रभोश्चानुगामिनोऽभवत । तेन माकिदनियाखाया-
देशयो र्यावन्तो विश्वासिनो लोकाः सन्ति यूयं तेषां सर्व्वेषां
८ निदर्शनस्वरूपा जाताः । यतो युष्मत्तः प्रतिनादितया प्रभो र्वाक्या
माकिदनियाखायादेशौ व्याप्तौ केवलमेतन्नहि किन्त्वीश्वरे युष्माकं
यो विश्वासस्तस्य वार्त्ता सर्व्वत्राश्रावि, तस्मात् तत्र वाक्यकथनम्

अस्माकं निष्प्रयोजनं। यतो युष्मन्मध्ये वयं कीदृशं प्रवेशं प्राप्ता ९
यूयञ्च कथं प्रतिमा विहायेश्वरं प्रत्यावर्त्तध्वम् अमरं सत्यमीश्वरं
सेवितुं मृतगणमध्याच्च तेनोत्थापितस्य पुत्रस्यार्थत आगामिक्रोधाद् १०
अस्माकं निस्तारयितु र्यीशोः स्वर्गाद् आगमनं प्रतीक्षितुम् आर-
भध्वम् एतत् सर्व्वं ते लोकाः स्वयम् अस्मान् ज्ञापयन्ति।

हे भ्रातरः, युष्मन्मध्ये ऽस्माकं प्रवेशो निष्फलो न जात इति २ १
यूयं स्वयं जानीथ। अपरं युष्माभि र्यथाश्रावि तथा पूर्व्वं २
फिलिपीनगरे क्लिष्टा निन्दिताश्च सन्तोऽपि वयम् ईश्वराद् उत्साहं
लब्ध्वा बहुयत्नेन युष्मान् ईश्वरस्य सुसंवादम् अबोधयाम। यतो- ३
ऽस्माकम् आदेशो भ्रान्तेरशुचिभावाद् वोत्पन्नः प्रवञ्चनायुक्तो वा
न भवति। किन्त्वीश्वरेणास्मान् परीक्ष्य विश्वसनीयान् मत्वा च ४
यद्वत् सुसंवादोऽस्मासु समार्प्यत तद्वद् वयं मानवेभ्यो न रुरोचिष-
माणाः किन्त्वस्मदन्तःकरणानां परीक्षकायेश्वराय रुरोचिषमाणा
भाषामहे। वयं कदापि स्तुतिवादिनो नाभवामेति यूयं जानीथ ५
कदापि छलवस्त्रेण लोभं नाच्छादयामेत्यस्मिन् ईश्वरः साक्षी
विद्यते। वयं ख्रीष्टस्य प्रेरिता इव गौरवान्विता भवितुम् अशक्ष्याम ६
किन्तु युष्मत्तः परस्माद् वा कस्मादपि मानवाद् गौरवं न लिप्स-
माना युष्मन्मध्ये मृदुभावा भूत्वावर्त्तामहि। यथा काचिन्माता ७
स्वकीयशिशून् पालयति तथा वयमपि युष्मान् काङ्क्षमाणा युष्मभ्यं ८
केवलम् ईश्वरस्य सुसंवादं तन्नहि किन्तु स्वकीयप्राणान् अपि दातुं
मनोभिरभ्यलषाम, यतो यूयम् अस्माकं स्नेहपात्राण्यभवत। हे ९
भ्रातरः, अस्माकं श्रमः क्लेशश्च युष्माभिः स्मर्य्यते युष्माकं कोऽपि
यद् भारग्रस्तो न भवेत् तदर्थं वयं दिवानिशं परिश्राम्यन्तो
युष्मन्मध्य ईश्वरस्य सुसंवादमघोषयाम। अपरञ्च विश्वासिनो युष्मान् १०

प्रति वयं कीदृक् पवित्रत्वयथार्थत्वनिर्दोषत्वाचारिणोऽभवामेत्यस्मिन्
११ ईश्वरो यूयञ्च साक्षिण आध्वे। अपरञ्च यद्वत् पिता स्वबालकान्
१२ तद्वद् वयं युष्माकम् एकैकं जनम् उपदिष्टवन्तः सान्त्वितवन्तश्च, य
ईश्वरः स्वीयराज्याय विभवाय च युष्मान् आहूतवान् तदुपयुक्ता-
चरणाय युष्मान् प्रवर्त्तितवन्तश्चेति यूयं जानीथ।

थिषलनीकीयानां स्थैर्य्ये पौलस्य आनन्दत्वम्।

१३ यस्मिन् समये यूयम् अस्माकं मुखाद् ईश्वरेण प्रतिश्रुतं वाक्यम्
अलभध्वं तस्मिन् समये तत् मानुषाणां वाक्यं न मत्त्वेश्वरस्य
वाक्यं मत्वा गृहीतवन्त इति कारणाद् वयं निरन्तरम् ईश्वरं
धन्यं वदामः यतस्तद् ईश्वरस्य वाक्यम् इति सत्यं विश्वासिनां
१४ युष्माकं मध्ये तस्य गुणः प्रकाशते च। हे भ्रातरः, स्त्रीष्टाश्रितवत्य
ईश्वरस्य या मण्डल्यो यिहूदादेशे सन्ति यूयं तासाम् अनुका-
रिणोऽभवत, तद्भुक्ता लोकाश्च तद्वद् यिहूदिलोकेभ्यस्तद्वद् यूयमपि
१५ स्वजातीयलोकेभ्यो दुःखम् अलभध्वं। ते यिहूदीयाः प्रभुं यीशुं
भाववादिनश्च हतवन्तो ऽस्मान् दूरीकृतवन्तश्च, त ईश्वराय न
१६ रोचन्ते सर्व्वेषां मानवानां विपक्षा भवन्ति च; अपरं परजातीय-
लोकानां परित्राणार्थं तेषां मध्ये सुसंवादघोषणाद् अस्मान्
प्रतिषेधन्ति चेत्थं स्वीयपापानां परिमाणम् उत्तरोत्तरं पूरयन्ति,
किन्तु तेषाम् अन्तकारी क्रोधस्तान् उपक्रमते।

१७ हे भ्रातरः मनसा नहि किन्तु वदनेन कियत्कालं युष्मत्तो-
ऽस्माकं विच्छेदे जाते वयं युष्माकं मुखानि द्रष्टुम् अत्याकाङ्क्षया
१८ बहु यतितवन्तः। द्विरेककृत्वो वा युष्मत्समीपगमनयास्माकं विशेषतः
पौलस्य ममाभिलाषोऽभवत् किन्तु शैतानोऽस्मान् निवारितवान्।
१९ यतोऽस्माकं का प्रत्याशा को वानन्दः किं वा श्लाघ्यकिरीटं?

अस्माकं प्रभो यीशुख्रीष्टस्यागमनकाले तत्सम्मुखस्था यूयं किं तस्य
भविष्यथ? यूयम् एवास्माकं गौरवानन्दस्वरूपा भवथ। २०

३ १ अतोऽहं यदा सन्देहं पुनः सोढुं नाशक्नुवं तदानीम्
आथीनीनगर एकाकी स्थातुं निश्चित्य स्वभ्रातरं ख्रीष्टस्य सुसंवादे २
सहकारिणञ्चेश्वरस्य परिचारकं तीमथियं युष्मत्समीपम् अप्रेषयं।
वर्त्तमानैः क्लेशैः कस्यापि चाञ्चल्यं यथा न जायते तथा ते त्वया ३
स्थिरीक्रियन्तां स्वकीयधर्म्ममधि समाश्वास्यन्ताञ्चेति तम् आदिशं।
वयमेतादृशे क्लेशे नियुक्ता आस्महे इति यूयं स्वयं जानीथ, ४
यतोऽस्माकं दुर्गति र्भविष्यतीति वयं युष्माकं समीपे स्थितिकाले-
ऽपि युष्मान् अबोधयाम, तादृशमेव चाभवत् तदपि जानीथ।
तस्मात् परीक्षकेण युष्मासु परीक्षितेष्वस्माकं परिश्रमो विफलो ५
भविष्यतीति भयं सोढुं यदाहं नाशक्नुवं तदा युष्माकं विश्वासस्य
तत्त्वावधारणाय तम् अप्रेषयं। किन्त्वधुना तीमथियो युष्मत्समीपाद् ६
अस्मत्सन्निधिम् आगत्य युष्माकं विश्वासप्रेमणी अध्यस्मान् सुवार्त्तां
ज्ञापितवान् वयञ्च यथा युष्मान् स्मरामस्तथा यूयमप्यस्मान् सर्व्वदा
प्रणयेन स्मरथ द्रष्टुम आकाङ्क्षध्वे चेति कथितवान्। हे भ्रातरः, ७
वार्त्तामिमां प्राप्य युष्मानधि विशेषतो युष्माकं क्लेशदुःखान्यधि
युष्माकं विश्वासाद् अस्माकं सान्त्वनाजायत; यतो यूयं यदि ८
प्रभाववतिष्ठथ तर्ह्यनेन वयम् अधुना जीवामः। वयञ्चास्मदीये- ९
श्वरस्य साक्षाद् युष्मत्तो जातेन येनानन्देन प्रफुल्ला भवामस्तस्य
कृत्स्नस्यानन्दस्य योग्यरूपेणेश्वरं धन्यं वदितुं कथं शक्ष्यामः?
वयं येन युष्माकं वदनानि द्रष्टुं युष्माकं विश्वासे यद् असिद्धं १०
विद्यते तत् सिद्धीकर्त्तुञ्च शक्ष्यामस्तादृशं वरं दिवानिशं प्रार्थ-
यामहे। अस्माकं तातेनेश्वरेण प्रभुना यीशुख्रीष्टेन च युष्म- ११

११ त्वमीपगमनायास्माकं पन्था सुगमः क्रियतां । परस्परं सर्व्वांश्च
प्रति युष्माकं प्रेम युष्मान् प्रति चास्माकं प्रेम प्रभुना वर्द्धतां
१२ बहुफलं क्रियताञ्च ।/ अपरमस्माकं प्रभु यीशुख्रीष्टः स्वकीयैः
सर्व्वैः पवित्रलोकैः सार्द्धं यदागमिष्यति तदा यूयं यथास्माकं
तातस्येश्वरस्य सम्मुखे पवित्रतया निर्दोषा भविष्यथ तथा युष्माकं
मनांसि स्थिरीक्रियन्तां ।

धर्म्माचरणं कर्त्तुं विनयः ।

४ १ हे भ्रातरः, युष्माभिः कीदृग् आचरितव्यं ईश्वराय रोचितव्यञ्च
तदध्यस्मत्तो या शिक्षा लब्धा तदनुसारात् पुनरतिशयं यत्नः
२ क्रियतामिति वयं प्रभुयीशुना युष्मान् विनीयादिशामः । यतो वयं
प्रभुयीशुना कीदृशीराज्ञा युष्मासु समर्पितवन्तस्तद् यूयं जानीथ ।
३ ईश्वरस्यायम् अभिलाषो यद् युष्माकं पवित्रता भवेत्, यूयं
४ व्यभिचाराद् दूरे तिष्ठत । युष्माकम् एकैको जनः स्वकीयं प्राणाधारं
५ पवित्रं मान्यञ्च रक्षतु, ये च परजातीया लोका ईश्वरं न जानन्ति
६ त इव तत् कामाभिलाषस्याधीनं न करोतु । एतस्मिन् विषये
कोऽप्यत्याचारी भूत्वा स्वभ्रातरं न वञ्चयतु यतोऽस्माभिः पूर्व्वं
यथोक्तं प्रमाणीकृतञ्च तथैव प्रभुरेतादृशानां कर्म्मणां समुचितं फलं
७ दास्यति । यस्माद् ईश्वरोऽस्मान् अशुचितायै नाहूतवान् किन्तु
८ पवित्रतायैवाहूतवान् । अतो हेतो यः कश्चिद् वाक्यमेतन्न गृह्लाति
स मनुष्यम् अवजानातीति नहि येन स्वकीयात्मा युष्मदन्तरे
समर्पितस्तम् ईश्वरम् एवावजानाति ।
९ भ्रातृषु प्रेमकरणमधि युष्मान् प्रति मम लिखनं निष्प्रयोजनं
१० यतो यूयं परस्परं प्रेमकरणायेश्वरशिक्षिता लोका आध्वे । कृत्स्ने
माकिदनियादेशे च यावन्तो भ्रातरः सन्ति तान् सर्व्वान् प्रति

युष्माभिस्तत् प्रेम प्रकाश्यते तथापि हे भ्रातरः, वयं युष्मान्
विनयामहे यूयं पुन र्बहुतरं प्रेम प्रकाशयत। अपरं ये वहिः- ११
स्थितास्तेषां दृष्टिगोचरे युष्माकम् आचरणं यत् मनोरम्यं भवेत्
कस्यापि वस्तुनश्चाभावो युष्माकं यन्न भवेत्, एतदर्थं यूयम् अस्मत्तो १२
यादृशम् आदेशं प्राप्तवन्तस्तादृशं निर्विरोधाचारं कर्त्तुं स्वस्वकर्म्मणि
मनांसि निधातुं निजकरैश्च कार्य्यं साधयितुं यतध्वं।

प्रभुयीशोः पुनरागमनम्।

हे भ्रातरः, निराशा अन्ये लोका इव यूयं यन्न शोचेध्वं तदर्थं १३
महानिद्रागतान् लोकानधि युष्माकम् अज्ञानता मया नाभिलष्यते।
यीशु र्मृतवान् पुनरुत्थितवांश्चेति यदि वयं विश्वसामस्तर्हि यीशुम् १४
आश्रितान् महानिद्राप्राप्तान् लोकानपीश्वरोऽवश्यं तेन सार्द्धम्
आनेष्यति। यतोऽहं प्रभो र्वाक्येन युष्मान् इदं ज्ञापयामि; अस्माकं मध्ये १५
ये जनाः प्रभोरागमनं यावत् जीवन्तोऽवशेक्ष्यन्ते ते महानिद्रितानाम्
अग्रगामिनो न भविष्यन्ति; यतः प्रभुः सिंहनादेन प्रधानस्वर्ग- १६
दूतस्योच्चैः शब्देनेश्वरीयतूरीवाद्येन च स्वयं स्वर्गाद् अवरोक्ष्यति तेन
ख्रीष्टाश्रिता मृतलोकाः प्रथमम् उत्थास्यन्ति। अपरम् अस्माकं मध्ये १७
ये जीवन्तोऽवशेक्ष्यन्ते त आकाशे प्रभोः साक्षात्करणार्थं तैः सार्द्धं
मेघवाहनेन हरिष्यन्ते; इत्थञ्च वयं सर्व्वदा प्रभुना सार्द्धं स्थास्यामः।
अतो यूयम् एताभिः कथाभिः परस्परं सान्त्वयत। १८

हे भ्रातरः, कालान् समयांश्चाधि युष्मान् प्रति मम लिखनं **५** १
निष्प्रयोजनं, यतो रात्रौ यादृक् तस्करस्तादृक् प्रभो र्दिनम् २
उपस्थास्यतीति यूयं स्वयमेव सम्यग् जानीथ। शान्ति र्निर्व्विघ्नत्वञ्च ३
विद्यत इति यदा मानवा वदिष्यन्ति तदा प्रसववेदना यद्वद्
गर्भिणीम् उपतिष्ठति तद्वद् अकस्माद् विनाशस्तान् उपस्थास्यति

४ तैस्तद्वारो न लप्स्यते। किन्तु हे भ्रातरः, यूयम् अन्धकारेणावृता
५ न भवथ तस्मात् तद्दिनं तस्कर इव युष्मान् न प्राप्स्यति। सर्व्वे यूयं
दीप्तेः सन्ताना दिवायाश्च सन्ताना भवथ वयं निशावंशास्तिमिरवंशा
६ वा न भवामः। अतोऽपरे यथा निद्रागताः सन्ति तद्वद् अस्माभि
७ र्न भवितव्यं किन्तु जागरितव्यं सचेतनैश्च भवितव्यं। ये निद्रान्ति
ते निशायामेव निद्रान्ति ये च मत्ता भवन्ति ते रजन्यामेव
८ मत्ता भवन्ति। किन्तु वयं दिवसस्य वंशा भवामः; अतोऽस्माभि
र्वक्षसि प्रत्ययप्रेमरूपं कवचं शिरसि च परित्राणाशारूपं शिरस्त्रं
९ परिधाय सचेतनै र्भवितव्यं। यत ईश्वरोऽस्मान् क्रोधे न नियुज्यास्माकं
१० प्रभुना यीशुख्रीष्टेन परित्राणस्याधिकारे नियुक्तवान्, जाग्रतो
निद्रागता वा वयं यत् तेन प्रभुना सह जीवामस्तदर्थं सोऽस्माकं
११ कृते प्राणान् त्यक्तवान्। अतएव यूयं यद्वत् कुरुथ तद्वत् परस्परं
सान्त्वयत सुस्थिरीकुरुध्वञ्च।

१२ हे भ्रातरः, युष्माकं मध्ये ये जनाः परिश्रमं कुर्व्वन्ति प्रभो
र्नाम्ना युष्मान् अधितिष्ठन्त्युपदिशन्ति च तान् यूयं सम्मन्यध्वं।
१३ स्वकर्म्महेतुना च प्रेम्ना तान् अतीवादृयध्वमिति मम प्रार्थना,
१४ यूयं परस्परं निर्व्विरोधा भवत। हे भ्रातरः, युष्मान् विनयामहे
यूयम् अविहिताचारिणो लोकान् भर्त्सयध्वं, क्षुद्रमनसः सान्त्वयत,
१५ दुर्व्वलान् उपकुरुत, सर्व्वान् प्रति सहिष्णवो भवत च। अपरं
कमपि प्रत्यनिष्टस्य फलम् अनिष्टं केनापि यन्न क्रियेत तदर्थं
सावधाना भवत, किन्तु परस्परं सर्व्वान् मानवांश्च प्रति नित्यं
१६ हिताचारिणो भवत। सर्व्वदानन्दत। निरन्तरं प्रार्थनां कुरुध्वं।
१८ सर्व्वविषये कृतज्ञतां स्वीकुरुध्वं यत एतदेव ख्रीष्टयीशुना युष्मान्
१९ प्रति प्रकाशितम् ईश्वराभिमतं। पवित्रम् आत्मानं न निर्व्वापयत।

भाववाणीं नावजानीत। सर्व्वाणि परीक्ष्य यद् भद्रं तदेव धारयत। २२
यत् किमपि पापरूपं भवति तस्माद् दूरं तिष्ठत। शान्तिदायक २३
ईश्वरः स्वयं युष्मान् सम्पूर्णत्वेन पवित्रान् करोतु, अपरम् अस्मत्प्रभो
र्यीशुख्रीष्टस्यागमनं यावद् युष्माकम् आत्मानः प्राणाः शरीराणि
च निखिलानि निर्द्दोषत्वेन रक्ष्यन्तां। यो युष्मान् आह्वयति स २४
विश्वसनीयोऽतः स तत् साधयिष्यति।

हे भ्रातरः, अस्माकं कृते प्रार्थनां कुरुध्वं। पवित्रचुम्बनेन सर्व्वान् २५
भ्रातॄन् प्रति सत्कुरुध्वं। पत्रमिदं सर्व्वेषां पवित्राणां भ्रातॄणां श्रुति- २७
गोचरे युष्माभिः पठ्यतामिति प्रभो र्नाम्ना युष्मान् शपयामि। अस्माकं २८
प्रभो र्यीशुख्रीष्टस्यानुग्रहो युष्मासु भूयात्। आमेन्।

# थिषलनीकिनः प्रति पौलस्य प्रेरितस्य द्वितीयं पत्रं।

मङ्गलाचरणम्। प्रभुयीशो द्वितीयमागमनमधि कथनम्।

**१** १ पौलः सिल्वानस्तीमथियश्चेतिनामानो वयम् अस्मदीयतातम्
ईश्वरं प्रभुं यीशुख्रीष्टञ्चाश्रितां थिषलनीकिनां मण्डलीं प्रति पत्रं
२ लिखामः। अस्माकं तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मास्वनुग्रहं
शान्तिञ्च क्रियास्तां।
३ हे भ्रातरः, युष्माकं कृते सर्व्वदा यथायोग्यम् ईश्वरस्य
धन्यवादोऽस्माभिः कर्त्तव्यः, यतो हेतो र्युष्माकं विश्वास उत्तरोत्तरं
४ वर्द्धते परस्परम् एकैकस्य प्रेम च बहुफलं भवति। तस्माद् युष्माभि
र्यावन्त उपद्रवक्लेशाः सह्यन्ते तेषु यद् धैर्य्यं यश्च विश्वासः प्रकाश्यते
५ तत्कारणाद् वयम् ईश्वरीयमण्डलीषु युष्माभिः श्लाघामहे। तच्चेश्वरस्य
न्यायविचारस्य प्रमाणं भवति यतो यूयं यस्य कृते दुःखं सहध्वं
६ तस्येश्वरीयराज्यस्य योग्या भवथ। यतः स्वकीयस्वर्गदूतानां बलैः
सहितस्य प्रभो र्यीशोः स्वर्गाद् आगमनकाले युष्माकं क्लेशकेभ्यः
७ क्लेशेन फलदानं सार्द्धमस्माभिश्च क्लिश्यमानेभ्यो युष्मभ्यं शान्तिदानम्
८ ईश्वरेण न्याय्यं भोत्स्यते; तदानीम् ईश्वरानभिज्ञेभ्योऽस्मत्प्रभो
र्यीशुख्रीष्टस्य सुसंवादाग्राहकेभ्यश्च लोकेभ्यो जाज्वल्यमानेन वह्निना
९ समुचितं फलं यीशुना दास्यते; ते च प्रभो र्वदनात् पराक्रम-
१० युक्तविभवाच्च सदातनविनाशरूपं दण्डं लप्स्यन्ते, किन्तु तस्मिन् दिने
स्वकीयपवित्रलोकेषु विराजितुं युष्मान् अपरांश्च सर्व्वान् विश्वासि-

लोकान् विस्माययितुञ्च स आगमिष्यति यतोऽस्माकं प्रमाणे युष्माभि
र्विश्वासोऽकारि। अतोऽस्माकम् ईश्वरो युष्मान् तस्याह्वानस्य योग्यान् ११
करोतु सौजन्यस्य शुभफलं विश्वासस्य गुणञ्च पराक्रमेण साधयत्विति
प्रार्थनास्माभिः सर्व्वदा युष्मन्निमित्तं क्रियते, यतस्तथा सत्यस्माकम्
ईश्वरस्य प्रभो यीशुख्रीष्टस्य चानुग्रहाद् अस्मत्प्रभो यीशुख्रीष्टस्य १२
नाम्नो गौरवं युष्मासु युष्माकमपि गौरवं तस्मिन् प्रकाशिष्यते।

पापपुरुषस्य निर्णयः।

हे भ्रातरः, अस्माकं प्रभो यीशुख्रीष्टस्यागमनं तस्य समीपे- २ १
ऽस्माकं संस्थितिश्चाधि वयं युष्मान् इदं प्रार्थयामहे, प्रभोस्तद् २
दिनं प्रायेणोपस्थितम् इति यदि कश्चिद् आत्मना वाचा वा
पत्रेण वास्माकम् आदेशं कल्पयन् युष्मान् गदति तर्हि यूयं तेन
चञ्चलमनस उद्विग्नाश्च न भवत। केनापि प्रकारेण कोऽपि ३
युष्मान् न वञ्चयतु यतस्तस्माद् दिनात् पूर्व्वं धर्म्मलोपेनोपस्थातव्यं,
यश्च जनो विपक्षतां कुर्व्वन् सर्व्वस्माद् देवात् पूजनीयवस्तुतश्चोन्नंस्यते ४
स्वम् ईश्वरमिव दर्शयन् ईश्वरवद् ईश्वरस्य मन्दिर उपवेक्ष्यति च
तेन विनाशपात्रेण पापपुरुषेणोदेतव्यं। यदाहं युष्माकं सन्निधावासं ५
तदानीम् एतद् अकथयमिति यूयं किं न स्मरथ? साम्प्रतं स ६
येन निवार्य्यते तद् यूयं जानीथ, किन्तु स्वसमये तेनोदेतव्यं।
विधर्म्मस्य निगूढो गुण इदानीमपि फलति किन्तु यस्तं निवारयति ७
सोऽद्यापि दूरीकृतो नाभवत्। तस्मिन् दूरीकृते स विधर्म्म्युदेष्यति ८
किन्तु प्रभु यीशुः स्वमुखपवनेन तं विध्वंसयिष्यति निजोपस्थिते-
स्तेजसा विनाशयिष्यति च। शैतानस्य शक्तिप्रकाशनाद् विनाश्यमा- ९
नानां मध्ये सर्व्वविधाः प्रभावसिद्धाः क्रिया भ्रमिका न्यभिज्ञानानि
लक्षणान्यधर्म्मजाता सर्व्वविधप्रतारणा च तस्योपस्थितेः फलं भवि-

१० र्यति; यतो हेतोस्ते परित्राणप्राप्तये सत्यधर्म्मस्यानुरागं न गृहीत-
११ वन्तस्तस्मात् कारणाद् ईश्वरेण तान् प्रति भ्रान्तिकरमायायां
१२ प्रेषितायां ते मृषावाक्ये विश्वसिष्यन्ति। यतो यावन्तो मानवाः सत्यधर्म्मे न विश्वस्याधर्म्मेण तुष्यन्ति तैः सर्व्वै र्दण्डभाजनै र्भवितव्यं।

प्रभौ स्थिरं स्थातुं निवेदनम्।

१३ हे प्रभो प्रिया भ्रातरः, युष्माकं कृत ईश्वरस्य धन्यवादो-
ऽस्माभि सर्व्वदा कर्त्तव्यो यत ईश्वर आ प्रथमाद् आत्मनः पावनेन सत्यधर्म्मे विश्वासेन च परित्राणार्थं युष्मान् वरीतवान्
१४ तदर्थञ्चास्माभि र्घोषितेन सुसंवादेन युष्मान् आहूयास्माकं प्रभो यीशुख्रीष्टस्य तेजसोऽधिकारिणः करिष्यति।

१५ अतो हे भ्रातरः, यूयम् अस्माकं वाक्यैः पत्रैश्च यां शिक्षां
१६ लब्धवन्तस्तां कृत्स्नां शिक्षां धारयन्तः सुस्थिरा भवत। अस्माकं प्रभु र्यीशुख्रीष्टस्तात ईश्वरश्चार्थतो यो युष्मासु प्रेम कृतवान् नित्याञ्च सान्त्वनाम् अनुग्रहेणोत्तमप्रत्याशाञ्च युष्मभ्यं दत्तवान्
१७ स स्वयं युष्माकम् अन्तःकरणानि सान्त्वयतु सर्व्वस्मिन् सद्वाक्ये सत्कर्म्मणि च सुस्थिरीकरोतु च।

३ १ हे भ्रातरः, शेषे वदामि, यूयम् अस्मभ्यमिदं प्रार्थयध्वं यत् प्रभो र्वाक्यं युष्माकं मध्ये यथा तथैवान्यत्रापि प्रचरेत् मान्यञ्च
२ भवेत्; यच्च वयम् अविवेचकेभ्यो दुष्टेभ्यश्च लोकेभ्यो रक्षां
३ प्राप्नुयाम यतः सर्व्वेषां विश्वासो न भवति। किन्तु प्रभु र्विश्वास्यः स एव युष्मान् स्थिरीकरिष्यति दुष्टस्य कराद् उद्धरिष्यति च।
४ यूयम् अस्माभि र्यद् आदिश्यध्वे तत् कुरुथ करिष्यथ चेति
५ विश्वासो युष्मानधि प्रभुनास्माकं जायते। ईश्वरस्य प्रेम्नि ख्रीष्टस्य सहिष्णुतायाञ्च प्रभुः स्वयं युष्माकम् अन्तःकरणानि विनयतु।

हे भ्रातरः, अस्मत्प्रभो र्यीशुख्रीष्टस्य नाम्ना वयं युष्मान् इदम् ६
आदिशामः, अस्मत्तो युष्माभि र्या शिक्षालम्भि तां विहाय कश्चिद्
भ्राता यद्यविहिताचारं करोति तर्हि यूयं तस्मात् पृथग् भवत ।
यतो वयं युष्माभिः कथम् अनुकर्त्तव्यास्तद् यूयं स्वयं जानीथ । ७
युष्माकं मध्ये वयम् अविहिताचारिणो नाभवाम, विनामूल्यं ८
कस्याप्यन्नं नाभुंज्महि किन्तु कोऽपि यद् अस्माभि र्भारग्रस्तो न
भवेत् तदर्थं श्रमेण क्लेशेन च दिवानिशं कार्य्यम् अकुर्म्म । अत्रा- ९
स्माकम् अधिकारो नास्तीत्थं नहि किन्त्वस्माकम् अनुकरणाय
युष्मान् दृष्टान्तं दर्शयितुम् इच्छन्तस्तद् अकुर्म्म । यतो येन कार्य्यं १०
न क्रियते तेनाहारोऽपि न क्रियतामिति वयं युष्मत्समीपं उप-
स्थितिकालेऽपि युष्मान् आदिशाम । युष्मन्मध्येऽविहिताचारिणः ११
केऽपि जना विद्यन्ते ते च कार्य्यम् अकुर्व्वन्त आलस्याम् आचर-
न्तीत्यस्माभिः श्रूयते । तादृशान् लोकान् अस्मत्प्रभो र्यीशुख्रीष्टस्य १२
नाम्ना वयम् इदम् आदिशाम आज्ञापयामश्च, ते शान्तभावेन
कार्य्यं कुर्व्वन्तः स्वकीयमन्नं भुञ्जतां । अपरं हे भ्रातरः, यूयं १३
सदाचरणे न क्लाम्यत । यदि च कश्चिदेतत्पत्रे लिखिताम् अस्माकम् १४
आज्ञां न गृह्लाति तर्हि यूयं तं मानुषं लक्षयत तस्य संसर्गं त्यजत
च तेन स त्रपिष्यते । किन्तु तं न शत्रुं मन्यमाना भ्रातरमिव १५
चेतयत । शान्तिदाता प्रभुः सर्व्वत्र सर्व्वथा युष्मभ्यं शान्तिं देयात् । १६
प्रभु र्युष्माकं सर्व्वेषां सङ्गी भूयात् ।

नमस्कार एष पौलस्य मम करेण लिखितोऽभूत् सर्व्वस्मिन् १७
पत्र एतन्मम चिह्नम् एतादृशैरक्षरै र्मया लिख्यते । अस्माकं प्रभो १८
र्यीशुख्रीष्टस्यानुग्रहः सर्व्वेषु युष्मासु भूयात् । आमेन् ।

# तीमथियं प्रति पौलस्य प्रेरितस्य प्रथमं पत्रं।

मङ्गलाचरणम्। तीमथियं प्रति आदेशः।

1 १ अस्माकं त्राणकर्त्तुरीश्वरस्यास्माकं प्रत्याशाभूमेः प्रभो र्यीशु-
ख्रीष्टस्य चाज्ञानुसारतो यीशुख्रीष्टस्य प्रेरितः पौलः स्वकीयं सत्यं
धर्म्मपुत्त्रं तीमथियं प्रति पत्रं लिखति। अस्माकं तात ईश्वरोऽस्माकं
प्रभु र्यीशुख्रीष्टश्च त्वयि अनुग्रहं दयां शान्तिञ्च कुर्य्यास्तां।

३ माकिदनियादेशे मम गमनकाले त्वम् इफिषनगरे तिष्ठन्
इतरशिक्षा न ग्रहीतव्या, अनन्तेषूपाख्यानेषु वंशावलिषु च युष्माभि
४ र्मनो न निवेशितव्यम् इति कांश्चित् लोकान् यद् उपदिशेरेतत्
मयादिष्टोऽभवः, यतः सर्व्वैरेतै र्विश्वासयुक्तेश्वरीयनिष्ठा न जायते
५ किन्तु विवादो जायते। उपदेशस्य त्वभिप्रेतं फलं निर्म्मलान्तःकरणेन
६ सत्संवेदेन निष्कपटविश्वासेन च युक्तं प्रेम। केचित् जनाश्च सर्व्वा-
ण्येतानि विहाय निरर्थककथानाम् अनुगमनेन विपथगामिनो-
७ ऽभवन्, यद् भाषन्ते यच्च निश्चिन्वन्ति तन्न बुध्यमाना व्यवस्थोप-
८ देष्टारो भवितुम् इच्छन्ति। सा व्यवस्था यदि योग्यरूपेण गृह्यते
९ तर्ह्युत्तमा भवतीति वयं जानीमः। अपरं सा व्यवस्था धार्म्मिकस्य
विरुद्धा न भवति किन्त्वधार्म्मिको ऽवाध्यो दुष्टः पापिष्ठो ऽपवित्रो
१० ऽशुचिः पितृहन्ता मातृहन्ता नरहन्ता वेश्यागामी पुंमैथुनी मनुष्य-
विक्रेता मिथ्यावादी मिथ्याशपथकारी च सर्व्वेषामेतेषां विरुद्धा,
११ तथा सच्चिदानन्देश्वरस्य यो विभवयुक्तः सुसंवादो मयि समर्पित-

स्तदनुयायिहितोपदेशस्य विपरीतं यत् किञ्चिद् भवति तद्विरुद्धा
सा व्यवस्थेति तद्ग्राहिणा ज्ञातव्यं।

पौलं प्रति यीशोः प्रेम।

मह्यं शक्तिदाता योऽस्माकं प्रभुः ख्रीष्टयीशुस्तमहं धन्यं वदामि। १२
यतः पुरा निन्दक उपद्रावी हिंसकश्च भूत्वाप्यहं तेन विश्वास्यो १३
ऽमन्ये परिचारकत्वे न्ययुज्ये च। तद् अविश्वासाचरणम् अज्ञानेन
मया कृतमिति हेतोरहं तेनानुकम्पितोऽभवं। अपरं ख्रीष्टे यीशौ १४
विश्वासप्रेमभ्यां सहितोऽस्मत्प्रभोरनुग्रहो ऽतीव प्रचुरोऽभवत्। पापिनः १५
परित्रातुं ख्रीष्टो यीशु र्जगति समवतीर्णोऽभवत्, एषा कथा
विश्वसनीया सर्व्वै ग्रहणीया च। तेषां पापिनां मध्येऽहं प्रथम १६
आसं किन्तु ये मानवा अनन्तजीवनप्राप्त्यर्थं तस्मिन् विश्वसिष्यन्ति
तेषां दृष्टान्ते मयि प्रथमे यीशुना ख्रीष्टेन स्वकीया कृत्स्ना
चिरसहिष्णुता यत् प्रकाश्यते तदर्थमेवाहम् अनुकम्पां प्राप्तवान्। १७
अनादिरक्षयोऽदृश्यो राजा योऽद्वितीयः सर्व्वज्ञ ईश्वरस्तस्य गौरवं
महिमा चानन्तकालं यावद् भूयात्। आमेन।
हे पुत्र तीमथिय त्वयि यानि भाववाक्यानि पुरा कथितानि १८
तदनुसाराद् अहम् एनमादेशं त्वयि समर्पयामि, तस्याभिप्रायोऽयं
यत्त्वं तै र्वाक्यैरुत्तमयुद्धं करोषि विश्वासं सत्संवेदञ्च धारयसि
च। अनयोः परित्यागात् केषाञ्चिद् विश्वासतरी भग्नाभवत्। १९
हुमिनायसिकन्दरौ तेषां यौ द्वौ जनौ, तौ यद् धर्म्मनिन्दां पुन २०
र्न कर्त्तुं शिक्षेते तदर्थं मया शैतानस्य करे समर्पितौ।

प्रार्थनामधि शिक्षा।

मम प्रथम आदेशोऽयं, प्रार्थनाविनयनिवेदनधन्यवादाः कर्त्त- २ १
व्याः, सर्व्वेषां मानवानां कृते विशेषतो वयं यत् शान्तत्वेन निर्व्वि- २

रोधत्वेन चेश्वरभक्तिं विनीतत्वञ्चाचरन्तः कालं यापयामस्तदर्थं
३ नृपतीनाम् उच्चपदस्थानाञ्च कृते ते कर्त्तव्याः। यतोऽस्माकं तारक-
४ स्येश्वरस्य साक्षात् तदेवोत्तमं ग्राह्यञ्च भवति, स सर्व्वेषां मानवानां
५ परित्राणं सत्यज्ञानप्राप्तिञ्चेच्छति। यत एकोऽद्वितीय ईश्वरो विद्यते
किञ्चेश्वरे मानवेषु चैकोऽद्वितीयो मध्यस्थः स नरावतारः ख्रीष्टो
६ यीशुः विद्यते यः सर्व्वेषां मुक्तेः मूल्यम् आत्मदानं कृतवान्। एतेन
७ येन प्रमाणेनोपयुक्ते समये प्रकाशितव्यं, तद्घोषयिता दूतो विश्वासे
सत्यधर्म्मे च भिन्नजातीयानाम् उपदेशकश्चाहं न्ययुज्ये, एतदहं
ख्रीष्टस्य नाम्ना यथातथ्यं वदामि नानृतं कथयामि।

८ अतो ममाभिमतमिदं पुरुषैः क्रोधसन्देहौ विना पवित्रकरान्
९ उत्तोल्य सर्व्वस्मिन् स्थाने प्रार्थना क्रियतां। तद्वत् नार्य्योऽपि-
सलज्जाः संयतमनसश्च सत्यो योग्यमाच्छादनं परिदधतु किञ्च
केशसंस्कारैः कणकमुक्ताभि र्महार्घ्यपरिच्छदैश्चात्मभूषणं न कुर्व्वत्यः
१० ख्रीष्टेश्वरभक्तानां योषितां योग्यैः सत्कर्म्मभिः स्वभूषणं कुर्व्वतां।
११ नारी सम्पूर्णविनीतत्वेन निर्व्विरोधं शिक्षतां। नार्य्याः शिक्षादानं
१२ पुरुषायाज्ञादानं वाहं नानुजानामि तया निर्व्विरोधत्वम् आचरि-
१३ तव्यं। यतः प्रथमम् आदमस्ततः परं हवायाः सृष्टि र्बभूव।
१४ किञ्चादम् भ्रान्तियुक्तो नाभवत् योषिदेव भ्रान्तियुक्ता भूत्वात्या-
१५ चारिणी बभूव। तथापि नारीगणो यदि विश्वासे प्रेम्नि पवित्रतायां
संयतमनसि च तिष्ठति तर्ह्यपत्यप्रसववर्त्मना परित्राणं प्राप्स्यति।

अध्यक्षपरिचारकयोर्विषयः।

३ १ यदि कश्चिद् अध्यक्षपदम् आकाङ्क्षते तर्हि स उत्तमं कर्म्म
२ लिप्सत इति सत्यं। अतोऽध्यक्षेणानिन्दितेनैकस्या योषितो भर्त्रा
परिमितभोगेन संयतमनसा सभ्येनातिथिसेवकेन शिक्षणे निपुणेन

न मद्यपेन न प्रहारकेण किन्तु मृदुभावेन निर्व्विवादेन निर्लोभेन ३
स्वपरिवाराणाम् उत्तमशासकेन पूर्णविनीतत्वाद् वश्यानां सन्तानानां ४
नियन्त्रा च भवितव्यं। यत आत्मपरिवारान् शासितुं यो न शक्नोति ५
तेनेश्वरस्य मण्डल्यास्तत्त्वावधारणं कथं कारिष्यते ? अपरं स गर्व्वितो ६
भूत्वा यत् शैतान इव दण्डयोग्यो न भवेत् तदर्थं तेन नवशिष्येण
न भवितव्यं। यच्च निन्दायां शैतानस्य जाले च न पतेत् तदर्थं ७
तेन बहिःस्थलोकानामपि मध्ये सुख्यातियुक्तेन भवितव्यं।

तद्वत् परिचारकैरपि विनीतै र्द्विविधवाक्यरहितै र्बहुमद्यपाने- ८
ऽनासक्तै र्निर्लोभैश्च भवितव्यं, निर्म्मलसंवेदेन च विश्वासस्य निगूढ- ९
वाक्यं धारितव्यञ्च। अग्रे तेषां परीक्षा क्रियतां ततः परम् अनि- १०
न्दिता भूत्वा ते परिचर्य्यां कुर्व्वन्तु। अपरं योषिद्भिरपि विनी- ११
ताभिरनपवादिकाभिः सतर्काभिः सर्व्वत्र विश्वास्याभिश्च भवितव्यं।
परिचारका एकैकयोषितो भर्त्तारो भवेयुः, निजसन्तानानां परिज- १२
नानाञ्च सुशासनं कुर्य्युश्च। यतः सा परिचर्य्या यै र्भद्ररूपेण साध्यते ते १३
श्रेष्ठपदं प्राप्नुवन्ति ख्रीष्टे यीशौ विश्वासेन महोत्सुका भवन्ति च।

ख्रीष्टीयमण्डली जीवतेश्वरस्य गृहम्।

त्वां प्रत्येतत्पत्रलेखनसमये शीघ्रं त्वत्समीपगमनस्य प्रत्याशा १४
मम विद्यते। यदि वा विलम्बेय तर्हीश्वरस्य गृहेऽर्थतः सत्यधर्म्मस्य १५
स्तम्भभित्तिमूलस्वरूपायाम् अमरेश्वरस्य मण्डल्यां त्वया कीदृश
आचारः कर्त्तव्यस्तत् ज्ञातुं शक्यते। अपरं यस्य महत्त्वं सर्व्वस्वीकृतम् १६
ईश्वरभक्तेस्तत् निगूढवाक्यमिदम् ईश्वरो मानवदेहे प्रकाशित आत्मना
धार्म्मिकीकृतो दूतैः सन्दृष्टः सर्व्वजातीयानां निकटे घोषितो जगतो
विश्वासपात्रीभूतस्तेजःप्राप्तये स्वर्गं नीतश्चेति।

भ्रष्टलोकोपयुक्तव्यवहारः।

४ १ पवित्र आत्मा स्पष्टम् इदं वाक्यं वदति चरमकाले कतिपय-
२ लोका वह्निनाङ्कितत्वात् कठोरमनसां कापट्याद् अनृतवादिनां
३ विवाहनिषेधकानां भक्ष्यविशेषनिषेधकानाञ्च भूतस्वरूपाणां शिक्षायां
भ्रमकात्मनां वाक्येषु च मनांसि निवेश्य धर्म्माद् भ्रंशिष्यन्ते।
४ तानि तु भक्ष्याणि विश्वासिनां स्वीकृतसत्यधर्म्माणाञ्च धन्यवाद-
सहिताय भोगायेश्वरेण ससृजिरे। यत ईश्वरेण यद्यत् सृष्टं तत्
सर्व्वम् उत्तमं यदि च धन्यवादेन भुज्यते तर्हि तस्य किमपि
५ नाग्राह्यं भवति, यत ईश्वरस्य वाक्येन प्रार्थनया च तत् पवित्री-
६ भवति। एतानि वाक्यानि यदि त्वं भ्रातृन् ज्ञापयेस्तर्हि यीशु-
ख्रीष्टस्योत्तमः परिचारको भविष्यसि यो विश्वासो हितोपदेशश्च
त्वया गृहीतस्तदीयवाक्यैराप्यायिष्यसे च।
७ यान्युपाख्यानानि दुर्भावानि वृद्धयोषितामेव योग्यानि च
८ तानि त्वया विसृज्यन्ताम् ईश्वरभक्तये यत्नः क्रियताञ्च। यतः
शारीरिको यत्नः स्वल्पफलदो भवति किन्त्वीश्वरभक्तिरैहिकपार-
९ त्रिकजीवनयोः प्रतिज्ञायुक्ता सती सर्व्वत्र फलदा भवति। वाक्य-
मेतद् विश्वसनीयं सर्व्वै ग्रहणीयञ्च वयञ्च तदर्थमेव श्राम्यामो
१० निन्दां भुंज्महे च। यतो हेतोः सर्व्वमानवानां विशेषतो विश्वासिनां
११ त्राता योऽमर ईश्वरस्तस्मिन् वयं विश्वसामः। त्वम् एतानि वाक्यानि
१२ प्रचारय समुपदिश च। अल्पवयस्कत्वात् केनाप्यवज्ञेयो न भव
किन्त्वालापेनाचरणेन प्रेम्ना सदात्मत्वेन विश्वासेन शुचित्वेन च विश्वा-
१३ सिनाम् आदर्शो भव। यावन्नाहम् आगमिष्यामि तावत् त्वं पाठे
१४ चेतयने उपदेशे च मनो निधत्स्व। प्राचीनगणहस्तार्पणसहितेन
भाववाण्या यद्दानं तुभ्यं विश्राणितं तवान्तःस्थे तस्मिन् दाने शिथिलमना

मा भव। एतेषु मनो निवेशय, एतेषु वर्त्तस्व, इत्थञ्च सर्व्वविषये तव १५
गुणवृद्धिः प्रकाशतां। स्वस्मिन् उपदेशे च सावधानो भूत्वावतिष्ठस्व १६
तत् कृत्वा त्वयात्मपरित्राणं श्रोतृणाञ्च परित्राणं साधयिष्यते।

त्वं प्राचीनं न भर्त्सय किन्तु तं पितरमिव यूनश्च भ्रातॄनिव ५ १
वृद्धाः स्त्रियश्च मातॄनिव युवतीश्च पूर्णशुचित्वेन भगिनीरिव २
विनयस्व।

### मण्डलीस्थविधवाविषयिणी शिक्षा।

अपरं सत्यविधवाः सम्मन्यस्व। कस्याश्चिद् विधवाया यदि ३
पुत्राः पौत्रा वा विद्यन्ते तर्हि ते प्रथमतः स्वीयपरिजनान् सेवितुं ४
पित्रोः प्रत्युपकर्त्तुञ्च शिक्षन्तां यतस्तदेवेश्वरस्य साक्षाद् उत्तमं
ग्राह्यञ्च कर्म्म। अपरं या नारी सत्यविधवा नाथहीना चास्ति ५
सा ईश्वरस्याश्रये तिष्ठन्ती दिवानिशं निवेदनप्रार्थनाभ्यां कालं
यापयति। किन्तु या विधवा सुखभोगासक्ता सा जीवत्यपि मृता ६
भवति। अतएव ता यद् अनिन्दिता भवेयुस्तदर्थम् एतानि त्वया ७
निदिश्यन्तां। यदि कश्चित् स्वजातीयान् लोकान् विशेषतः स्वीय- ८
परिजनान् न पालयति तर्हि स विश्वासाद् भ्रष्टोऽविश्वासिनो-
ऽप्यधमश्च भवति। विधवावर्गे यस्या गणना भवति तया षष्टि- ९
वत्सरेभ्यो न्यूनवयस्कया न भवितव्यं; अपरं पूर्व्वम् एकस्वामिका
भूत्वा सा यत् शिशुपोषणेनातिथिसेवनेन पवित्रलोकानां चरण- १०
प्रक्षालनेन क्लिष्टानाम् उपकारेण सर्व्वविधसत्कर्म्माचरणेन च सत्कर्म्म-
करणात् सुख्यातिप्राप्ता भवेत् तदप्यावश्यकं। किन्तु युवती ११
र्विधवा न गृहाण यतः ख्रीष्टस्य वैपरीत्येन तासां दर्पे जाते
ता विवाहम् इच्छन्ति। तस्माच्च पूर्व्वधर्मं परित्यज्य दण्डनीया १२
भवन्ति। अनन्तरं ता गृहाद् गृहं पर्य्यटन्त्य आलस्यं शिक्षन्ते १३

केवलमालस्यं नहि किन्त्वनर्थकालापं पराधिकारचर्च्चाञ्चापि शिक्ष-
१४ माणा अनुचितानि वाक्यानि भाषन्ते। अतो ममेच्छेयं युवत्यो
विधवा विवाहं कुर्व्वताम् अपत्यवत्यो भवन्तु गृहकर्म्म कुर्व्वताञ्चेत्थं
१५ विपक्षाय किमपि निन्दाद्वारं न ददतु। यत इतः पूर्व्वम् अपि
१६ काश्चित् शैतानस्य पश्चाद्गामिन्यो जाताः। अपरं विश्वासिन्या
विश्वासिनो वा कस्यापि परिवाराणां मध्ये यदि विधवा विद्यन्ते
तर्हि स ताः प्रतिपालयतु तस्मात् मण्डल्यां भारेऽनारोपिते
सत्यविधवानां प्रतिपालनं कर्त्तुं तया शक्यते।

### नानाविधोपदेशः।

१७ ये प्राञ्चः मण्डलीं सम्यग् अधितिष्ठन्ति विशेषत ईश्वरवाक्ये-
नोपदेशेन च ये यत्नं विदधते ते द्विगुणस्यादरस्य योग्या
१८ मान्यन्तां। यस्मात् शास्त्रे लिखितमिदमास्ते, त्वं शस्यमर्द्दकवृषस्यास्यं
मा बधानेति, अपरमपि कार्य्यकृद् वेतनस्य योग्यो भवतीति।
१९ द्वौ त्रीन् वा साक्षिणो विना कस्यचित् प्राचीनस्य विरुद्धम्
२० अभियोगस्त्वया न गृह्यतां। अपरं ये पापमाचरन्ति तान् सर्व्वेषां
२१ समक्षं भर्त्सयस्व तेनापरेषामपि भीति र्जनिष्यते। अहम् ईश्वरस्य
प्रभो र्यीशुख्रीष्टस्य मनोनीतदिव्यदूतानाञ्च गोचरे त्वाम् इदम्
आज्ञापयामि त्वं कस्याप्यनुरोधेन किमपि न कुर्व्वन् विनापक्ष-
पातम् एतान् विधीन् पालय।
२२ कस्यापि मूर्द्धि हस्तार्पणं त्वरया माकार्षीः। परपापानाञ्चांशी
२३ मा भव। स्वं शुचिं रक्ष। अपरं तवोदरपीडायाः पुनः पुन
र्दुर्ब्बलतायाश्च निमित्तं केवलं तोयं न पिवन् किञ्चिन् द्राक्षारसं
२४ पिव। केषाञ्चित् मानवानां पापानि विचारात् पूर्व्वं केषाञ्चित्

पश्चात् प्रकाशन्ते। तथैव सत्कर्म्माण्यपि प्रकाशन्ते तदन्यथा सति २५
प्रच्छन्नानि स्थातुं न शक्नुवन्ति।

यावन्तो लोका युगधारिणो दासाः सन्ति ते स्वस्वस्वामिनं ६ १
पूर्णसमादरयोग्यं मन्यन्तां नो चेद् ईश्वरस्य नाम्न उपदेशस्य च
निन्दा सम्भविष्यति। येषाञ्च स्वामिनो विश्वासिनः भवन्ति तैस्ते २
भ्रातृत्वात् नावज्ञेयाः किन्तु ते कर्म्मफलभोगिनो विश्वासिनः
प्रियाश्च भवन्तीति हेतोः सेवनीया एव, त्वम् एतानि शिक्षय
समुपदिश च। यः कश्चिद् इतरशिक्षां करोति, अस्माकं प्रभो ३
र्यीशुख्रीष्टस्य हितवाक्यानीश्वरभक्ते र्योग्यां शिक्षाञ्च न स्वीकरोति स
दर्पध्मातः सर्व्वथा ज्ञानहीनश्च विवादै र्वाग्युद्धैश्च रोगयुक्तश्च भवति। ४
तादृशाद् भावाद् ईर्ष्याविरोधापवाददुष्टासूया भ्रष्टमनसां सत्य- ५
ज्ञानहीनानाम् ईश्वरभक्तिं लाभोपायम् इव मन्यमानानां लोकानां
विवादाश्च जायन्ते तादृशेभ्यो लोकेभ्यस्त्वं पृथक् तिष्ठ। संयतेच्छया ६
युक्ता येश्वरभक्तिः सा महालाभोपायो भवतीति सत्यं। एतज्जगत् ७
प्रवेशनकालेऽस्माभिः किमपि नानायि तत्त्यजनकालेऽपि किमपि
नेतुं न शक्ष्यत इति निश्चितं। अतएव खाद्यान्याच्छादनानि च ८
प्राप्यास्माभिः सन्तुष्टै र्भवितव्यं। ये तु धनिनो भवितुं चेष्टन्ते ते ९
परीक्षायाम् उन्माथे पतन्ति ये चाभिलाषा मानवान् विनाशे
नरके च मज्जयन्ति तादृशेष्वज्ञानाहिताभिलाषेष्वपि पतन्ति।
यतोऽर्थस्पृहा सर्व्वेषां दुरितानां मूलं भवति तामवलम्ब्य केचिद् १०
विश्वासाद् अभ्रंशन्त नानाक्लेशैश्च स्वान् अविध्यन्।

हे ईश्वरस्य लोक त्वम् एतेभ्यः पलायस्व धर्म्म ईश्वरभक्ति ११
र्विश्वासः प्रेम सहिष्णुता क्षान्तिश्चैतान्याचर। विश्वासरूपम् उत्तम- १२
युद्धं कुरु, अनन्तजीवनम् आलम्बस्व यतस्तदर्थं त्वम् आहूतोऽभवः,

१३ बहुसाक्षिणां समक्षञ्चोत्तमां प्रतिज्ञां स्वीकृतवान्। अपरं सर्व्वेषां
जीवयितुरीश्वरस्य साक्षाद् यश्च ख्रीष्टो यीशुः पन्तीयपीलातस्य
समक्षम् उत्तमां प्रतिज्ञां स्वीकृतवान् तस्य साक्षाद् अहं त्वाम्
१४ इदम् आज्ञापयामि। ईश्वरेण स्वसमये प्रकाशितव्यम् अस्माकं
प्रभो यीशुख्रीष्टस्यागमनं यावत् त्वया निष्कलङ्कत्वेन निर्दोषत्वेन
१५ च विधी रक्ष्यतां। स ईश्वरः सच्चिदानन्दः, अद्वितीयसम्राट्, राज्ञां
१६ राजा, प्रभूनां प्रभुः, अमरताया अद्वितीय आकरः, अगम्यतेजो-
निवासी, मर्त्त्यानां केनापि न दृष्टः केनापि न दृश्यश्च। तस्य
गौरवपराक्रमौ सदातनौ भूयास्तां। आमेन्।

१७ इहलोके ये धनिनस्ते चित्तसमुन्नतिं चपले धने विश्वासञ्च
न कुर्व्वतां किन्तु भोगार्थम् अस्मभ्यं प्रचुरत्वेन सर्व्वदाता योऽमर
१८ ईश्वरस्तस्मिन् विश्वसन्तु सदाचारं कुर्व्वन्तु सत्कर्म्मधनेन धनिनो
१९ सुकला दातारश्च भवन्तु, यथा च सत्यं जीवनं पाप्नुयुस्तथा
पारत्रिकाम् उत्तमसम्पदं सञ्चिन्वन्त्वेति त्वयादिश्यन्तां।

२० हे तीमथिय, त्वम् उपनिधिं गोपय काल्पनिकविद्याया
२१ अपवित्रं प्रलापं विरोधोक्तिञ्च त्यज च, यतः कतिपया लोकास्तां
विद्यामवलम्ब्य विश्वासाद् भ्रष्टा अभवन्। प्रसादस्तव सहायो
भूयात्। आमेन्।

# तीमथियं प्रति पौलस्य प्रेरितस्य द्वितीयं पत्रं ।

मङ्गलाचरणम् । धर्म्मे स्थिरं स्थातुं आदेशः ।

ख्रीष्टेन यीशुना या जीवनस्य प्रतिज्ञा तामधीश्वरस्येच्छया १ १
यीशोः ख्रीष्टस्यैकः प्रेरितः पौलोऽहं स्वकीयं प्रियं धर्म्मपुत्रं तीम-
थियं प्रति पत्रं लिखामि । तात ईश्वरोऽस्माकं प्रभु यीशुख्रीष्टश्च २
त्वयि प्रसादं दयां शान्तिञ्च क्रियास्तां ।

अहम् आपूर्व्वपुरुषात् यम् ईश्वरं पवित्रमनसा सेवे तं धन्यं ३
वदन् कथयामि, अहम् अहोरात्रं प्रार्थनासमये त्वां निरन्तरं
स्मरामि । यश्च विश्वासः प्रथमे लोयीनामिकायां तव माता- ४
मह्याम् उनीकीनामिकायां मातरि चातिष्ठत् तवान्तरेऽपि तिष्ठ-
तीति मन्ये तव तं निष्कपटं विश्वासं मनसि कुर्व्वन् तवाश्रुपातं ५
स्मरन् यथानन्देन प्रफुल्लो भवेयं तदर्थं तव दर्शनम् आकाङ्क्षे ।

अतो हेतो र्मम हस्तार्पणेन लब्धो य ईश्वरस्य वरस्त्वयि ६
विद्यते तम् उज्ज्वालयितुं त्वां स्मारयामि । यत ईश्वरोऽस्मभ्यं ७
भयजनकम् आत्मानम् अदत्वा शक्तिप्रेमसतर्कतानाम् आकरम्
आत्मानं दत्तवान् । अतएवास्माकं प्रभुमधि तस्य वन्दिदासं मामधि ८
च प्रमाणं दातुं न त्रपस्व किन्त्वीश्वरीयशक्त्या सुसंवादस्य कृते
दुःखस्य सहभागी भव । सोऽस्मान् परित्राणपात्राणि कृतवान् ९
पवित्रेणाह्वानेनाहूतवांश्च; अस्मत्कर्म्महेतुनेति नहि स्वीयनिरूपणस्य

प्रसादस्य च कृते तत् कृतवान्। स प्रसादः सृष्टेः पूर्व्वकाले
ख्रीष्टेन यीशुनास्मभ्यम् अदायि, किन्त्वधुनास्माकं परित्रातु र्यीशो:
१० ख्रीष्टस्यागमनेन प्राकाशत। ख्रीष्टो मृत्युं पराजितवान् सुसंवादेन
११ च जीवनम् अमरताञ्च प्रकाशितवान्। तस्य घोषयिता दूतश्च
१२ परजातीयानां शिक्षकश्चाहं नियुक्तोऽस्मि। तस्मात् कारणात् ममायं
क्लेशो भवति तेन मम लज्जा न जायते यतोऽहं यस्मिन् विश्व-
सितवान् तमवगतोऽस्मि महादिनं यावत् ममोपनिधे र्गोपनस्य
शक्तिस्तस्य विद्यत इति निश्चितं जानामि।

१३ हितदायकानां वाक्यानाम् आदर्शरूपेण मत्तः श्रुताः ख्रीष्टे
१४ यीशौ विश्वासप्रेम्नोः कथा धारय। अपरम् अस्मदन्तर्वासिना
पवित्रेणात्मना तामुत्तमाम् उपनिधिं गोपय।

१५ आशियादेशीयाः सर्व्वे मां त्यक्तवन्त इति त्वं जानासि तेषां
१६ मध्ये फुगिल्लो हर्म्मगिनिश्च विद्येते। प्रभुरनीषिफरस्य परिवारान्
प्रति कृपां विदधातु यतः स पुनः पुन र्माम् आप्यायितवान्
१७ मम शृङ्खलेन न त्रपित्वा रोमानगरे उपस्थितिसमये यत्नेन
१८ मां मृगयित्वा ममोद्देशं प्राप्तवान्। अतो विचारदिने स यथा
प्रभोः कृपाभाजनं भवेत् तादृशं वरं प्रभुस्तस्मै देयात्। इफिष-
नगरेऽपि स कति प्रकारै र्माम् उपकृतवान् तत् त्वं सम्यग् वेत्सि।

यीशुख्रीष्टस्य योद्धोत्तमत्वम्।

२ १ हे मम पुत्र, ख्रीष्टयीशुतो योऽनुग्रहस्तस्य बलेन त्वं बलवान्
२ भव। अपरं बहुभिः साक्षिभिः प्रमाणीकृतां यां शिक्षां श्रुतवानसि
३ तां विश्वास्येषु परस्मै शिक्षादाने निपुणेषु च लोकेषु समर्पय। त्वं
४ यीशुख्रीष्टस्योत्तमो योद्धेव क्लेशं सहस्व। यो युद्धं करोति स
सांसारिके व्यापारे मग्नो न भवति किन्तु स्वनियोजयित्रे रोचितुं

चेष्टते। अपरं यो मल्लो युध्यति स यदि नियमानुसारेण न ५
युध्यति तर्हि किरीटं न लप्स्यते। अपरं यः कृषीवलः कर्म्म ६
करोति तेन प्रथमेन फलभागिना भवितव्यं। मया यदुच्यते ७
तत् त्वया बुध्यतां यतः प्रभुस्तुभ्यं सर्व्वत्र बुद्धिं दास्यति। मम ८
सुसंवादस्य वचनानुसाराद् दायूद्वंशीयं मृतगणमध्याद् उत्था-
पितञ्च यीशुं ख्रीष्टं स्मर। तत्सुसंवादकारणाद् अहं दुष्कर्म्मेव ९
बन्धनदशापर्य्यन्तं क्लेशं भुञ्जे किन्त्वीश्वरस्य वाक्यम् अबद्धं तिष्ठति।
ख्रीष्टेन यीशुना यद् अनन्तगौरवसहितं परित्राणं जायते तदभि- १०
रुचितै र्लोकैरपि यत् लभ्येत तदर्थमहं तेषां निमित्तं सर्व्वाण्ये-
तानि सहे। अपरम् एषा भारती सत्या यदि वयं तेन सार्द्धं ११
म्रियामहे तर्हि तेन सार्द्धं जीविष्यामः, यदि च क्लेशं सहामहे
तर्हि तेन सार्द्धं राजत्वमपि करिष्यामहे। यदि वयं तम् अनङ्गी- १२
कुर्म्मस्तर्हि सोऽस्मानप्यनङ्गीकरिष्यति। यदि वयं न विश्वसामस्तर्हि १३
स विश्वास्यस्तिष्ठति यतः स्वम् अपह्नोतुं न शक्नोति।

त्वमेतानि स्मारयन् ते यथा निष्फलं श्रोतॄणां भ्रंशजनकं १४
वाग्युद्धं न कुर्य्युस्तथा प्रभोः समक्षं दृढं विनीयादिश। अपरं १५
त्वम् ईश्वरस्य साक्षात् स्वं परीक्षितम् अनिन्दनीयकर्म्मकारिणञ्च
सत्यमतस्य वाक्यानां सद्विभजने निपुणञ्च दर्शयितुं यतस्व। किन्त्व- १६
पवित्रा अनर्थककथा दूरीकुरु यतस्तदालम्बिन उत्तरोत्तरम्
अधर्म्मे वर्द्धिष्यन्ते, तेषाञ्च वाक्यं गलितक्षतवत् क्षयवर्द्धको १७
भविष्यति तेषां मध्ये हुमिनायः फिलीतश्चेतिनामानौ द्वौ जनौ
सत्यमताद् भ्रष्टौ जातौ, मृतानां पुनरुत्थिति र्व्यतीतेति वदन्तौ १८
केषाञ्चिद् विश्वासम् उत्पाटयतश्च। तथापीश्वरस्य भित्तिमूलम् १९
अचलं तिष्ठति तस्मिंश्चेयं लिपि र्मुद्राङ्किता विद्यते। यथा,

जानाति परमेशस्तु स्वकीयान् सर्व्वमानवान्।
अपगच्छेद् अधर्म्माच्च यः कश्चित् ख्रीष्टनामकृत्॥

२० किन्तु वृहन्निकेतने केवलं सुवर्णमयानि रौप्यमयाणि च भाज-
नानि विद्यन्त इति नहि काष्ठमयानि मृण्मयान्यपि विद्यन्ते तेषाञ्च
२१ कियन्ति सम्मानाय कियन्त्यपमानाय च भवन्ति। अतो यदि
कश्चिद् एतादृशेभ्यः स्वं परिष्करोति तर्हि स पावितं प्रभोः
कार्य्ययोग्यं सर्व्वसत्कार्य्यायोपयुक्तं सम्मानार्थकञ्च भाजनं भवि-
२२ ष्यति। यौवनावस्थाया अभिलाषास्त्वया परित्यज्यन्तां धर्म्मो
विश्वासः प्रेम ये च शुचिमनोभिः प्रभुम् उद्दिश्य प्रार्थनां कुर्व्वते
२३ तैः सार्द्धम् ऐक्यभावश्चैतेषु त्वया यत्नो विधीयतां। अपरं त्वम्
अनर्थकान् अज्ञानांश्च प्रश्नान् वागयुद्धोत्पादकान् ज्ञात्वा दूरी-
२४ कुरु। यतः प्रभो र्दासेन युद्धम् अकर्त्तव्यं किन्तु सर्व्वान् प्रति
शान्तेन शिक्षादानेच्छुकेन सहिष्णुना च भवितव्यं, विपक्षाश्च तेन
२५ नम्रत्वेन चेतितव्याः। तथा कृते यदीश्वरः सत्यमतस्य ज्ञानार्थं तेभ्यो
२६ मनःपरिवर्त्तनरूपं वरं दद्यात्, तर्हि ते येन शैतानेन निजाभि-
लाषसाधनाय धृतास्तस्य जालात् चेतनां प्राप्योद्धारं लब्धुं शक्ष्यन्ति।

चरमकालस्य विषयसमयविषयिणी कथा।

३ १ चरमदिनेषु क्लेशजनकाः समया उपस्थास्यन्तीति जानीहि।
२ यतस्तात्कालिका लोका आत्मप्रेमिणोऽर्थप्रेमिण आत्मश्लाघिनो-
ऽभिमानिनो निन्दकाः पित्रोरनाज्ञाग्राहिणः कृतघ्ना अपवित्राः
३ प्रीतिवर्जिता असन्धेया मृषापवादिनोऽजितेन्द्रियाः प्रचण्डा भद्र-
४ द्वेषिणो विश्वासघातका दुःसाहसिनो दर्पध्माता ईश्वराप्रेमिणः
५ किन्तु सुखप्रेमिणो भक्तवेशाः किन्त्वस्वीकृतभक्तिगुणा भविष्यन्ति;

एतादृशानां लोकानां संसर्गं परित्यज। यतो ये जनाः प्रच्छन्नं ६
गेहान् प्रविशन्ति पापै र्भारग्रस्ता नानाविधाभिलाषैश्चालिता
याः कामिन्यो नित्यं शिक्षन्ते किन्तु सत्यमतस्य तत्त्वज्ञानं प्राप्तुं ७
कदाचित् न शक्नुवन्ति ता दासीवद् वशीकुर्व्वते च ते तादृशा
लोकाः। यान्नि यम्ब्रिश्च यथा मोशिं प्रति विपक्षत्वम् अकुरुतां ८
तथैव भ्रष्टमनसो विश्वासविषयेऽग्राह्याश्चैते लोका अपि सत्यमतं
प्रति विपक्षतां कुर्व्वन्ति। किन्तु ते बहुदूरम् अग्रसरा न भविष्यन्ति ९
यतस्तयो र्मूढता यद्वत् तद्वद् एतेषामपि मूढता सर्व्वदृश्या भविष्यति।

धर्म्मपुस्तकस्य प्रशंसा।

ममोपदेशः शिष्टताभिप्रायो विश्वासो धैर्य्यं प्रेम सहिष्णुतो- १०
पद्रवः क्लेशा आन्तियखियायाम् इकनिये लूस्त्रायाञ्च मां प्रति ११
यद्यद् अघटत यांश्चोपद्रवान् अहम् असहे सर्व्वमेतत् त्वम् अव-
गतोऽसि किन्तु तत्सर्व्वतः प्रभु र्माम् उद्धृतवान्। परन्तु यावन्तो १२
लोकाः ख्रीष्टेन यीशुनेश्वरभक्तिम् आचरितुम् इच्छन्ति तेषां
सर्व्वेषाम् उपद्रवो भविष्यति। अपरं पापिष्ठाः खलाश्च लोका १३
भ्राम्यन्तो भ्रमयन्तश्चोत्तरोत्तरं दुष्टत्वेन वर्द्धिष्यन्ते। किन्तु त्वं १४
यद् यद् अशिक्षथाः, यच्च त्वयि समर्पितम् अभूत तस्मिन्
अवतिष्ठ, यतः कस्मात् शिक्षां प्राप्तोऽसि तद् वेत्सि ; यानि च १५
धर्म्मशास्त्राणि ख्रीष्टे यीशौ विश्वासेन परित्राणप्राप्तये त्वां ज्ञानिनं
कर्त्तुं शक्नुवन्ति तानि त्वं शैशवकालाद् अवगतोऽसि। तत् सर्व्वं १६
शास्त्रम् ईश्वरस्यात्मना दत्तं शिक्षायै दोषबोधाय शोधनाय
धर्म्मविनयाय च फलयुक्तं भवति तेन चेश्वरस्य लोको निपुणः १७
सर्व्वस्मै सत्कर्म्मणे सुसज्जश्च भवति।

वृद्धवन्दिपौलस्य शेषकथनम् ।

४ १ ईश्वरस्य गोचरे यश्च यीशुः ख्रीष्टः स्वीयागमनकाले स्वराज-
त्वेन जीवतां मृतानाञ्च लोकानां विचारं करिष्यति तस्य गोचरे-
२ ऽहं त्वाम् इदं दृढम् आज्ञापयामि । त्वं वाक्यं घोषय कालेऽकाले
चोत्सुको भव पूर्णया सहिष्णुतया शिक्षया च लोकान् प्रबोधय
३ भर्त्सय विनयस्व च । यत एतादृशः समय आयाति यस्मिन्
लोका यथार्थम् उपदेशम् असह्यमानाः कर्णकण्डूयनविशिष्टा भूत्वा
४ निजाभिलाषात् शिक्षकान् संग्रहीष्यन्ति सत्यमताच्च श्रोत्राणि
५ निवर्त्त्य विपथगामिनो भूत्वोपाख्यानेषु प्रवर्त्तिष्यन्ते; किन्तु त्वं
सर्व्वविषये प्रबुद्धो भव दुःखभोगं स्वीकुरु सुसंवादप्रचारकस्य कर्म्म
साधय निजपरिचर्य्यां पूर्णत्वेन कुरु च ।
६ मम प्राणानाम् उत्सर्गो भवति मम प्रस्थानकालश्चोपातिष्ठत् ।
७ अहम् उत्तमयुद्धं कृतवान् गन्तव्यमार्गस्यान्तं यावद् धावितवान्
८ विश्वासञ्च रक्षितवान् । शेषं धार्म्मिकत्वमुकुटं मदर्थं रक्षितं विद्यते
तच्च तस्मिन् महादिने यथार्थविचारकेण प्रभुना मह्यं दायिष्यते
केवलं मह्यम् इति नहि किन्तु यावन्तो लोकास्तस्यागमनम्
आकाङ्क्षन्ते तेभ्यः सर्व्वेभ्योऽपि दायिष्यते ।
९ त्वं त्वरया मत्समीपम् आगन्तुं यतस्व, यतो दीमा ऐहिक-
१० संसारम् ईहमानो मां परित्यज्य थिषलनीकीं गतवान् तथा
क्रीष्कि गालातियां गतवान् तीतश्च दाल्मातियां गतवान् ।
११ केवलो लूको मया सार्द्धं विद्यते । त्वं मार्कं सङ्गिनं कृत्वागच्छ
१२ यतः स परिचर्य्यया ममोपकारी भविष्यति, तुखिकञ्चाहम्
१३ इफिषनगरं प्रेषितवान् । यद् आच्छादनवस्त्रं त्रोयानगरे कार्पस्य

सन्निधौ मया निक्षिप्तं त्वमागमनसमये तत् पुस्तकानि च विशे-
षतश्चर्म्मग्रन्थान् आनय। कांस्यकारः सिकन्दरो मम बह्वनिष्टं १४
कृतवान् प्रभुस्तस्य कर्म्मणां समुचितफलं ददातु। त्वमपि तस्मात् १५
सावधानस्तिष्ठ यतः सोऽस्माकं वाक्यानाम् अतीव विपक्षो जातः।
मम प्रथमप्रत्युत्तरसमये कोऽपि मम सहायो नाभवत् सर्व्वे मां १६
पर्य्यत्यजन् तान् प्रति तस्य दोषस्य गणना न भूयात्; किन्तु १७
प्रभु र्मम सहायोऽभवत् यथा च मया घोषणा साध्येत परजाती-
यास्च सर्व्वे सुसंवादं शृणुयुस्तथा मह्यं शक्तिम् अददात् ततोऽहं
सिंहस्य मुखाद् उद्धृतः। अपरं सर्व्वस्माद् दुष्कर्म्मतः प्रभु र्माम् १८
उद्धरिष्यति निजस्वर्गीयराज्यं नेतुं मां तारयिष्यति च। तस्य
धन्यवादः सदाकालं भूयात्। आमेन्।

त्वं प्रिष्काम् आक्किलम् अनीषिफरस्य परिजनांश्च नमस्कुरु। १९
इरास्तः करिन्थनगरेऽतिष्ठत् त्रफिमश्च पीडितत्वात् मिलीतनगरे २०
मया व्यहीयत। त्वं हेमन्तकालात् पूर्व्वम् आगन्तुं यतस्व। २१
उबूलः पूदि र्लीनः क्लौदिया सर्व्वे भ्रातरश्च त्वां नमस्कुर्व्वते।
प्रभु र्यीशुः ख्रीष्टस्तवात्मना सह भूयात्। युष्मास्वनुग्रहो भूयात्। २२
आमेन्।

# तीतं प्रति पौलस्य प्रेरितस्य पत्रं।

मङ्गलाचरणम्। मण्डलीशासनसम्बन्धीया कथा।

१ १ अनन्तजीवनस्याशातो जाताया ईश्वरभक्ते र्योग्यस्य सत्यमतस्य
यत् तत्त्वज्ञानं यश्च विश्वास ईश्वरस्याभिरुचितलोकै र्लभ्यते तदर्थं
२ यीशुख्रीष्टस्य प्रेरित ईश्वरस्य दासः पौलोऽहं साधारणविश्वासात्
३ मम प्रकृतं धर्म्मपुत्रं तीतं प्रति लिखामि। निष्कपट ईश्वर
आदिकालात् पूर्व्वं तत् जीवनं प्रतिज्ञातवान् स्वनिरूपितसमये
४ च घोषणया तत् प्रकाशितवान्। मम त्रातुरीश्वरस्याज्ञया च तस्य
घोषणं मयि समर्पितम् अभूत्। अस्माकं तात ईश्वरः परित्राता
प्रभु र्यीशुख्रीष्टश्च तुभ्यम् अनुग्रहं दयां शान्तिञ्च वितरतु।

अध्यक्षविषयिणी कथा।

५ त्वं यद् असम्पूर्णकार्य्याणि सम्पूरयेः मदीयादेशाच्च प्रतिनगरं
प्राचीनगणान् नियोजयेस्तदर्थमहं त्वां क्रीत्युपद्वीपे स्थापयित्वा
६ गतवान्। तस्माद् यो नरोऽनिन्दित एकस्या योषितः स्वामी
विश्वासिनाम् अपचयस्यावाध्यत्वस्य वा दोषेणालिप्तानाञ्च सन्ता-
७ नानां जनको भवति स एव योग्यः। यतो हेतोरध्यक्षेणेश्वरस्य
गृहाध्यक्षेणेवानिन्दनीयेन भवितव्यं। तेन स्वेच्छाचारिणा क्रोधिना
पानासक्तेन प्रहारकेण लोभिना वा न भवितव्यं किन्त्वतिथिसेवकेन
८ सल्लोकानुरागिणा विनीतेन न्याय्येन धार्म्मिकेण जितेन्द्रियेण च
९ भवितव्यं, उपदेशे च विश्वस्तं वाक्यं तेन धारितव्यं यतः स यद्

यथार्थेनोपदेशेन लोकान् विनेतुं विघ्नकारिणश्च निरुत्तरान् कर्त्तुं
शक्नुयात् तद् आवश्यकं। यतस्ते बहवोऽवाध्या अनर्थकवाक्यवादिनः १०
प्रवञ्चकाश्च सन्ति विशेषतश्छिन्नत्वचां मध्ये केचित् तादृशा लोकाः
सन्ति। तेषाञ्च वाग्रोध आवश्यको यतस्ते कुत्सितलाभस्याशयानु- ११
चितानि वाक्यानि शिक्षयन्तो निखिलपरिवाराणां सुमतिं नाश-
यन्ति। तेषां स्वदेशीय एको भाववादी वचनमिदमुक्तवान्, यथा, १२

क्रीतीयमानवाः सर्व्वे सदा कापट्यवादिनः।
हिंस्रजन्तुसमानास्तेऽलसाश्चोदरभारतः॥

साक्ष्यमेतत् तथ्यं, अतो हेतोस्त्वं तान् गाढं भर्त्सय ते च यथा १३
विश्वासे स्वस्था भवेयु र्यिहूदीयोपाख्यानेषु सत्यमतभ्रष्टानां मान- १४
वानाम् आज्ञासु च मनांसि न निवेशयेयुस्तथादिश। शुचीनां १५
कृते सर्व्वाण्येव शुचीनि भवन्ति किन्तु कलङ्कितानाम् अविश्वासि-
नाञ्च कृते शुचि किमपि न भवति यतस्तेषां बुद्धयः संवेदाश्च
कलङ्किताः सन्ति। ईश्वरस्य ज्ञानं ते प्रतिजानन्ति किन्तु कर्म्म- १६
भिस्तद् अनङ्गीकुर्व्वते यतस्ते गर्हिता अनाज्ञाग्राहिणः सर्व्वसत्कर्म्म-
णश्चायोग्याः सन्ति।

स्थविरस्थविरायुवजनदासाः कथमुपदेष्टव्या इति निर्णयः।

यथार्थस्योपदेशस्य वाक्यानि त्वया कथ्यन्तां विशेषतः प्राचीन- २ १
लोका यथा प्रबुद्धा धीरा विनीता विश्वासे प्रेम्नि सहिष्णुतायाञ्च २
स्वस्था भवेयुस्तद्वत् प्राचीनयोषितोऽपि यथा धर्म्मयोग्यम् आचारं ३
कुर्य्युः परनिन्दका बहुमद्यपानस्य निघ्नाश्च न भवेयुः किन्तु
सुशिक्षाकारिण्यः सत्य ईश्वरस्य वाक्यं यत् न निन्द्येत तदर्थं युवतीः ४
सुशीलताम् अर्थतः पतिस्नेहम् अपत्यस्नेहं विनीतिं शुचित्वं

५ गृहिणीत्वं सौजन्यं स्वामिनिघ्नत्वञ्चादिशेयुस्तथा त्वया कथ्यतां।
६ तद्वद् यूनोऽपि विनीतये प्रबोधय। त्वञ्च सर्व्वविषये स्वं सत्कर्म्मणां
७ दृष्टान्तं दर्शय शिक्षायाञ्चाविकृतत्वं धीरतां यथार्थं निर्द्दोषञ्च
८ वाक्यं प्रकाशय तेन विपक्षो युष्माकम् अपवादस्य किमपि छिद्रं
९ न प्राप्य त्रपिष्यते। दासाश्च यत् स्वप्रभूनां निघ्नाः सर्व्वविषये
तुष्टिजनकाश्च भवेयुः प्रत्युत्तरं न कुर्य्युः किमपि नापहरेयुः किन्तु
१० पूर्णां सुविश्वस्ततां प्रकाशयेयुरिति तान् आदिश। यत एवम्प्र-
कारेणास्माकं त्रातुरीश्वरस्य शिक्षा सर्व्वविषये तै र्भूषितव्या।

सुसंवादाभिप्रायः।

११ यतो हेतोस्त्राणजनक ईश्वरस्यानुग्रहः सर्व्वान् मानवान्
१२ प्रत्युदितवान् स चास्मान् इदं शिक्षयति यद् वयम् अधर्म्मं
सांसारिकाभिलाषांश्चानङ्गीकृत्य विनीतत्वेन न्यायेनेश्वरभक्त्या चेह-
१३ लोके आयु र्यापयामः, परमसुखस्याशाम् अर्थतोऽस्माकं महत
१४ ईश्वरस्य त्राणकर्त्तु र्यीशुख्रीष्टस्य प्रभावस्योदयं प्रतीक्षामहे। यतः
स यथास्मान् सर्व्वस्माद् अधर्म्मात् मोचयित्वा निजाधिकारस्वरूपं
सत्कर्म्मसूत्सुकम् एकं प्रजावर्गं पावयेत् तदर्थम् अस्माकं कृते आत्म-
१५ दानं कृतवान्। एतानि भाषस्व पूर्णसामर्थ्येन चादिश प्रबोधय
च, कोऽपि त्वां नावमन्यतां।

३ १ ते यथा देशाधिपानां शासकानाञ्च निघ्ना आज्ञाग्राहिणश्च
२ सर्व्वस्मै सत्कर्म्मणे सुसज्जाश्च भवेयुः कमपि न निन्देयु र्निर्व्विरो-
धिनः क्षान्ताश्च भवेयुः सर्व्वान् प्रति च पूर्णं मृदुत्वं प्रकाशयेयुश्चेति
३ तान् आदिश। यतः पूर्व्वं वयमपि निर्ब्बोधा अनाज्ञाग्राहिणो भ्रान्ता
नानाभिलाषाणां सुखानाञ्च दासेया दुष्टत्वेर्ष्याचारिणो घृणिताः

परस्परं द्वेषिणश्चाभवामः । किन्त्वस्माकं त्रातुरीश्वरस्य या दया ४
मर्त्त्यानां प्रति च या प्रीतिस्तस्याः प्रादुर्भावे जाते वयम् आत्मकृतेभ्यो
धर्म्मकर्म्मभ्यस्तन्नहि किन्तु तस्य कृपातः पुनर्जन्मरूपेण प्रक्षालनेन ५
पवित्रस्यात्मनो नूतनीकरणेन च तस्मात् परित्राणं प्राप्ताः स चास्माकं ६
त्रात्रा यीशुख्रीष्टेनास्मदुपरि तम् आत्मानं प्रचुरत्वेन वृष्टवान् । इत्थं ७
वयं तस्यानुग्रहेण धार्म्मिकीभूय प्रत्याशयानन्तजीवनस्याधिकारिणो
जाताः । वाक्यमेतद् विश्वसनीयम् अतो हेतोरीश्वरे ये विश्वसि- ८
तवन्तस्ते यथा सत्कर्म्माण्यनुतिष्ठेयुस्तथा तान् दृढम् आज्ञापयेति
ममाभिमतं । तान्येवोत्तमानि मानवेभ्यः फलदानि च भवन्ति ।

मूढेभ्यः प्रश्नवंशावलिविवादेभ्यो व्यवस्थाया वितण्डाभ्यश्च ९
निवर्त्तस्व यतस्ता निष्फला अनर्थकाश्च भवन्ति । यो जनो १०
बिभित्सुस्तम् एकवारं द्विर्वा प्रबोध्य दूरीकुरु, यतस्तादृशो जनो ११
विपथगामी पापिष्ठ आत्मदोषकश्च भवतीति त्वया ज्ञायतां ।

यदाहम् आर्त्तिमां तुखिकं वा तव समीपं प्रेषयिष्यामि तदा १२
त्वं नीकपलौ मम समीपम् आगन्तुं यतस्व यतस्तत्रैवाहं शीतकालं
यापयितुं मतिम् अकार्षं । व्यवस्थापकः सीना आपल्लुश्चैतयोः १३
कस्याप्यभावो यन्न भवेत् तदर्थं तौ यत्नेन त्वया विसृज्येतां ।
अपरम् अस्मदीयलोका यन्निष्फला न भवेयुस्तदर्थं प्रयोजनीयोप- १४
काराय सत्कर्म्माण्यनुष्ठातुं शिक्षन्तां । मम सङ्गिनः सर्व्वे त्वां १५
नमस्कुर्व्वते । ये विश्वासाद् अस्मासु प्रीयन्ते तान् नमस्कुरु सर्व्वेषु
युष्मास्वनुग्रहो भूयात् । आमेन् ।

# फिलीमोनं प्रति पौलस्य प्रेरितस्य पत्रं।

मङ्गलाचरणम्। ओनीषिमसङ्गार्थं निवेदनम्।

1 १ ख्रीष्टस्य यीशो र्बन्दिदासः पौलस्तीमथियनामा भ्राता च
२ प्रियं सहकारिणं फिलीमोनं प्रियाम् आप्पियां सहसेनाम् आर्खिप्पं
३ फिलीमोनस्य गृहे स्थितां मण्डलीञ्च प्रति पत्रं लिखतः। अस्माकं
तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मान् प्रति शान्तिम् अनुग्रहञ्च
क्रियास्तां।

४ प्रभुं यीशुं प्रति सर्व्वान् पवित्रलोकान् प्रति च तव प्रेम-
५ विश्वासयो र्वृत्तान्तं निशम्याहं प्रार्थनासमये तव नामोच्चारयन्
६ निरन्तरं ममेश्वरं धन्यं वदामि। अस्मासु यद्यत् सौजन्यं विद्यते
तत् सर्व्वं ख्रीष्टं यीशुं प्रति भवतीति ज्ञानाय तव विश्वासमूलिका
७ दानशीलता यत् सफला भवेत् तदहम् इच्छामि। हे भ्रातः,
त्वया पवित्रलोकानां प्राणा आप्यायिता अभवन् एतस्मात् तव
प्रेम्नास्माकं महान् आनन्दः सान्त्वना च जातः।

८ त्वया यत् कर्त्तव्यं तत् त्वाम् आज्ञापयितुं यद्यप्यहं ख्रीष्टेना-
९ तीवोत्सुको भवेयं तथापि वृद्ध इदानीं यीशुख्रीष्टस्य बन्दि-
१० दासश्चैवम्भूतो यः पौलः सोऽहं त्वां विनेतुं वरं मन्ये। अतः
शृङ्खलबद्धोऽहं यमजनयं तं मदीयतनयम् ओनीषिमम् अधि
११ त्वां विनये। स पूर्व्वं तवानुपकारक आसीत् किन्त्विदानीं तव
१२ मम चोपकारी भवति। तमेवाहं तव समीपं प्रेषयामि, अतो

मदीयप्राणस्वरूपः स त्वयानुगृह्यतां। सुसंवादस्य कृते शृङ्खल- १३
बद्धोऽहं परिचारकमिव तं स्वसन्निधौ वर्त्तयितुम् ऐच्छं। किन्तु १४
तव सौजन्यं यद् बलेन न भूत्वा स्वेच्छायाः फलं भवेत् तदर्थं
तव सम्मतिं विना किमपि कर्त्तव्यं नामन्ये। को जानाति क्षण- १५
कालार्थं त्वत्तस्तस्य विच्छेदोऽभवद् एतस्यायम् अभिप्रायो यत्
त्वम् अनन्तकालार्थं तं लप्स्यसे पुन र्दासमिव लप्स्यसे तन्नहि १६
किन्तु दासात् श्रेष्ठं मम प्रियं तव च शारीरिकसम्बन्धात् प्रभु-
सम्बन्धाच्च ततोऽधिकं प्रियं भ्रातरमिव। अतो हेतो र्यदि मां १७
सहभागिनं जानासि तर्हि मामिव तमनुगृहाण। तेन यदि १८
तव किमप्यपराद्धं तुभ्यं किमपि धार्य्यते वा तर्हि तत् ममेति
विदित्वा गणय। अहं तत् परिशोत्स्यामि, एतत् पौलोऽहं १९
स्वहस्तेन लिखामि, यतस्त्वं स्वप्राणान् अपि मह्यं धारयसि तद्
वक्तुं नेच्छामि। भो भ्रातः प्रभोः कृते मम वाञ्छां पूरय २०
ख्रीष्टस्य कृते मम प्राणान् आप्यायय। तवाज्ञाग्राहित्वे विश्वस्य २१
मया एतत् लिख्यते मया यदुच्यते ततोऽधिकं त्वया कारिष्यत
इति जानामि। तत्करणसमये मदर्थमपि वासगृहं त्वया सज्जी- २२
क्रियतां यतो युष्माकं प्रार्थनानां फलरूपो वर इवाहं युष्मभ्यं
दायिष्ये ममेति प्रत्याशा जायते। ख्रीष्टस्य यीशोः कृते मया २३
सह बन्दिरिपाफ्रा मम सहकारिणो मार्क आरिष्टार्खो दीमा २४
लूकश्च त्वां नमस्कारं वेदयन्ति। अस्माकं प्रभो र्यीशुख्रीष्टस्यानु- २५
ग्रहो युष्माकम् आत्मना सह भूयात्। आमेन्।

# इब्रिणः प्रति पौलस्य प्रेरितस्य पत्रं।

यीशुख्रीष्टो मध्यस्थोत्तमः।

यीशुर्दूतान्महान्।

1 १ पुरा य ईश्वरो भाववादिभिः पितृलोकेभ्यो नानासमये
२ नानाप्रकारं कथितवान् स एतस्मिन् शेषकाले निजपुत्रेणास्मभ्यं
कथितवान्। स तं पुत्रं सर्व्वाधिकारिणं कृतवान् तेनैव च सर्व्व-
३ जगन्ति सृष्टवान्। स पुत्रस्तस्य प्रभावस्य प्रतिबिम्बस्तस्य तत्त्वस्य
मूर्त्तिश्चास्ति स्वीयशक्तिवाक्येन सर्व्वं धत्ते च स्वप्राणैरस्माकं पाप-
मार्ज्जनं कृत्वा ऊर्द्ध्वस्थाने महामहिम्नो दक्षिणपार्श्वे समुपविष्टवान्।
४ दिव्यदूतगणाद् यथा स विशिष्टनाम्नोऽधिकारी जातस्तथा तेभ्योऽपि
५ श्रेष्ठो जातः। यतो दूतानां मध्ये कदाचिदीश्वरेणेदं क उक्तः? यथा,

मदीयतनयोऽसि त्वम् अद्यैव जनितो मया।

पुनश्च 'अहं तस्य पिता भविष्यामि स च मम पुत्रो भविष्यति'।
६ अपरं जगति स्वकीयाद्वितीयपुत्रस्य पुनरानयनकाले तेनोक्तं, यथा,

ईशस्य सकलै र्दूतैरेष एव प्रणम्यतां।

७ दूतान् अधि तेनेदमुक्तं, यथा,

स करोति निजान् दूतान् गन्धवाहस्वरूपकान्।
वह्निशिखास्वरूपांश्च करोति निजसेवकान्॥

किन्तु पुत्रमुद्दिश्य तेनोक्तं, यथा,

हे ईश्वर सदा स्थायि तव सिंहासनं भवेत्।
याथार्थ्यस्य भवेद्दण्डो राजदण्डस्त्वदीयकः॥

पुण्ये प्रेम करोषि त्वं किञ्चाधर्म्मम् ऋतीयसे। ९
तस्माद् य ईश ईशस्ते स ते मित्रगणादपि।
अधिकाह्लादतैलेन सेचनं कृतवान् तव॥

पुनश्च, यथा, १०

हे प्रभो पृथिवीमूलम् आदौ संस्थापितं त्वया।
तथा त्वदीयहस्तेन कृतं गगनमण्डलं॥
इमे विनंक्ष्यतस्त्वन्तु नित्यमेवावतिष्ठसे। ११
इदन्तु सकलं विश्वं संजरिष्यति वस्त्रवत्॥
सङ्कोचितं त्वया तत्तु वस्त्रवत् परिवर्त्स्यते। १२
त्वन्तु नित्यं स एवासी र्निरन्तास्तव वत्सराः॥

अपरं दूतानां मध्ये कः कदाचिदीश्वरेणेदमुक्तः? यथा, १३

तवारीन् पादपीठं ते यावन्नहि करोम्यहं।
मम दक्षिणदिग्भागे तावत् त्वं समुपाविश?

ये परित्राणस्याधिकारिणो भविष्यन्ति तेषां परिचर्य्यार्थं प्रेष्यमाणाः सेवनकारिण आत्मानः किं ते सर्व्वे दूता नहि? १४

अतो वयं यद् भ्रमस्रोतसा नापनीयामहे तदर्थमस्माभि २ १
र्यद्यद् अश्रावि तस्मिन् मनांसि निधातव्यानि। यतो हेतो २
दूतैः कथितं वाक्यं यद्यमोघम् अभवद् यदि च तल्लङ्घनकारिणे
तस्याग्राहकाय च सर्व्वस्मै समुचितं दण्डम् अदीयत, तर्ह्यस्मा- ३
भिस्तादृशं महापरित्राणम् अवज्ञाय कथं रक्षा प्राप्स्यते, यत्
प्रथमतः प्रभुना प्रोक्तं ततोऽस्मान् यावत् तस्य श्रोतृभिः स्थिरी-
कृतं, अपरं लक्षणैरद्भुतकर्म्मभि र्विविधशक्तिप्रकाशेन निजेच्छातः ४
पवित्रस्यात्मनो विभागेन च यद् ईश्वरेण प्रमाणीकृतम् अभूत्।
वयं तु यस्य भाविराज्यस्य कथां कथयामः, तत् तेन दिव्य- ५

६ दूतानाम् अधीनीकृतमिति नहि। किन्तु कुत्रापि कश्चित् प्रमाणम्
इदृशं दत्तवान्, यथा,

किं वस्तु मानुषो यत् स नित्यं संस्मर्य्यते त्वया।
किं वा मानवसन्तानो यत् स आलोच्यते त्वया॥
७ दिव्यदूतगणेभ्यः स किञ्चिन् न्यूनः कृतस्त्वया।
तेजोगौरवरूपेण किरीटेन विभूषितः॥
सृष्टं यत् ते कराभ्यां स तत्प्रभुत्वे नियोजितः।
८ चरणाधस्तु तस्यैव त्वया सर्व्वं वशीकृतम्॥

तेन सर्व्वं यस्य वशीकृतं तस्यावशीभूतं किमपि नावशेषितं
९ किन्त्वधुनापि वयं सर्व्वाणि तस्य वशीभूतानि न पश्यामः। तथापि
दिव्यदूतगणेभ्यो यः किञ्चिन् न्यूनीकृतोऽभवत् तं यीशुं मृत्युभोग-
हेतोस्तेजोगौरवरूपेण किरीटेन विभूषितं पश्यामः, यत ईश्वरस्यानु-
१० ग्रहात् स सर्व्वेषां कृते मृत्युम् अस्वदत। अपरञ्च यस्मै येन च कृत्स्नं
वस्तु सृष्टं विद्यते बहुसन्तानानां विभवायानयनकाले तेषां परि-
त्राणाग्रसरस्य दुःखभोगेन सिद्धीकरणमपि तस्योपयुक्तम् अभवत्।
११ यतः पावकः पूयमानाश्च सर्व्वे एकस्मादेवोत्पन्ना भवन्ति, इति हेतोः
१२ स तान् भ्रातॄन् वदितुं न लज्जते। तेन स उक्तवान्, यथा,

द्योतयिष्यामि ते नाम भ्रातृणां मध्यतो मम।
परन्तु समिते मध्ये करिष्ये ते प्रशंसनम्॥

१३ पुनरपि, यथा, तस्मिन् विश्वस्य स्थाताहं
पुनरपि, यथा,

पश्याहम्-अपत्यानि च दत्तानि मह्यम् ईश्वरात्।

१४ तेषाम् अपत्यानां रुधिरपललविशिष्टत्वात् सोऽपि तद्वत् तद्वि-
शिष्टोऽभूत् तस्याभिप्रायोऽयं तत् स मृत्युबलाधिकारिणं शैतानं

मृत्युना बलहीनं कुर्य्यात् ये च मृत्युभयाद् यावज्जीवनं दास- १५
त्वस्य विघ्ना आसन् तान् उद्धारयेत्। स दूतानाम् उपकारी न १६
भवति किन्त्विब्राहामस्य वंशस्यैवोपकारी भवति। अतो हेतोः १७
स यथा कृपावान् प्रजानां पापशोधनार्थम् ईश्वरोद्देश्यविषये
विश्वास्यो महायाजको भवेत् तदर्थं सर्व्वविषये स्वभ्रातृणां सदृशी
भवनं तस्योचितम् आसीत्। यतः स स्वयं परीक्षां गत्वा यं १८
दुःखभोगम् अवगतस्तेन परीक्षाक्रान्तान् उपकर्त्तुं शक्नोति।

यीशुर्मोशेर्महान्।

हे स्वर्गीयस्याह्वानस्य सहभागिनः पवित्रभ्रातरः, अस्माकं ३ १
धर्म्मप्रतिज्ञाया दूतो महायाजकश्च यो यीशुस्तम् आलोचध्वं। मोशि २
र्यद्वत् तस्य सर्व्वपरिवारमध्ये विश्वास्य आसीत्, तद्वद् अयमपि
स्वनियोजकस्य समीपे विश्वास्यो भवति। परिवाराच्च यद्वत् तत्- ३
स्थापयितुरधिकं गौरवं भवति तद्वत् मोशेरयं बहुतरगौरवस्य
योग्यो भवति। एकैकस्य निवेशनस्य परिजनानां स्थापयिता कश्चिद् ४
विद्यते यस्तु सर्व्वस्थापयिता स ईश्वर एव। मोशिस्तु वक्ष्यमाणानां ५
साक्षी भृत्य इव तस्य सर्व्वपरिजनमध्ये विश्वास्योऽभवत् किन्तु
ख्रीष्टस्तस्य परिजनानामध्यक्ष इव। वयं तु यदि विश्वासस्योत्साहं ६
श्लाघनञ्च शेषं यावद् धारयामस्तर्हि तस्य परिजना भवामः।

विश्वासेनैव विश्रामप्राप्तिः।

अतो हेतोः पवित्रेणात्मना यद्वत् कथितं, तद्वत्,

अद्य यूयं कथां तस्य यदि संश्रोतुमिच्छथ।
तर्हि पुरा परीक्षाया दिने प्रान्तरमध्यतः।
मदाज्ञानिग्रहस्थाने युष्माभिस्तु कृतं यथा।
तथा मा कुरुतेदानीं कठिनानि मनांसि वः।

युष्माकं पितरस्तत्र मत्परीक्षाम् अकुर्व्वत ।
कुर्व्वद्भि र्मेऽनुसन्धानं तैरदृश्यन्त मत्क्रियाः ।
१० चत्वारिंशत्समा यावत् क्रुद्धाहन्तु तदन्वये ।
अवादिषम् इमे लोका भ्रान्तान्तःकरणाः सदा ।
मामकीनानि वर्त्मानि परिजानन्ति नो इमे ।
११ इति हेतोरहं कोपात् शपथं कृतवान् इमं ।
प्रवेक्ष्यते जनैरेतै र्न विश्रामस्थलं मम ॥

१२ हे भ्रातरः सावधाना भवत, अमरेश्वरात निवर्त्तको योऽवि-
१३ श्वासस्तद्युक्तं दुष्टान्तःकरणं युष्माकं कस्यापि न भवतु । किन्तु
यावद् अद्यनामा समयो विद्यते तावद् युष्मन्मध्ये कोऽपि पापस्य
वञ्चनया यत् कठोरीकृतो न भवेत् तदर्थं प्रतिदिनं परस्परम्
१४ उपदिशत । यतो वयं ख्रीष्टस्यांशिनो जाताः किन्तु प्रथमविश्वा-
१५ सस्य दृढत्वम् अस्माभिः शेषं यावद् अमोघं धारयितव्यं । अद्य
यूयं कथां तस्य यदि संश्रोतुमिच्छथ, तर्ह्याज्ञालङ्घनस्थाने युष्मा-
१६ भिस्तु कृतं यथा, तथा, मा कुरुतेदानीं कठिनानि मनांसि व इति
तेन यदुक्तं, तदनुसाराद् ये श्रुत्वा तस्य कथां न गृहीतवन्तस्ते
१७ के ? किं मोशिना मिसरदेशाद् आगताः सर्व्वे लोका नहि ?
केभ्यो वा स चत्वारिंशद्वर्षाणि यावद् अक्रुध्यत् ? पापं कुर्व्वतां
१८ येषां कुणपाः प्रान्तरे ऽपतन् किं तेभ्यो नहि ? प्रवेक्ष्यते जनैरेतै
र्न विश्रामस्थलं ममेति शपथः केषां विरुद्धं तेनाकारि ? किम्
१९ अविश्वासिनां विरुद्धं नहि ? अतस्ते तत् स्थानं प्रवेष्टुम् अवि-
श्वासात् नाशक्नुवन् इति वयं वीक्षामहे ।

४ १ अपरं तद्विश्रामप्राप्तेः प्रतिज्ञा यदि तिष्ठति तर्ह्यस्माकं कश्चित्
चेत् तस्याः फलेन वञ्चितो भवेत् वयम् एतस्माद् बिभीमः ।

यतो ऽस्माकं समीपे यद्वत् तद्वत् तेषां समीपेऽपि सुसंवादः २
प्रचारितो ऽभवत् किन्तु तैः श्रुतं वाक्यं तान् प्रति निष्फलम्
अभवत्, यतस्ते श्रोतारो विश्वासेन सार्द्धं तन्नामिश्रयन्। तद् ३
विश्रामस्थानं विश्वासिभिरस्माभिः प्रविश्यते यतस्तेनोक्तं, अहं
कोपात् शपथं कृतवान् इमं, प्रवेक्ष्यते जनैरेतै र्न विश्रामस्थलं
मम। किन्तु तस्य कर्म्माणि जगतः सृष्टिकालात् समाप्तानि
सन्ति। यतः कस्मिंश्चित् स्थाने सप्तमं दिनमधि तेनेदम् उक्तं, ४
यथा, ईश्वरः सप्तमे दिने स्वकृतेभ्यः सर्व्वकर्म्मभ्यो विशश्राम।
किन्त्वेतस्मिन् स्थाने पुनस्तेनोच्यते, यथा, प्रवेक्ष्यते जनैरेतै र्न ५
विश्रामस्थलं मम। फलतस्तत् स्थानं कैश्चित् प्रवेष्टव्यं किन्तु ये ६
पुरा सुसंवादं श्रुतवन्तस्तैरविश्वासात् तन्न प्रविष्टम्, इति हेतोः ७
स पुनरद्यनामकं दिनं निरूप्य दीर्घकाले गतेऽपि पूर्व्वोक्तां वाचं
दायूदा कथयति, यथा, अद्य यूयं कथां तस्य यदि संश्रोतु-
मिच्छथ, तर्हि मा कुरुतेदानीं कठिनानि मनांसि वः। अपरं ८
यिहोशूयो यदि तान् व्यश्रामयिष्यत् तर्हि ततः परम् अपरस्य
दिनस्य वाग् ईश्वरेण नाकथयिष्यत। अत ईश्वरस्य प्रजाभिः ९
कर्त्तव्य एको विश्रामस्तिष्ठति। अपरम् ईश्वरो यद्वत् स्वकृत- १०
कर्म्मभ्यो विशश्राम तद्वत् तस्य विश्रामस्थानं प्रविष्टो जनोऽपि
स्वकृतकर्म्मभ्यो विश्राम्यति। अतो वयं तद् विश्रामस्थानं प्रवेष्टुं ११
यतामहै, तदविश्वासोदाहरणेन कोऽपि न पततु।

यीशुर्महायाजकोत्तमः।

महायाजकयीशोः सहानुभूति।

ईश्वरस्य वादोऽमरः प्रभावविशिष्टश्च सर्व्वस्माद् द्विधारखड्गादपि १२
तीक्ष्णः, अपरं प्राणात्मनो र्ग्रन्थिमज्जयोश्च परिभेदाय विच्छेदकारी

१३ मनसश्च सङ्कल्पानाम् अभिप्रेतानाञ्च विचारकः। अपरं यस्य
समीपे स्वीया स्वीया कथास्माभिः कथयितव्या तस्यागोचरः कोऽपि
प्राणी नास्ति तस्य दृष्टौ सर्व्वमेवानावृतं प्रकाशितञ्चास्ते।

१४ अपरं य उच्चतमं स्वर्गं प्रविष्ट एतादृश एको व्यक्तिरर्थत
ईश्वरस्य पुत्रो यीशुरस्माकं महायाजकोऽस्ति, अतो हेतो र्वयं
१५ धर्म्मप्रतिज्ञां दृढम् आलम्बामहै। अस्माकं यो महायाजकोऽस्ति
सोऽस्माकं दुःखै र्दुःखितो भवितुम् अशक्तो नहि किन्तु पापं
१६ विना सर्व्वविषये वयमिव परीक्षितः। अतएव कृपां ग्रहीतुं प्रयो-
जनीयोपकारार्थम् अनुग्रहं प्राप्तुञ्च वयम् उत्साहेनानुग्रहसिंहासनस्य
समीपं यामः।

ईश्वरेण यीशोर्महायाजकत्वपदे नियुक्तत्वम्।

५ १ यः कश्चित् महायाजको भवति स मानवानां मध्यात्
नीतः सन् मानवानां कृत ईश्वरोद्देश्यविषयेऽर्थत उपहाराणां
२ पापार्थकबलीनाञ्च दान नियुज्यते। स चाज्ञानां भ्रान्तानाञ्च
लोकानां दुःखेन दुःखी भवितुं शक्नोति, यतो हेतोः स स्वयमपि
३ दौर्ब्बल्यवेष्टितो भवति। एतस्मात् कारणाच्च यद्वत् लोकानां कृते
तद्वद् आत्मकृतेऽपि पापार्थकबलिदानं तेन कर्त्तव्यम्।

४ स चोच्चपदः स्वेच्छातः केनापि न गृह्यते किन्तु हारोण
५ इव य ईश्वरेणाहूयते तेनैव गृह्यते। एवम्प्रकारेण ख्रीष्टोऽपि
महायाजकत्वं ग्रहीतुं स्वीयगौरवं स्वयं न कृतवान्, किन्तु मदीय
तनयोऽसि त्वम् अद्यैव जनितो मयेति वाचं यस्तं भाषितवान्
६ स एव तस्य गौरवं कृतवान्। तद्वद् अन्यगीतेऽपीदमुक्तं, त्वं मक्की-
७ षेदकः श्रेण्यां याजकोऽसि सदातनः। स च देहवासकाले बहु-
क्रन्दनेनाश्रुपातेन च मृत्युत उद्धरणे समर्थस्य पितुः समीपे पुनः

पुनर्विनतिं प्रार्थनाञ्च कृत्वा तत्फलरूपिणीं शङ्कातो रक्षां प्राप्य
च यद्यपि पुत्रोऽभवत् तथापि यैरक्लिश्यत तैराज्ञाग्रहणम् अशि- ८
क्षत। इत्थं सिद्धीभूय निजाज्ञाग्राहिणां सर्व्वेषाम् अनन्तपरि- ९
त्राणस्य कारणस्वरूपो ऽभवत्। तस्मात् स मल्कीषेदकः श्रेणी- १०
भुक्तो महायाजक ईश्वरेणाख्यातः।

इब्रिलोकानाम् अज्ञानत्वकारणाद् भर्त्सनम्।

तमध्यस्माकं बहुकथाः कथयितव्याः किन्तु ताः स्तब्धकर्णै र्युष्माभि ११
र्दुर्गम्याः। यतो यूयं यद्यपि समयस्य दीर्घत्वात् शिक्षका भवि- १२
तुम् अशक्ष्यत तथापीश्वरस्य वाक्यानां या प्रथमा वर्णमाला तामधि
शिक्षाप्राप्ति र्युष्माकं पुनरावश्यका भवति, तथा कठिनद्रव्ये नहि किन्तु
दुग्धे युष्माकं प्रयोजनम् आस्ते। यो दुग्धपायी स शिशुरेवेतिकार- १३
णात् धर्म्मवाक्ये तत्परो नास्ति। किन्तु सदसद्विचारे येषां १४
चेतांसि व्यवहारेण शिक्षितानि तादृशानां सिद्धलोकानां कठोर-
द्रव्येषु प्रयोजनमस्ति।

वयं मृतिजनककर्म्मभ्यो मनःपरावर्त्तनम् ईश्वरे विश्वासो ६ १
स्नापनशिक्षणं हस्तार्पणं मृतलोकानाम् उत्थानम् अनन्तकाल- २
स्थायिविचाराज्ञा चैतैः पुनर्भित्तिमूलं न स्थापयन्तः ख्रीष्टविषयकं
प्रथमोपदेशं पश्चात्कृत्य सिद्धिं यावद् अग्रसरा भवाम। ईश्वर- ३
स्यानुमत्या च तद् अस्माभिः कारिष्यते।

य एककृत्वो दीप्तिमया भूत्वा स्वर्गीयवररसम् आस्वदितवन्तः ४
पवित्रस्यात्मनोऽंशिनो जाता ईश्वरस्य सुवाक्यं भाविकालस्य शक्तिं- ५
श्चास्वदितवन्तश्च ते भ्रष्टा यदि स्वमनोभिरीश्वरस्य पुत्रं पुनः ६
क्रुशे घ्नन्ति लज्जास्पदं कुर्व्वते च तर्हि मनःपरिवर्त्तनाय पुनस्तान्
नवीनीकर्त्तुं कोऽपि न शक्नोति। यतो या भूमिः स्वोपरि भूयः ७

प्रतितं वृष्टिं पिबति तत्फलाधिकारिणां निमित्तम् इष्टानि शाका-
८ दीन्युत्पादयति सा ईश्वराद् आशिषं प्राप्ता । किन्तु या भूमि
र्गोक्षुरकण्टकवृक्षान् उत्पादयति सा न ग्राह्या शापार्हा च शेषे
तस्या दाहो भविष्यति ।

यीशोराश्रितानामेव परित्राणप्राप्तुं शक्नोति ।

९ हे प्रियतमाः, यद्यपि वयम् एतादृशं वाक्यं भाषामहे
तथापि यूयं तत उत्कृष्टाः परित्राणपथस्य पथिकाश्चाध्वे इति
१० विश्वसामः । यतो युष्माभिः पवित्रलोकानां य उपकारो ऽकारि
क्रियते च तेनेश्वरस्य नाम्ने प्रकाशितं प्रेम श्रमञ्च विस्मर्त्तुम्
११ ईश्वरोऽन्यायकारी न भवति । अपरं युष्माकम् एकैको जनो यत्
प्रत्याशापूरणार्थं शेषं यावत् तमेव यत्नं प्रकाशयेदित्यहम् इच्छामि ।
१२ अतः शिथिला न भवत किन्तु ये विश्वासेन सहिष्णुतया च
प्रतिज्ञानां फलाधिकारिणो जातास्तेषाम् अनुगामिनो भवत ।
१३ ईश्वरो यदा इब्राहीमाय प्रत्यजानात् तदा श्रेष्ठस्य कस्यापरस्य
नाम्ना शपथं कर्त्तुं नाशक्नोत्, अतो हेतोः स्वनाम्ना शपथं कृत्वा
१४ तेनोक्तं यथा, सत्यम् अहं त्वाम् आशिषं गदिष्यामि तवान्वयं
१५ वर्द्धयिष्यामि च । अनेन प्रकारेण स सहिष्णुतां विधाय तस्याः
१६ प्रत्याशायाः फलं लब्धवान् । अथ मानवाः श्रेष्ठस्य कस्यचित् नाम्ना
१७ शपन्ते, शपथश्च प्रमाणार्थं तेषां सर्व्वविवादान्तको भवति । इत्यस्मिन्
ईश्वरः प्रतिज्ञायाः फलाधिकारिणः स्वीयमन्त्रणाया अमोघतां
बाहुल्यतो दर्शयितुमिच्छन् शपथेन स्वप्रतिज्ञां स्थिरीकृतवान् ।
१८ अतएव यस्मिन् अनृतकथनम् ईश्वरस्य न साध्यं तादृशेनाचलेन
विषयद्वयेन सम्मुखस्थरक्षास्थलस्य प्राप्तये पलायितानाम् अस्माकं

सुदृढा सान्त्वना जायते । सा प्रत्याशास्माकं मनोनौकाया अचलो १९
लङ्गरो भूत्वा विच्छेदकवस्त्रस्याभ्यन्तरं प्रविष्टा । तत्रैवास्माकम् अग्र- २०
सरो यीशुः प्रविश्य मल्कीषेदकः श्रेण्यां नित्यस्थायी याजकोऽभवत् ।

यीशोर्महायाजकत्वे तस्य सर्व्वश्रेष्ठत्वं सिद्धत्वं चिरस्थायित्वञ्च ।

७ शालमस्य राजा सर्व्वोपरिस्थस्येश्वरस्य याजकश्च सन् यो नृप- १
तीनां मारणात् प्रत्यागतम् अब्राहामं साक्षात्कृत्याशिषं गदित-
वान् यस्मै चाब्राहामः सर्व्वद्रव्याणां दशमांशं दत्तवान् स मल्की- २
षेदक् स्वनाम्नोऽर्थेन प्रथमतो धर्म्मराजः पश्चात् शालमस्य राजा-
र्थतः शान्तिराजो भवति । अपरं तस्य पिता माता वंशस्य ३
निर्णय आयुष आरम्भो जीवनस्य शेषश्चैतेषाम् अभावो भवति,
इत्थं स ईश्वरपुत्रस्य सदृशीकृतः, स त्वनन्तकालं यावद् याजक-
स्तिष्ठति । अतएवास्माकं पूर्व्वपुरुष अब्राहामो यस्मै लुठितद्रव्याणां ४
दशमांशं दत्तवान् स कीदृक् महान् तद् आलोचयत । याज- ५
कत्वप्राप्ता लेवेः सन्ताना व्यवस्थानुसारेण लोकेभ्योऽर्थत अब्राहा-
मात् जातेभ्यः स्वीयभ्रातृभ्यो दशमांशग्रहणस्यादेशं लब्धवन्तः ।
किन्त्वसौ यद्यपि तेषां वंशात् नोत्पन्नस्तथाप्यब्राहामाद् दशमांशं ६
गृहीतवान् प्रतिज्ञानाम् अधिकारिणम् आशिषं गदितवांश्च । अपरं ७
यः श्रेयान् स क्षुद्रतरायाशिषं ददातीत्यत्र कोऽपि सन्देहो
नास्ति । अपरम् इदानीं ये दशमांशं गृह्णन्ति ते मृत्योरधीना ८
मानवाः किन्तु तदानीं यो गृहीतवान् स जीवतीतिप्रमाणप्राप्तः ।
अपरं दशमांशग्राही लेविरप्यब्राहामद्वारा दशमांशं दत्तवान् एत- ९
दपि कथयितुं शक्यते । यतो यदा मल्कीषेदक् तस्य पितरं १०
साक्षात् कृतवान् तदानीं स लेविः पितुरुरस्यासीत् ।

११ अपरं यस्य सम्बन्धे लोका व्यवस्थां लब्धवन्तस्तेन लेवीययाजक-
वर्गेण यदि सिद्धिः समभविष्यत् तर्हि हारोणस्य श्रेण्या मध्याद्
याजकं न निरूप्येश्वरेण मल्कीषेदकः श्रेण्या मध्याद् अपरस्यैकस्य
१२ याजकस्योत्थापनं कुत आवश्यकम् अभविष्यत्? यतो याजक-
वर्गस्य विनिमयेन सुतरां व्यवस्थाया अपि विनिमयो जायते।
१३ अपरञ्च तद् वाक्यं यस्योद्देश्यं सोऽपरेण वंशेन संयुक्तोऽस्ति तस्य
१४ वंशस्य च कोऽपि कदापि वेद्याः कर्म्म न कृतवान्। वस्तुतस्तु यं
वंशमधि मोशि याजकत्वस्यैकां कथामपि न कथितवान् तस्मिन्
१५ यिहूदावंशेऽस्माकं प्रभु र्जन्म गृहीतवान् इति सुस्पष्टं। तस्य स्पष्ट-
तरम् अपरं प्रमाणमिदं यत् मल्कीषेदकः सादृश्यवतापरेण तादृ-
१६ शेन याजकेनोदेतव्यं, यस्य निरूपणं शरीरसम्बन्धीयविधियुक्तया
१७ व्यवस्थया न भवति किन्त्वक्षयजीवनयुक्तया शक्त्या भवति। यत
ईश्वर इदं साक्ष्यं दत्तवान्, यथा, त्वं मल्कीषेदकः श्रेण्यां याजको
१८ ऽसि सदातनः। अनेनाग्रवर्त्तिनो विधे र्दुर्ब्बलताया निष्फल-
तायाश्च हेतोरर्थतो व्यवस्थया किमपि सिद्धं न जातमिति हेतो-
१९ स्तस्य लोपो भवति। यया च वयम् ईश्वरस्य निकटवर्त्तिनो
भवाम एतादृशी श्रेष्ठप्रत्याशा संस्थाप्यते।
२० अपरं यीशुः शपथं विना न नियुक्तस्तस्मादपि स श्रेष्ठनि-
२१ यमस्य मध्यस्थो जातः। यतस्ते शपथं विना याजका जाताः
२२ किन्त्वसौ शपथेन जातः यतः स इदमुक्तः, यथा,

परमेश इदं शेपे न च तस्मान्निवर्त्स्यते।
त्वं मल्कीषेदकः श्रेण्यां याजकोऽसि सदातनः।

२३ ते च बहवो याजका अभवन् यतस्ते मृत्युना नित्यस्थायित्वात्
२४ निवारिताः, किन्त्वसावनन्तकालं यावत् तिष्ठति तस्मात् तस्य

याजकत्वं न परिवर्त्तनीयं। ततो हेतो र्ये मानवास्तेनेश्वरस्य २५
सन्निधिं गच्छन्ति तान् स शेषं यावत् परित्रातुं शक्नोति यत-
स्तेषां कृते प्रार्थनां कर्त्तुं स सततं जीवति। अपरम् अस्माकं २६
तादृशमहायाजकस्य प्रयोजनमासीद् यः पवित्रो ऽहिंसको नि-
ष्कलङ्कः पापिभ्यो भिन्नः स्वर्गादप्युच्चीकृतस्च स्यात्। अपरं महा- २७
याजकानां यथा तथा तस्य प्रतिदिनं प्रथमं स्वपापानां कृते ततः
परं लोकानां पापानां कृते बलिदानस्य प्रयोजनं नास्ति यत
आत्मबलिदानं कृत्वा तद् एककृत्वस्तेन सम्पादितं। यतो व्यव- २८
स्थया ये महायाजका निरूप्यन्ते ते दौर्ब्बल्ययुक्ता मानवाः किन्तु
व्यवस्थातः परं शपथयुक्तेन वाक्येन यो महायाजको निरूपितः
सो ऽनन्तकालार्थं सिद्धः पुत्र एव।

खीष्टीयनवीननियमस्य महत्त्वम्।

पुरातननियमात् नवीननियमस्य श्रेष्ठत्वम्।

कथ्यमानानां वाक्यानां सारोऽयम् अस्माकम् एतादृश एको ८ १
महायाजकोऽस्ति यः स्वर्गमहामहिम्नः सिंहासनस्य दक्षिणपार्श्वे
समुपविष्टवान् यच्च दूष्यं न मनुजैः किन्त्वीश्वरेण स्थापितं तस्य २
सत्यदूष्यस्य पवित्रवस्तूनाञ्च सेवकः स भवति। यत एकैको महा- ३
याजको नैवेद्यानां बलीनाञ्च दाने नियुज्यते, अतो हेतोरेत-
स्यापि किञ्चिद् उत्सर्जनीयं विद्यत इत्यावश्यकं। किञ्च स यदि ४
पृथिव्याम् अस्थास्यत् तर्हि याजको नाभविष्यत्, यतो ये व्यव-
स्थानुसारात् नैवेद्यानि ददत्येतादृशा याजका विद्यन्ते। ते तु ५
स्वर्गीयवस्तूनां दृष्टान्तेन छायया च सेवामनुतिष्ठन्ति यतो मोशिो
दूष्यं साधयितुम् उद्यते सतीश्वरस्तदेव तमादिष्टवान् फलतः स
तमुक्तवान्, यथा, अवधेहि गिरौ त्वां यद्यन्निदर्शनं दर्शितं तद्वत्

६ सर्व्वाणि त्वया क्रियन्तां ।। किन्त्विदानीम् असौ तस्मात् श्रेष्ठं सेवक-
पदं प्राप्तवान् यतः स श्रेष्ठप्रतिज्ञाभिः स्थापितस्य श्रेष्ठनियमस्य
७ मध्यस्थोऽभवत् । स प्रथमो नियमो यदि निर्द्दोषोऽभविष्यत
८ तर्हि द्वितीयस्य नियमस्य किमपि प्रयोजनं नाभविष्यत् । किन्तु
स दोषमारोपयन् तेभ्यः कथयति, यथा, परमेश्वर' इदं भाषते
पश्य यस्मिन् समयेऽहम् इस्रायेलवंशेन यिहूदावंशेन च सार्द्धम् एकं
नवीनं नियमं स्थिरीकरिष्याम्येतादृशः समय आयाति । परमेश्वरो-
९ ऽपरमपि कथयति तेषां पूर्व्वपुरुषाणां मिसरदेशाद् आनयनार्थं
यस्मिन् दिनेऽहं तेषां करं धृत्वा तैः सह नियमं स्थिरीकृतवान्
तद्दिनस्य नियमानुसारेण नहि यतस्तै मम नियमे लङ्घितेऽहं तान्
१० प्रति चिन्तां नाकरवं । किन्तु परमेश्वरः कथयति तद्दिनात् परमहं
इस्रायेलवंशीयैः सार्द्धम् इमं नियमं स्थिरीकरिष्यामि, तेषां चित्ते
मम विधीन् स्थापयिष्यामि तेषां हृत्पत्रे च तान् लेखिष्यामि,
अपरमहं तेषाम् ईश्वरो भविष्यामि ते च मम लोका भविष्यन्ति ।
११ अपरं त्वं परमेश्वरं जानीहीतिवाक्येन तेषामेकैको जनः स्वं स्वं
समीपवासिनं भ्रातरञ्च पुन र्न शिक्षयिष्यति यत आक्षुद्रात् महान्तं
१२ यावत् सर्व्वे मां ज्ञास्यन्ति । यतो हेतोरहं तेषाम् अधर्म्मान् क्षमिष्ये
१३ तेषां पापान्यपराधांश्च पुनः कदापि न स्मरिष्यामि ।' अनेन तं
नियमं नूतनं गदित्वा स प्रथमं नियमं पुरातनीकृतवान्; यच्च
पुरातनं जीर्णञ्च जातं तस्य लोपो निकटो ऽभवत् ।

नवीननियमस्य व्यवस्थायाः श्रेष्ठत्वं शुचिकारिणी क्षमता च ।

९ १ स प्रथमो नियम आराधनाया विविधरीतिभिरैहिकपवि-
२ त्रस्थानेन च विशिष्ट आसीत् । यतो दूष्यमेकं निरमीयत तस्य

प्रथमकोष्ठस्य नाम पवित्रस्थानमित्यासीत्. तत्र दीपवृक्षो भोज-
नासनं दर्शनीयपूपानां श्रेणी चासीत्। तत्पश्चाद् द्वितीयाया- ३
स्तिरष्करिण्या अभ्यन्तरे ऽतिपवित्रस्थानमितिनामकं कोष्ठमासीत्,
तत्र च सुवर्णमयो धूपाधारः परितः सुवर्णमण्डिता नियममञ्जूषा ४
चासीत् तन्मध्ये मान्नायाः सुवर्णघटो हारोणस्य मञ्जरितदण्ड-
स्तक्षितौ नियमप्रस्तरौ, तदुपरि च करुणासने छायाकारिणौ ५
तेजोमयौ किरूबावास्ताम्, एतेषां विशेषवृत्तान्तकथनाय नायं
समयः। एतेष्वीदृक् निर्म्मितेषु याजका ईश्वरसेवाम् अनुतिष्ठन्तो ६
दूष्यस्य प्रथमकोष्ठं नित्यं प्रविशन्ति। किन्तु द्वितीयं कोष्ठं प्रति- ७
वर्षम् एककृत्व एकाकिना महायाजकेन प्रविश्यते किन्त्वात्म-
निमित्तं लोकानाम् अज्ञानकृतपापानाञ्च निमित्तम् उत्सर्ज्जनीयं
रुधिरम् अनादाय तेन न प्रविश्यते। इत्यनेन पवित्र आत्मा ८
यत् ज्ञापयति तदिदं तत् प्रथमं दूष्यं यावत् तिष्ठति तावत्
महापवित्रस्थानगामी पन्था अप्रकाशितस्तिष्ठति। तच्च दूष्यं वर्त्त- ९
मानसमयस्य दृष्टान्तः, यतो हेतोः साम्प्रतं संशोधनकालं यावद्
यन्निरूपितं तदनुसारात् सेवाकारिणो मानसिकसिद्धिकरणेऽसम-
र्थाभिः केवलं खाद्यपेयेषु विविधस्नापनेषु च शारीरिकरीतिभि १०
र्युक्तानि नैवेद्यानि बलिदानानि च भवन्ति।

अपरं भाविमङ्गलानां महायाजकः ख्रीष्ट उपस्थायाहस्त- ११
निर्म्मितेनार्थत एतत्सृष्टे र्बहिर्भूतेन श्रेष्ठेन सिद्धेन च दूष्येण गत्वा
छागानां गोवत्सानां वा रुधिरम् अनादाय स्वीयरुधिरम् आदा- १२
यैककृत्व एव महापवित्रस्थानं प्रविश्यानन्तकालिकां मुक्तिं प्राप्त-
वान्। वृषच्छागानां रुधिरेण गवीभस्मनः प्रक्षेपेण च यद्यशुचि- १३
लोकाः शारीरिकशुचित्वाय पूयन्ते, तर्हि किं मन्यध्वे यः सदा- १४

तनेनात्मना निष्कलङ्कबलिमिव स्वमेवेश्वराय दत्तवान् तस्य ख्रीष्टस्य
रुधिरेण युष्माकं मनांस्यमरेश्वरस्य सेवायै किं मृत्युजनकेभ्यः
१५ कर्म्मभ्यो न पवित्रीकारिष्यन्ते? स नूतननियमस्य मध्यस्थोऽभवत्
तस्याभिप्रायोऽयं यत् प्रथमनियमलङ्घनरूपपापेभ्यो मृत्युना मुक्तौ
जातायाम् आहूतलोका अनन्तकालीयदायांशस्य प्रतिज्ञाफलं लभे-
१६ रन्। यत्र नियमो भवति तत्र नियमसाधकस्य बले र्मृत्युना
१७ भवितव्यं। यतो हतेन बलिना नियमः स्थिरीभवति किन्तु
नियमसाधको बलि र्यावत् जीवति तावत् नियमो निरर्थक-
१८ स्तिष्ठति। तस्मात् स पूर्व्वनियमोऽपि रुधिरपातं विना न
१९ साधितः। फलतः सर्व्वलोकान् प्रति व्यवस्थानुसारेण सर्व्वा आज्ञा
कथयित्वा मोशि र्जलेन सिन्दूरवर्णलोम्ना एषोवतृणेन च सार्द्धं
गोवत्सानां छागानाञ्च रुधिरं गृहीत्वा ग्रन्थे सर्व्वलोकेषु च प्रक्षिप्य
२० बभाषे, युष्मान् अधीश्वरो यं नियमं निरूपितवान् तस्य रुधिर-
२१ मेतत्। तद्वत् स दूष्येऽपि सेवार्थकेषु सर्व्वपात्रेषु च रुधिरं
२२ प्रक्षिप्तवान्। अपरं व्यवस्थानुसारेण प्रायशः सर्व्वाणि रुधिरेण
परिष्क्रियन्ते रुधिरपातं विना पापमोचनं न भवति च।

नवीननियमस्य महायाजकस्य श्रेष्ठत्वम्।

२३ अपरं यानि स्वर्गीयवस्तूनां दृष्टान्तास्तेषाम् एतैः पावनम् आव-
श्यकम् आसीत् किन्तु साक्षात् स्वर्गीयवस्तूनाम् एतेभ्यः श्रेष्ठै र्बलि-
२४ दानैः पावनमावश्यकं। यतः ख्रीष्टः सत्यपवित्रस्थानस्य दृष्टान्तरूपं
हस्तकृतं पवित्रस्थानं न प्रविष्टवान् किन्त्वस्मन्निमित्तम् इदानीम्
२५ ईश्वरस्य साक्षाद् उपस्थातुं स्वर्गमेव प्रविष्टः। यथा च महायाजकः
प्रतिवर्षं परशोणितमादाय महापवित्रस्थानं प्रविशति तथा ख्रीष्टेन
२६ पुनः पुनरात्मोत्सर्गो न कर्त्तव्यः, कर्त्तव्ये सति जगतः सृष्टिकाल-

मारभ्य बहुवारं तस्य मृत्युभोग आवश्यकोऽभवत्; किन्त्विदानीं
स आत्मोत्सर्गेण पापनाशार्थम् एककृत्वो जगतः शेषकाले प्रच-
काशे। अपरं यथा मानुषस्यैककृत्वो मरणं तत्पश्चाद् विचारो २७
निरूपितोऽस्ति, तद्वत् ख्रीष्टोऽपि बहूनां पापवहनार्थं बलिरूपे- २८
णैककृत्व उत्ससृजे, अपरं द्वितीयवारं पापाद् भिन्नः सन् ये तं
प्रतीक्षन्ते तेषां परित्राणार्थं दर्शनं दास्यति।

नवीननियमव्यवस्थानुयायियज्ञोत्कृष्टता।

व्यवस्था भविष्यन्मङ्गलानां छायास्वरूपा न च वस्तूनां मूर्त्ति- १० १
स्वरूपा ततो हेतो र्नित्यं दीयमानैरेकविधै र्वार्षिकबलिभिः शरणा-
गतलोकान् सिद्धान् कर्त्तुं कदापि न शक्नोति। यद्यशक्ष्यत् तर्हि २
तेषां बलीनां दानं किं न न्यवर्त्तिष्यत? यतः सेवाकारिष्वेककृत्वः
पवित्रीभूतेषु तेषां कोऽपि पापबोधः पुन र्नाभविष्यत्। किन्तु तै ३
र्बलिदानैः प्रतिवत्सरं पापानां स्मारणं जायते। यतो वृषाणां ४
छागानां वा रुधिरेण पापमोचनं न सम्भवति।

एतत्कारणात् ख्रीष्टेन जगत् प्रविश्येदम् उच्यते, यथा, ५

नेष्ट्वा बलिं न नैवेद्यं देहो मे निर्म्मितस्त्वया।
न च त्वं बलिभि र्हव्यैः पापघ्नै र्वा प्रतुष्यसि। ६
अवादिषं तदैवाहं पश्य कुर्व्वे समागमं। ७
धर्म्मग्रन्थस्य सर्गे मे विद्यते लिखिता कथा।
ईश मनोभिलाषस्ते मया सम्पूरयिष्यते।

इत्यस्मिन् प्रथमतो येषां दानं व्यवस्थानुसाराद् भवति तान्यधि ८
तेनेदमुक्तं यथा, बलिनैवेद्यहव्यानि पापघ्नञ्चोपचारकं, नेमानि
वाञ्छसि त्वं हि न चैतेषु प्रतुष्यसीति। ततः परं तेनोक्तं यथा, ९
पश्य मनोऽभिलाषं ते कर्त्तुं कुर्व्वे समागमं; द्वितीयम् एतद् वाक्यं

१० स्थिरीकर्त्तुं स प्रथमं लुम्पति । तेन मनोऽभिलाषेण च वयं
यीशुख्रीष्टस्यैककृत्वः स्वशरीरोत्सर्गात् पवित्रीकृता अभवाम ।
११ अपरम् एकैको याजकः प्रतिदिनम् उपासनां कुर्व्वन् यैश्च
पापानि नाशयितुं कदापि न शक्यन्ते तादृशान् एकरूपान् बलीन्
१२ पुनः पुनरुत्सृजन् तिष्ठति । किन्त्वसौ पापनाशकम् एकं बलिं
१३ दत्त्वानन्तकालार्थम् ईश्वरस्य दक्षिण उपविश्य यावत् तस्य शत्र-
१४ वस्तस्य पादपीठं न भवन्ति तावत् प्रतीक्षमाणस्तिष्ठति । यत एकेन
बलिदानेन सोऽनन्तकालार्थं पूयमानान् लोकान् साधितवान् ।
१५ एतस्मिन् पवित्र आत्माप्यस्माकं पक्षे प्रमाणयति यतो हेतो-
१६ स्तद्दिनात् परम् अहं तैः सार्द्धम इमं नियमं स्थिरीकरिष्यामीति
प्रथमत उक्त्वा परमेश्वरेणेदं कथितं, तेषां चित्ते मम विधीन्
स्थापयिष्यामि तेषां मनःसु च तान् लेखिष्यामि च, अपरञ्च
१७ तेषां पापान्यपराधांश्च पुनः कदापि न स्मरिष्यामि । किन्तु यत्र
१८ पापमोचनं भवति तत्र पापार्थकबलिदानं पुन र्न भवति ।

स्थिरं स्थातुं चेतनाश्वासवाक्यञ्च ।

१९ अतो हे भ्रातरः, यीशो रुधिरेण पवित्रस्थानप्रवेशायास्मा
२० स्माकम् उत्साहो भवति, यतः सोऽस्मदर्थं तिरस्करिण्यार्थतः
२१ स्वशरीरेण नवीनं जीवनयुक्तञ्चैकं पन्थानं निर्म्मितवान्, अपरञ्चे
२२ श्वरीयपरिवारस्याध्यक्ष एको महायाजकोऽस्माकमस्ति । अतो हेतो-
रस्माभिः सरलान्तःकरणै र्दृढविश्वासैः पापबोधात् प्रक्षालितमनोभि
र्निर्म्मलजले स्नातशरीरैश्चेश्वरम् उपागत्य प्रत्याशायाः प्रतिज्ञा
२३ निश्चला धारयितव्या । यतो यस्ताम् अङ्गीकृतवान् स विश्वसनीयः ।
२४ अपरं प्रेम्नि सत्क्रियासु चैकैकस्योत्साहवृद्ध्यर्थम् अस्माभिः परस्परं
२५ मन्त्रयितव्यं । अपरं कतिपयलोका यथा कुर्व्वन्ति तथास्माभिः

सभाकरणं न परित्यक्तव्यं परस्परम् उपदेष्टव्यञ्च यतस्तत् महादिनम्
उत्तरोत्तरं निकटवर्त्ति भवतीति युष्माभि र्दृश्यते ।

सत्यमतस्य ज्ञानप्राप्तेः परं यदि वयं स्वेच्छया पापाचारं २६
कुर्म्मस्तर्हि पापानां कृते ऽन्यत् किमपि बलिदानं नावशिष्यते
किन्तु विचारस्य भयानका प्रतीक्षा रिपुनाशकानलस्य तापश्चा- २७
वशिष्यते । यः कश्चित् मोशे र्व्यवस्थाम् अवमन्यते स दयां विना २८
द्वयोस्तिसृणां वा साक्षिणां प्रमाणेन हन्यते, तस्मात् किं बुध्यध्वे २९
यो जन ईश्वरस्य पुत्रम् अवजानाति येन च पवित्रीकृतो ऽभवत्
तत् नियमस्य रुधिरम् अपवित्रं जानाति, अनुग्रहकरम् आत्मा-
नम् अपमन्यते च, स कियन्महाघोरतरदण्डस्य योग्यो भवि-
ष्यति ? यतः परमेश्वरः कथयति, ३०

दानं फलस्य मत्कर्म्म सूचितं प्रददाम्यहं ।

पुनरपि, तदा विचारयिष्यन्त परेशेन निजाः प्रजाः ।

इदं यः कथितवान् तं वयं जानीमः । अमरेश्वरस्य करयोः ३१
पतनं महाभयानकं ।

हे भ्रातरः, पूर्व्वदिनानि स्मरत यतस्तदानीं यूयं दीप्तिं प्राप्य ३२
बहुदुर्गतिरूपं संग्रामं सहमाना एकतो निन्दाक्लेशैः कौतुकीकृता ३३
अभवत, अन्यतश्च तद्भोगिनां समांशिनो ऽभवत । यूयं मम ३४
बन्धनस्य दुःखेन दुःखिनो ऽभवत, युष्माकम् उत्तमा नित्या च
सम्पत्तिः स्वर्गे विद्यत इति ज्ञात्वा सानन्दं सर्व्वस्वस्यापहरणम्
असहध्वञ्च । अतएव महापुरस्कारयुक्तं युष्माकम् उत्साहं न परि- ३५
त्यजत । यतो यूयं येनेश्वरस्येच्छां पालयित्वा प्रतिज्ञायाः फलं ३६
लभध्वं तदर्थं युष्माभि र्धैर्य्यावलम्बनं कर्त्तव्यं । येनागन्तव्यं स ३७
स्वल्पकालात् परम् आगमिष्यति न च विलम्बिष्यते । धार्म्मिको ३८

जनो विश्वासेन जीविष्यति किन्तु यदि निवर्त्तते तर्हि मम
३८ मनस्तस्मिन न तोषं यास्यति। किन्तु वयं विनाशजनिकां धर्म्मात्
निवृत्तिं न कुर्व्वाणा आत्मनः परित्राणाय विश्वासं कुर्व्वामहे।

विश्वास-वीराः।

११ १ विश्वास आशंसितानां निश्चयः, अदृश्यानां विषयाणां दर्शनं
२ भवति। तेन विश्वासेन प्राञ्चो लोकाः प्रामाण्यं प्राप्तवन्तः।
३ अपरम् ईश्वरस्य वाक्येन जगन्त्यसृज्यन्त, दृष्टवस्तूनि च प्रत्यक्ष-
४ वस्तुभ्यो नोदपद्यन्तैतद् वयं विश्वासेन बुध्यामहे। विश्वासेन
हेवल ईश्वरमुद्दिश्य काविलः श्रेष्ठं बलिदानं कृतवान् तस्माच्चेश्वरेण
तस्य दानान्यधि प्रमाणे दत्ते स धार्म्मिक इत्यस्य प्रमाणं लब्ध-
५ वान् तेन विश्वासेन च स मृतः सन् अद्यापि भाषते। विश्वासेन
हनोको यथा मृत्युं न पश्येत् तथा लोकान्तरं नीतः, तस्यो-
द्देशश्च केनापि न प्रापि यत ईश्वरस्तं लोकान्तरं नीतवान्,
तत्प्रमाणमिदं तस्य लोकान्तरीकरणात् पूर्व्वं स ईश्वराय रोचित-
६ वान् इति प्रमाणं प्राप्तवान्। किन्तु विश्वासं विना कोऽपीश्वराय
रोचितुं न शक्नोति यत ईश्वरोऽस्ति स्वान्वेषिलोकेभ्यः पुरस्कारं
७ ददाति चेतिकथायाम् ईश्वरशरणागतै र्विश्वसितव्यं। अपरं तदानीं
यान्यदृश्यान्यासन् तानीश्वरेणादिष्टः सन् नोहो विश्वासेन भीत्वा
स्वपरिजनानां रक्षार्थं पोतं निर्म्मितवान् तेन च जगज्जनानां
दोषान् दर्शितवान् विश्वासात् लभ्यस्य धार्म्मिकत्वस्याधिकारी बभूव
८ च। विश्वासेनाब्राहाम आहूतः सन् आज्ञां गृहीत्वा यस्य स्थान-
स्याधिकारस्तेन प्राप्तव्यस्तत् स्थानं प्रस्थितवान् किन्तु प्रस्थानसमये
९ क्व यामीति नाजानात्। विश्वासेन स प्रतिज्ञाते देशे परदेशवत्
प्रवसन् तस्याः प्रतिज्ञायाः समानांशिभ्याम् इस्हाकेन याकूबेन च

सह दूष्यवास्यभवत्। यस्मात् स ईश्वरेण निर्म्मितं स्थापितञ्च १०
भित्तिमूलयुक्तं नगरं प्रत्यैक्षत। अपरञ्च विश्वासेन सारा वयोति- ११
क्रान्ता सत्यपि गर्भधारणाय शक्तिं प्राप्य पुत्रवत्यभवत्, यतः सा
प्रतिज्ञाकारिणं विश्वास्यम् अमन्यत। ततो हेतो र्मृतकल्पाद् १२
एकस्माद् जनाद् आकाशीयनक्षत्राणीव गणनातीताः समुद्रतीरस्थ-
सिकता इव चासंख्या लोका उत्पेदिरे। एते सर्व्वे प्रतिज्ञायाः १३
फलान्यप्राप्य केवलं दूरात् तानि निरीक्ष्य वन्दित्वा च, पृथिव्यां
वयं विदेशिनः प्रवासिनश्चास्मह इति स्वीकृत्य विश्वासेन प्राणान्
तत्यजुः। ये तु जना इत्थं कथयन्ति तैः पैतृकदेशो ऽस्माभि- १४
रन्विष्यत इति प्रकाश्यते। ते यस्माद् देशाद् निर्गतास्तं यद्यस्मरि- १५
ष्यन् तर्हि परावर्त्तनाय समयम् अलप्स्यन्त। किन्तु ते सर्व्वोत्- १६
कृष्टम् अर्थतः स्वर्गीयं देशम् आकाङ्क्षन्ति तस्माद् ईश्वरस्तानधि
न लज्जमानस्तेषाम् ईश्वर इति नाम गृहीतवान् यतः स तेषां
कृते नगरमेकं संस्थापितवान्। अपरम् इब्राहीमस्य परीक्षायां १७
जातायां स विश्वसेनेस्हाकम् उत्ससर्ज, वस्तुत इस्हाकि तव
वंशो विख्यास्यत इति वाग् यमधि कथिता तम् अद्वितीयं पुत्रं १८
प्रतिज्ञाप्राप्तः स उत्ससर्ज। यत ईश्वरो मृतानप्युत्थापयितुं शक्नो- १९
तीति स मेने तस्मात् स उपमारूपं तं लेभे। अपरम् इस्हाक् २०
विश्वासेन याकूबे एषावे च भाविविषयानध्याशिषं ददौ। अपरं २१
याकूब् मरणकाले विश्वासेन यूषफः पुत्रयोरेकैकस्मै जनायाशिषं
ददौ यष्ट्या अग्रभागे समालम्ब्य प्रणनाम च। अपरं यूषफ् चरम- २२
काले विश्वासेनेस्रायेल्वंशीयानां मिसरदेशाद् वहिर्गमनस्य वाचं
जगाद निजास्थीनि चाधि समादिदेश। नवजातो मोशिश्च विश्वा- २३
सात् त्रीन् मासान् स्वपितृभ्याम् अगोप्यत यतस्तौ स्वशिशुं परम-

२४ सुन्दरं दृष्टवन्तौ राजाज्ञाञ्च न शङ्कितवन्तौ। अपरं वयःप्राप्तो
मोऽपि विश्वासात् फिरौणो दौहित्र इति नाम नाङ्गीचकार।
२५ यतः स क्षणिकात् पापजसुखभोगाद् ईश्वरस्य प्रजाभिः सार्द्धं
२६ दुःखभोगं वव्रे। तथा मिसरदेशीयनिधिभ्यः ख्रीष्टनिमित्तां निन्दां
महतीं सम्पत्तिं मेने यतो हेतोः स पुरस्कारदानम् अपैक्षत।
२७ अपरं स विश्वासेन राज्ञः क्रोधात् न भीत्वा मिसरदेशं परितत्याज,
२८ यतस्तेनादृश्यं वीक्षमाणेनेव धैर्य्यम् आलम्बि। अपरं प्रथमजातानां
हन्ता यत् स्वीयलोकान् न स्पृशेत् तदर्थं स विश्वासेन निस्तार-
२९ पर्व्वीयबलिच्छेदनं रुधिरसेचनञ्चानुष्ठितवान्। अपरं ते विश्वासात्
स्थलेनेव सूफ्सागरेण जग्मुः किन्तु मिस्रीयलोकास्तत् कर्त्तुम् उपक्रम्य
३० तोयेषु ममज्जुः। अपरञ्च विश्वासात् तैः सप्ताहं यावद् यिरीहोः
३१ प्राचीरस्य प्रदक्षिणे कृते तत् निपपात। विश्वासाद् राहव्नामिका
वेश्यापि प्रीत्या चारान् अनुगृह्याविश्वासिभिः सार्द्धं न विननाश।
३२ अधिकं किं कथयिष्यामि? गिदियोनो बारकः शिम्शोनो
यिप्तहो दायूदः शिमूयेलो भाववादिनश्चैतेषां वृत्तान्तकथनाय
३३ मम समयाभावो भविष्यति। विश्वासात् ते राज्यानि वशीकृतवन्तो
धर्म्मकर्म्माणि साधितवन्तः प्रतिज्ञानां फलं लब्धवन्तः सिंहानां
३४ मुखानि रुद्धवन्तो वह्नेर्दाहं निर्व्वापितवन्तः खड्गधाराद् रक्षां
प्राप्तवन्तो दौर्ब्बल्ये सबलीकृता युद्धे पराक्रमिणो जाताः परेषां
३५ सैन्यानि दवयितवन्तश्च। योषितः पुनरुत्थानेन मृतान् आत्म-
जान् लेभिरे, अपरे च श्रेष्ठोत्थानस्य प्राप्तेराशया रक्षाम् अगृहीत्वा
३६ ताडनेन मृतवन्तः। अपरे तिरस्कारैः कशाभि र्बन्धनैः कारया
३७ च परीक्षिताः। बहवश्च प्रस्तराघातै र्हताः करपत्रै र्वा विदीर्णा
यन्त्रै र्वा क्लिष्टाः खड्गधारै र्वा व्यापादिताः। ते मेषाणां छागानां

वा चर्म्माणि परिधाय दीनाः पीडिता दुःखार्त्ताश्चाभ्राम्यन्।
संसारो येषाम् अयोग्यस्ते निर्जनस्थानेषु पर्व्वतेषु गह्वरेषु पृथिव्या- ३८
श्छिद्रेषु च पर्य्यटन्। एतैः सर्व्वै र्विश्वासात् प्रमाणं प्रापि किन्तु ३९
प्रतिज्ञायाः फलं न प्रापि। यतस्ते यथास्मान् विना सिद्धा न ४०
भवेयुस्तथैवेश्वरेणास्माकं कृते श्रेष्ठतरं किमपि निर्दिदिशे।

नानाविधाश्वासवाक्यम्।

स्वर्गीयपथे गमनम्। प्रभोः शासनस्य सुफलम्॥

१२ अतो हेतोरेतावत्साक्षिमेघै र्वेष्टिताः सन्तो वयमपि सर्व्व- १
भारम् आशुबाधकं पापञ्च निक्षिप्यास्माकं गमनाय निरूपिते
मार्गे धैर्य्येण धावाम। यश्चास्माकं विश्वासस्याग्रेसरः सिद्धिकर्त्ता २
चास्ति तं यीशुं वीक्षामहै यतः स स्वसम्मुखस्थितानन्दस्य प्राप्त्य-
र्थम् अपमानं तुच्छीकृत्य क्रुशस्य यातनां सोढवान् ईश्वरीय-
सिंहासनस्य दक्षिणपार्श्वे समुपविष्टवांश्च। यः पापिभिः स्वविरुद्धम् ३
एतादृशं वैपरीत्यं सोढवान् तम् आलोचयत तेन यूयं स्वमनः
सु श्रान्ताः क्लान्ताश्च न भविष्यथ। यूयं पापेन सह युध्यन्तो ४
ऽद्यापि शोणितव्ययपर्य्यन्तं प्रतिरोधं नाकुरुत। तथा च पुत्रान् ५
प्रतीव युष्मान् प्रति य उपदेश उक्तस्तं किं विस्मृतवन्तः?

परेशेन कृतां शास्तिं हे मत्पुत्र न तुच्छय।
तेन संभर्त्सितश्चापि नैव क्लाम्य कदाचन।
परेशः प्रीयते यस्मिन् तस्मै शास्तिं ददाति यत्। ६
यन्तु पुत्रं स गृह्णाति तमेव प्रहरत्यपि।

यदि यूयं शास्तिं सहध्वं तर्हीश्वरः पुत्रैरिव युष्माभिः सार्द्धं व्यव- ७
हरति यतः पिता यस्मै शास्तिं न ददाति तादृशः पुत्रः कः?
सर्व्वे यस्याः शास्तेरंशिनो भवन्ति सा यदि युष्माकं न भवति ८

९ तर्हि यूयम् आत्मजा न किन्तु जारजा आध्वे। अपरम् अस्माकं
शारीरिकजन्मदातारोऽस्माकं शास्तिकारिणोऽभवन् ते चास्माभिः
सम्मानितास्तस्माद् य आत्मनां जनयिता वयं किं ततोऽधिकं
१० तस्य वशीभूय न जीविष्यामः? ते त्वल्पदिनानि यावत् स्वमनो
ऽभिमतानुसारेण शास्तिं कृतवन्तः किन्त्वेषोऽस्माकं हिताय तस्य
११ पवित्रताया अंशित्वाय चास्मान् शास्ति। शास्तिश्च वर्त्तमानसमये
केनापि नानन्दजनिका किन्तु शोकजनिकैव मन्यते तथापि ये
तया विनीयन्ते तेभ्यः सा पश्चात् शान्तियुक्तं धर्म्मफलं ददाति।
१२ अतएव यूयं शिथिलान् हस्तान् दुर्ब्बलानि जानूनि च सब-
१३ लानि कुरुध्वं। यथा च दुर्ब्बलस्य सन्धिस्थानं न भज्येत स्वस्थं
तिष्ठेत् तथा स्वचरणार्थं सरलं मार्गं निर्म्मात।

शान्तिभावशुचितामभि च निवेदनम्।

१४ अपरञ्च सर्व्वैः सार्द्धम् ऐक्यभावं यच्च विना परमेश्वरस्य दर्शनं
१५ केनापि न लप्स्यते तत् पवित्रत्वं चेष्टध्वं। यथा कश्चिद् ईश्वरस्यानु-
ग्रहात् न पतेत् यथा च तिक्तताया मूलं प्ररुह्य बाधाजनकं न भवेत्
१६ तेन च बहवोऽपवित्रा न भवेयुः, यथा च कश्चित् लम्पटो वा
एककृत्व आहारार्थं स्वीयज्येष्ठाधिकारविक्रेता य एषौस्तद्वद् अधर्म्मा-
१७ चारी न भवेत् तथा सावधाना भवत। यतः स एषौः पश्चाद्
आशीर्व्वादाधिकारी भवितुम् इच्छन्नपि नानुगृहीत इति यूयं
जानीथ, स चाश्रुपातेन मत्यन्तरं प्रार्थयमानोऽपि तदुपायं न लेभे।

व्यवस्थाया मङ्गलात् सुसंवादस्य मङ्गलम् महत्।

१८ अपरञ्च स्पृश्यः पर्व्वतः प्रज्वलितो वह्निः कृष्णावर्णो मेघो
१९ ऽन्धकारो झञ्झा तूरीवाद्यं वाक्यानां शब्दश्च नैतेषां सन्निधौ

यूयम् आगताः। तं शब्दं श्रुत्वा श्रोतारस्तादृशं सम्भाषणं यत्
पुन र्न जायते तत् प्रार्थितवन्तः। यतः पशुरपि यदि धराधरं २०
स्पृशति तर्हि स पाषाणाघातै र्हन्तव्य इत्यादेशं सोढुं ते नाश-
क्नुवन्। तच्च दर्शनम् एवं भयानकं यत् मोशिनोक्तं भीतस्त्रास- २१
युक्तश्चास्मीति। किन्तु सीयोन्पर्व्वतो ऽमरेश्वरस्य नगरं स्वर्गस्थ- २२
यिरूशालेमम् अयुतानि दिव्यदूताः स्वर्गे लिखितानां प्रथमजाता- २३
नाम् उत्सवः समितिश्च सर्व्वेषां विचाराधिपतिरीश्वरः सिद्धीकृत-
धार्म्मिकानाम् आत्मानो नूतननियमस्य मध्यस्थो यीशुः अपरं हेवलो २४
रक्तात् श्रेयः प्रचारकं प्रोक्षणस्य रक्तञ्चैतेषां सन्निधौ यूयम् आगताः।

सावधाना भवत तं वक्तारं नावजानीत यतो हेतोः पृथिवी- २५
स्थितः स वक्ता यैरवज्ञातस्तै र्यदि रक्षा नाप्रापि तर्हि स्वर्गी-
यवक्तुः पराङ्मुखीभूयास्माभिः कथं रक्षा प्राप्स्यते? तदा तस्य २६
रवात् पृथिवी कम्पिता किन्त्विदानीं तेनेदं प्रतिज्ञातं यथा, अहं
पुनरेककृत्वः पृथिवीं कम्पयिष्यामि केवलं तन्नहि गगनमपि
कम्पयिष्यामि। स एककृत्वः शब्दो निश्चलविषयाणां स्थितये २७
निर्म्मितानामिव चञ्चलवस्तूनां स्थानान्तरीकरणं प्रकाशयति। अत- २८
एव निश्चलराज्यप्राप्तैरस्माभिः सोऽनुग्रह आलम्बितव्यो येन वयं
सादरं सभयञ्च तुष्टिजनकरूपेणेश्वरं सेवितुं शक्नुयाम। यतोऽस्मा- २९
कम् ईश्वरः संहारको वह्निः।

भ्रातृषु-प्रेमादेः कथनम्।

भ्रातृषु प्रेम तिष्ठतु। अतिथिसेवा युष्माभि र्न विस्मर्य्यतां १३ १
यतस्तया प्रच्छन्नरूपेण दिव्यदूताः केषाञ्चिद् अतिथयोऽभवन्। २
बन्दिनः सहबन्दिभिरिव दुःखिनश्च देहवासिभिरिव युष्माभिः ३
स्मर्य्यन्तां। विवाहः सर्व्वेषां समीपे सम्मानितव्यस्तदीयशय्या च ४

मुर्षिः किन्तु वेश्यागामिनः पारदारिकाश्चेश्वरेण दण्डयिष्यन्ते।
५ यूयम् आचारे निर्लोभा भवत विद्यमानविषये सन्तुष्यत च
यस्माद् ईश्वर एवेदं कथितवान्, यथा, त्वां न त्यक्ष्यामि न त्वां
६ हास्यामि। अतएव वयम् उत्साहेनेदं कथयितुं शक्नुमः,

मत्पक्षे परमेशोऽस्ति न भेष्यामि कदाचन।
यस्मात् मां प्रति किं कर्त्तुं मानवः पारयिष्यति॥

७ युष्माकं ये नायका युष्मभ्यम् ईश्वरस्य वाक्यं कथितवन्तस्ते युष्माभिः
स्मर्य्यन्तां तेषाम् आचारस्य परिणामम् आलोच्य युष्माभिस्तेषां
८ विश्वासोऽनुक्रियतां। यीशुः ख्रीष्टः श्वोऽद्य सदा च स एवास्ते।
९ यूयं नानाविधनूतनशिक्षाभि र्न परिवर्त्तध्वं यतोऽनुग्रहे-
णान्तःकरणस्य सुस्थिरीभवनं क्षेमं न च खाद्यद्रव्यैः। यतस्त-
१० दाचारिणस्तै र्नोपकृताः। ये दूष्यस्य सेवां कुर्व्वन्ति ते यस्या
११ द्रव्यभोजनस्यानधिकारिणस्तादृशी यज्ञवेदिरस्माकम् आस्ते। यतो
येषां पशूनां शोणितं पापनाशाय महायाजकेन महापवित्रस्थान-
१२ स्याभ्यन्तरं नीयते तेषां शरीराणि शिविराद् वहि र्दह्यन्ते। तस्माद्
यीशुरपि यत् स्वरुधिरेण प्रजाः पवित्रीकुर्य्यात् तदर्थं नगरद्वारस्य
१३ वहि र्मृतिं भुक्तवान्। अतो हेतोरस्माभिरपि तस्यापमानं सहमानैः
१४ शिविराद् वहिस्तस्य समीपं गन्तव्यं। यतो ऽत्रास्माकं स्थायि नगरं
१५ न विद्यते किन्तु भावि नगरम् अस्माभिरन्विष्यते। अतएव
यीशुनास्माभि र्नित्यं प्रशंसारूपो बलिरर्थतस्तस्य नामाङ्गीकुर्व्वताम्
१६ ओष्ठाधराणां फलम् ईश्वराय दातव्यं। अपरञ्च परोपकारो दानञ्च
युष्माभि र्न विस्मर्य्यतां यतस्तादृशं बलिदानम् ईश्वराय रोचते।
१७ यूयं स्वनायकानाम् आज्ञाग्राहिणो वश्याश्च भवत यतो
यैरुपनिधिः प्रतिदातव्यस्तादृशा लोका इव ते युष्मदीयात्मनां

रक्षणार्थं जाग्रति, अतस्ते यथा सानन्दास्तत् कुर्य्युर्न च सार्त्तस्वरा अत्र यतध्वं यतस्तेषाम् आर्त्तस्वरो युष्माकम् इष्टजनको न भवेत्।

उपसंहारः।

अपरञ्च यूयम् अस्मन्निमित्तं प्रार्थनां कुरुत यतो वयम् उत्तम- १८
मनोविशिष्टाः सर्व्वत्र सदाचारं कर्त्तुम् इच्छुकाश्च भवाम इति
निश्चितं जानीमः। विशेषतोऽहं यथा त्वरया युष्मभ्यं पुन र्दीये १९
तदर्थं प्रार्थनायै युष्मान् अधिकं विनये।

अनन्तनियमस्य रुधिरेण विशिष्टो महान् मेषपालको येन २०
मृतगणमध्यात् पुनरानायि स शान्तिदायक ईश्वरो निजाभिमत-
साधनाय सर्व्वस्मिन् सत्कर्म्मणि युष्मान् सिद्धान् करोतु, तस्य २१
दृष्टौ च यद्यत् तुष्टिजनकं तदेव युष्माकं मध्ये यीशुना ख्रीष्टेन
साधयतु। तस्मै महिमा सर्व्वदा भूयात्। आमेन्।

हे भ्रातरः, विनयेऽहं यूयम् इदम् उपदेशवाक्यं सहध्वं यतोऽहं २२
संक्षेपेण युष्मान् प्रति लिखितवान्। अस्माकं भ्राता तीमथियो मुक्तो २३
ऽभवद् इति जानीत, स च यदि त्वरया समागच्छति तर्हि तेन
सार्द्धम् अहं युष्मान् साक्षात् करिष्यामि। युष्माकं सर्व्वान् नायकान् २४
पवित्रलोकांश्च नमस्कुरुत। अपरम् इतालियादेशीयानां नमस्कारं
ज्ञास्यथ। अनुग्रहो युष्माकं सर्व्वेषां सहायो भूयात्। आमेन्। २५

# याकोबस्य सर्व्वसाधारणपत्रं।

प्रकृतभक्तिवर्णनम्।

१ १ ईश्वरस्य प्रभो र्यीशुख्रीष्टस्य च दासो याकोबो विकीर्णीभूतान्
द्वादश वंशान् प्रति नमस्कृत्य पत्रं लिखति।
२ हे मम भ्रातरः, यूयं यदा बहुविधपरीक्षासु निपतत तदा तत्
३ पूर्णानन्दस्य कारणं मन्यध्वं। यतो युष्माकं विश्वासस्य परीक्षितत्वेन धैर्य्यं
४ सम्पाद्यत इति जानीथ। तच्च धैर्य्यं सिद्धफलं भवतु तेन यूयं सिद्धाः
सम्पूर्णाश्च भविष्यथ कस्यापि गुणस्याभावश्च युष्माकं न भविष्यति।
५ युष्माकं कस्यापि ज्ञानाभावो यदि भवेत् तर्हि य ईश्वरः
सरलभावेन तिरस्कारञ्च विना सर्व्वेभ्यो ददाति ततः स याचतां
६ ततस्तस्मै दायिष्यते। किन्तु स निःसन्देहः सन् विश्वासेन याचतां
यतः सन्दिग्धो मानवो वायुना चालितस्योत्प्लवमानस्य च समुद्र-
७ तरङ्गस्य सदृशो भवति। तादृशो मानवः प्रभोः किञ्चित् प्राप्स्य-
८ तीति न मन्यतां। द्विमना लोकः सर्व्वगतिषु चञ्चलो भवति।
९ यो भ्राता नम्रः स निजोन्नत्या श्लाघतां। यश्च धनवान् स
१० निजनम्रतया श्लाघतां यतः स तृणपुष्पवत् क्षयं गमिष्यति। यतः
११ सतापेन सूर्य्येणोदित्य तृणं शोष्यते तत्पुष्पञ्च भ्रश्यति तेन तस्य रूपस्य
सौन्दर्य्यं नश्यति तद्वत् धनिलोकोऽपि स्वीयमूढतया म्लास्यति।
१२ यो जनः परीक्षां सहते स एव धन्यः, यतः परीक्षितत्वं प्राप्य
१३ स प्रभुना स्वप्रेमकारिभ्यः प्रतिज्ञातं जीवनमुकुटं लप्स्यते। ईश्वरो
मां परीक्षत इति परीक्षासमये कोऽपि न वदतु यतः पापाये-

अरस्य परीक्षा न भवति स च कमपि न परीक्षते। किन्तु यः १४
कश्चित् स्वीयमनोवाञ्छयाकृष्यते लोभ्यते च तस्यैव परीक्षा
भवति। तस्मात् सा मनोवाञ्छा सगर्भा भूत्वा दुष्कृतिं प्रसूते १५
दुष्कृतिश्च परिणामं गत्वा मृत्युं जनयति। हे मम प्रियभ्रातरः, १६
यूयं न भ्राम्यत। यत् किञ्चिद् उत्तमं दानं पूर्णो वरश्च तत् १७
सर्व्वम् ऊर्द्धाद् अर्थतो यस्मिन् दशान्तरं परिवर्त्तनजातच्छाया
वा नास्ति तस्माद् दीप्त्याकरात् पितुरवरोहति। तस्य सृष्टवस्तूनां १८
मध्ये वयं यत् प्रथमफलस्वरूपा भवामस्तदर्थं स स्वेच्छातः सत्य-
मतस्य वाक्येनास्मान् जनयामास। अतएव हे मम प्रियभ्रातरः, १९
युष्माकम् एकैको जनः श्रवणे त्वरितः कथने धीरः क्रोधेऽपि
धीरो भवतु। यतो मानवस्य क्रोध ईश्वरीयधर्म्मं न साधयति। २०
अतो हेतो यूयं सर्व्वाम् अशुचिक्रियां दुष्टताबाहुल्यञ्च २१
निक्षिप्य युष्मन्मनसां परित्राणे समर्थं रोपितं वाक्यं नम्रभावेन
गृह्लीत। अपरञ्च यूयं केवलम् आत्मवञ्चयितारो वाक्यस्य श्रोतारो २२
न भवत किन्तु वाक्यस्य कर्म्मकारिणो भवत। यतो यः कश्चिद् २३
वाक्यस्य कर्म्मकारी न भूत्वा केवलं तस्य श्रोता भवति स दर्पणे
स्वीयशारीरिकवदनं निरीक्षमाणस्य मनुजस्य सदृशः। आत्माकारे २४
दृष्टे स प्रस्थाय कीदृश आसीत् तत् तत्क्षणाद् विस्मरति। किन्तु २५
यः कश्चित् नत्वा मुक्तेः सिद्धां व्यवस्थाम् आलोक्य तिष्ठति स
विस्मृतियुक्तः श्रोता न भूत्वा कर्म्मकर्त्तैव सन् स्वकार्य्ये धन्यो
भविष्यति। अतायत्तरसनः सन् यः कश्चित् स्वमनो वञ्चयित्वा २६
स्वं भक्तं मन्यते तस्य भक्ति र्मुधा भवति। क्लेशकाले पितृहीनानां २७
विधवानाञ्च यद् अवेक्षणं संसाराच्च निष्कलङ्केन यद् आत्मरक्षणं
तदेव पितुरीश्वरस्य साक्षात् शुचि र्निर्म्मला च भक्तिः।

अकपटप्रेमविश्वासयोरावश्यकता च ।

२ १ हे मम भ्रातरः, यूयम् अस्माकं तेजस्विनः प्रभो यीशुख्रीष्टस्य
२ धर्म्मं मुखापेक्षया न धारयत। यतो युष्माकं सभायां स्वर्णाङ्गुरीयक-
युक्ते भ्राजिष्णुपरिच्छदे पुरुषे प्रविष्टे मलिनवस्त्रे कस्मिंश्चिद् दरिद्रे-
३ ऽपि प्रविष्टे यूयं यदि तं भ्राजिष्णुपरिच्छदवसानं जनं निरीक्ष्य
वदेत भवान् अत्रोत्तमस्थान उपविशत्विति किञ्च तं दरिद्रं यदि
वदेत त्वम् अमुस्मिन् स्थाने तिष्ठ यद्वात्र मम पादपीठ उपविशेति,
४ तर्हि मनःसु विशेष्य यूयं किं कुतर्कैः कुविचारका न भवथ ?
५ हे मम प्रियभ्रातरः, शृणुत, संसारे ये दरिद्रास्तान् ईश्वरो
विश्वासेन धनिनः स्वप्रेमकारिभ्यश्च प्रतिश्रुतस्य राज्यस्याधिकारिणः
६ कर्त्तुं किं न वरीतवान् ? किन्तु दरिद्रो युष्माभिरवज्ञायते।
धनवन्त एव किं युष्मान् नोपद्रवन्ति बलाच्च विचारासनानां समीपं
७ न नयन्ति ? युष्मदुपरि परिकीर्त्तितं परमं नाम किं तैरेव न
८ निन्द्यते ? किञ्च त्वं स्वसमीपवासिनि स्वात्मवत् प्रीयस्व, एत-
च्छास्त्रीयवचनानुसारतो यदि यूयं राजकीयव्यवस्थां पालयथ
९ तर्हि भद्रं कुरुथ। यदि च मुखापेक्षां कुरुथ तर्हि पापम् आचरथ
व्यवस्थया चाज्ञालङ्घिन इव दूष्यध्वे। यतो यः कश्चित् कृत्स्नां
१० व्यवस्थां पालयति स यद्येकस्मिन् विधौ स्खलति तर्हि सर्व्वेषाम्
११ अपराधी भवति। यतो हेतोस्त्वं परदारान् मा गच्छेति यः
कथितवान् स एव नरहत्यां मा कुर्य्या इत्यपि कथितवान् तस्मात्
त्वं परदारान् न गत्वा यदि नरहत्यां करोषि तर्हि व्यवस्थालङ्घी
१२ भवसि। मुक्तेर्व्यवस्थातो येषां विचारेण भवितव्य तादृशा लोका
इव यूयं कथां कथयत कर्म्म कुरुत च। यो दयां नाचरति तस्य
१३ विचारो निर्द्दयेन कारिष्यते, किन्तु दया विचारम् अभिभविष्यति।

हे मम भ्रातरः मम विश्वासोऽस्तीति यः कथयति तस्य कर्म्माणि १४
यदि न विद्यन्त तर्हि तेन किं फलं ? तेन विश्वासेन किं तस्य परि-
त्राणं भवितुं शक्नोति ? केषुचिद् भ्रातृषु भगिनीषु वा वसनहीनेषु १५
प्रात्यहिकाहारहीनेषु च सत्सु युष्माकं कोऽपि तेभ्यः शरीरार्थं १६
प्रयोजनीयानि द्रव्याणि न दत्त्वा यदि तान् वदेत्, यूयं सकुशलं
गत्वोष्णगात्रा भवत तृप्यत चेति तर्ह्येतेन किं फलं ? तद्वत् विश्वासो १७
यदि कर्म्मभि र्युक्तो न भवेत् तर्ह्येकाकित्वात् मृत एवास्ते । किञ्च १८
कश्चिद् इदं वदिष्यति तव विश्वासो विद्यते मम च कर्म्माणि विद्यन्ते,
त्वं कर्म्महीनं स्वविश्वासं मां दर्शय तर्ह्यहमपि मत्कर्म्मभ्यः स्वविश्वासं त्वां
दर्शयिष्यामि । एक ईश्वरोऽस्तीति त्वं विश्वसिषि । भद्रं करोषि । १९
भूता अपि तत् विश्वसन्ति कम्पन्ते च । किन्तु हे निर्ब्बोधमानव, २०
कर्म्महीनः विश्वासो मृत एवास्त्येतद् अवगन्तुं किम् इच्छसि ? अस्माकं २१
पूर्व्वपुरुषो य इब्राहीमः स्वपुत्रम् इस्हाकं यज्ञवेद्याम् उत्सृष्टवान् स
किं कर्म्मभ्यो न धार्म्मिकीकृतः ? विश्वासे तस्य कर्म्मणां सहकारिणि २२
जाते कर्म्मभिः विश्वासः सिद्धोऽभवत्, तत् किं पश्यसि ? इत्यस्येदं २३
शास्त्रीयवचनं सफलम् अभवत्, इब्राहीमः परमेश्वरे विश्वसितवान्
तच्च तस्य धार्म्मिकत्वायागण्यत स चेश्वरस्य मित्र इति नाम लब्ध-
वान् । पश्यत मानवः कर्म्मभ्यः धार्म्मिकीक्रियते न चैकाकिना विश्वा- २४
सेन । तद्वद् या राहब्नामिका वाराङ्गना चारान् अनुगृह्यापरेण २५
मार्गेण विससर्ज सापि किं कर्म्मभ्यो न धार्म्मिकीकृता ? अतएवात्म- २६
हीनो देहो यथा मृतोऽस्ति तथैव कर्म्महीनः विश्वासोऽपि मृतोऽस्ति ।

### जिह्वाया अवश्यदमनीयत्वम् ।

हे मम भ्रातरः, शिक्षकैरस्माभि र्गुरुतरदण्डो लप्स्यत इति **३** १
ज्ञात्वा यूयम् अनेके शिक्षका मा भवत । यतः सर्व्वे वयं बहु- २

विषयेषु स्खलामः, यः कश्चिद् वाक्ये न स्खलति स सिद्धपुरुषः
३ कृत्स्नं देहं वशीकर्त्तुं समर्थश्चास्ति। पश्यत वयम् अश्वान् वशीकर्त्तुं
४ तेषां वक्त्रेषु खलीनान् निधाय तेषां कृत्स्नं शरीरम् अनुवर्त्तयामः।
पश्यत ये पोता अतीव वृहदाकाराः प्रचण्डवातैश्च चालितास्तेऽपि
कर्णधारस्य मनोऽभिमताद् अतिक्षुद्रेण कर्णेन वाञ्छितं स्थानं प्रत्यनु-
५ वर्त्तन्ते। तद्वद् रसनापि क्षुद्रतराङ्गं सन्ती दर्पवाक्यानि भाषते।
६ पश्य कीदृङ्महारण्यं दह्यतेऽल्पेन वह्निना। रसनापि भवेद् वह्निर-
धर्म्मरूपपिष्टपे। अस्मदङ्गेषु रसना तादृशं सन्तिष्ठति सा कृत्स्नं
देहं कलङ्कयति सृष्टिरथस्य चक्रं प्रज्वलयति नरकानलेन ज्वलति
७ च। पशुपक्ष्युरोगजलचराणां सर्व्वेषां स्वभावो दमयितुं शक्यते
८ मानुषिकस्वभावेन दमयाञ्चक्रे च। किन्तु मानवानां केनापि
जिह्वा दमयितुं न शक्यते सा न निवार्य्यम् अनिष्टं हलाहलविषेण
९ पूर्णा च। तया वयं पितरम् ईश्वरं धन्यं वदामः, तया चेश्वरस्य
१० सादृश्ये सृष्टान् मानवान् शपामः। एकस्माद् वदनाद् धन्यवाद-
११ शापौ निर्गच्छतः। हे मम भ्रातरः, एतादृशं न कर्त्तव्यं। प्रस्र-
१२ वणः किम् एकस्मात् छिद्रात् मिष्टं तिक्तञ्च तोयं निर्गमयति? हे
मम भ्रातरः, उडुम्बरतरुः किं जितफलानि द्राक्षालता वा किम्
उडुम्बरफलानि फलितुं शक्नोति? तद्वद् एकः प्रस्रवणो लवणमिष्टे
तोये निर्गमयितुं न शक्नोति।

नानाविधचेतनावाक्यम्।

प्रकृतज्ञानवर्णनम्।

१३ युष्माकं मध्ये ज्ञानी सुबोधश्च क आस्ते? तस्य कर्म्माणि ज्ञान-
१४ मूलकमृदुतायुक्तानीति सदाचारात् स प्रमाणयतु। किन्तु युष्म-
दन्तःकरणमध्ये यदि तिक्तेर्ष्या विवादेच्छा च विद्यते तर्हि सत्य-

मतस्य विरुद्धं न श्लाघध्वं न चानृतं कथयत। तादृशं ज्ञानम् १५
ऊर्द्ध्वाद् आगतं नहि किन्तु पार्थिवं शारीरि भौतिकञ्च। यतो १६
हेतोरीर्ष्या विवादेच्छा च यत्र विद्येते तत्रैव कलहः सर्व्वं दुष्कृ-
तञ्च विद्यते। किन्तूर्द्ध्वाद् आगतं यत् ज्ञानं तत् प्रथमं शुचि ततः १७
परं शान्तं क्षान्तम् आशुसन्धेयं दयादिसत्फलैः परिपूर्णम् असन्दिग्धं
निष्कपटञ्च भवति। शान्त्याचारिभिः शान्त्याधर्म्मफलं रोप्यते। १८

युद्धलोभेर्ष्याहङ्कारादीनां विरुद्धा कथा च।

युष्माकं मध्ये समरा रणाश्च कुत उत्पद्यन्ते? युष्मदङ्गशिविरा- **४** १
श्रिताभ्य, सुखेच्छाभ्यः किं नोत्पद्यन्ते? यूयं वाञ्छथ किन्तु नाप्नुथ, २
यूयं नरहत्याम् ईर्ष्याञ्च कुरुथ किन्तु कृतार्था भवितुं न शक्नुथ,
यूयं युध्यथ रणं कुरुथ च किन्त्वप्राप्तास्तिष्ठथ, यतो हेतोः प्रार्थनां
न कुरुथ। यूयं प्रार्थयध्वे किन्तु न लभध्वे यतो हेतोः स्वसुख- ३
भोगेषु व्ययार्थं कु प्रार्थयध्वे। हे व्यभिचारिणो व्यभिचारिण्यश्च, ४
संसारस्य यत् मैत्र्यं तद् ईश्वरस्य शात्रवमिति यूयं किं न जानीथ?
अत एव यः कश्चित् संसारस्य मित्रं भवितुम् अभिलषति स एवेश्वरस्य
शत्रु र्भवति। यूयं किं मन्यध्वे? शास्त्रस्य वाक्यं किं फलहीनं भवेत्? ५
अस्मदन्तर्वासी य आत्मा स वा किम् ईर्ष्यार्थं प्रेम करोति? तन्नहि ६
किन्तु स प्रतुलं वरं वितरति तस्माद् उक्तमास्ते यथा,

आत्माभिमानलोकानां विपक्षो भवतीश्वरः।
किन्तु तेनैव नम्रेभ्यः प्रसादाद् दीयते वरः॥

अतएव यूयम् ईश्वरस्य वश्या भवत शैतानं संरुन्ध तेन स युष्मत्तः ७
पलायिष्यते। ईश्वरस्य समीपवर्त्तिनो भवत तेन स युष्माकं ८
समीपवर्त्ती भविष्यति। हे पापिनः, यूयं स्वकरान् परिष्कुरुध्वं।
हे द्विमनोलोकाः, यूयं स्वान्तःकरणानि शुचीनि कुरुध्वं। यूयम् ९

उद्विजध्वं शोचत विलपत च, युष्माकं हासः शोकाय, आनन्दश्च
१० कातरतायै परिवर्त्ततां। प्रभोः समक्षं नम्रा भवत तस्मात् स
युष्मान् उच्चीकरिष्यति।
११ हे भ्रातरः, यूयं परस्परं मा दूषयत। यः कश्चिद् भ्रातरं
दूषयति भ्रातु र्विचारञ्च करोति स व्यवस्थां दूषयति व्यव-
स्थायाश्च विचारं करोति। त्वं यदि व्यवस्थाया विचारं करोषि
तर्हि व्यवस्थापालयिता न भवसि किन्तु विचारयिता भवसि।
१२ अद्वितीयो व्यवस्थापको विचारयिता च स एवास्ते यो रक्षितुं नाश-
यितुञ्च पारयति। किन्तु कस्त्वं यत् परस्य विचारं करोषि?
१३ अद्य श्वो वा वयम् अमुकनगरं गत्वा तत्र वर्षमेकं यापयन्तो
वाणिज्यं करिष्यामः लाभं प्राप्स्यामश्चेति कथां भाषमाणा यूयम्
१४ इदानीं शृणुत। श्वः किं घटिष्यते तद् यूयं न जानीथ यतो
जीवनं वो भवेत् कीदृक् तत्तु बाष्पस्वरूपकं, क्षणमात्रं भवेद्
१५ दृश्यं लुप्यते च ततः परं। तदनुक्त्वा युष्माकम् इदं कथनीयं
प्रभोरिच्छातो वयं यदि जीवामस्तर्ह्येतत् कर्म्म तत् कर्म्म वा
१६ करिष्याम इति। किन्त्विदानीं यूयं गर्व्ववाक्यैः श्लाघनं कुरुध्वे
१७ तादृशं सर्व्वं श्लाघनं कुत्सितमेव। अतो यः कश्चित् सत्कर्म्म कर्त्तुं
विदित्वा तन्न करोति तस्य पापं जायते।

दण्डाद् दुष्टधनिलोकानां भीतत्वमुचितम्।

५ १ हे धनवन्तः, यूयम् इदानीं शृणुत युष्माभिरागमिष्यत्क्लेश-
२ हेतोः क्रन्द्यतां विलप्यताञ्च। युष्माकं द्रविणं जीर्णं कीटभुक्ताः
३ सुचेलकाः। कनकं रजतञ्चापि विकृतिं प्रगमिष्यति, तत्कलङ्कश्च
युष्माकं पापं प्रमाणयिष्यति, हुताशवच्च युष्माकं पिशितं खाद-
४ यिष्यति। इत्थम् अन्तिमघस्रेषु युष्माभिः सञ्चितं धनं। पश्यत यैः

कृषीवलै र्युष्माकं शस्यानि छिन्नानि तेभ्यो युष्माभि र्यद् वेतनं
छिन्नं तद् उच्चै र्ध्वनिं करोति तेषां शस्यच्छेदकानाम् आर्त्तरावः
सेनापतेः परमेश्वरस्य कर्णकुहरं प्रविष्टः।, यूयं पृथिव्यां सुखभोगं ५
कामुकताञ्चाचरितवन्तः, महाभोजस्य दिन इव निजान्तःकरणानि
परितर्पितवन्तश्च। अपरञ्च युष्माभि र्धार्म्मिकस्य दण्डाज्ञा हत्या ६
चाकारि तथापि स युष्मान् न प्रतिरुद्धवान्।

धार्म्मिकलोकानाम् अवश्यदुःखमोचकत्वम्।

हे भ्रातरः, यूयं प्रभोरागमनं यावद् धैर्य्यमालम्बध्वं। पश्यत ७
कृषिबलो भूमे र्बहुमूल्यं फलं प्रतीक्षमाणो यावत् प्रथमम् अन्तिमञ्च
वृष्टिजलं न प्राप्नोति तावद् धैर्य्यम् आलम्बते। यूयमपि धैर्य्यमा- ८
लम्ब्य स्वान्तःकरणानि स्थिरीकुरुत, यतः प्रभोरुपस्थितिः समीप-
वर्त्तिन्यभवत्। हे भ्रातरः, यूयं यद् दण्ड्या न भवेत तदर्थं परस्परं ९
न ग्लायत, पश्यत विचारयिता द्वारसमीपे तिष्ठति। हे मम १०
भ्रातरः, ये भाववादिनः प्रभो र्नाम्ना भाषितवन्तस्तान् यूयं दुःख-
सहनस्य धैर्य्यस्य च दृष्टान्तान् जानीत। पश्यत धैर्य्यशीला अस्माभि
र्धन्या उच्यन्ते। आयूबो धैर्य्यं युष्माभिरश्रावि प्रभोः परिणामश्चादर्शि ११
यतः प्रभु र्बहुकृपः सकरुणश्चास्ति।

हे भ्रातरः, विशेषत इदं वदामि स्वर्गस्य वा पृथिव्या वान्यवस्तुनो १२
नाम गृहीत्वा युष्माभिः कोऽपि शपथो न क्रियतां, किन्तु यथा दण्ड्या
न भवेत तदर्थं युष्माकं तथैव तन्नहि चेतिवाक्यं यथेष्टं भवतु।

युष्माकं कश्चिद् दुःखी भवति? स प्रार्थनां करोतु। कश्चिद् १३
वानन्दितो भवति? स गीतं गायतु। युष्माकं कश्चित् पीडितो १४
ऽस्ति? स मण्डल्याः प्राचीनान् आह्वातु ते च प्रभो र्नाम्ना तं तैले-
नाभिषिच्य तस्य कृते प्रार्थनां कुर्व्वन्तु। तस्माद् विश्वासजातप्रार्थ- १५

तथा स रोगी रक्षां यास्यति प्रभुश्च तम् उत्थापयिष्यति यदि च
१५ कृतपापो भवेत् तर्हि स तं क्षमिष्यते। यूयं परस्परम् अपराधान्
अङ्गीकुरुध्वम् आरोग्यप्राप्त्यर्थञ्चैकजनो ऽन्यस्य कृते प्रार्थनां करोतु
१७ धार्म्मिकस्य सयत्ना प्रार्थना बहुशक्तिविशिष्टा भवति। य एलियो
वयमिव सुखदुःखभोगी मर्त्त्य आसीत् स प्रार्थनयानावृष्टिं याचित-
१८ वान् तेन देशे सार्द्धवत्सरत्रयं यावद् वृष्टि र्न बभूव। पश्चात् तेन
पुनः प्रार्थनायां कृतायाम् आकाशस्तोयान्यवर्षीत् पृथिवी च स्वफ-
लानि प्रारोहयत्।

१९ हे भ्रातरः, युष्माकं कस्मिंश्चित् सत्यमताद् भ्रष्टे यदि कश्चित् तं
२० परावर्त्तयति तर्हि यो जनः पापिनं विपथभ्रमणात् परावर्त्तयति स
तस्यात्मानं मृत्युत उद्धरिष्यति बहुपापान्यावरिष्यति चेति जानातु।

# पितरस्य प्रथमं सर्व्वसाधारणपत्रं।

मङ्गलाचरणम्।

पन्त-गालातिया-कप्पदकिया-आशिया-बिथुनियादेशेषु प्रवा- 1 १
सिनो ये विकीर्णलोकाः पितुरीश्वरस्य पूर्व्वनिर्णयाद् आत्मनः पाव- २
नेन यीशुख्रीष्टस्याज्ञाग्रहणाय शोणितप्रोक्षणाय चाभिरुचितास्तान्
प्रति यीशुख्रीष्टस्य प्रेरितः पितरः पत्रं लिखति। युष्मान् प्रति
बाहुल्येन शान्तिरनुग्रहश्च भूयास्तां।

अनुग्रहकारणाद् ईश्वरस्य धन्यवदनं भाववादिभ्यः
ख्रीष्टेन परित्राणकथनम्।

अस्माकं प्रभो यीशुख्रीष्टस्य तात ईश्वरो धन्यः, यतः स ३
स्वकीयबहुकृपातो मृतगणमध्याद् यीशुख्रीष्टस्योत्थानेन जीवन-
प्रत्याशार्थम् अर्थतो ऽक्षयनिष्कलङ्काम्लानसम्पत्तिप्राप्त्यर्थम् अस्मान् ४
पुन र्जनयामास। सा सम्पत्तिः स्वर्गे ऽस्माकं कृते सञ्चिता तिष्ठति,
यूयञ्चेश्वरस्य शक्तितः शेषकाले प्रकाश्यपरित्राणार्थं विश्वासेन रक्ष्यध्वे। ५
तस्माद् यूयं यद्यप्यानन्देन प्रफुल्ला भवथ तथापि साम्प्रतं प्रयो- ६
जनहेतोः कियत्कालपर्य्यन्तं नानाविधपरीक्षाभिः क्लिश्यध्वे। यतो ७
वह्निना यस्य परीक्षा भवति तस्मात् नश्वरसुवर्णादपि बहुमूल्यं
युष्माकं विश्वासरूपं यत् परीक्षितं स्वर्णं तेन यीशुख्रीष्टस्यागमन-
समये प्रशंसायाः, समादरस्य गौरवस्य च योग्यता प्राप्तव्या। यूयं तं ८
ख्रीष्टम् अदृष्ट्वापि तस्मिन् प्रीयध्वे साम्प्रतं तं न पश्यन्तोऽपि तस्मिन्
विश्वसन्तो ऽनिर्व्वचनीयेन प्रभावयुक्तेन चानन्देन प्रफुल्ला भवथ,
स्वविश्वासस्य परिणामरूपम् आत्मनां परित्राणं लभध्वे च। युष्मासु ९
यो ऽनुग्रहो वर्त्तते तद्विषये य ईश्वरीयवाक्यं कथितवन्तस्ते भाव- १०

११ वादिनस्तस्य परित्राणस्यान्वेषणम् अनुसन्धानञ्च कृतवन्तः। विशेष-
तस्तेषामन्तर्व्वासी यः ख्रीष्टस्यात्मा ख्रीष्टे वर्त्तिष्यमाणानि दुःखानि
तदनुगामिप्रभावञ्च पूर्व्वं प्राकाशयत् तेन कः कीदृशो वा समयो
१२ निरदिश्यतैतस्यानुसन्धानं कृतवन्तः। ततस्ते विषयैस्ते यन्न स्वान्
किन्त्वस्मान् उपकुर्व्वन्त्येतत् तेषां निकटे प्राकाश्यत। यांश्च तान्
विषयान् दिव्यदूता अप्यवनतशिरसो निरीक्षितुम् अभिलषन्ति
ते विषयाः साम्प्रतं स्वर्गात् प्रेषितस्य पवित्रस्यात्मनः साहाय्याद्
युष्मत्समीपे सुसंवादप्रचारयितृभिः प्राकाश्यन्त।

ईश्वरीयामोघवाक्यानुसारतो धर्म्मम् आचरितुं पितरस्य विनयः।

१३ अतएव यूयं मनःकटिबन्धनं कृत्वा प्रबुद्धाः सन्तो यीशुख्रीष्टस्य
प्रकाशसमये युष्मासु वर्त्तिष्यमानस्यानुग्रहस्य सम्पूर्णां प्रत्याशां कुरुत।
१४ अपरं पूर्व्वीयाज्ञानतावस्थायाः कुत्सिताभिलाषाणां योग्यम् आचारं
१५ न कुर्व्वन्तो युष्मदाह्वानकारी यथा पवित्रो ऽस्ति यूयमप्याज्ञाग्राहि-
१६ सन्ताना इव सर्व्वस्मिन् आचारे तादृक् पवित्रा भवत। यतो
१७ लिखितम् आस्ते, यूयं पवित्रास्तिष्ठत यस्मादहं पवित्रः। अपरञ्च
यो विनापक्षपातम् एकैकमानुषस्य कर्म्मानुसाराद् विचारं करोति
स यदि युष्माभिस्तात आख्यायते तर्हि स्वप्रवासस्य कालो युष्माभि
१८ र्भीत्या याप्यतां। यूयं निरर्थकात् पैतृकाचारात् क्षयणीयै रूप्य-
१९ सुवर्णादिभि र्मुक्तिं न प्राप्य निष्कलङ्कनिर्म्मलमेषशावकस्येव ख्रीष्टस्य
२० बहुमूल्येन रुधिरेण मुक्तिं प्राप्तवन्त इति जानीथ। स जगतो
भित्तिमूलस्थापनात् पूर्व्वं नियुक्तः किन्तु चरमदिनेषु युष्मदर्थं प्रका-
२१ शितो ऽभवत्। यतस्तेनैव मृतगणात् तस्योत्थापयितरि तस्मै गौरव-
दातरि चेश्वरे विश्वसिथ तस्माद् ईश्वरे युष्माकं विश्वासः प्रत्याशा
२२ चास्ते। यूयम् आत्मना सत्यमतस्याज्ञाग्रहणद्वारा निष्कपटाय भ्रातृ-

प्रेम्ने पावितमनसो भूत्वा निर्म्मलान्तःकरणैः परस्परं गाढं प्रेम कुरुत ।
यस्माद् यूयं चयणीयवीर्य्यात् नहि किन्त्वचयणीयवीर्य्याद् ईश्वरस्य २३
जीवनदायकेन नित्यस्थायिना वाक्येन पुनर्जन्म गृहीतवन्तः ।

सर्व्वप्राणी तृणैस्तुल्यस्तत्तेजस्तृणपुष्पवत् । २४
तृणानि परिशुष्यन्ति पुष्पाणि निपतन्ति च ।
किन्तु वाक्यं परेशस्यानन्तकालं वितिष्ठते । २५

तदेव च वाक्यं सुसंवादेन युष्माकम् अन्तिके प्रकाशितं ।

सर्व्वान् द्वेषान् सर्व्वांश्च छलान् कापट्यानीर्य्याः समस्तग्लानि- २ १
कथाश्च दूरीकृत्य युष्माभिः परित्राणाय वृद्धिप्राप्त्यर्थं नवजातशिशु- २
भिरिव प्रकृतं वाग्दुग्धं पिपास्यतां । यतः प्रभु मंधुर एतस्यास्वादं ३
यूयं प्राप्तवन्तः । अपरं मानुषैरवज्ञातस्य किन्त्वीश्वरेणाभिरुचितस्य ४
बहुमूल्यस्य जीवत्प्रस्तरस्येव तस्य प्रभोः सन्निधिम् आगता यूयमपि
जीवत्प्रस्तरा इव निचीयमाना आत्मिकमन्दिरं ख्रीष्टेन यीशुना ५
चेश्वरतोषकाणाम् आत्मिकबलीनां दानार्थं पवित्रो याजकवर्गो
भवथ । यतः शास्त्रे लिखितमास्ते, यथा, ६

पश्य पाषाण एक ऽस्ति सीयोनि स्थापितो मया ।
मुख्यकोणस्य योग्यः स वृतश्चातीव मूल्यवान् ।
यो जनो विश्वसेत् तस्मिन् स लज्जां न गमिष्यति ।

विश्वासिनां युष्माकमेव समीपे स मूल्यवान् भवति किन्त्वविश्वासिनां ७
कृते निचेतृभिरवज्ञातः स पाषाणः कोणस्य भित्तिमूलं भूत्वा बाधा- ८
जनकः पाषाणः स्खलनकारकश्च शैलो जातः । ते चाविश्वासाद्
वाक्येन स्खलन्ति स्खलने च नियुक्ताः सन्ति । किन्तु यूयं येनान्ध- ९
कारमध्यात् स्वकीयाश्चर्य्यदीप्तिमध्यम् आहूतास्तस्य गुणान् प्रकाश-
यितुम् अभिरुचितो वंशो राजकीयो याजकवर्गः पवित्रा जाति

१० रधिकर्त्तव्याः प्रजाश्च जाताः। पूर्व्वं यूयं तस्य प्रजा नाभवत किन्त्विदानीम् ईश्वरस्य प्रजा आध्वे। पूर्व्वम् अननुकम्पिता अभवत किन्त्विदानीम् अनुकम्पिता आध्वे।

नानाविधाश्वासवाक्यम्।

११ हे प्रियतमाः, यूयं प्रवासिनो विदेशिनश्च लोका इव मनसः प्रातिकूल्येन योधिभ्यः शारीरिकसुखाभिलाषेभ्यो निवर्त्तध्वम् इत्यहं
१२ विनये। देवपूजकानां मध्ये युष्माकम् आचार एवम् उत्तमो भवतु यथा ते युष्मान् दुष्कर्म्मकारिलोकानिव पुन र्न निन्दन्तः कृपादृष्टि-
१३ दिने स्वचक्षुर्गोचरीयसत्क्रियाभ्य ईश्वरस्य प्रशंसा कुर्य्युः।

शासनकर्त्तॄन् प्रति कर्त्तव्यव्यवहारः।

ततो हेतोर्यूयं प्रभोरनुरोधात् मानवसृष्टानां कर्त्तृपदानां
१४ वशीभवत विशेषतो भूपालस्य यतः स श्रेष्ठः, देशाध्यक्षाणाञ्च यतस्ते दुष्कर्म्मकारिणां दण्डदानार्थं सत्कर्म्मकारिणां प्रशंसार्थञ्च तेन प्रेरिताः।
१५ इत्थं निर्ब्बोधमानुषाणाम् अज्ञानत्वं यत् सदाचारिभि र्युष्माभि
१६ र्निरुत्तरीक्रियते तद् ईश्वरस्याभिमतं। यूयं स्वाधीना इवाचरत तथापि दुष्टताया वेशस्वरूपां स्वाधीनतां धारयन्त इव नहि
१७ किन्त्वीश्वरस्य दासा इव। सर्व्वान् समाद्रियध्वं भ्रातृवर्गे प्रीयध्वम् ईश्वराद् बिभीत भूपालं सम्मन्यध्वं।

दासादिपुरुषान् प्रति उपयुक्तव्यवहारः।

१८ हे दासाः, यूयं सम्पूर्णादरेण प्रभूनां वश्या भवत केवलं भद्राणां
१९ दयालूनाञ्च नहि किन्त्वनृजूनामपि। यतो ऽन्यायेन दुःखभोगकाल
२० ईश्वरचिन्तया यत् क्लेशसहनं तदेव प्रियं। पापं कृत्वा युष्माकं चपेटाघातसहनेन का प्रशंसा? किन्तु सदाचारं कृत्वा युष्माकं यद्
२१ दुःखसहनं तदेवेश्वरस्य प्रियं। तदर्थमेव यूयम् आहूता यतः ख्रीष्टो-

ऽपि युष्मन्निमित्तं दुःखं भुक्त्वा यूयं यत् तस्य पदचिह्नै र्व्रजेत तदर्थं
दृष्टान्तमेकं दर्शितवान्। स किमपि पापं न कृतवान् तस्य वदने २२
कापि छलस्य कथा नासीत्। निन्दितो ऽपि सन् स प्रतिनिन्दां न २३
कृतवान् दुःखं सहमानो ऽपि न भर्त्सितवान् किन्तु यथार्थविचार-
यितुः समीपे स्वं समर्पितवान्। वयं यत् पापेभ्यो निवृत्य धर्म्मार्थं २४
जीवामस्तदर्थं स स्वशरीरेणास्माकं पापानि क्रुश ऊढवान् तस्य प्रहारै
र्यूयं स्वस्था अभवत। यतः पूर्व्वं यूयं भ्रमणकारिमेषा इवाध्वं किन्त्व- २५
धुना युष्माकम् आत्मनां पालकस्याध्यक्षस्य च समीपं प्रत्यावर्त्तिताः।

हे योषितः, यूयमपि निजस्वामिनां वश्या भवत तथा सति **३** १
यदि केचिद् वाक्ये विश्वासिनो न सन्ति तर्हि ते विनावाक्यं योषि-
ताम् आचारेणार्थतस्तेषां प्रत्यक्षेण युष्माकं सभयसतीत्वाचारेणाक्रष्टुं २
शक्ष्यन्ते। अपरं केशरचनया स्वर्णालङ्कारधारणेन परिच्छदपरि- ३
धानेन वा युष्माकं बाह्यभूषा न भवतु, किन्त्वीश्वरस्य साक्षाद् बहु- ४
मूल्यक्षमाशान्तिभावाक्षयरत्नेन युक्तो गुप्त आन्तरिकमानव एव। यतः ५
पूर्व्वकाले याः पवित्रस्त्रिय ईश्वरे प्रत्याशामकुर्व्वन् ता अपि तादृ-
शीमेव भूषां धारयन्त्यो निजस्वामिनां वश्या अभवन्। तथैव सारा ६
इब्राहीमस्य वश्या सती तं पतिमाख्यातवती यूयञ्च यदि सदा-
चारिण्यो भवथ व्याकुलतया च भीता न भवथ तर्हि तस्याः कन्या
आध्वे। हे पुरुषाः, यूयं ज्ञानतो दुर्ब्बलतरभाजनैरिव योषिद्भिः ७
सहवासं कुरुत, एकस्य जीवनवरस्य सहभागिनीभ्यस्ताभ्यः समा-
दरं वितरत च न चेद् युष्माकं प्रार्थनानां बाधा जनिष्यते।

प्रेमक्षमाधैर्य्यादेरावश्यकता च।

विशेषतो यूयं सर्व्वे एकमनसः परदुःखे दुःखिता भ्रातृप्रेमिणः ८
कृपावन्तः प्रीतिभावाश्च भवत। अनिष्टस्य परिशोधेनानिष्टं निन्दाया ९

वा परिवादेन निन्दां न कुर्व्वन्त आशिषं दत्त यतो यूयम् आशि-
१० रधिकारिणो भवितुमाहूता इति जानीथ। अपरञ्च,

जीवने प्रीयमाणो यः सुदिनानि दिदृक्षते।
पापात् जिह्वां मृषावाक्यात् स्वाधरौ स निवर्त्तयेत्॥
११ स त्यजेद् दुष्टतामार्गं सत्क्रियाञ्च समाचरेत्।
मृगयाणश्च शान्तिं स नित्यमेवानुधावतु॥
१२ लोचने परमेशस्योन्मीलिते धार्म्मिकान् प्रति।
प्रार्थनायाः कृते तेषां तच्छ्रोत्रे सुगमे सदा।
क्रोधास्यञ्च परेशस्य कदाचारिषु वर्त्तते॥

१३ अपरं यदि यूयम् उत्तमस्यानुगामिनो भवथ तर्हि को युष्मान्
१४ हिंसिष्यते? यदि च धर्म्मार्थं क्लिश्यध्वं तर्हि धन्या भविष्यथ।

तेषाम् आशङ्कया यूयं न बिभीत न विङ्क्त वा।
१५ मनोभिः किन्तु मन्यध्वं पवित्रं प्रभुमीश्वरं॥

अपरञ्च युष्माकम् आन्तरिकप्रत्याशायास्तत्त्वं यः कश्चित् पृच्छति
१६ तस्मै शान्तिभीतिभ्याम् उत्तरं दातुं सदा सुसज्जा भवत। ये च
ख्रीष्टधर्म्मे युष्माकं सदाचारं दूषयन्ति ते दुष्कर्म्मकारिणामिव युष्मा-
कम् अपवादेन यत् लज्जिता भवेयुस्तदर्थं युष्माकम् उत्तमः संवेदो
१७ भवतु। ईश्वरस्याभिमताद् यदि युष्माभिः क्लेशः सोढव्यस्तर्हि सदा-
१८ चारिभिः क्लेशसहनं वरं न च कदाचारिभिः। यस्माद् ईश्वरस्य
सन्निधिम् अस्मान् आनेतुम् अधार्म्मिकाणां विनिमयेन धार्म्मिकः
ख्रीष्टो ऽप्येककृत्वः पापानां दण्डं भुक्तवान्, स च शरीरसम्बन्धे मारितः
१९ किन्त्वात्मनः सम्बन्धे पुन र्जीवितो ऽभवत्। तत्सम्बन्धेन च स यात्रां
२० विधाय काराबद्धानाम् आत्मनां समीपे वाक्यं घोषितवान्। पुरा
नोहस्य समये यावत् पोतो निरमीयत तावद् ईश्वरस्य दीर्घसहि-

ष्णुता यदा व्यलम्बत तदा तेनाज्ञाग्राहिणोऽभवन्। तेन पोते-
नाल्पेऽर्थाद् अष्टावेव प्राणिनस्तोयम् उत्तीर्णाः। तन्निदर्शनञ्च स्नापनं २१
(अर्थतः शारीरिकमलिनतायास्त्यागः स नहि किन्त्वीश्वरायोत्तम-
संवेदस्य या प्रतिज्ञा सैव) यीशुख्रीष्टस्य पुनरुत्थानेनेदानीम् अस्मान् २२
उत्तारयति, यतः स स्वर्गं गत्वेश्वरस्य दक्षिणे विद्यते स्वर्गीयदूताः
शासका बलानि च तस्य वशीभूता अभवन्।

शुचितासंयमदुःखभोगमधि कथनञ्च।

अस्माकं विनिमयेन ख्रीष्टः शरीरसम्बन्धे दण्डं भुक्तवान् अतो ४ १
हेतोः शरीरसम्बन्धे यो दण्डं भुक्तवान् स पापात् मुक्त इतिभावेन
यूयमपि सुसज्जीभूय देहवासस्यावशिष्टं समयं पुनर्मानवानाम् इच्छा- २
साधनार्थं नहि किन्त्वीश्वरस्येच्छासाधनार्थं यापयत। आयुषो यः ३
समयो व्यतीतस्तस्मिन् युष्माभि र्यद् देवपूजकानाम् इच्छासाधनं
कामकुत्सिताभिलाषमद्यपानरङ्गरसमत्ततावृणार्हदेवपूजाचरणञ्चाकारि
तेन बाहुल्यं। यूयं तैः सह तस्मिन् सर्व्वनाशपङ्के मज्जितुं न ४
धावथ, इत्यनेनाश्चर्य्यं विज्ञाय ते युष्मान् निन्दन्ति। किन्तु यो ५
जीवतां मृतानाञ्च। विचारं कर्त्तुम् उद्यतोऽस्ति तस्मै तैरुत्तर
दायिष्यते। यतो हेतो र्ये मृतास्तेषां यत् मानवोद्देश्यः शारीरिक- ६
विचारः किन्त्वीश्वरोद्देश्यम् आत्मिकजीवनं भवेत् तदर्थं तेषामपि
सन्निधौ सुसमाचारः प्रकाशितोऽभवत्।

सर्व्वेषाम् अन्तिमकाल उपस्थितस्तस्माद् यूयं सुबुद्धयः प्रार्थनार्थं ७
जाग्रतश्च भवत। विशेषतः परस्परं गाढं प्रेम कुरुत, यतः; ८

पापानामपि बाहुल्यं प्रेम्नैवाच्छादयिष्यते।

कातरोक्तिं विना परस्परम् आतिथ्यं कुरुत। येन यो वरो लब्ध- ९
स्तेनैव स परम् उपकरोतु, इत्थं यूयम् ईश्वरस्य बहुविधप्रसा- १०

११ इत्योत्तमा भाण्डागाराधिपा भवत। यो वाक्यं कथयति स ईश्वरस्य
वाक्यमिव कथयतु यश्च परम् उपकरोति स ईश्वरदत्तसामर्थ्यादि-
वोपकरोतु। सर्व्वविषये यीशुख्रीष्टेनेश्वरस्य गौरवं प्रकाश्यतां तस्यैव
गौरवं पराक्रमश्च सर्व्वदा भूयात्। आमेन्।

१२ हे प्रियतमाः, युष्माकं परीक्षार्थं यस्तापो युष्मासु वर्त्तते तम्
१३ असम्भवघटितं मत्वा नाश्चर्य्यं जानीत, किन्तु ख्रीष्टेन क्लेशानां
सहभागित्वाद् आनन्दत तेन तस्य प्रतापप्रकाशेऽप्यानन्देन प्रफुल्ला
१४ भविष्यथ। यदि ख्रीष्टस्य नामहेतुना युष्माकं निन्दा भवति तर्हि
यूयं धन्या यतो गौरवदायक ईश्वरस्यात्मा युष्मास्वधितिष्ठति तेषां
१५ मध्ये स निन्द्यते किन्तु युष्मन्मध्ये प्रशंस्यते। किन्तु युष्माकं कोऽपि
हन्ता वा चौरो वा दुष्कर्म्मकृद् वा पराधिकारचर्च्चक इव दण्डं
१६ न भुङ्क्तां। यदि च ख्रीष्टीयान इव दण्डं भुङ्क्ते तर्हि स न लज्जमान-
१७ स्तत्कारणाद् ईश्वरं प्रशंसतु। यतो विचारस्यारम्भसमय ईश्वरस्य
मन्दिरे युज्यते यदि चास्मत्स्वारभते तर्हीश्वरीयसुसंवादाग्राहिणां
शेषदशा का भविष्यति?

१८ धार्म्मिकेनापि चेत् त्राणम् अतिकृच्छ्रेण गम्यते।
तर्ह्यधार्म्मिकपापिभ्याम् आश्रयः कुत्र लप्स्यते॥

१९ अत ईश्वरेच्छातो ये दुःखं भुञ्जते ते सदाचारेण स्वात्मानो
विश्वास्यस्रष्टुरीश्वरस्य कराभ्यां निदधतां।

नम्रजागर्त्तृत्वयोरावश्यकता च।

५ १ ख्रीष्टस्य क्लेशानां साक्षी प्रकाशिष्यमाणस्य प्रतापस्यांशी
२ प्राचीनश्चाहं युष्माकं प्राचीनान् विनीयेदं वदामि। युष्माकं मध्यवर्त्ती
य ईश्वरस्य मेषवृन्दो यूयं तं पालयत तस्य वीक्षणं कुरुत च, आव-
श्यकत्वेन नहि किन्तु स्वेच्छातो न वा कुलोभेन किन्त्विच्छुकमनसा।

अपरम् अंशानाम् अधिकारिण इव न प्रभवत किन्तु वृन्दस्य ३
दृष्टान्तस्वरूपा भवत। तेन प्रधानपालक उपस्थिते यूयम् अम्लानं ४
गौरवकिरीटं लप्स्यध्वे।

हे युवानः, यूयमपि प्राचीनलोकानां वश्या भवत सर्व्वे च ५
सर्व्वेषां वशीभूय नम्रताभरणेन भूषिता भवत, यतः,

आत्माभिमानिलोकानां विपक्षो भवतीश्वरः।
किन्तु तेनैव नम्रेभ्यः प्रसादाद् दीयते वरः॥

अतो यूयम् ईश्वरस्य बलवत्करस्याधो नम्रीभूय तिष्ठत तेन स ६
उचितसमये युष्मान् उच्चीकरिष्यति। यूयं सर्व्वचिन्तां तस्मिन् निक्षिपत ७
यतः स युष्मान् प्रति चिन्तयति। यूयं प्रबुद्धा जाग्रतश्च तिष्ठत यतो ८
युष्माकं प्रतिवादी यः शैतानः स गर्ज्जनकारी सिंह इव पर्य्यटन् कं ग्रसि-
ष्यामीति मृगयते, अतो विश्वासे सुस्थिरास्तिष्ठन्तस्तेन सार्द्धं युध्यत, ९
युष्माकं जगन्निवासिभ्रातृष्वपि तादृशाः क्लेशा वर्त्तन्त इति जानीत।

क्षणिकदुःखभोगात् परम् अस्मभ्यं ख्रीष्टेन यीसुना स्वकीया- १०
नन्तगौरवदानार्थं योऽस्मान् आहूतवान् स सर्व्वानुग्राहीश्वरः स्वयं
युष्मान् सिद्धान् स्थिरान् सबलान् निश्चलांश्च करोतु। तस्य गौरवं ११
पराक्रमश्चानन्तकालं यावद् भूयात्। आमेन्।

यः सिल्वानो (मन्ये) युष्माकं विश्वास्यो भ्राता भवति तद्द्वा- १२
राहं संक्षेपेण लिखित्वा युष्मान् विनीतवान् यूयञ्च यस्मिन् अधि-
तिष्ठथ स एवेश्वरस्य सत्यो ऽनुग्रह इति प्रमाणं दत्तवान्। युष्माभिः १३
सहाभिरुचिता या मण्डली बाबिलि विद्यते सा मम पुत्रो मार्कश्च
युष्मान् नमस्कारं वेदयति। यूयं प्रेमचुम्बनेन परस्परं नमस्कुरुत। १४
यीशुख्रीष्टाश्रितानां युष्माकं सर्व्वेषां शान्ति र्भूयात्। आमेन्।

# पितरस्य द्वितीयं सर्व्वसाधारणपत्रं।

विश्वासे स्थिरं स्थातुमधि उपदेशः।

१ १ ये जना अस्माभिः सार्द्धम् अस्मदीश्वरे त्रातरि यीशुख्रीष्टे च
धार्म्मिकत्वसम्बलितविश्वासधनस्य समानांशित्वं प्राप्तास्तान् प्रति यीशु-
२ ख्रीष्टस्य दासः प्रेरितश्च शिमोनो पितरः पत्रं लिखति। ईश्वरस्यास्माकं
प्रभो यीशोश्च तत्त्वज्ञानेन युष्मास्वनुग्रहशान्त्यो र्बाहुल्यं वर्त्ततां।
३ जीवनार्थम् ईश्वरभक्त्यर्थञ्च यद्यद् आवश्यकं तत् सर्व्वं गौरव-
सद्गुणाभ्याम् अस्मदाह्वानकारिणस्तत्त्वज्ञानद्वारा तस्येश्वरीयशक्तिरस्मभ्यं
४ दत्तवती। तत्सर्व्वेण चास्मभ्यं तादृशा बहुमूल्या महाप्रतिज्ञा दत्ता
याभि र्यूयं संसारव्याप्तात् कुत्सिताभिलाषमूलात् सर्व्वनाशाद् रक्षां
५ प्राप्येश्वरीयस्वभावस्यांशिनो भवितुं, शक्नुथ। ततो हेतो र्यूयं सम्पूर्णं
६ यत्नं विधाय विश्वासे सौजन्यं सौजन्ये ज्ञानं ज्ञान आयतेन्द्रियताम्
आयतेन्द्रियतायां धैर्य्यं धैर्य्ये ईश्वरभक्तिम् ईश्वरभक्तौ भ्रातृस्नेहं
७ भ्रातृस्नेहे च प्रेम युङ्क्त। एतानि यदि युष्मासु विद्यन्ते वर्द्धन्ते च
८ तर्ह्यस्मत्प्रभो र्यीशुख्रीष्टस्य तत्त्वज्ञाने युष्मान् अलसान् निष्फलांश्च न
९ स्थापयिष्यन्ति। किन्त्वेतानि यस्य न विद्यन्ते सो ऽन्धो मुद्रित-
१० लोचनः स्वकीयपूर्व्वपापानां मार्ज्जनस्य विस्मृतिं गतश्च। तस्माद्
हे भ्रातरः, यूयं स्वकीयाह्वानवरणयो र्दृढकरणे बहु यतध्वं, तत्
११ कृत्वा कदाच न स्खलिष्यथ। यतो ऽनेन प्रकारेणास्माकं प्रभोस्त्रातु
र्यीशुख्रीष्टस्यानन्तराज्यस्य प्रवेशेन यूयं सुकलेन योजयिष्यध्वे।
१२ यद्यपि यूयम् एतत् सर्व्वं जानीथ वर्त्तमाने सत्यमते सुस्थिरा
भवथ च तथापि युष्मान् सर्व्वदा तत् स्मारयितुम् अहम् अयत्नवान्

न भविष्यामि। यावद् एतस्मिन् दूष्ये तिष्ठामि तावद् युष्मान् १३
स्मारयन् प्रबोधयितुं विहितं मन्ये। यतो ऽस्माकं प्रभु र्यीशुख्रीष्टो १४
मां यत् ज्ञापितवान् तदनुसाराद् दूष्यमेतत् मया शीघ्रं त्यक्तव्यम्
इति जानामि। मम परलोकगमनात् परमपि यूयं यदेतानि स्मर्त्तुं १५
शक्ष्यथ तस्मिन् सर्व्वथा यतिष्ये। यतो ऽस्माकं प्रभो र्यीशुख्रीष्टस्य १६
पराक्रमं पुनरागमनञ्च युष्मान् ज्ञापयन्तो वयं कल्पितान्युपाख्या-
नान्यन्वगच्छामेति नहि किन्तु तस्य महिम्नः प्रत्यक्षसाक्षिणो भूत्वा
भाषितवन्तः। यतः स पितुरीश्वराद् गौरवं प्रशंसाञ्च प्राप्तवान् १७
विशेषतो महिमयुक्ततेजोमध्याद् एतादृशी वाणी तं प्रति निर्गत-
वती, यथा, एष मम प्रियपुत्र एतस्मिन् मम परमसन्तोषः।
स्वर्गात् निर्गतेयं वाणी पवित्रपर्व्वते तेन सार्द्धं विद्यमानैरस्माभिर- १८
श्रावि। अपरम् अस्मत्समीपे दृढतरं भाववाणी विद्यते यूयञ्च १९
यदि दिनारम्भं युष्मन्मनःसु प्रभातीयनक्षत्रस्योदयञ्च यावत् तिमिर-
मये स्थाने ज्वलन्तं प्रदीपमिव तद् वाक्यं सम्मन्यध्वे तर्हि भद्रं
करिष्यथ। शास्त्रीया कापि भाववाणी मनुष्यस्य स्वकीयभावबोधिका २०
नहि, एतद् युष्माभिः सम्यक् ज्ञायतां। यतो भाववाणी पुरा २१
मानुषाणाम् इच्छातो नोत्पन्ना किन्त्वीश्वरस्य पवित्रलोकाः पवित्रे-
णात्मना प्रवर्त्तिताः सन्तो वाक्यम् अभाषन्त।

धार्म्मिकाणां रक्षाया कथनम्।

अपरं पूर्व्वकाले यथा लोकानां मध्ये मिथ्याभाववादिन उपा- २ १
तिष्ठन् तथा युष्माकं मध्येऽपि मिथ्याशिक्षका उपस्थास्यन्ति, ते
स्वेषां क्रेतारं प्रभुम् अनङ्गीकृत्य सत्वरं विनाशं स्वेषु वर्त्तयन्ति
विनाशकवैधर्म्म्यं गुप्तं युष्मन्मध्यम् आनेष्यन्ति। ततो ऽनेकेषु तेषां २
विनाशकमार्गं गतेषु तेभ्यः सत्यमार्गस्य निन्दा सम्भविष्यति। अपरञ्च ३

ते लोभात् कापट्यवाक्यै र्युष्मत्तो लाभं करिष्यन्ते किन्तु तेषां
पुरातनदण्डाज्ञा न विलम्बते तेषां विनाशश्च न निद्राति।
४ ईश्वरः कृतपापान् दूतान् न क्षमित्वा तिमिरशृङ्खलैः पाताले
५ रुद्ध्वा विचारार्थं समर्पितवान्। पुरातनं संसारमपि न क्षमित्वा तं
दुष्टानां संसारं जलाप्लावनेन मज्जयित्वा सप्तजनैः सहितं धर्म्मप्रचारकं
६ नोहं रक्षितवान्। सदोमो घोमरा चेतिनामके नगरे भविष्यतां
७ दुष्टानां दृष्टान्तं विधाय भस्मीकृत्य विनाशेन दण्डितवान्; किन्तु
तैः कुत्सितव्यभिचारिभि र्दुष्टात्मभिः क्लिष्टं धार्म्मिकं लोटं रक्षितवान्।
८ स धार्म्मिको जनस्तेषां मध्ये निवसन् स्वीयदृष्टिश्रोत्रगोचरेभ्यस्तेषाम्
९ अधर्म्माचारेभ्यः स्वकीयधार्म्मिकमनसि दिने दिने तप्तवान्। प्रभु
र्भक्तान् परीक्षाद् उद्धर्त्तुं विचारदिनञ्च यावद् दण्ड्यमानान्
१० अधार्म्मिकान् रोद्धुं पारयति, विशेषतो ये ऽमेध्याभिलाषात्
शारीरिकसुखम् अनुगच्छन्ति कर्त्तृत्वपदानि चावजानन्ति तानेव
११ (रोद्धुं पारयति।) ते दुःसाहसिनः प्रगल्भाश्च। अपरं बलगौरवाभ्यां
श्रेष्ठा दिव्यदूताः प्रभोः सन्निधौ येषां वैपरीत्येन निन्दासूचकं विचारं
१२ न कुर्व्वन्ति तेषाम् उच्चपदस्थानां निन्दनाद् इमे न भीताः। किन्तु
ये बुद्धिहीनाः प्रकृता जन्तवो धर्त्तव्यतायै विनाश्यतायै च जायन्ते
तत्सदृशा इमे यन्न बुध्यन्ते तत् निन्दन्तः स्वकीयविनाश्यतया
१३ विनंक्ष्यन्ति स्वीयाधर्म्मस्य फलं प्राप्स्यन्ति च। ते दिवा प्रकृष्टभोजनं
सुखं मन्यन्ते निजछलैः सुखभोगिनः सन्तो युष्माभिः सार्द्धं भोजनं
१४ कुर्व्वन्तः कलङ्किनो दोषिणश्च भवन्ति। तेषां लोचनानि
परदाराकाङ्क्षीणि पापे चाश्रान्तानि ते चञ्चलानि मनांसि मोहयन्ति
१५ लोभे तत्परमनसः सन्ति च। ते शापग्रस्ता वंशाः सरलमार्गं विहाय
वियोरपुत्रस्य विलियमस्य विपथेन व्रजन्तो भ्रान्ता अभवन्। स
१६ विलियमो ऽप्यधर्म्मात् प्राप्ये पारितोषिके ऽप्रीयत, किन्तु निजापराधात्
भर्त्सनाम् अलभत यतो वचनशक्तिहीनं वाहनं मानुषिकगिरम्

उच्चार्य्य भाववादिन उन्मत्तताम् अबाधत। इमे निर्जलानि १७
प्रस्रवणानि प्रचण्डवायुना चालिता मेघाश्च तेषां कृते नित्यस्थायी
घोरतरान्धकारः सञ्चितो ऽस्ति। ये च जना भ्रान्त्याचारिगणात् १८
कृच्छ्रेणोद्धृतास्तान् इमे ऽपरिमितदर्पकथा भाषमाणाः शारीरिक-
सुखाभिलाषैः कामक्रीडाभिश्च मोहयन्ति। तेभ्यः स्वाधीनतां १९
प्रतिज्ञाय स्वयं विनाश्यताया दासा भवन्ति, यतः,

यो येनैव पराजिग्ये स जातस्तस्य किङ्करः।

त्रातुः प्रभो र्यीशुख्रीष्टस्य ज्ञानेन संसारस्य मलेभ्य उद्धृता ये २०
पुनस्तेषु निमज्ज्य पराजीयन्ते तेषां प्रथमदशातः शेषदशा कुत्सिता
भवति। तेषां पक्षे धर्म्मपथस्य ज्ञानाप्राप्ति र्वरं न च निर्दिष्टात् २१
पवित्रविधिमार्गात् ज्ञानप्राप्तानां परावर्त्तनं। किन्तु येयं सत्या २२
दृष्टान्तकथा सैव तेषु फलितवती, यथा,

कुक्कुरः स्वीयवान्ताय व्यावर्त्तते पुनः पुनः।
लुठितुं कर्द्दमे तद्वत् क्षालितश्चैव शूकरः॥

प्रभोः पुनरागमनप्रतीक्षा।

हे प्रियतमाः यूयं यथा पवित्रभाववादिभिः पूर्व्वोक्तानि ३ १
वाक्यानि त्रात्रा प्रभुना प्रेरितानाम् अस्माकम् आदेशञ्च स्मरथ
तथा युष्मान् स्मारयित्वा युष्माकं सरलभावं प्रबोधयितुम् अहं २
द्वितीयम् इदं पत्रं लिखामि। प्रथमं युष्माभिरिदं ज्ञायतां यत् शेषे ३
काले स्वेच्छाचारिणो निन्दका उपस्थाय वदिष्यन्ति प्रभोरागमनस्य ४
प्रतिज्ञा कुत्र? यतः पितृलोकानां महानिद्रागमनात् परं सर्व्वाणि
सृष्टेरारम्भकाले यथा तथैवावतिष्ठन्ते। पूर्व्वम् ईश्वरस्य वाक्येनाकाश- ५
मण्डलं जलाद् उत्पन्ना जले सन्तिष्ठमाना च पृथिव्यविद्यतैतद्
अनिच्छुकतातस्ते न जानन्ति, ततस्तात्कालिकसंसारो जलेनाप्लावितो
विनाशं गतः। किन्त्वधुना वर्त्तमाने आकाशभूमण्डले तेनैव वाक्येन ६
वह्न्यर्थं गुप्ते विचारदिनं दुष्टमानवानां विनाशञ्च यावद् रक्ष्येते। ७

८ हे प्रियतमाः, यूयम् एतदेकं वाक्यम् अनवगता मा भवत यत्
प्रभोः साक्षाद् दिनमेकं वर्षसहस्रवद् वर्षसहस्रञ्च दिनैकवत्।
९ केचिद् यथा विलम्बं मन्यन्ते तथा प्रभुः स्वप्रतिज्ञायां विलम्बते
तन्नहि किन्तु को ऽपि यन्न विनश्येत् सर्व्वं एव मनःपरावर्त्तनं
गच्छेयुरित्यभिलषन् सो ऽस्मान् प्रति दीर्घसहिष्णुतां विदधाति।
१० किन्तु क्षपायां चौर इव प्रभो र्दिनम् आगमिष्यति तस्मिन्
महाशब्देन गगनमण्डलं लोप्स्यते मूलवस्तूनि च तापेन गलिष्यन्ते
११ पृथिवी तन्मध्यस्थितानि कर्म्माणि च धक्ष्यन्ते। अतः सर्व्वैरेतै र्विकारे
गन्तव्ये सति यस्मिन् आकाशमण्डलं दाहेन विकारिष्यते मूलवस्तूनि
१२ च तापेन गलिष्यन्ते तस्येश्वरदिनस्यागमनं प्रतीक्षमाणैराकाङ्क्षमाणैश्च
१३ युष्माभि र्धर्म्माचारेश्वरभक्तिभ्यां कीदृशै र्लोकै र्भवितव्यं? तथापि
वयं तस्य प्रतिज्ञानुसारेण धर्म्मस्य वासस्थानं नूतनम् आकाशमण्डलं
नूतनं भूमण्डलञ्च प्रतीक्षामहे।

१४ अतएव हे प्रियतमाः, तानि प्रतीक्षमाणा यूयं निष्कलङ्का
१५ अनिन्दिताश्च भूत्वा यत् शान्त्याश्रितास्तिष्ठथैतस्मिन् यतध्वं। अस्माकं
प्रभो र्दीर्घसहिष्णुताञ्च परित्राणजनिकां मन्यध्वं। अस्माकं प्रियभ्रात्रे
पौलाय यत् ज्ञानम् अदायि तदनुसारेण सोऽपि पत्रे युष्मान् प्रति
१६ तदेवालिखत्। स्वकीयसर्व्वपत्रेषु चैतान्यधि प्रस्तुत्य तदेव गदति।
तेषु पत्रेषु कतिपयानि दुरूहाणि वाक्यानि विद्यन्ते ये च लोका
अज्ञानाश्चञ्चलाश्च ते निजविनाशार्थम् अन्यशास्त्रीयवचनानीव
१७ तान्यपि विकारयन्ति। तस्माद् हे प्रियतमाः, यूयं पूर्व्वं बुद्ध्वा
सावधानास्तिष्ठत, अधार्म्मिकाणां भ्रान्तिस्रोतसापहृताः स्वकीयसु-
१८ स्थिरत्वात् मा भ्रश्यत। किन्त्वस्माकं प्रभोस्त्रातु र्यीशुख्रीष्टस्यानुग्रहे
ज्ञाने च वर्द्धध्वं। तस्य गौरवम् इदानीं सदाकालञ्च भूयात्। आमेन्।

# योहनस्य प्रथमं सर्व्वसाधारणपत्रं।

पित्रा ईश्वरेण यीशुना सार्द्धञ्च सहांशित्वफलम् कथनम्।

यीशुरेवानन्तजीवनस्वरूपम्।

आदितो य आसीद् यस्य वाग् अस्माभिरश्रावि यञ्च वयं 1
स्वनेत्रै र्दृष्टवन्तो यञ्च वीक्षितवन्तः स्वकरैः स्पृष्टवन्तश्च तं जीव-
नवादं वयं ज्ञापयामः। स जीवनस्वरूपः प्राकाशत वयञ्च तं
दृष्टवन्तस्तमधि साक्ष्यं दद्मश्च, यश्च पितुः सन्निधाववर्त्ततास्माकं
समीपे प्रकाशत च तम् अनन्तजीवनस्वरूपं वयं युष्मान् ज्ञाप-
यामः। अस्माभि र्यद् दृष्टं श्रुतञ्च तदेव युष्मान् ज्ञाप्यते तेना-
स्माभिः सहांशित्वं युष्माकं भविष्यति। अस्माकञ्च सहांशित्वं पित्रा
तत्पुत्रेण यीशुख्रीष्टेन च सार्द्धं भवति। अपरञ्च युष्माकम् आनन्दो
यत् सम्पूर्णो भवेद् तदर्थं वयम् एतानि लिखामः।

ईश्वरो ज्योतिस्तस्मिन् अवस्थितिकथनम्।

वयं यां वार्त्तां तस्मात् श्रुत्वा युष्मान् ज्ञापयामः सेयम्। ईश्वरो ज्योतिस्तस्मिन् अन्धकारस्य लेशोऽपि नास्ति। वयं तेन सहांशिन इति गदित्वा यद्यन्धकारे चरामस्तर्हि सत्याचारिणो न सन्तोऽनृतवादिनो भवामः। किन्तु स यथा ज्योतिषि वर्त्तते तथा वयमपि यदि ज्योतिषि चरामस्तर्हि परस्परं सहभागिनो भवामस्तस्य पुत्रस्य यीशुख्रीष्टस्य रुधिरञ्चास्मान् सर्व्वस्मात् पापात् शुद्ध-यति। वयं निष्पापा इति यदि वदामस्तर्हि स्वयमेव स्वान् वञ्च-

९ यामः सत्यमतञ्चास्माकम् अन्तरे न विद्यते। यदि स्वपापानि
स्वीकुर्म्महे तर्हि स विश्वास्यो यथार्थिकश्चास्ति तस्माद् अस्माकं
१० पापानि क्षमिष्यते सर्व्वस्माद् अधर्म्माच्चास्मान् शुद्धयिष्यति। वयम्
अकृतपापा इति यदि वदामस्तर्हि तम् अनृतवादिनं कुर्म्मस्तस्य
वाक्यञ्चास्माकम् अन्तरे न विद्यते।

२ १ हे प्रियबालकाः, युष्माभि र्यत् पापं न क्रियेत तदर्थं युष्मान्
प्रत्येतानि मया लिख्यन्ते। यदि तु केनापि पापं क्रियते तर्हि
पितुः समीपे ऽस्माकं एकः सहायो ऽर्थतो धार्म्मिको यीशुः
२ ख्रीष्टो विद्यते। स चास्माकं पापानां प्रायश्चित्तं केवलमस्माकं
नहि किन्तु निखिलसंसारस्य पापानां प्रायश्चित्तं।

३ वयं तं जानीम इति तदीयाज्ञापालनेनावगच्छामः। अहं तं
४ जानामीति वदित्वा यस्तस्याज्ञा न पालयति सो ऽनृतवादी सत्य-
५ मतञ्च तस्यान्तरे न विद्यते। यः कश्चित् तस्य वाक्यं पालयति
तस्मिन् ईश्वरस्य प्रेम सत्यरूपेण सिध्यति वयं तस्मिन् वर्त्तामहे
६ तद् एतेनावगच्छामः। अहं तस्मिन् तिष्ठामीति यो गदति तस्येदम्
उचितं यत् ख्रीष्टो यादृग् आचरितवान् सो ऽपि तादृग् आचरेत्।

७ हे प्रियतमाः, युष्मान् प्रत्यहं नूतनामाज्ञां लिखामीति नहि
८ किन्त्वादितो युष्माभि र्लब्धां पुरातनामाज्ञां लिखामि। आदितो
युष्माभि र्यद् वाक्यं श्रुतं सा पुरातनाज्ञा। पुनरपि युष्मान् प्रति
नूतनाज्ञा मया लिख्यत एतदपि तस्मिन् युष्मासु च सत्यं, यतो
९ ऽन्धकारो व्यत्येति सत्या ज्योतिश्चेदानीं प्रकाशते; अहं ज्योतिषि
वर्त्त इति गदित्वा यः स्वभ्रातरं द्वेष्टि सो ऽद्यापि तमिस्रे वर्त्तते।
१० स्वभ्रातरि यः प्रीयते स एव ज्योतिषि वर्त्तते विघ्नजनकं किमपि
११ तस्मिन् न विद्यते। किन्तु स्वभ्रातरं यो द्वेष्टि स तिमिरे वर्त्तते

तिमिरे चरति च तिमिरेण च तस्य नयने ऽन्धीक्रियेते तस्मात्
क यामीति स ज्ञातुं न शक्नोति।

ईश्वरीयसत्ये प्रेमे च स्थिरं स्थातुं उपदेशः।

हे शिशवः, यूयं तस्य नाम्ना पापक्षमां प्राप्तवन्तस्तस्माद् अहं १२
युष्मान् प्रति लिखामि। हे पितरः, य आदितो वर्त्तमानस्तं यूयं १३
जानीथ तस्माद् युष्मान् प्रति लिखामि। हे युवानः, यूयं पापा-
त्मानं जितवन्तस्तस्माद् युष्मान् प्रति लिखामि। हे बालकाः,
यूयं पितरं जानीथ तस्मादहं युष्मान् प्रति लिखितवान्। हे १४
पितरः, आदितो यो वर्त्तमानस्तं यूयं जानीथ तस्माद् युष्मान्
प्रति लिखितवान्। हे युवानः, युयं बलवन्त आध्वे, ईश्वरस्य
वाक्यञ्च युष्मदन्तरे वर्त्तते पापात्मा च युष्माभिः पराजिग्ये तस्माद्
युष्मान् प्रति लिखितवान्। यूयं संसारे संसारस्थविषयेषु च मा १५
प्रीयध्वं यः संसारे प्रीयते तस्यान्तरे पितुः प्रेम न तिष्ठति।
यतः संसारे यद्यत् स्थितम् अर्थतः शारीरिकभावस्याभिलाषो १६
दर्शनेन्द्रियस्याभिलाषो जीवनस्य गर्व्वश्च सर्व्वमेतत् पितृतो न
जायते किन्तु संसारादेव। संसारस्तदीयाभिलाषश्च व्यत्येति किन्तु १७
य ईश्वरस्येष्टं करोति सो ऽनन्तकालं यावत् तिष्ठति।

हे बालकाः, शेषकालोऽयं, अपरं ख्रीष्टारिणोपस्थातव्यमिति १८
युष्माभि र्यथा श्रुतं तथा बहवः ख्रीष्टारय उपस्थितास्तस्मादयं
शेषकालोऽस्तीति वयं जानीमः। ते ऽस्मन्मध्यान् निर्गतवन्तः १९
किन्त्वस्मदीया नासन् यद्यस्मदीया अभविष्यन् तर्ह्यस्मत्सङ्गे ऽस्थास्यन्,
किन्तु सर्व्वे ऽस्मदीया न सन्त्येतस्य प्रकाश आवश्यक आसीत्।

पवित्रात्मप्राप्ताभिषेक कथनम्।

यः पवित्रस्तस्माद् यूयम् अभिषेकं प्राप्तवन्तस्तेन सर्व्वाणि २०

२१ जानीथ। यूयं सत्यमतं न जानीथ तत्कारणाद् अहं युष्मान्
प्रति लिखितवान् तन्नहि किन्तु यूयं तत् जानीथ सत्यमताच्च
२२ किमप्यनृतवाक्यं नोत्पद्यते तत्कारणादेव। यीशुरभिषिक्तस्त्रातेति
यो नाङ्गीकरोति तं विना को ऽपरोऽनृतवादी भवेत्? स एव स
२३ ख्रीष्टारि र्यः पितरं पुत्रञ्च नाङ्गीकरोति। यः कश्चित् पुत्रं
नाङ्गीकरोति स पितरमपि न धारयति यश्च पुत्रमङ्गीकरोति स
२४ पितरमपि धारयति। आदितो युष्माभि र्यत् श्रुतं तद् युष्मासु
तिष्ठतु, आदितः श्रुतं वाक्यं यदि युष्मासु तिष्ठति, तर्हि यूयमपि
२५ पुत्रे पितरि च स्थास्यथ। स च प्रतिज्ञयास्मभ्यं यत् प्रतिज्ञातवान्
२६ तद् अनन्तजीवनं। ये जना युष्मान् भ्रामयन्ति तानध्यहम् इदं
२७ लिखितवान्। अपरं यूयं तस्माद् यम् अभिषेकं प्राप्तवन्तः स
युष्मासु तिष्ठति ततः कोऽपि यद् युष्मान् शिक्षयेत् तद्
अनावश्यकं, स चाभिषेको युष्मान् सर्व्वाणि शिक्षयति सत्यश्च
भवति न चातथ्यः, अतः स युष्मान् यद्वद् अशिक्षयत् तद्वत् तत्र
२८ स्थास्यथ। अतएव हे प्रियबालका यूयं तत्र तिष्ठत, तथा सति स
यदा प्रकाशिष्यते तदा वयं प्रतिभान्विता भविष्यामः तस्यागमन-
२९ समये च तस्य साक्षान्न त्रपिष्यामहे। स धार्म्मिको ऽस्तीति यदि
यूयं जानीथ तर्हि यः कश्चिद् धर्म्माचारं करोति स तस्मात्
जात इत्यपि जानीत।

ईश्वरस्य प्रेम। ईश्वरं प्रति प्रेम। ईश्वरसन्तानाः।

३ १ पश्यत वयम् ईश्वरस्य सन्ताना इति नाम्नाख्यामहे, एतेन
पिताස्मभ्यं कीदृक् महाप्रेम प्रदत्तवान्, किन्तु संसारस्तं नाजानात्
२ तत्कारणादस्मान् अपि न जानाति। हे प्रियतमाः, इदानीं वयम्
ईश्वरस्य सन्ताना आस्महे पश्चात् किं भविष्यामस्तद् अद्याप्य-

प्रकाशितं किन्तु प्रकाशं गते वयं तस्य सदृशा भविष्याम इति
जानीमः, यतः स यादृशो ऽस्ति तादृशोऽस्माभि र्दर्शिष्यते।
तस्मिन् एषा प्रत्याशा यस्य कस्यचिद् भवति स स्वं तथा पवित्रं ३
करोति यथा स पवित्रोऽस्ति। यः कश्चित् पापम् आचरति स ४
व्यवस्थालङ्घनं करोति यतः पापमेव व्यवस्थालङ्घनं। अपरं सोऽस्माकं ५
पापान्यपहर्त्तुं प्रकाशतैतद् यूयं जानीथ, पापञ्च तस्मिन् न विद्यते।
यः कश्चित् तस्मिन् तिष्ठति स पापाचारं न करोति यः कश्चित् ६
पापाचारं करोति स तं न दृष्टवान् न वावगतवान्। हे प्रिय- ७
बालकाः, कश्चिद् युष्माकं भ्रमं न जनयेत्, यः कश्चिद् धर्म्माचारं
करोति स तादृग् धार्म्मिको भवति यादृक् स धार्म्मिकोऽस्ति।
यः पापाचारं करोति स शैतानात् जातो यतः शैतान आदितः ८
पापाचारी शैतानस्य कर्म्मणां लोपार्थमेवेश्वरस्य पुत्त्रः प्रकाशत।
यः कश्चिद् ईश्वरात् जातः स पापाचारं न करोति यतस्तस्य ९
वीर्य्यं तस्मिन् तिष्ठति पापाचारं कर्त्तुञ्च न शक्नोति यतः स
ईश्वरात् जातः। इत्यनेनेश्वरस्य सन्तानाः शैतानस्य च सन्ताना १०
व्यक्ता भवन्ति। य कश्चिद् धर्म्माचारं न करोति स ईश्वरात्
जातो नहि यश्च स्वभ्रातरि न प्रीयते सोऽपीश्वरात् जातो नहि।
यतस्तस्य य आदेश आदितो युष्माभिः श्रुतः स एष एव यद् ११
अस्माभिः परस्परं प्रेम कर्त्तव्यं। पापात्मतो जातो यः काविल् १२
स्वभ्रातरं हतवान् तत्सदृशैरस्माभि र्न भवितव्यं। स कस्मात्
कारणात् तं हतवान्? तस्य कर्म्माणि दुष्टानि तद्भ्रातुश्च कर्म्माणि
धर्म्माण्यासन् इति कारणात्।

ईश्वरसन्तानानां भ्रातृप्रेम प्रदर्शनत्वम्।

हे मम भ्रातरः, संसारो यदि युष्मान् द्वेष्टि तर्हि तद् आश्चर्य्यं १३

१४ न मन्यध्वं। वयं मृत्युम् उत्तीर्य्य जीवनं प्राप्तवन्तस्तद् भ्रातृषु
१५ प्रेमकरणात् जानीमः। भ्रातरि यो न प्रीयते स मृत्यौ तिष्ठति।
यः कश्चित् स्वभ्रातरं द्वेष्टि स नरघाती किञ्चानन्तजीवनं
१६ नरघातिनः कस्याप्यन्तरे नावतिष्ठते तद् यूयं जानीथ। अस्माकं
कृते स स्वप्राणांस्त्यक्तवान् इत्यनेन वयं प्रेमतत्त्वम् अवगताः, अपरं
१७ भ्रातृणां कृतेऽस्माभिरपि प्राणास्त्यक्तव्याः। सांसारिकजीविकाप्राप्तो
यो जनः स्वभ्रातरं दीनं दृष्ट्वा तस्मात् स्वीयदयां रुणद्धि तस्यान्तर
१८ ईश्वरस्य प्रेम कथं तिष्ठेत्? हे मम प्रियबालकाः, वाक्येन
जिह्वया वास्माभिः प्रेम न कर्त्तव्यं किन्तु कार्य्येण सत्यतया
१९ चैव। एतेन वयं यत् सत्यमतसम्बन्धीयास्तत् जानीमस्तस्य
२० साक्षात् स्वान्तःकरणानि सान्त्वयितुं शक्ष्यामश्च। यतोऽस्मदन्तःकरणं
यद्यस्मान् दूषयति तर्ह्यस्मदन्तःकरणाद् ईश्वरो महान् सर्व्वज्ञश्च।
२१ हे प्रियतमाः, अस्मदन्तःकरणं यद्यस्मान् न दूषयति तर्हि वयम्
२२ ईश्वरस्य साक्षात् प्रतिभान्विता भवामः। यच्च प्रार्थयामहे तत्
तस्मात् प्राप्नुमः, यतो वयं तस्याज्ञाः पालयामस्तस्य साक्षात्
२३ तुष्टिजनकम् आचारं कुर्म्मश्च। अपरं तस्येयमाज्ञा यद् वयं तस्य
पुत्रस्य यीशुख्रीष्टस्य नाम्नि विश्वसिमस्तस्याज्ञानुसारेण च परस्परं
२४ प्रेम कुर्म्म। यश्च तस्याज्ञाः पालयति स तस्मिन् तिष्ठति तस्मिन्
सोऽपि तिष्ठति; स चास्मान् यम् आत्मानं दत्तवान् तस्मात्
सोऽस्मासु तिष्ठतीति जानीमः।

परीक्षां विना सर्व्वेषाम् उपदेशकानाम् अप्रामाण्यत्वम्।

४ १ हे प्रियतमाः, यूयं सर्व्वेष्वात्मसु न विश्वसित किन्तु ते ईश्वरात्
जाता न वेत्यात्मनः परीक्षध्वं यतो बहवो मृषाभाववादिनो

जगन्मध्यम् आगतवन्तः। ईश्वरीयो य आत्मा स युष्माभिरनेन २
परिचीयतां, यीशुः ख्रीष्टो नरावतारो भूत्वागत एतद् येन
केनचिद् आत्मना स्वीक्रियते स ईश्वरीयः। किन्तु यीशुः ख्रीष्टो ३
नरावतारो भूत्वागत एतद् येन केनचिद् आत्मना नाङ्गीक्रियते
स ईश्वरीयो नहि किन्तु ख्रीष्टारेरात्मा, तेन चागन्तव्यमिति
युष्माभिः श्रुतं, स चेदानीमपि जगति वर्त्तते। हे बालकाः, ४
यूयम् ईश्वरात् जातास्तान् जितवन्तश्च यतः संसाराधिष्ठानकारिणोऽपि
युष्मदधिष्ठानकारी महान्। ते संसारात् जातास्ततो हेतोः संसाराद् ५
भाषन्ते संसारश्च तेषां वाक्यानि गृह्णाति। वयम् ईश्वरात् जाताः, ६
ईश्वरं यो जानाति सोऽस्मद्वाक्यानि गृह्णाति यश्चेश्वरात् जातो
नहि सोऽस्मद्वाक्यानि न गृह्णाति; अनेन वयं सत्यात्मानं
भ्रामकात्मानञ्च परिचिनुमः।

परस्परं प्रेमकरणस्य फलनिर्णयः।

हे प्रियतमाः, वयं परस्परं प्रेम करवाम, यतः प्रेम ईश्वरात् ७
जायते, अपरं यः कश्चित् प्रेम करोति स ईश्वरात् जात ईश्वरं
वेत्ति च। यः प्रेम न करोति स ईश्वरं न जानाति यत ईश्वरः ८
प्रेमस्वरूपः। अस्मास्वीश्वरस्य प्रेमैतेन प्राकाशत यत् स्वपुत्रेणास्मभ्यं ९
जीवनदानार्थम् ईश्वरः स्वीयम् अद्वितीयं पुत्रं जगन्मध्यं प्रेषितवान्।
वयं यद् ईश्वरे प्रीतवन्त इत्यत्र नहि किन्तु स यदस्मासु प्रीतवान् १०
अस्मत्पापानां प्रायश्चित्तार्थं स्वपुत्रं प्रेषितवांश्चेत्यत्र प्रेम सन्तिष्ठते।
हे प्रियतमाः, अस्मासु यदीश्वरेणैतादृशं प्रेम कृतं तर्हि परस्परं ११
प्रेम कर्त्तुम् अस्माकमप्युचितं। ईश्वरः कदाच केनापि न दृष्टः १२
यद्यस्माभिः परस्परं प्रेम क्रियते तर्हीश्वरो ऽस्मन्मध्ये तिष्ठति तस्य

१२ प्रेम चास्मासु सेत्स्यते। अस्मभ्यं तेन स्वकीयात्मनोऽंशो दत्त इत्यनेन
१३ वयं यत् तस्मिन् तिष्ठामः स च यद् अस्मासु तिष्ठतीति जानीमः।
१४ पिता जगत्त्रातारं पुत्रं प्रेषितवान् एतद् वयं दृष्ट्वा प्रमाणयामः।
१५ यीशुरीश्वरस्य पुत्र एतद् येनाङ्गीक्रियते तस्मिन् ईश्वरस्तिष्ठति
१६ स चेश्वरे तिष्ठति। अस्मास्वीश्वरस्य यत् प्रेम वर्त्तते तद् वयं
ज्ञातवन्तस्तस्मिन् विश्वसितवन्तश्च। ईश्वरः प्रेमस्वरूपः प्रेम्नि यस्तिष्ठति
१७ स ईश्वरे तिष्ठति तस्मिंश्चेश्वरस्तिष्ठति। स यादृशो ऽस्ति वयमप्ये-
तस्मिन् जगति तादृशा भवाम एतस्माद् विचारदिने ऽस्माभि र्या
१८ प्रतिभा लभ्यते सास्मत्सम्बन्धीयस्य प्रेम्नः सिद्धिः। प्रेम्नि भीति र्न
वर्त्तते किन्तु सिद्धं प्रेम भीतिं निराकरोति यतो भीतिः सयातनास्ति
१९ भीतो मानवः प्रेम्नि सिद्धो न जातः। अस्मासु स प्रथमं प्रीतवान्
२० इति कारणाद् वयं तस्मिन् प्रीयामहे। ईश्वरे ऽहं प्रीय इत्युक्त्वा
यः कश्चित् स्वभ्रातरं द्वेष्टि सो ऽनृतवादी। स यं दृष्टवान् तस्मिन्
स्वभ्रातरि यदि न प्रीयते तर्हि यम् ईश्वरं न दृष्टवान् कथं तस्मिन्
२१ प्रेम कर्त्तुं शक्नुयात्? अत ईश्वरे यः प्रीयते स स्वीयभ्रातर्य्यपि
प्रीयताम् इयम् आज्ञा तस्माद् अस्माभि र्लब्धा।

विश्वासस्य विजयः।

५ १ यीशुरभिषिक्तस्त्रातेति यः कश्चिद् विश्वसिति स ईश्वरात्
जातः; अपरं यः कश्चित् जनयितरि प्रीयते स तस्मात् जाते जने
२ ऽपि प्रीयते। वयम् ईश्वरस्य सन्तानेषु प्रीयामहे तद् अनेन
३ जानीमो यद् ईश्वरे प्रीयामहे तस्याज्ञाः पालयामश्च। यत ईश्वरे
यत् प्रेम तत् तदीयाज्ञापालनेनास्माभिः प्रकाशयितव्यं, तस्याज्ञाश्च
४ कठोरा न भवन्ति। यतो यः कश्चिद् ईश्वरात् जातः स संसारं

जयति किञ्चास्माकं यो विश्वासः स एवास्माकं संसारजयिजयः।
यीशुरीश्वरस्य पुत्त्र इति यो विश्वसिति तं विना कोऽपरः संसारं ५
जयति? सोऽभिषिक्तस्त्राता यीशुस्तोयरुधिराभ्याम् आगतः केवलं ६
तोयेन नहि किन्तु तोयरुधिराभ्याम्, आत्मा च साक्षी भवति यत
आत्मा सत्यतास्वरूपः। यतो हेतोः आत्मा तोयं रुधिरञ्च त्रीण्येतानि ७
साक्ष्यं ददति तेषां त्रयाणाम् एकत्वं भवति च। मानवानां ८
साक्ष्यं यद्यस्माभि र्गृह्यते तर्हीश्वरस्य साक्ष्यं तस्मादपि श्रेष्ठं यतः ९
स्वपुत्त्रमधीश्वरेण दत्तं साक्ष्यमिदं। ईश्वरस्य पुत्त्रे यो विश्वसिति १०
स निजान्तरे तत् साक्ष्यं धारयति; ईश्वरे यो न विश्वसिति स तम्
अनृतवादिनं करोति यत ईश्वरः स्वपुत्त्रमधि यत् साक्ष्यं दत्तवान्
तस्मिन् स न विश्वसिति। तच्च साक्ष्यमिदं यद् ईश्वरो ऽस्मभ्यम् ११
अनन्तजीवनं दत्तवान् तच्च जीवनं तस्य पुत्त्रे विद्यते। यः पुत्त्रं १२
धारयति स जीवनं धारयति, ईश्वरस्य पुत्त्रं यो न धारयति स
जीवनं न धारयति। ईश्वरपुत्त्रस्य नाम्नि विश्वासकारिन युष्मान् १३
प्रत्येतानि मया लिखितानि तस्याभिप्रायो ऽयं यद् यूयम् अनन्त-
जीवनप्राप्ता इति जानीयात तथेश्वरपुत्त्रस्य नाम्नि विश्वसेत च।

तस्यान्तिके ऽस्माकं या प्रतिभा भवति तस्याः कारणमिदं १४
यद् वयं यदि तस्याभिमतं किमपि तं याचामहे तर्हि सो ऽस्माकं
वाक्यं शृणोति। स चास्माकं यत् किञ्चन याचनं शृणोतीति यदि १५
जानीमस्तर्हि तस्माद् याचिता वरा अस्माभिः प्राप्यन्ते तदपि
जानीमः। कश्चिद् यदि स्वभ्रातरम् अमृत्युजनकं पापं कुर्व्वन्तं १६
पश्यति तर्हि स प्रार्थनां करोतु तेनेश्वरस्तस्मै जीवनं दास्यति,
अर्थतो मृत्युजनकं पापं येन नाकारि तस्मै। किन्तु मृत्युजनकम्
एकं पापम् आस्ते तदधि तेन प्रार्थना क्रियतामित्यहं न वदामि।

१७ सर्व्व एवाधर्म्मः पापं किन्तु सर्व्वपापं मृत्युजनकं नहि। य ईश्वरात्
१८ जातः स पापाचारं न करोति किन्त्वीश्वरात् जातो जनः स्वं रक्षति
१९ तस्मात् स पापात्मा तं न स्पृशतीति वयं जानीमः। वयम् ईश्वरात्
जाताः किन्तु कृत्स्नः संसारः पापात्मनो वशं गतो ऽस्तीति जानीमः।
२० अपरम् ईश्वरस्य पुत्त्र आगतवान् वयञ्च यया तस्य सत्यमयस्य ज्ञानं
प्राप्नुयामस्तादृशीं धियम् अस्मभ्यं दत्तवान् इति जानीमस्तस्मिन्
सत्यमये ऽर्थतस्तस्य पुत्त्रे यीशुख्रीष्टे तिष्ठामश्च; स एव सत्यमय
२१ ईश्वरो ऽनन्तजीवनस्वरूपश्चास्ति। हे प्रियबालकाः यूयं देवमूर्त्तिभ्यः
स्वान् रक्षत। आमेन्।

# योहनस्य द्वितीयं पत्रं।

अनेकख्रीष्टीयमहिलाम् प्रति पत्रम्।

हे अभिरुचिते कुरिये, त्वां तव पुत्त्रांश्च प्रति प्राचीनोऽहं पत्रं १
लिखामि। सत्यमताद् युष्मासु मम प्रेमास्ति केवलं मम नहि किन्तु
सत्यमतज्ञानां सर्व्वेषामेव। यतः सत्यमतम् अस्मासु तिष्ठत्यनन्तकालं २
यावच्चास्मासु स्थास्यति। पितुरीश्वरात् तत्पितुः पुत्रात् प्रभो ३
यीशुख्रीष्टाच्च प्राप्यो ऽनुग्रहः कृपा शान्तिश्च सत्यताप्रेमभ्यां सार्द्धं
युष्मान् अधितिष्ठतु।

वयं पितृतो याम् आज्ञां प्राप्तवन्तस्तदनुसारेण तव केचिद् ४
आत्मजाः सत्यमतम् आचरन्त्येतस्य प्रमाणं प्राप्याहं भृशम् आनन्दित-
वान्। साम्प्रतञ्च हे कुरिये, नवीनां काञ्चिद् आज्ञां न लिखन्नहम् ५
आदितो लब्धाम् आज्ञां लिखन् त्वाम् इदं विनये यद् अस्माभिः
परस्परं प्रेम कर्त्तव्यं। अपरं प्रेमैतेन प्रकाश्यते यद् वयं तस्याज्ञा ६
आचरेम। आदितो युष्माभि र्या श्रुता सेयम् आज्ञा सा च
युष्माभिराचरितव्या। यतो बहवः प्रवञ्चका जगत् प्रविश्य यीशुख्रीष्टो
नरावतारो भूत्वागत एतत् नाङ्गीकुर्व्वन्ति स एव प्रवञ्चकः ७
ख्रीष्टारिश्चास्ति। अस्माकं श्रमो यत् पण्डश्रमो न भवेत् किन्तु ८
सम्पूर्णं वेतनमस्माभि र्लभ्येत तदर्थं स्वानधि सावधाना भवत।
यः कश्चिद् विपथगामी भूत्वा ख्रीष्टस्य शिक्षायां न तिष्ठति स ९
ईश्वरं न धारयति ख्रीष्टस्य शिक्षायां यस्तिष्ठति स पितरं पुत्रञ्च

१० धारयति। यः कश्चिद् युष्मत्सन्निधिमागच्छन् शिक्षामेनां नानयति
स युष्माभिः स्ववेश्मनि न गृह्यतां तव मङ्गलं भूयादिति वागपि
११ तस्मै न कथ्यतां। यतस्तव मङ्गलं भूयादिति वाचं यः कश्चित्
तस्मै कथयति स तस्य दुष्कर्म्मणाम् अंशी भवति।
१२ युष्मान् प्रति मया बहूनि लेखितव्यानि किन्तु पत्रमसीभ्यां
तत् कर्त्तुं नेच्छामि यतो ऽस्माकम् आनन्दो यथा सम्पूर्णो भविष्यति
तथा युष्मत्समीपमुपस्थायाहं सम्मुखीभूय युष्माभिः सम्भाषिष्य
१३ इति प्रत्याशा ममास्ते। तवाभिरुचिताया भगिन्या बालकास्त्वां
नमस्कारं ज्ञापयन्ति। आमेन्।

# योहनस्य तृतीयं पत्रं।



गायं प्रति पत्रम्।

प्राचीनो ऽहं सत्यमताद् यस्मिन् प्रीये तं प्रियतमं गायं प्रति पत्रं १
लिखामि। हे प्रिय, तवात्मा यादृक् शुभान्वितस्तादृक् सर्व्वविषये २
तव शुभं स्वास्थ्यञ्च भूयात्। भ्रातृभिरागत्य तव सत्यमतस्यार्थतस्त्वं ३
कीदृक् सत्यमतमाचरस्येतस्य साक्ष्ये दत्ते मम महानन्दो जातः।
मम सन्तानाः सत्यमतमाचरन्तीतिवार्त्तातो मम य आनन्दो ४
जायते ततो महत्तरो नास्ति। हे प्रिय, भ्रातृन् प्रति विशेषतस्तान् ५
विदेशिनो भ्रातृन् प्रति त्वया यद्यत् कृतं तत् सर्व्वं विश्वासिनो योग्यं।
ते च मण्डल्याः साक्षात् तव प्रेम्नः प्रमाणं दत्तवन्तः, अपरम् ६
ईश्वरयोग्यरूपेण तान् प्रस्थापयता त्वया सत्कर्म्म कारिष्यते। यतस्ते ७
तस्य नाम्ना यात्रां विधाय परजातीयेभ्यः किमपि न गृहीतवन्तः।
तस्माद् वयं तत् सत्यमतस्य सहाया भवेम तदर्थमेतादृशा लोका ८
अस्माभिरनुग्रहीतव्याः।

मण्डलीं प्रत्यहं पत्रं लिखितवान् किन्तु तेषां मध्ये यो ९
दियत्रिफिः प्रधानायते सो ऽस्मान् न गृह्लाति। अतो ऽहं १०
यदोपस्थास्यामि तदा तेन यद्यत् क्रियते तत् सर्व्वं तं स्मारयिष्यामि,
यतः स दुर्व्वाक्यैरस्मान् अपवदति, तेनापि तृप्तिं न गत्वा स्वयमपि
भ्रातृन् नानुगृह्लाति ये चानुग्रहीतुमिच्छन्ति तान् मण्डलितो
ऽपि बहिष्करोति। हे प्रिय, त्वया दुष्कर्म्म नानुक्रियतां किन्तु ११

सत्वमेव । यः सत्कर्म्माचारी स ईश्वरात् जातः, यो दुष्कर्म्माचारी स ईश्वरं न दृष्टवान् । दीमीत्रियस्य पक्षे सर्व्वैः साक्ष्यम् अदायि विशेषतः सत्यमतेनापि, वयमपि तत्पक्षे साक्ष्यं दद्मः, अस्माकञ्च साक्ष्यं सत्यमेवेति यूयं जानीथ ।

त्वां प्रति मया बहूनि लेखितव्यानि किन्तु मसीलेखनीभ्यां लेखितुं नेच्छामि । अचिरेण त्वां द्रक्ष्यामीति मम प्रत्याशास्ते तदावां सम्मुखीभूय परस्परं सम्भाषिष्यावहे । तव शान्ति र्भूयात् । अस्माकं मित्राणि त्वां नमस्कारं ज्ञापयन्ति त्वमप्येकैकस्य नाम प्रोच्य मित्रेभ्यो नमस्कुरु । इति ।

# यिहूदाः सर्व्वसाधारणपत्रं।

विश्वासपक्षे प्राणव्ययेनापि उपदेशत्वम्।

यीशुख्रीष्टस्य दासो याकोबस्य भ्राता यिहूदास्तातेनेश्वरेण १
पवित्रीकृतान् यीशुख्रीष्टेन रक्षितांश्चाहूतान् लोकान् प्रति पत्रं
लिखति। कृपा शान्तिः प्रेम च बाहुल्यरूपेण युष्मास्वधितिष्ठतु। २
हे प्रियाः, साधारणपरित्राणमधि युष्मान् प्रति लेखितुं मम ३
बहुयत्ने जाते पूर्व्वकाले पवित्रलोकेषु समर्पितो यो धर्म्मस्तदर्थं
यूयं प्राणव्ययेनापि सचेष्टा भवतेति विनयार्थं युष्मान् प्रति पत्र-
लेखनमावश्यकम् अमन्ये। यस्माद् एतद्रूपदण्डप्राप्तये पूर्व्वं लिखिताः ४
केचिज्जना अस्मान् उपसृप्तवन्तः, ते ऽधार्म्मिकलोका अस्माकम्
ईश्वरस्यानुग्रहं ध्वजीकृत्य लम्पटताम् आचरन्ति, अद्वितीयो
ऽधिपति र्यो ऽस्माकं प्रभु र्यीशुख्रीष्टस्तं नाङ्गीकुर्व्वन्ति।

भाक्तोपदेशकात् सावधानत्वम्।

तस्माद् यूयं पुरा यद् अवगतास्तत् पुन र्युष्मान् स्मारयितुम् ५
इच्छामि, फलतः प्रभुरेककृत्वः स्वप्रजा मिसरदेशाद् उदधार यत्
ततः परम् अविश्वासिनो व्यनाशयत्। ये च स्वर्गदूताः स्वीय- ६
कर्त्तृत्वपदे न स्थित्वा स्ववासस्थानं परित्यक्तवन्तस्तान् स महादिनस्य
विचारार्थम् अन्धकारमये ऽधःस्थाने सदास्थायिभि र्बन्धनैरबध्नात्।
अपरं सिदोमो घोमरा तन्निकटस्थनगराणि चैतेषां निवासिनस्तत्- ७
समरूपं व्यभिचारं कृतवन्तो विषममैथुनस्य चेष्टया विपथं गतवन्तश्च

तस्मात् तान्यपि दृष्टान्तस्वरूपाणि भूत्वा सदातनवह्निना दण्डं
८ भुञ्जते। तथैवेमे स्वप्नाचारिणोऽपि स्वशरीराणि कलङ्कयन्ति
९ राजाधीनतां न स्वीकुर्व्वन्त्युच्चपदस्थान् निन्दन्ति च। किन्तु
प्रधानदिव्यदूतो मीखायेलो यदा मोशेर्देहे शैतानेन विवदमानः
समभाषत तदा तस्मिन् निन्दारूपं दण्डं समर्पयितुं साहसं न
१० कृत्वाकथयत् प्रभुस्त्वां भर्त्सयतां। किन्त्विमे यन्न बुध्यन्ते तन्निन्दन्ति
११ यच्च निर्ब्बोधपशव इवेन्द्रियैरवगच्छन्ति तेन नश्यन्ति। तान् धिक्,
ते काबिलो मार्गे चरन्ति पारितोषिकस्याशातो बिलियमो भ्रान्ति-
१२ मनुधावन्ति कोरहस्य दुर्म्मुखत्वेन विनश्यन्ति च। युष्माकं प्रेमभोज्येषु
ते विघ्नजनका भवन्ति, आत्मम्भरयश्च भूत्वा निर्लज्जया युष्माभिः
१३ सार्द्धं भुञ्जते। ते वायुभिश्चालिता निस्तोयमेघा हेमन्तकालिका
निष्फला द्विर्मृता उन्मूलिता वृक्षाः, स्वकीयलज्जाफेणोद्वमकाः
प्रचण्डाः सामुद्रतरङ्गाः सदाकालं यावत् घोरतिमिरभागीनि
भ्रमणकारीणि नक्षत्राणि च भवन्ति। आदमतः सप्तमः पुरुषो यो
१४ हनोकः स तानुद्दिश्य भाववाक्यमिदं कथितवान्, यथा,

पश्य स्वकीयपुण्यानाम् अयुतै र्वेष्टितः प्रभुः।
१५ सर्व्वान् प्रति विचाराज्ञासाधनायागमिष्यति।
तदा चाधार्म्मिकाः सर्व्वे जाता यैरपराधिनः।
विधर्म्मकर्म्मणां तेषां सर्व्वेषामेव कारणात्।
तथा तद्विपरीत्येनाप्यधर्म्माचारिपापिनां।
उक्तकठोरवाक्यानां सर्व्वेषामपि कारणात्।
परमेशेन दोषित्वं तेषां प्रकाशयिष्यते॥

१६ ते वाक्कलहकारिणः स्वभाग्यनिन्दकाः स्वेच्छाचारिणो दर्पवादि-
मुखविशिष्टा लाभार्थं मनुष्यस्तावकाश्च सन्ति।

किन्तु हे प्रियतमाः, अस्माकं प्रभो र्यीशुख्रीष्टस्य प्रेरितै र्यद् १७
वाक्यं पूर्व्वं युष्मभ्यं कथितं तत् स्मरत, फलतः शेषसमये स्वेच्छातो १८
ऽधर्म्माचारिणो निन्दका उपस्थास्यन्तीति।

एते लोकाः स्वान् पृथक् कुर्व्वन्तः सांसारिका आत्महीनाश्च १९
सन्ति। किन्तु हे प्रियतमाः, यूयं स्वेषाम् अतिपवित्रविश्वासे २०
निचीयमानाः पवित्रेणात्मना प्रार्थनां कुर्व्वन्त ईश्वरस्य प्रेम्ना स्वान् २१
रक्षत, अनन्तजीवनाय चास्माकं प्रभो र्यीशुख्रीष्टस्य कृपां प्रतीक्षध्वं
अपरं यूयं विविच्य कांश्चिद् अनुकम्पध्वं कांश्चिद् अग्नित उद्धृत्य २२
भयं प्रदर्श्य रक्षत, शारीरिकभावेन कलङ्कितं वस्त्रमपि ऋतीयध्वं। २३

अपरञ्च युष्मान् स्खलनाद् रक्षितुम् उल्लासेन स्वीयतेजसः २४
साक्षात् निर्द्दोषान् स्थापयितुञ्च समर्थो यो ऽस्माकम् अद्वितीय- २५
स्त्राणकर्त्ता सर्व्वज्ञ ईश्वरस्तस्य गौरवं महिमा पराक्रमः कर्त्तृत्वञ्चेदा-
नीम् अनन्तकालं यावद् भूयात्। आमेन्।

# योहनं प्रति प्रकाशितं वाक्यं।

मङ्गलाचरणम्। स्वर्गनिवासीयीशोर्दर्शनम्।

१ १ यत् प्रकाशितं वाक्यम् ईश्वरः स्वदासानां निकटं शीघ्रमुप-
स्थास्यन्तीनां घटनानां दर्शनार्थं यीशुख्रीष्टे समर्पितवान् तत् स
२ स्वीयदूतं प्रेष्य निजसेवकं योहनं ज्ञापितवान्। स चेश्वरस्य वाक्ये
३ ख्रीष्टस्य साक्ष्ये च यद्यद् दृष्टवान् तस्य प्रमाणं दत्तवान्। एतस्य
भाववादिग्रन्थस्य वाक्यानां पाठकः श्रोतारश्च तन्मध्ये लिखिताज्ञा-
ग्राहिणश्च धन्या यतः स कालः सन्निकटः।

४ योहन् आशियादेशस्थाः सप्त मण्डलीः प्रति पत्रं लिखति। यो
वर्त्तमानो भूतो भविष्यंश्च ये च सप्तात्मानस्तस्य सिंहासनस्य सम्मुखे
५ तिष्ठन्ति यश्च यीशुख्रीष्टो विश्वस्तः साक्षी मृतानां मध्ये प्रथमजातो
भूमण्डलस्थराजानाम् अधिपतिश्च भवति, एतेभ्यो ऽनुग्रहः शान्तिश्च
युष्मासु वर्त्ततां। यो ऽस्मासु प्रीतवान् स्वरुधिरेणास्मान् स्वपा-
६ पेभ्यः प्रक्षालितवान् तस्य पितुरीश्वरस्य याजकान् कृत्वास्मान्
राजवर्गे नियुक्तवांश्च तस्मिन् महिमा पराक्रमश्चानन्तकालं यावद्
वर्त्ततां। आमेन्।

७ पश्यत स मेघैरागच्छति तेनैकैकस्य चक्षुस्तं द्रक्ष्यति ये च तं विद्ध-
वन्तस्ते ऽपि तं विलोकिष्यन्ते तस्य कृते पृथिवीस्थाः सर्व्वे वंशा विल-
८ पिष्यन्ति। सत्यम् आमेन्। वर्त्तमानो भूतो भविष्यंश्च यः सर्व्वशक्ति-
मान् प्रभुः परमेश्वरः स गदति, अहमेव कः क्षश्चार्थत आदिरन्तश्च।
९ युष्माकं भ्राता यीशुख्रीष्टस्य क्लेशराज्यतितिक्षाणां सहभागी
चाहं योहन् ईश्वरस्य वाक्यहेतो र्यीशुख्रीष्टस्य साक्ष्यहेतोश्च

पात्मनामक उपद्वीप आसं। तत्र प्रभो र्दिने आत्मनाविष्टो ऽहं १०
स्वपश्चात् तूरीध्वनिवत् महारवम् अश्रौषं, तेनोक्तम्, अहं कः ११
क्षश्चार्थत आदिरन्तश्च। त्वं यद् द्रक्ष्यसि, तद् ग्रन्थे लिखित्वा-
शियादेशस्थानां सप्त मण्डलीनां समीपम् इफिषं स्मुर्णां पर्गामं
थुयातीरां सार्द्दिं फिलादिल्फियां लायदीकेयाञ्च प्रेषय। ततो १२
मया सम्भाषमाणस्य कस्य रवः श्रूयते तद्दर्शनार्थं मुखं परावर्त्तितं
तत् परावर्त्त्य स्वर्णमयाः सप्त दीपवृक्षा दृष्टाः। तेषां सप्त दीप- १३
वृक्षाणां मध्ये दीर्घपरिच्छदपरिहितः सुवर्णशृङ्खलेन वेष्टितवक्षश्च
मनुष्यपुत्राकृतिरेको जनस्तिष्ठति, तस्य शिरः केशाश्च श्वेतमेष- १४
लोमानीव हिमवत् श्वेतौ लोचने वह्निशिखासमे चरणौ वह्नि- १५
कुण्डे तापितसुपित्तलसदृशौ रवश्च बहुतोयानां रवतुल्यः। तस्य १६
दक्षिणहस्ते सप्त तारा विद्यन्ते वक्त्राच्च तीक्ष्णो द्विधारः खड्गो
निर्गच्छति मुखमण्डलञ्च स्वतेजसा देदीप्यमानस्य सूर्य्यस्य सदृशं।
तं दृष्ट्वाहं मृतकल्पस्तच्चरणे पतितस्ततः स्वदक्षिणकरं मयि निधाय १७
तेनोक्तम् अहम् आदिरन्तश्च। अहम् अमरस्तथापि मृतवान् १८
किन्तु पश्याहम् अनन्तकालं यावत् जीवामि। आमेन्। मृत्योः
परलोकस्य च कुञ्जिका मम हस्तगताः। अतो यद् भवति यच्चेतः १९
परं भविष्यति त्वया दृष्टं तत् सर्व्वं लिख्यतां। मम दक्षिणहस्ते २०
स्थिता याः सप्त तारा ये च स्वर्णमयाः सप्त दीपवृक्षास्त्वया
दृष्टास्तत्तात्पर्य्यमिदं ताः सप्त ताराः सप्त मण्डलीनां दूताः
सुवर्णमयाः सप्त दीपवृक्षाश्च सप्त मण्डल्यः सन्ति।

आशियास्थसप्तमण्डलीः प्रति स्वर्गनिवासीयीशोरादेशः।

इफिषस्थमण्डल्या दूतं प्रति त्वम् इदं लिख; यो दक्षिणकरेण २।१
सप्त तारा 'धारयति सप्तानां सुवर्णदीपवृक्षाणां मध्ये गमनागमने

२ करोति च तेनेदम् उच्यते। तव क्रियाः श्रमः सहिष्णुता च मम
गोचराः, त्वं दुष्टान् सोढुं न शक्नोषि ये च प्रेरिता न सन्तः
स्वान् प्रेरितान् वदन्ति त्वं तान् परीक्ष्य मृषाभाषिणो विज्ञातवान्,
३ अपरं त्वं तितिक्षां विदधासि मम नामार्थं बहु सोढवानसि
४ तथापि न पर्य्यक्लाम्यस्तदपि जानामि। किन्तु तव विरुद्धं मयैतत्
५ वक्तव्यं यत् तव प्रथमं प्रेम त्वया व्यहीयत। अतः कुतः पतितो
ऽसि तत् स्मृत्वा मनः परावर्त्त्य पूर्व्वीयक्रियाः कुरु न चेत् त्वया
मनसि न परिवर्त्तिते ऽहं तूर्णम् आगत्य तव दीपवृक्षं स्वस्थानाद्
६ अपसारयिष्यामि। तथापि तवेष गुणो विद्यते यत् नीकलाय-
तीयलोकानां याः क्रिया अहम् ऋतीये तास्त्वमपि ऋतीयसे।
७ यस्य श्रोत्रं विद्यते स मण्डलीः प्रत्युच्यमानाम् आत्मनः कथां
शृणोतु। यो जनो जयति तस्मा अहम् ईश्वरस्यारामस्थजीवनतरोः
फलं भोक्तुं दास्यामि

८ अपरं स्मुर्णास्थमण्डल्या दूतं प्रतीदं लिख; य आदिरन्तश्च
९ यो मृतवान् पुनर्जीवितवांश्च तेनेदम् उच्यते, तव क्रियाः क्लेशो
दैन्यञ्च मम गोचराः किन्तु त्वं धनवानसि ये च यिहूदीया न
सन्तः शैतानस्य समाजाः सन्ति तथापि स्वान् यिहूदीयान् वदन्ति
१० तेषां निन्दामप्यहं जानामि। त्वया यो यः क्लेशः सोढव्यस्तस्मात्
मा भैषीः पश्य शैतानो युष्माकं परीक्षार्थं कांश्चित् कारायां
निक्षेप्स्यति दश दिनानि यावत् क्लेशो युष्मासु वर्त्तिष्यते च। त्वं
मृत्युपर्य्यन्तं विश्वास्यो भव तेनाहं जीवनकिरीटं तुभ्यं दास्यामि।
११ यस्य श्रोत्रं विद्यते स मण्डलीः प्रत्युच्यमानाम् आत्मनः कथां
शृणोतु। यो जयति स द्वितीयमृत्युना न हिंसिष्यते।

१२ अपरं पर्गामस्थमण्डल्या दूतं प्रतीदं लिख, यस्तीक्ष्णं द्विधारं

खड्गं धारयति स एव भाषते। तव क्रिया मम गोचराः, यत्र १३
शैतानस्य सिंहासनं तत्रैव त्वं वससि तदपि जानामि। त्वं मम
नाम धारयसि मद्भक्तेरस्वीकारस्त्वया न कृतो मम विश्वास्यसाक्षिण
आन्तिपाः समये ऽपि न कृतः। स तु युष्मान्मध्ये ऽघानि यतः
शैतानस्तत्रैव निवसति। तथापि तव विरुद्धं मम किञ्चिद् वक्तव्यं १४
यतो देवप्रसादादनाय परदारगमनाय चेस्रायेलः सन्तानानां
सम्मुख उन्माथं स्थापयितुं बालाक् येनाशिक्ष्यत तस्य बिलियमः
शिक्षावलम्बिनस्तव केचित् जानास्तत्र सन्ति। तथा नीकलायतीयानां १५
शिक्षावलम्बिनस्तव केचित् जना अपि सन्ति तदेवाहम् ऋतीये।
अतो हेतोस्त्वं मनः परिवर्त्तय न चेदहं त्वरया तव समीपमुपस्थाय १६
मद्वक्त्रस्थखड्गेन तैः सह योत्स्यामि। यस्य श्रोत्रं विद्यते स मण्डलीः १७
प्रत्युच्यमानाम् आत्मनः कथां शृणोतु। यो जनो जयति तस्मा अहं
गुप्तमान्नां भोक्तुं दास्यामि शुभ्रप्रस्तरमपि तस्मै दास्यामि तत्र प्रस्तरे
नूतनं नाम लिखितं तच्च ग्रहीतारं विना नान्येन केनाप्यवगम्यते।

अपरं थुयातीरास्थमण्डल्या दूतं प्रतीदं लिख। यस्य लोचने १८
वह्निशिखासदृशे चरणौ च सुपित्तलसङ्काशौ स ईश्वरपुत्रो भाषते,
तव क्रियाः प्रेम विश्वासः परिचर्य्या सहिष्णुता च मम गोचराः, १९
तव प्रथमक्रियाभ्यः शेषक्रियाः श्रेष्ठास्तदपि जानामि। तथापि २०
तव विरुद्धं मया किञ्चिद् वक्तव्यं यतो या ईषेबल्नामिका
योषित् स्वां भाववादिनीं मन्यते वेश्यागमनाय देवप्रसादाशनाय
च मम दासान् शिक्षयति भ्रामयति च सा त्वया न निवार्य्यते।
अहं मनःपरिवर्त्तनाय तस्यै समयं दत्तवान् किन्तु सा स्वीयवेश्या- २१
क्रियातो मनः परिवर्त्तयितुं नाभिलषति। पश्याहं तां शय्यायां २२
निक्षेप्स्यामि, ये तया सार्द्धं व्यभिचारं कुर्व्वन्ति ते यदि स्वक्रियाभ्यो

२३ मनांसि न परावर्त्तयन्ति तर्हि तानपि महाक्लेशे निक्षेप्स्यामि
तस्याः सन्तानांश्च मृत्युना हनिष्यामि। तेनाहम् अन्तःकरणानां
मनसाञ्चानुसन्धानकारी युष्माकमेकैकस्मै च स्वक्रियाणां फलं मया
२४ दातव्यमिति सर्व्वाः मण्डल्यो ज्ञास्यन्ति। अपरम् अवशिष्टान्
थुयातीरस्थलोकान् अर्थतो यावन्तस्तां शिक्षां न धारयन्ति ये च
केचित् शैतानस्य गम्भीरार्थान् उच्यन्ते तान् ये नावगतवन्तस्तानहं
२५ वदामि युष्मासु कमप्यपरं भारं नारोपयिष्यामि, किन्तु यद्
२६ युष्माकं विद्यते तत् ममागमनं यावद् धारयत। यो जनो
जयति शेषपर्य्यन्तं मम क्रियाः पालयति च तस्मा अहम्
२७ परजातीयानाम् आधिपत्यं दास्यामि; पित्रतो मया यद्वत्
कर्तृत्वं लब्धं तद्वत् सो ऽपि लौहदण्डेन तान् चारयिष्यति
२८ तेन मृद्भाजनानीव ते चूर्णा भविष्यन्ति। अपरम् अहं तस्मै
२९ प्रभातीयताराम् अपि दास्यामि। यस्य श्रोत्रं विद्यते स मण्डलीः
प्रत्युच्यमानाम् आत्मनः कथां शृणोतु।

३ १ अपरं सार्द्दिस्थमण्डल्या दूतं प्रतीदं लिख, यो जन ईश्वरस्य
सप्तात्मनः सप्त ताराश्च धारयति स एव भाषते, तव क्रिया
मम गोचराः, त्वं जीवदाख्यो ऽसि तथापि मृतो ऽसि तदपि
२ जानामि। प्रबुद्धो भव, अवशिष्टं यद्यत् मृतकल्पं तदपि सबलीकुरु
यत ईश्वरस्य साक्षात् तव कर्म्माणि न सिद्धानीति प्रमाणं मया
३ प्राप्तं। अतः कीदृशीं शिक्षां लब्धवान् श्रुतवांश्चासि तत् स्मरन् तां
पालय स्वमनः परिवर्त्तय च। चेत् प्रबुद्धो न भवेस्तर्ह्यहं स्तेन इव
तव समीपम् उपस्थास्यामि किञ्च कस्मिन् दण्डे उपस्थास्यामि
४ तन्न ज्ञास्यसि। तथापि यैः स्ववासांसि न कलङ्कितानि तादृशाः
कतिपयलोकाः सार्द्दिनगरे ऽपि तव विद्यन्ते ते शुभ्रपरिच्छदै

मम सङ्गे गमनागमने करिष्यन्ति यतस्ते योग्याः। यो जनो ५
जयति स शुभ्रपरिच्छदं परिधापयिष्यते, अहञ्च जीवनग्रन्थात्
तस्य नाम नान्तर्धापयिष्यामि किन्तु मत्पितुः साक्षात् तस्य
दूतानां साक्षाच्च तस्य नाम स्वीकरिष्यामि। यस्य श्रोत्रं विद्यते स ६
मण्डलीः प्रत्युच्यमानाम् आत्मनः कथां शृणोतु।

अपरञ्च फिलादिल्फियास्थमण्डल्या दूतं प्रतीदं लिख, यः ७
पवित्रः सत्यमयश्चास्ति दायूदस्य कुञ्जिकां धारयति च येन
मोचिते ऽपरः कोऽपि न रुणद्धि रुद्धे चापरः कोऽपि न मोचयति
स एव भाषते। तव क्रिया मम गोचराः पश्य तव समीपे ऽहं ८
मुक्तं द्वारं स्थापितवान् तत् केनापि रोद्धुं न शक्यते यतस्तवाल्पं
बलमास्ते तथापि त्वं मम वाक्यं पालितवान् मम नाम्नो ऽस्वीकारं
न कृतवांश्च। पश्य यिहूदीया न सन्तो ये मृषावादिनः स्वान् ९
यिहूदीयान् वदन्ति तेषां शैतानसमाजीयानां कांश्चिद् अहम्
आनेष्यामि पश्य ते मदाज्ञात आगत्य तव चरणयोः प्रणंस्यन्ति
त्वञ्च मम प्रिय ऽसीति ज्ञास्यन्ति। त्वं मम सहिष्णुतासूचकं वाक्यं १०
रक्षितवानसि तत्कारणात् पृथिवीनिवासिनां परीक्षार्थं कृत्स्नं जगद्
येनागामिपरीक्षादिनेनाक्रमिष्यते तस्माद् अहमपि त्वां रक्षिष्यामि।
पश्य मया शीघ्रम् आगन्तव्यं तव यदस्ति तत् धारय को ऽपि ११
तव किरीटं नापहरतु। यो जनो जयति तमहं मदीयेश्वरस्य १२
मन्दिरे स्तम्भं कृत्वा स्थापयिष्यामि स पुन र्न निर्गमिष्यति। अपरञ्च
तस्मिन् मदीयेश्वरस्य नाम मदीयेश्वरस्य पुर्य्या अपि नाम अर्थतो
या नवीना यिरूशालेमः पुरी स्वर्गात् मदीयेश्वरस्य समीपाद्
अवरोक्ष्यति तस्या नाम ममापि नूतनं नाम लेखिष्यामि। यस्य १३
श्रोत्रं विद्यते स मण्डलीः प्रत्युच्यमानाम् आत्मनः कथां शृणोतु।

१४ अपरञ्च लायदिकेयास्थमण्डल्या दूतं प्रतीदं लिख, य आमेन्
अर्थतो विश्वास्यः सत्यमयश्च साक्षी, ईश्वरस्य सृष्टेरादिश्चास्ति स
१५ एव भाषते। तव क्रिया मम गोचराः त्वं शीतो नासि तप्तो ऽपि
१६ नासीति जानामि। तव शीतत्वं तप्तत्वं वा वरं भवेत्, शीतो न
भूत्वा तप्तो ऽपि न भूत्वा त्वमेवम्भूतः कदुष्णो ऽसि तत्कारणाद्
१७ अहं स्वमुखात् त्वाम् उद्वमिष्यामि। अहं धनी समृद्धश्चास्मि मम
कस्याप्यभावो न भवतीति त्वं वदसि किन्तु त्वमेव दुःखार्त्तो दुर्गतो
१८ दरिद्रो ऽन्धो नग्नश्चासि तत् त्वया नावगम्यते। त्वं यद् धनी
भवेस्तदर्थं मत्तो वह्नौ तापितं सुवर्णं क्रीणीहि नग्नत्वात् तव लज्जा
यन्न प्रकाशेत तदर्थं परिधानाय मत्तः शुभ्रवासांसि क्रीणीहि
यच्च तव दृष्टिः प्रसन्ना भवेत् तदर्थं चक्षुर्लेपनायाञ्जनं मत्तः
१९ क्रीणीहीति मम मन्त्रणा। येष्वहं प्रीये तान् सर्व्वान् भर्त्सयामि
२० शास्मि च, अतस्त्वम् उद्यमं विधाय मनः परिवर्त्तय। पश्याहं
द्वारि तिष्ठन् तद् आहन्मि यदि कश्चित् मम रवं श्रुत्वा द्वारं
मोचयति तर्ह्यहं तस्य सन्निधिं प्रविश्य तेन सार्द्धं भोक्ष्ये सो ऽपि
२१ मया सार्द्धं भोक्ष्यते। अपरमहं यथा जितवान् मम पित्रा च
सह तस्य सिंहासन उपविष्टश्चास्मि, तथा यो जनो जयति तमहं
२२ मया सार्द्धं मत्सिंहासन उपवेशयिष्यामि। यस्य श्रोत्रं विद्यते स
मण्डलीः प्रत्युच्यमानाम् आत्मनः कथां शृणोतु।

स्वर्गीयाराधनादर्शनम्।

४ १ ततः परं मया दृष्टिपातं कृत्वा स्वर्गे मुक्तं द्वारम् एकं दृष्टं
मया सहभाषमाणस्य च यस्य तूरीवाद्यतुल्यो रवः पूर्व्वं श्रुतः
स माम् अवोचत् स्थानमेतद् आरोहय, इतः परं येन येन
२ भवितव्यं तदहं त्वां दर्शयिष्ये। तेनाहं तत्क्षणाद् आत्माविष्टो

भूत्वा ऽपश्यं स्वर्गे सिंहासनमेकं स्थापितं तत्र सिंहासने एको
जन उपविष्टो ऽस्ति। सिंहासने उपविष्टस्य तस्य जनस्य रूपं ३
सूर्य्यकान्तमणेः प्रवालस्य च तुल्यं तत् सिंहासनञ्च मरकतमणिव-
द्रूपविशिष्टेन मेघधनुषा वेष्टितं। तस्य सिंहासनस्य चतुर्दिक्षु ४
चतुर्विंशतिसिंहासनानि तिष्ठन्ति तेषु सिंहासनेषु चतुर्विंशति-
प्राचीनलोका उपविष्टास्ते शुभ्रवासःपरिहितास्तेषां शिरांसि च
सुवर्णकिरीटै र्भूषितानि। तस्य सिंहासनस्य मध्यात् तडितो रवाः ५
स्तनितानि च निर्गच्छन्ति सिंहासनस्यान्तिके च सप्त दीपा
ज्वलन्ति त ईश्वरस्य सप्तात्मानः। अपरं सिंहासनस्यान्तिके ६
स्फटिकतुल्यः काचमयो जलाशयो विद्यते, अपरम् अग्रतः पश्चाच्च
वक्रचक्षुष्मन्तश्चत्वारः प्राणिनः सिंहासनस्य मध्ये चतुर्दिक्षु च विद्यन्ते।
तेषां प्रथमः प्राणी सिंहाकारो द्वितीयः प्राणी गोवत्साकारस्तृतीयः ७
प्राणी मनुष्यवद्वदनविशिष्टश्चतुर्थश्च प्राणी उड्डीयमानकुररोपमः।
तेषां चतुर्णाम् एकैकस्य प्राणिनः षट् पक्षाः सन्ति ते च सर्व्वाङ्गेष्व- ८
भ्यन्तरे च वक्रचक्षुर्विशिष्टाः, ते दिवानिशं न विश्राम्य गदन्ति
पवित्रः पवित्रः पवित्रः सर्व्वशक्तिमान् वर्त्तमानो भूतो भविष्यंश्च
प्रभुः परमेश्वरः। इत्थं तैः प्राणिभिस्तस्यानन्तजीविनः सिंहा- ९
सनोपविष्टस्य जनस्य प्रभावे गौरवे धन्यवादे च प्रकीर्त्तिते ते १०
चतुर्विंशतिप्राचीना अपि तस्य सिंहासनोपविष्टस्यान्तिके प्रणिपत्य
तम् अनन्तजीवनं प्रणमन्ति स्वीयकिरीटांश्च सिंहासनस्यान्तिके
निक्षिप्य वदन्ति,

हे प्रभो ईश्वरास्माकं प्रभावं गौरवं बलं। ११
त्वमेवार्हसि सम्प्राप्तुं यत् सर्व्वं ससृजे त्वया।
तवाभिलाषतश्चैव सर्व्वं सम्भूय निर्म्ममे॥

ईश्वरमेषशावकस्य स्वर्गीयमाहात्म्यम्।

५ १ अनन्तरं तस्य सिंहासनोपविष्टजनस्य दक्षिणहस्ते ऽन्त र्बहिश्च
२ लिखितं पत्रमेकं मया दृष्टं तत् सप्तमुद्राभिरङ्कितं। तत्पश्चाद्
एको बलवान् दूतो दृष्टः स उच्चैः स्वरेण वाचमिमां घोषयति कः
३ पत्रमेतद् विवरीतुं तन्मुद्रा मोचयितुञ्चार्हति? किन्तु स्वर्गमर्त्त्य-
पातालेषु तत् पत्रं विवरीतुं निरीक्षितुञ्च कस्यापि सामर्थ्यं नाभवत्।
४ अतो यस्तत् पत्रं विवरीतुं निरीक्षितुञ्चार्हति तादृशजनस्याभावाद्
५ अहं बहु रोदितवान्। किन्तु तेषां प्राचीनानाम् एको जनो
मामवदत् मा रोदीः पश्य यो यिहूदावंशीयः सिंहो दायूदस्य
मूलस्वरूपश्चास्ति स पत्रस्य तस्य सप्तमुद्राणाञ्च मोचनाय प्रभूतवान्।
६ अपरं सिंहासनस्य चतुर्णां प्राणिनां प्राचीनवर्गस्य च मध्य एको
मेषशावको मया दृष्टः स छेदित इव तस्य सप्तशृङ्गाणि सप्तलोचनानि
च सन्ति तानि कृत्स्नां पृथिवीं प्रेषिता ईश्वरस्य सप्तात्मानः।
७ स उपागत्य तस्य सिंहासनोपविष्टजनस्य दक्षिणकरात् तत् पत्रं
८ गृहीतवान्। पत्रे गृहीते चत्वारः प्राणिनश्चतुर्विंशतिप्राचीनाश्च
तस्य मेषशावकस्यान्तिके प्रणिपतन्ति तेषाम् एकैकस्य करयो र्वीणां
सुगन्धिद्रव्यैः परिपूर्णं स्वर्णमयपात्रञ्च तिष्ठति तानि पवित्रलोकानां
९ प्रार्थनास्वरूपाणि। अपरं ते नूतनमेकं गीतमगायन्, यथा,

ग्रहीतुं पत्रिकां तस्या मुद्रा मोचयितुं तथा।
त्वमेवार्हसि यस्मात् त्वं बलिवत् छेदनं गतः।
सर्व्वाभ्यो जातिभाषाभ्यः सर्व्वस्माद् वंशदेशतः।
ईश्वरस्य कृते ऽस्मान् त्वं स्वीयरक्तेन क्रीतवान्
अस्मदीश्वरपक्षे ऽस्मान् नृपतीन् याजकानपि।
कृतवांस्तेन राजत्वं करिष्यामो महीतले॥

अपरं निरीक्षमाणेन मया सिंहासनस्य प्राणिचतुष्टयस्य प्राचीनवर्गस्य ११
च परितो बहूनां दूतानां रवः श्रुतः, तेषां संख्या अयुतायुतानि
सहस्रसहस्राणि च। तैरुच्चैरिदम् उक्तं,

परा‌क्रमं धनं ज्ञानं शक्तिं गौरवमादरं। १२

प्रशंसाञ्चार्हति प्राप्तुं छेदितो मेषशावकः॥

अपरं स्वर्गमर्त्त्यपातालसागरेषु यानि यानि विद्यन्ते तेषां सर्व्वेषां १३
सृष्टवस्तूनां वागियं मया श्रुता,

प्रशंसां गौरवं शौर्य्यम् अधिपत्यं सनातनं।

सिंहासनोपविष्टस्य मेषवत्सस्य गच्छतां।

अपरं ते चत्वारः प्राणिनः कथितवन्तस्तथास्तु, ततश्चतुर्विंशतिप्राचीना १४
अपि प्रणिपत्य तम् अनन्तकालजीविनं प्राणमन्।

पुस्तकस्य सप्तमुद्रामोचनदर्शनम्।

अनन्तरं मयि निरीक्षमाणे मेषशावकेन तासां सप्तमुद्राणाम् ६ १
एका मुद्रा मुक्ता ततस्तेषां चतुर्णाम् एकस्य प्राणिन आगत्य
पश्येतिवाचको मेघगर्जनतुल्यो रवो मया श्रुतः। ततः परम् एकः २
शुक्लाश्वो दृष्टः, तदारूढो जनो धनु धारयति तस्मै च किरीटमेकम्
अदायि ततः स प्रभवन् प्रभविष्यंश्च निर्गतवान्।

अपरं द्वितीयमुद्रायां तेन मोचितायां द्वितीयस्य प्राणिन ३
आगत्य पश्येति वाक् मया श्रुता। ततो ऽरुणवर्णो ऽपर एको ४
ऽश्वो निर्गतवान् तदारोहिणि पृथिवीतः शान्त्यपहरणस्य लोकानां
मध्ये परस्परं प्रतिघातोत्पादनस्य च सामर्थ्यं समर्पितम्, एको
बृहत्खड्गो ऽपि तस्मा अदायि।

अपरं तृतीयमुद्रायां तेन मोचितायां तृतीयस्य प्राणिन आगत्य ५
पश्येति वाक् मया श्रुता, ततः कालवर्ण एको ऽश्वो मया दृष्टः, ६

तदारोहिणो हस्ते तुला तिष्ठति अनन्तरं प्राणिचतुष्टयस्य मध्याद्
वागियं मया श्रुता गोधूमानामेकः सेटको मुद्रापादैकमूल्यः, यवानाञ्च
६ सेटकत्रयं मुद्रापादैकमूल्यं, तैलद्राक्षारसाश्च त्वया मा हिंसितव्याः।
७ अनन्तरं चतुर्थमुद्रायां तेन मोचितायां चतुर्थस्य प्राणिन
८ आगत्य पश्येति वाक् मया श्रुता। ततः पाण्डुरवर्ण एको ऽश्वो मया
दृष्टः, तदारोहिणो नाम मृत्युरिति परलोकश्च तम् अनुचरति
खड्गेन दुर्भिक्षेण महामार्य्या वन्यपशुभिश्च लोकानां बधाय
पृथिव्याश्चतुर्थांशस्याधिपत्यं तस्मा अदायि।
९ अनन्तरं पञ्चममुद्रायां तेन मोचितायाम् ईश्वरवाक्यहेतोस्तत्र
साक्ष्यदानाच्च छेदितानां लोकानां देहिनो वेद्या अधो मयादृश्यन्त।
१० त उच्चैरिदं गदन्ति, हे पवित्र सत्यमय प्रभो अस्माकं रक्तपाते
पृथिवीनिवासिभि र्विवदितुं तस्य फलं दातुञ्च कति कालं विलम्बसे?
११ ततस्तेषाम् एकैकस्मै शुभ्रः परिच्छदो ऽदायि वागियञ्चाकथ्यत
यूयमल्पकालम् अर्थतो युष्माकं ये सहदासा भ्रातरो यूयमिव
घानिष्यन्ते तेषां संख्या यावत् सम्पूर्णतां न गच्छति तावद् विरमत।
१२ अनन्तरं यदा स षष्ठमुद्राममोचयत् तदा मयि निरीक्षमाणे
महान् भूकम्पो ऽभवत् सूर्य्यश्च उष्ट्रलोमजवस्त्रवत् कृष्णवर्णश्चन्द्रमाश्च
१३ रक्तसङ्काशो ऽभवत् गगनस्थताराश्च प्रबलवायुना चालिताद् उडुम्बर-
१४ वृक्षाद् निपातितान्यपक्वफलानीव भूतले न्यपतन्। आकाशमण्डलञ्च
१५ सङ्कुच्यमानग्रन्थइवान्तर्धानम् अगमत् गिरय उपद्वीपाश्च सर्व्वे
स्थानान्तरं चालिताः पृथिवीस्था भूपाला महाँल्लोकाः सहस्रपतयो
धनिनः पराक्रमिणश्च लोका दासा मुक्ताश्च सर्व्वे ऽपि गुहासु
१६ गिरिस्थशैलेषु च स्वान् प्राच्छादयन्। ते च गिरीन् शैलांश्च वदन्ति
यूयम् अस्मदुपरि पतित्वा सिंहासनोपविष्टजनस्य दृष्टितो मेष-

शावकस्य कोपाच्चास्मान् गोपायत; यतस्तस्य क्रोधस्य महादिनम् १७
उपस्थितं कः स्थातुं शक्नोति ?

ईश्वरदासानाम् मुद्राङ्कनम्। स्वर्गीयसुखवर्णनम्।

अनन्तरं चत्वारो दिव्यदूता मया दृष्टाः, ते पृथिव्याश्चतुर्षु ७ १
कोणेषु तिष्ठन्तः पृथिव्यां समुद्रे वृक्षेषु च वायु र्यथा न वहेत् तथा
पृथिव्याश्चतुरो वायून् धारयन्ति। अनन्तरं सूर्य्योदयस्थानाद् उद्यन् २
अपर एको दूतो मया दृष्टः सोऽमरेश्वरस्य मुद्रां धारयति, येषु
चतुर्षु दूतेषु पृथिवीसमुद्रयो र्हिंसनस्य भारो दत्तस्तान् स उच्चै-
रिदं अवदत्। ईश्वरस्य दासा यावद् अस्माभि र्भालेषु मुद्रयाङ्किता ३
न भविष्यन्ति तावत् पृथिवी समुद्रो तरवश्च युष्माभि र्न हिंस्यन्तां।
ततः परं मुद्राङ्कितलोकानां संख्या मयाश्रावि। इस्रायेलः सर्व्व- ४
वंशीयाश्चतुश्चत्वारिंशत्सहस्राधिकलक्षलोका मुद्रयाङ्किता अभवन्,
अर्थतो यिहूदावंशे द्वादश सहस्राणि रूबेणवंशे द्वादशसहस्राणि ५
गादवंशे द्वादशसहस्राणि, आशेरवंशे द्वादशसहस्राणि नप्तालिवंशे ६
द्वादशसहस्राणि मिनशिवंशे द्वादशसहस्राणि, शिमियोनवंशे द्वादश- ७
सहस्राणि लेविवंशे द्वादशसहस्राणि इषाखरवंशे द्वादशसहस्राणि,
सिवूलूनवंशे द्वादशसहस्राणि यूषफवंशे द्वादशसहस्राणि बिन्यामीन- ८
वंशे च द्वादशसहस्राणि लोका मुद्राङ्किताः।

ततः परं सर्व्वजातीयानां सर्व्ववंशीयानां सर्व्वदेशीयानां सर्व्व- ९
भाषावादिनाञ्च महालोकारण्यं मया दृष्टं, तान् गणयितुं केनापि
न शक्यं, ते च शुभ्रपरिच्छदपरिहिताः सन्तः करैश्च तालवृन्तानि
वहन्तः सिंहासनस्य मेषशावकस्य चान्तिके तिष्ठन्ति, उच्चैःस्वरैरिदं
कथयन्ति च, १०

सिंहासनोपविष्टस्य परमेशस्य नः स्तवः।

स्तवश्च मेषवत्सस्य सम्भूयात् त्राणकारणात् ॥
११ ततः सर्व्वे दूताः सिंहासनस्य प्राचीनवर्गस्य प्राणिचतुष्टयस्य च
परितस्तिष्ठन्तः सिंहासनस्यान्तिके न्यूब्जीभूयेश्वरं प्रणम्य वदन्ति,
१२ तथास्तु धन्यवादश्च तेजो ज्ञानं प्रशंसनं।
शौर्य्यं पराक्रमश्चापि शक्तिश्च सर्व्वमेव तत् ॥
वर्त्ततामीश्वरेऽस्माकं नित्यं नित्यं तथास्त्विति।
१३ ततः परं तेषां प्राचीनानाम् एको जनो मां सम्भाष्य जगाद
१४ शुभ्रपरिच्छदपरिहिता इमे के? कुतो वागताः? ततो मयोक्तं
हे महेच्छ भवानेव तत् जानाति। तेन कथितं, इमे महाक्लेशमध्याद्
आगत्य मेषशावकस्य रुधिरेण स्वीयपरिच्छदान् प्रक्षालितवन्तः
१५ शुक्लीकृतवन्तश्च। तत्कारणात् त ईश्वरस्य सिंहासनस्यान्तिके तिष्ठन्तो
दिवारात्रं तस्य मन्दिरे तं सेवन्ते सिंहासनोपविष्टो जनश्च तान्
१६ अधिस्थास्यति। तेषां क्षुधा पिपासा वा पुन र्न भविष्यति रौद्रं
१७ कोऽप्युत्तापो वा तेषु न निपतिष्यति, यतः सिंहासनाधिष्ठानकारी
मेषशावकस्तान् चारयिष्यति, अमृततोयानां प्रस्रवणानां सन्निधिं तान्
गमयिष्यति च, ईश्वरोऽपि तेषां नयनेभ्यः सर्व्वमश्रु प्रमार्क्ष्यति।

तूरीवादकसप्तदूतदर्शनम्।

८ १ अनन्तरं सप्तममुद्रायां तेन मोचितायां सार्द्धदण्डकालं स्वर्गो
२ निःशब्दोऽभवत्। अपरम् अहम् ईश्वरस्यान्तिके तिष्ठतः सप्तदूतान्
३ अपश्यं तेभ्यः सप्ततूर्य्योऽदीयन्त। ततः परम् अन्य एको दूत आगतः
स स्वर्णधूपाधारं गृहीत्वा वेदिमुपातिष्ठत् स च यत् सिंहासनस्यान्तिके
स्थितायाः सुवर्णवेद्या उपरि सर्व्वेषां पवित्रलोकानां प्रार्थनासु धूपान्
४ योजयेत् तदर्थं प्रचुरधूपास्तस्मै दत्ताः। ततस्तस्य दूतस्य करात्
पवित्रलोकानां प्रार्थनाभिः संयुक्तधूपानां धूम ईश्वरस्य समक्षं उदतिष्ठत्।

पश्चात् स दूतो धूपाधारं गृहीत्वा वेद्या वह्निना पूरयित्वा पृथिव्यां ५
निक्षिप्तवान् तेन रवा मेघगर्ज्जनानि विद्युतो भूमिकम्पश्चाभवन्।
ततः परं सप्ततूरी धारयन्तः सप्तदूतास्तूरी वादयितुम् उद्यता ६
अभवन्। प्रथमेन तूर्य्यां वादितायां रक्तमिश्रितौ शिलावह्नी सम्भूय ७
पृथिव्यां निक्षिप्तौ तेन पृथिव्यास्तृतीयांशो दग्धः, तरूणामपि
तृतीयांशो दग्धः, हरिद्वर्णतृणानि च सर्व्वाणि दग्धानि।
अनन्तरं द्वितीयदूतेन तूर्य्यां वादितायां वह्निना प्रज्वलितो ८
महापर्व्वतः सागरे निक्षिप्तस्तेन सागरस्य तृतीयांशो रक्तीभूतः
सागरे स्थितानां सप्राणानां सृष्टवस्तूनां तृतीयांशो मृतः, अर्णव- ९
यानानाम् अपि तृतीयांशो नष्टः।
अपरं तृतीयदूतेन तूर्य्यां वादितायां दीप इव ज्वलन्ती एका १०
महती तारा गगनात् निपत्य नदीनां जलप्रस्रवणानाञ्चोपर्य्य-
वतीर्णा। तस्यास्ताराया नाम नागदमनकमिति, तेन तोयानां ११
तृतीयांशे नागदमनकीभूते तोयानां तिक्तत्वात् बहवो मानवा मृताः।
अपरं चतुर्थदूतेन तूर्य्यां वादितायां सूर्य्यस्य तृतीयांशश्चन्द्रस्य १२
तृतीयांशो नक्षत्राणाञ्च तृतीयांशः प्रहृतः, तेन तेषां तृतीयांशे
ऽन्धकारीभूते दिवसस्तृतीयांशकालं यावत् तेजोहीनो भवति निशापि
तामेवावस्थां गच्छति। तदा निरीक्षमाणेन मयाकाशमध्येनाभिपतत १३
एकस्य दूतस्य रवः श्रुतः स उच्चै र्गदति, अपरे यैस्त्रिभि र्दूतैस्तूर्य्यो
वादितव्यास्तेषाम् अवशिष्टतूरीध्वनितः पृथिवीनिवासिनां सन्तापः
सन्तापः सन्तापश्च सम्भविष्यति।
ततः परं सप्तमदूतेन तूर्य्यां वादितायां गगनात् पृथिव्यां ९ १
निपतित एकस्तारको मया दृष्टः, तस्मै रसातलकूपस्य कुञ्चि-
कादायि। तेन रसातलकूपे मुक्ते महाग्निकुण्डस्य धूम इव धूमस्त- २

स्मात् कूपाद् उद्गतः। तस्मात् कूपधूमात् सूर्य्याकाशौ तिमिराहतौ।
३ तस्माद् धूमात् पतङ्गेषु पृथिव्यां निर्गतेषु नरलोकस्थवृश्चिकवत् बलं
४ तेभ्योऽदायि। अपरं पृथिव्यास्तृणानि हरिद्वर्णशाकादयो वृक्षाश्च
ते न हिंसितव्याः किन्तु येषां भालेष्वीश्वरस्य मुद्राया अङ्को नास्ति
५ केवलं ते मानवास्ते हिंसितव्या इदं त आदिष्टाः। परन्तु तेषां
बधाय नहि केवलं पञ्च मासान् यावत् यातनादानाय तेभ्यः साम-
र्थ्यमदायि। वृश्चिकेन दष्टस्य मानवस्य यादृशी यातना जायते
६ तैरपि तादृशी यातना प्रदीयते। तस्मिन् समये मानवा मृत्युं
मृगयिष्यन्ते किन्तु प्राप्तुं न शक्ष्यन्ति, ते प्राणान् त्यक्तुम् अभि-
७ लषिष्यन्ति किन्तु मृत्युस्तेभ्यो दूरं पलायिष्यते। तेषां पतङ्गानाम्
आकारो युद्धार्थं सुसज्जितानाम् अश्वानाम् आकारस्य तुल्यः, तेषां
शिरःसु सुवर्णकिरीटानीव किरीटानि विद्यन्ते, मुखमण्डलानि च
८ मानुषिकमुखतुल्यानि, केशाश्च योषितां केशानां सदृशाः, दन्ताश्च
९ सिंहदन्ततुल्याः, लौहकवचवत् तेषां कवचानि सन्ति, तेषां पक्षाणां
१० शब्दो रणाय धावतामश्वरथानां समूहस्य शब्दतुल्यः। वृश्चिकानामिव
तेषां लाङ्गूलानि सन्ति, तेषु लाङ्गूलेषु कण्टकानि विद्यन्ते, अपरं
११ पञ्च मासान् यावत् मानवानां हिंसनाय ते सामर्थ्यप्राप्ताः। तेषां
राजा च रसातलस्य दूतस्तस्य नाम इब्रीयभाषया अवद्दोन् यूना-
१२ नीयभाषया च अपल्लुयोन् अर्थतो विनाशक इति। प्रथमः सन्तापो
गतवान् पश्य इतः परमपि द्वाभ्यां सन्तापाभ्याम् उपस्थातव्यं।
१३ ततः परं षष्ठदूतेन तूर्य्यां वादितायाम् ईश्वरस्यान्तिके स्थितायाः
१४ सुवर्णवेद्याश्चतुश्शृङ्गतः कस्यचिद् रवो मयाश्रावि। स तूरीधारिणं
षष्ठदूतम् अवदत्, फरातारूये महानदे ये चत्वारो दूता बद्धाः सन्ति
१५ तान् मोचय। ततस्तद्दण्डस्य तद्दिनस्य तन्मासस्य तद्वत्सरस्य च कृते

निरूपितास्ते चत्वारो दूता मानवानां तृतीयांशस्य बधार्थं मोचिताः।
अपरम् अश्वारोहिसैन्यानां संख्या मयाश्रावि, ते विंशतिकोटय १६
आसन्। मया ये ऽश्वा अश्वारोहिणश्च दृष्टास्त एतादृशाः तेषां १७
वह्निस्वरूपाणि नीलप्रस्तरस्वरूपाणि गन्धकस्वरूपाणि च वर्म्माण्या-
सन्, वाजिनाञ्च सिंहमूर्द्धसदृशा मूर्द्धानः, तेषां मुखेभ्यो वह्निधूम-
गन्धका निर्गच्छन्ति। एतैस्त्रिभि र्दण्डैर्यतस्तेषां मुखेभ्यो निर्गच्छद्भि १८
र्वह्निधूमगन्धकै र्मानुषाणां तृतीयांशो ऽघानि। तेषां वाजिनां १९
बलं मुखेषु लाङ्गूलेषु च स्थितं, यतस्तेषां लाङ्गूलानि सर्पाकाराणि
मस्तकविशिष्टानि च तैरेव ते हिंसन्ति। अपरम् अवशिष्टा ये २०
मानवा ते दण्डै र्न हतास्ते यथा दृष्टिश्रवणगमनशक्तिहीनान्
स्वर्णरौप्यपित्तलप्रस्तरकाष्ठमयान् विग्रहान् भूतांश्च न पूजयिष्यन्ति
तथा स्वहस्तानां क्रियाभ्यः स्वमनांसि न परावर्त्तितवन्तः स्वबध- २१
कुहकव्यभिचारचौर्य्येभ्यो ऽपि मनांसि न परावर्त्तितवन्त।

जनैकदूतस्य ईश्वरस्य च द्वयोः साक्षिणोः दर्शनम्।

अनन्तरं स्वर्गादवरोहन् अपर एको महाबलो दूतो मया १० १
दृष्टः, स परिहितमेघस्तस्य शिरश्च मेघधनुषा भूषितं मुखमण्डलञ्च
सूर्य्यतुल्यं चरणौ च वह्निस्तम्भसमौ। स स्वकरेण विस्तीर्णमेकं २
क्षुद्रग्रन्थं धारयति, दक्षिणचरणेन समुद्रे वामचरणेन च स्थले
तिष्ठति। स सिंहगर्जनवद् उच्चैःस्वरेण न्यनदत् निनादे कृते सप्त ३
स्तनितानि स्वकीयान् स्वनान् प्रकाशयन्। तैः सप्तस्तनितै र्वाक्ये ४
कथिते ऽहं तत् लेखितुम् उद्यत आसं किन्तु स्वर्गात् वागियं
मया श्रुता सप्तस्तनितै र्यद्यद् उक्तं तत् मुद्रयाङ्कय मा लिख।
अपरं समुद्रमेदिन्योस्तिष्ठन् यो दूतो मया दृष्टः स गगनं प्रति ५
स्वदक्षिणकरमुत्थाप्य स्वर्गस्य तन्मध्यस्थानाञ्च मेदिन्यास्तन्मध्यस्थानाञ्च ६

समुद्रस्य तन्मध्यस्थानाञ्च स्रष्टुरनन्तजीविनो नाम्ना शपथमिदम्
७ अकरोत्, पुन र्विलम्बो न भविष्यति, किन्तु तूरीं वादिष्यतः
सप्तमदूतस्य तूरीवादनसमय ईश्वरस्य गुप्ता मन्त्रणा तस्य दासान्
भविष्यद्वादिनः प्रति तेन सुसंवादे यथा प्रकाशिता तथैव सिद्धा
८ भविष्यति। अपरं स्वर्गाद् यस्य रवो मयाश्रावि स पुन र्मां
सम्भाष्यावदत् त्वं गत्वा समुद्रमेदिन्योस्तिष्ठतो दूतस्य करात् तं
विस्तीर्णं क्षुद्रग्रन्थं गृहाण, तेन मया दूतसमीपं गत्वा कथितं
९ ग्रन्थो ऽसौ दीयतां। स माम् अवदत् तं गृहीत्वा गिल, तवोदरे
स तिक्तरसो भविष्यति किन्तु मुखे मधुवत् स्वादु र्भविष्यति।
१० तेन मया दूतस्य कराद् ग्रन्थो गृहीतो गिलितश्च। स तु मम
मुखे मधुवत् स्वादुरासीत् किन्त्वदनात् परं ममोदरस्तिक्ततां गतः।
११ ततः स माम् अवदत् बहून् जातिवंशभाषावादिराजान् अधि
त्वया पुन र्भाववाक्यं वक्तव्यं।

**११** १ अनन्तरं परिमाणदण्डवद् एको नलो मह्यमदायि, स च
दूत उपतिष्ठन् माम् अवदत्, उत्थायेश्वरस्य मन्दिरं वेदीं तत्र-
२ त्यसेवकांश्च मिमीष्व। किन्तु मन्दिरस्य बहिःप्राङ्गणं त्यज न
मिमीष्व यतस्तद् अन्यजातीयेभ्यो दत्तं, पवित्रं नगरञ्च द्विचत्वारिंश-
३ न्मासान् यावत् तेषां चरणै र्मर्द्दिष्यते। पश्चात् मम द्वाभ्यां
साक्षिभ्यां मया सामर्थ्यं दायिष्यते तावुष्ट्रलोमजवस्त्रपरिहितौ
षष्ठ्यधिकद्विशताधिकसहस्रदिनानि यावद् भाववाक्यानि वदिष्यतः।
४ तावेव जगदीश्वरस्यान्तिके तिष्ठन्तौ जितवृक्षौ दीपवृक्षौ च।
५ यदि केचित् तौ हिंसितुं चेष्टन्ते तर्हि तयो र्वदनाभ्याम् अग्नि
र्निर्गत्य तयोः शत्रून् भस्मीकरिष्यति। यः कश्चित् तौ हिंसितुं
६ चेष्टते तेनैवमेव विनष्टव्यं। तयो र्भाववाक्यकथनदिनेषु यथा वृष्टि

नं जायते तथा गगनं रोद्धुं तयोः सामर्थ्यम् अस्ति, अपरं तोयानि
शोणितरूपाणि कर्त्तुं निजाभिलाषात् मुहुर्मुहुः सर्व्वविधदण्डैः
पृथिवीम् आहन्तुञ्च तयोः सामर्थ्यमस्ति। अपरं तयोः साक्ष्ये ७
समाप्ते सति रसातलाद् येनोत्थितव्यं स पशुस्ताभ्यां सह युद्धा तौ
जेष्यति हनिष्यति च। ततस्तयोः प्रभुरपि यस्यां महापुर्य्यां क्रुशे ८
हतो ऽर्थतो यस्याः पारमार्थिकनाम्नी सदोमं मिसरश्चेति तस्या
महापुर्य्याः सन्निवेशे तयोः कुणपे स्थास्यतः। ततो नानाजातीया ९
नानावंशीया नानाभाषावादिनो नानादेशीयाश्च बहवो मानवाः
सार्द्धदिनत्रयं तयोः कुणपे निरीक्षिष्यन्ते, तयोः कुणपयोः श्मशाने
स्थापनं नानुज्ञास्यन्ति। पृथिवीनिवासिनश्च तयो र्हेतोरानन्दिष्यन्ति १०
सुखभोगं कुर्व्वन्तः परस्परं दानानि प्रेषयिष्यन्ति च यतस्ताभ्यां
भाववादिभ्यां पृथिवीनिवासिनो यातनां प्राप्ताः। तस्मात् सार्द्ध- ११
दिनत्रयात् परम् ईश्वरात् जीवनदायक आत्मनि तौ प्रविष्टे तौ
चरणैरुदतिष्ठतां, तेन यावन्तस्तावपश्यन् ते ऽतीव त्रासयुक्ता अभवन्।
ततः परं तौ स्वर्गाद् उच्चैरिदं कथयन्तं रवम् अशृणुतां युवां १२
स्थानम् एतद् आरोहतां ततस्तयोः शत्रुषु निरीक्षमाणेषु तौ मेघेन
स्वर्गम् आरूढवन्तौ। तद्दण्डे महाभूमिकम्पे जाते पुर्य्या दशमांशः १३
पतितः सप्तसहस्राणि मानुषाश्च तेन भूमिकम्पेन हताः, अवशिष्टाश्च
भयं गत्वा स्वर्गीयेश्वरस्य प्रशंसाम् अकीर्त्तयन्। द्वितीयः सन्तापो १४
गतः पश्य तृतीयः सन्तापस्तूर्णम् आगच्छति।

सप्तमदूतस्य तूर्य्या ध्वनिः। सूर्य्यपरिहिताख्त्री तद्विपक्षनागश्च।

अनन्तरं सप्तमदूतेन तूर्य्यां वादितायां स्वर्ग उच्चैः स्वरैर्वागियं १५
कीर्त्तिता,

राजत्वं जगतो यद्यद् राज्यं तदधुनाभवत्।

अस्मत्प्रभोस्तदीयाभिषिक्तस्य तारकस्य च।
तेन चानन्तकालीयं राजत्वं प्रकरिष्यते॥

१६ अपरम् ईश्वरस्यान्तिके स्वकीयसिंहासनेषूपविष्टाश्चतुर्विंशतिप्राचीना
भुवि न्यञ्चो भूत्वेश्वरं प्रणम्यावदन्,

१७ हे भूत वर्त्तमानापि भविष्यंश्च परेश्वर।
हे सर्व्वशक्तिमन् स्वामिन् वयं ते कुर्म्महे स्तवं।
यत् त्वया क्रियते राज्यं गृहीत्वा ते महाबलं।
१८ विजातीयेषु कुप्यत्सु प्रादुर्भूता तव क्रुधा।
मृतानामपि कालो ऽसौ विचारो भविता यदा।
भृत्याश्च तव यावन्तो भविष्यद्वादिसाधवः।
ये च क्षुद्रा महान्तो वा नामतस्ते हि बिभ्यति।
यदा सर्व्वेभ्य एतेभ्यो वेतनं वितरिष्यते।
गन्तव्यश्च यदा नाशो वसुधाया विनाशकैः॥

१९ अनन्तरम् ईश्वरस्य स्वर्गस्थमन्दिरस्य द्वारं मुक्तं तन्मन्दिरमध्ये च
नियममञ्जूषा दृश्याभवत्, तेन तडितो रवाः स्तनितानि भूमिकम्पो
गुरुतरशिलावृष्टिश्चैतानि समभवन्।

१२ १ ततः परं स्वर्गे महाचित्रं दृष्टं योषिदेकासीत् सा परिहित-
सूर्य्या चन्द्रश्च तस्याश्चरणयोरधो द्वादशताराणां किरीटञ्च शिर-
२ स्यासीत्। सा गर्भवती सती प्रसववेदनया व्यथितार्त्तरावम्
३ अकरोत्। ततः स्वर्गे ऽपरम् एकं चित्रं दृष्टं महानाग एक
उपातिष्ठत् स लोहितवर्णस्तस्य सप्त शिरांसि सप्त शृङ्गाणि शिरःसु
४ च सप्त किरीटान्यासन्। स स्वलाङ्गूलेन गगनस्थनक्षत्राणां तृती-
यांशम् अवमृज्य पृथिव्यां न्यपातयत्। स एव नागो नवजातं
सन्तानं ग्रसितुम् उद्यतस्तस्याः प्रसविष्यमाणाया योषितो ऽन्तिके

ऽतिष्ठत्। सा तु पुंसन्तानं प्रसूता स एव लौहमयराजदण्डेन ५
सर्व्वजातीश्चारयिष्यति, किञ्च तस्याः सन्तान ईश्वरस्य समीपं
तदीयसिंहासनस्य च सन्निधिम् उद्धृतः। सा च योषित् प्रान्तरं ६
पलायिता यतस्तत्रेश्वरेण निर्म्मित आश्रमे षष्ट्यधिकशतद्वयाधिक-
सहस्रदिनानि तस्याः पालनेन भवितव्यं।

ततः परं स्वर्गे संग्राम उपातिष्ठत् मीखायेलस्तस्य दूताश्च तेन ७
नागेन सहायुध्यन् तथा स नागस्तस्य दूताश्च संग्रामम् अकुर्व्वन्,
किन्तु प्रभवितुं नाशक्नुवन् यतः स्वर्गे तेषां स्थानं पुन र्नाविद्यत। ८
अपरं स महानागो ऽर्थतो दियावलः (अपवादकः) शैतानश्च ९
(विपक्षः) इति नाम्ना विख्यातो यः पुरातनः सर्पः कृत्स्नं नरलोकं
भ्रामयति स पृथिव्यां निपातितस्तेन सार्द्धं तस्य दूता अपि तत्र
निपातिताः। ततः परं स्वर्गे उच्चै र्भाषमाणो रवो ऽयं मयाश्रावि, १०

त्राणं शक्तिश्च राजत्वमधुनैवेश्वरस्य नः।
तथा तेनाभिषिक्तस्य त्रातुः पराक्रमो ऽभवत्॥
यतो निपातितो ऽस्माकं भ्रातॄणां सो ऽभियोजकः।
येनेश्वरस्य नः साक्षात् ते ऽदूष्यन्त दिवानिशं॥
मेषवत्सस्य रक्तेन स्वसाक्ष्यवचनेन च। ११
ते तु निर्जितवन्तस्तं न च स्नेहम् अकुर्व्वत।
प्राणेष्वपि स्वकीयेषु मरणस्यैव सङ्कटे।
तस्माद् आनन्दतु स्वर्गो हृष्यन्तां तन्निवासिनः। १२
हा भूमिसागरौ तापो युवाञ्चैवाक्रमिष्यति।
युवयोरवतीर्णो यत् शैतानो ऽतीव कोपनः।
अल्पो मे समयो ऽस्त्येतच्चापि तेनावगम्यते॥

अनन्तरं स नागः पृथिव्यां स्वं निक्षिप्तं विलोक्य तां पुत्रप्रसूतां १३

१४ येर्धर्षितम् उपाद्रवत्। ततः सा योषित् यत् स्वकीयं प्रान्तरस्था-
श्रमं प्रत्युत्पतितुं शक्नुयात् तदर्थं महाकुररस्य पक्षद्वयं तस्यै दत्तं, सा
तु तत्र नागतो दूरे कालैकं कालद्वयं कालार्द्धञ्च यावत् पाल्यते।
१५ किञ्च स नागस्तां योषितं स्रोतसा प्लावयितुं स्वमुखात्नदीवत्
१६ तोयानि तस्याः पश्चात् प्राक्षिपत्। किन्तु मेदिनी योषितम्
उपकुर्व्वती निजवदनं व्यादाय नागमुखाद् उद्गीर्णां नदीम् अपिवत्।
१७ ततो नागो योषिते क्रुद्धा तद्वंशस्यावशिष्टलोकैरर्थतो य ईश्वरस्याज्ञाः
पालयन्ति योशोः साक्ष्यं धारयन्ति च तैः सह योद्धुं निर्गतवान्।

द्वयोरद्भुतयोः पश्वोर्दर्शनम्।

१३ १ ततः परमहं सागरीयसिकतायां तिष्ठन् सागराद् उद्गच्छन्तम्
एकं पशुं दृष्टवान् तस्य दश शृङ्गाणि सप्त शिरांसि च दश
शृङ्गेषु दश किरीटानि शिरःसु चेश्वरनिन्दासूचकानि नामानि
२ विद्यन्ते। मया दृष्टः स पशुश्चित्रव्याघ्रसदृशः किन्तु तस्य चरणौ
भल्लूकस्येव वदनञ्च सिंहवदनमिव। नागेन तस्मै स्वीयपराक्रमः स्वीयं
३ सिंहासनं महाधिपत्यञ्चादायि। मयि निरीक्षमाणे तस्य शिरसाम्
एकम् अन्तकाघातेन छेदितमिवादृश्यत, किन्तु तस्यान्तकक्षतस्य
प्रतीकारो ऽक्रियत ततः कृत्स्नो नरलोकस्तं पशुमधि चमत्कारं
४ गतः, यश्च नागस्तस्मै पशवे सामर्थ्यं दत्तवान् सर्व्वे तं प्राणमन्
पशुमपि प्रणमन्तो ऽकथयन्,

को विद्यते पशोस्तुल्यस्तेन को योद्धुमर्हति।

५ अनन्तरं तस्मै दर्पवाक्येश्वरनिन्दावादि वदनं द्विचत्वारिंशन्मासान्
६ यावद् अवस्थितेः सामर्थ्यञ्चादायि। ततः स ईश्वरनिन्दनार्थं मुखं
व्यादाय तस्य नाम तस्यावासं स्वर्गनिवासिनश्च निन्दितुम् आरभत।
७ अपरं धार्म्मिकैः सह योधनस्य तेषां पराजयस्य चानुमतिः सर्व्व-

जातीयानां सर्व्ववंशीयानां सर्व्वभाषावादिनां सर्व्वदेशीयानाञ्चा-
धिपत्यमपि तस्मा अदायि। ततो जगतः सृष्टिकालाच्छेदितस्य ८
मेषवत्सस्य जीवनपुस्तके यावतां नामानि लिखितानि न विद्यन्ते
ते पृथिवीनिवासिनः सर्व्वे तं पशुं प्रणंस्यन्ति। यस्य श्रोत्रं विद्यते ९
स शृणोतु। यो जनो ऽपरान् वन्दीकृत्य नयति स स्वयं वन्दीभूय १०
स्थानान्तरं गमिष्यति, यश्च खड्गेन हन्ति स स्वयं खड्गेन घानिष्यते।
अत्र पवित्रलोकानां सहिष्णुतया विश्वासेन च प्रकाशितव्यं।
अनन्तरं पृथिवीत उद्गच्छन् अपर एकः पशु र्मया दृष्टः स ११
मेषशावकवत् शृङ्गद्वयविशिष्ट आसीत् नागवच्चाभाषत। स प्रथम- १२
पशोरन्तिके तस्य सर्व्वं पराक्रमं व्यवहरति विशेषतो यस्य प्रथम-
पशोरन्तिकक्षतं प्रतीकारं गतं तस्य पूजां पृथिवीं तन्निवासिनश्च
कारयति। अपरं मानवानां साक्षाद् आकाशतो भुवि वह्निवर्षणा- १३
दीनि महाचित्राणि करोति। तस्य पशोः साक्षाद् येषां चित्रकर्म्मणां १४
साधनाय सामर्थ्यं तस्मै दत्तं तैः स पृथिवीनिवासिनो भ्रामयति,
विशेषतो यः पशुः खड्गेन क्षतयुक्तो भूत्वाप्यजीवत् तस्य प्रतिमा-
निर्म्माणं पृथिवीसिवासिन आदिशति। अपरं तस्य पशोः प्रतिमा १५
यथा भाषते यावन्तश्च मानवास्तां पशुप्रतिमां न पूजयन्ति ते
यथा हन्यन्ते तथा पशुप्रतिमायाः प्राणप्रतिष्ठार्थं सामर्थ्यं तस्मा
अदायि। अपरं क्षुद्रमहद्धनिदरिद्रमुक्तदासान् सर्व्वान् दक्षिणकरे १६
भाले वा कलङ्कं ग्राहयति। तस्माद् ये तं कलङ्कमर्थतः पशो र्नाम १७
तस्य नाम्नः संख्याङ्कं वा धारयन्ति तान् विना परेण केनापि क्रय-
विक्रये कर्त्तुं न शक्यते। अत्र ज्ञानेन प्रकाशितव्यं। यो बुद्धिविशिष्टः १८
स पशोः संख्यां गणयतु यतः सा मानवस्य संख्या भवति। सा च
संख्या षट्षष्ट्यधिकषट्शतानि।

मेषशावकस्तस्य सङ्गिनश्च।
पृथिव्याः शस्यच्छेदनं द्राक्षागुच्छच्छेदनञ्च।

१४ १ ततः परं निरीक्षमाणेन मया मेषशावको दृष्टः स सियोन-
पर्व्वतस्योपर्य्यतिष्ठत्, अपरं येषां भालेषु तस्य नाम तत्पितुश्च नाम
लिखितमास्ते तादृशाश्चतुश्चत्वारिंशत्सहस्राधिका लक्षलोकास्तेन
२ सार्द्धम् आसन्। अनन्तरं बहुतोयानां रव इव गुरुतरस्तनितस्य
च रव इव एको रवः स्वर्गात् मयाश्रावि। मया श्रुतः स रवो
३ वीणावादकानां वीणावादनस्य सदृशः। सिंहासनस्यान्तिके प्राणि-
चतुष्टयस्य प्राचीनवर्गस्य चान्तिके ऽपि ते नवीनमेकं गीतम् अगायन्
किन्तु धरणीतः परिक्रीतान् तान् चतुश्चत्वारिंशत्सहस्राधिकलक्ष-
४ लोकान् विना नापरेण केनापि तद् गीतं शिक्षितुं शक्यते। इमे
योषितां सङ्गेन न कलङ्किता यतस्ते ऽमैथुना मेषशावको यत् किमपि
स्थानं गच्छेत् तत्सर्व्वस्मिन् स्थाने तम् अनुगच्छन्ति यतस्ते मनुष्याणां
मध्यतः प्रथमफलानीवेश्वरस्य मेषशावकस्य च कृते परिक्रीताः।
५ तेषां वदनेषु चानृतं किमपि न विद्यते यतस्ते निर्द्दोषा ईश्वर-
सिंहासनस्यान्तिके तिष्ठन्ति।

६ अनन्तरम् आकाशमध्येनोड्डीयमानो ऽपर एको दूतो मया दृष्टः
सो ऽनन्तकालीयं सुसंवादं धारयति स च सुसंवादः सर्व्वजातीयान्
७ सर्व्ववंशीयान् सर्व्वभाषावादिनः सर्व्वदेशीयांश्च पृथिवीनिवासिनः
प्रति तेन घोषितव्यः। स उच्चैःस्वरेणेदं गदति यूयमीश्वराद्
बिभीत तस्य स्तवं कुरुत च यतस्तदीयविचारस्य दण्ड उपातिष्ठत्
तस्माद् आकाशमण्डलस्य पृथिव्याः समुद्रस्य तोयप्रस्रवणानाञ्च स्रष्टा
८ युष्माभिः प्रणम्यतां। तत्पश्चाद् द्वितीय एको दूत उपस्थायावदत्
पतिता पतिता सा महाबाबिल् या सर्व्वजातीयान् स्वकीयं

व्यभिचाररूपं क्रोधमदम् अपाययत्। तत्पश्चात् तृतीयो दूत ९
उपस्थायोच्चैरवदत्, यः कश्चित् तं पशुं तस्य प्रतिमाञ्च प्रणमति
स्वभाले स्वकरे वा कलङ्कं गृह्णाति च सो ऽपीश्वरस्य क्रोधपात्रे स्थितम्
अमिश्रितं मदम् अर्थत ईश्वरस्य क्रोधमदं पास्यति पवित्रदूतानां १०
मेषशावकस्य च साक्षाद् वह्निगन्धकयो र्यातनां लप्स्यते च। तेषां ११
यातनाया धूमो ऽनन्तकालं यावद् उद्गमिष्यति ये च पशुं तस्य
प्रतिमाञ्च पूजयन्ति तस्य नाम्नो ऽङ्कं वा गृह्णन्ति ते दिवानिशं
कञ्चन विरामं न प्राप्स्यन्ति। ये मानवा ईश्वरस्याज्ञा यीशौ १२
विश्वासञ्च पालयन्ति तेषां पवित्रलोकानां सहिष्णुतयात्र प्रकाशितव्यं।
अपरं स्वर्गात् मया सह सम्भाषमाण एको रवो मयाश्रावि तेनोक्तं १३
त्वं लिख, इदानीमारभ्य ये प्रभौ म्रियन्ते ते मृता धन्या इति;
आत्मा भाषते सत्यं स्वश्रमेभ्यस्तै र्विरामः प्राप्तव्यः, तेषां कर्म्माणि
च तान् अनुगच्छन्ति।

तदनन्तरं निरीक्षमाणेन मया श्वेतवर्ण एको मेघो दृष्टस्तन्मेघा- १४
रूढो जनो मानवपुत्राकृतिरस्ति तस्य शिरसि सुवर्णकिरीटं करे
च तीक्ष्णं दात्रं तिष्ठति। ततः परम् अन्य एको दूतो मन्दिरात् १५
निर्गत्योच्चैःस्वरेण तं मेघारूढं सम्भाष्यावदत् त्वया दात्रं प्रसार्य्य
शस्यच्छेदनं क्रियतां शस्यच्छेदनस्य समय उपस्थितो यतो मेदिन्याः
शस्यानि परिपक्वानि। ततस्तेन मेघारूढेन पृथिव्यां दात्रं प्रसार्य्य १६
पृथिव्याः शस्यच्छेदनं कृतं। अनन्तरम् अपर एको दूतः स्वर्गस्थमन्दिरात् १७
निर्गतः सो ऽपि तीक्ष्णं दात्रं धारयति। अपरम् अन्य एको दूतो १८
वेदितो निर्गतः स वह्नेरधिपतिः स उच्चैःस्वरेण तं तीक्ष्णदात्रधारिणं
सम्भाष्यावदत् त्वया स्वं तीक्ष्णं दात्रं प्रसार्य्य मेदिन्या द्राक्षागुच्छ
क्रियतां यतस्तत्फलानि परिणतानि। ततः स दूतः पृथिव्यां स्वदात्रं १९

प्रसार्य्य पृथिव्या द्राक्षाफलच्छेदनम् अकरोत् तत्फलानि चेश्वरस्य
२० क्रोधस्वरूपस्य महाकुण्डस्य मध्यं निक्षिपत्। तत्कुण्डस्थफलानि च
बहि र्मर्द्दितानि ततः कुण्डमध्यात् निर्गतं रक्तं क्रोशशतपर्य्यन्तम्
अश्वानां खलीनान् यावद् व्याप्नोत्।

सप्तान्तिमाघातत्वम्।

१५ १ ततः परम् अहं स्वर्गे ऽपरम् एकम् अद्भुतं महाचिह्नं
दृष्टवान् अर्थतो ये दण्डैरीश्वरस्य कोपः समाप्तिं गमिष्यति तान्
२ दण्डान् धारयन्तः सप्त दूता मया दृष्टाः। वह्निमिश्रितस्य काचमयस्य
जलाशयस्याकृतिरपि दृष्टा ये च पशोस्तत्प्रतिमायास्तन्नाम्नो ऽङ्कस्य च
प्रभुतवन्तस्ते तस्य काचमयजलाशयस्य तीरे तिष्ठन्त ईश्वरीयवीणा
धारयन्ति, ईश्वरदासस्य मोशि गीतं मेषशावकस्य च गीतं गायन्तो
वदन्ति, यथा,

सर्व्वशक्तिविशिष्टस्त्वं हे प्रभो परमेश्वर।
त्वदीयसर्व्वकर्म्माणि महान्ति चाद्भुतानि च।
सर्व्वपुण्यवतां राजन् मार्गा न्याय्या ऋताश्च ते।
हे प्रभो नामधेयात्ते को न भीतिं गमिष्यति।
को वा त्वदीयनाम्नश्च प्रशंसां न करिष्यति।
केवलस्त्वं पवित्रो ऽसि सर्व्वजातीयमानवाः।
त्वामेवाभिप्रणंस्यन्ति समागत्य त्वदन्तिकं।
यस्मात्तव विचाराज्ञाः प्रादुर्भावं गताः किल॥

५ तदनन्तरं मयि निरीक्षमाणे सति स्वर्गे साक्ष्यावासस्य मन्दिरस्य
६ द्वारं मुक्तं। ये च सप्त दूताः सप्त दण्डान् धारयन्ति ते तस्मात्
मन्दिरात् निरगच्छन्। तेषां परिच्छदा निर्म्मलशुभ्रवर्णवस्त्रनिर्म्मिता
७ वक्षांसि च सुवर्णशृङ्खलै र्वेष्टितान्यासन्। अपरं चतुर्णां प्राणिनाम्

एकंसेभ्यः सप्तदूतेभ्यः सप्तसुवर्णकंसान् अददात्। अनन्तरम् ईश्वरस्य ८
तेजःप्रभावकारणात् मन्दिरं धूमेन परिपूर्णं तस्मात् तैः सप्तदूतैः
सप्तदण्डानां समाप्तिं यावत् मन्दिरं केनापि प्रवेष्टुं नाशक्यत।

ततः परं मन्दिरात् तान् सप्तदूतान् सम्भाषमाण एष १६ १
महारवो मयाश्रावि, यूयं गत्वा तेभ्यः सप्तकंसेभ्य ईश्वरस्य क्रोधं
पृथिव्यां स्रावयत।

ततः प्रथमो दूतो गत्वा स्वकंसे यद्यद् अविद्यत तत् पृथिव्याम् २
अस्रावयत् तस्मात् पशोः कलङ्कधारिणां तत्प्रतिमापूजकानां
मानवानां शरीरेषु व्यथाजनका दुष्टव्रणा अभवन्।

ततः परं द्वितीयो दूतः स्वकंसे यद्यद् अविद्यत तत् समुद्रे ३
ऽस्रावयत् तेन स कुणपस्थशोणितरूप्यभवत् समुद्रे स्थिताश्च सर्व्वे
प्राणिनो मृत्युं गताः।

अपरं तृतीयो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वं नदीषु ४
जलप्रस्रवणेषु चास्रावयत् ततस्तानि रक्तमयान्यभवन्। अपरं
तोयानाम् अधिपस्य दूतस्य वागियं मया श्रुता।

वर्त्तमानश्च भूतश्च भविष्यंश्च परेश्वरः। ५
त्वमेव न्याय्यकारी यद् एतादृक् त्वं व्यचारयः।
भविष्यद्वादिसाधूनां रक्तं तैरेव पातितं। ६
शोणितं त्वन्तु तेभ्यो ऽदास्तत्पानं तेषु युज्यते॥

अनन्तरं वेदीतो भाषमाणस्य कस्यचिद् अयं रवो मया श्रुतः, ७
हे परेश्वर सत्यं तत् हे सर्व्वशक्तिमन् प्रभो।
सत्या न्याय्याश्च सर्व्वा हि विचाराज्ञास्त्वदीयकाः॥

अनन्तरं चतुर्थो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वं सूर्य्ये ८
ऽस्रावयत् तस्मै च वह्निना मानवान् दग्धुं सामर्थ्यम् अदायि। तेन ९

मनुष्या महातापेन तापितास्तेषां दण्डानाम् आधिपत्यविशिष्टस्येश्वरस्य नामानिन्दन् तत्प्रशंसार्थञ्च मनःपरिवर्त्तनं नाकुर्व्वन्।

१० ततः परं पञ्चमो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वं पशोः सिंहासने ऽस्रावयत् तेन तस्य राष्ट्रं तिमिराच्छन्नम् अभवत् लोकाश्च
११ वेदनाकारणात् स्वरसना अदंश्यत। स्वकीयव्यथाव्रणकारणाच्च स्वर्गस्थम् ईश्वरम् अनिन्दन् स्वक्रियाभ्यश्च मनांसि न परावर्त्तयन्।

१२ ततः परं षष्ठो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वं फराताख्ये महानदे ऽस्रावयत् तेन सूर्य्योदयदिश आगमिष्यतां राज्ञां
१३ मार्गसुगमार्थं तस्य तोयानि पर्य्यशुष्यन्। अनन्तरं नागस्य वदनात् पशो र्वदनात् मिथ्याभाववादिनश्च वदनात् निर्गच्छन्तस्त्रयो ऽशुचय
१४ आत्मानो मया दृष्टास्ते मण्डूकाकाराः। त आश्चर्य्यकर्म्मकारिणो भूतानाम् आत्मानः सन्ति सर्व्वशक्तिमत ईश्वरस्य महादिने येन युद्धेन भवितव्यं तत्कृते कृत्स्नजगतो राज्ञः संग्रहीतुं तेषां सन्निधिं
१५ निर्गच्छन्ति। अपरम् इब्रिभाषया हर्म्मगिद्दोनामकस्थाने ते
१६ सङ्गृहीताः। पश्याहं चौरवद् आगच्छामि यो जनः प्रबुद्धस्तिष्ठति यथा च नग्नः सन् न पर्य्यटति तस्य लज्जा च यथा दृश्या न भवति तथा स्ववासांसि रक्षति स धन्यः।

१७ ततः परं सप्तमो दूतः स्वकंसे यद्यद् अविद्यत तत् सर्व्वम् आकाशे ऽस्रावयत् तेन स्वर्गीयमन्दिरमध्यस्थसिंहासनात् महारवो
१८ ऽयं निर्गतः समाप्तिरभवदिति। तदनन्तरं तडितो रवाः स्तनितानि चाभवन्, यस्मिन् काले च पृथिव्यां मनुष्याः सृष्टास्तम् आरभ्य
१९ यादृङ्महाभूमिकम्पः कदापि नाभवत् तादृग् भूकम्पो ऽभवत्। तदानीं महानगरी त्रिखण्डा जाता भिन्नजातीयानां नगराणि च न्यपतन् महाबाबिल् चेश्वरेण स्वकीयप्रचण्डकोपमदिरापात्रदानार्थं संस्मृता।

द्वीपाश्च पलायिता गिरयश्चान्तर्हिताः। गगनमण्डलाच्च मनुष्याणाम् २०
उपर्य्यैकैकद्रोणपरिमितशिलानां महावृष्टिरभवत् तच्छिलावृष्टेः २१
क्लेशात् मनुष्या ईश्वरम् अनिन्दन् यतस्तज्जातः क्लेशो ऽतीव महान्।

महावेश्याया दर्शनम्।

तदनन्तरं तेषां सप्तकंसधारिणां सप्तदूतानाम् एक आगत्य १७ १
मां सम्भाष्यावदत्, अत्रागच्छ, मेदिन्या नरपतयो यया वेश्यया सार्द्धं २
व्यभिचारकर्म्म कृतवन्तः, यस्या व्यभिचारमदेन च पृथिवीनिवासिनो
मत्ता अभवन् तस्या बहुतोयेषूपविष्टाया महावेश्याया दण्डम् अहं
त्वां दर्शयामि। ततो ऽहम् आत्मनाविष्टस्तेन दूतेन प्रान्तरं नीतस्तत्र ३
निन्दानामभिः परिपूर्णं सप्तशिरोभि र्दशशृङ्गैश्च विशिष्टं सिन्दूरवर्णं
पशुमुपविष्टा योषिदेका मया दृष्टा। सा नारी कृष्णलोहितवर्णं ४
सिन्दूरवर्णञ्च परिच्छदं धारयति स्वर्णमणिमुक्ताभिश्च विभूषितास्ति
तस्याः करे घृणार्हद्रव्यैः स्वव्यभिचारजातमलैश्च परिपूर्ण एकः सुवर्णमयः
कंसो विद्यते। तस्या भाले निगूढवाक्यमिदं पृथिवीस्थवेश्यानां ५
घृण्यक्रियाणाञ्च माता महाबाबिलिति नाम लिखितम् आस्ते।
मम दृष्टिगोचरस्था सा नारी पवित्रलोकानां रुधिरेण यीशोः ६
साक्षिणां रुधिरेण च मत्तासीत् तस्या दर्शनात् ममातिशयम्
आश्चर्य्यज्ञानं जातं। ततः स दूतो माम् अवदत् कुतस्तवाश्चर्य्यज्ञानं ७
जायते? अस्या योषितस्तद्वाहनस्य सप्तशिरोभि र्दशशृङ्गैश्च युक्तस्य
पशोश्च निगूढभावम् अहं त्वां ज्ञापयामि। त्वया दृष्टो ऽसौ ८
पशुरासीत् नेदानीं वर्त्तते किन्तु रसातलात् तेनोदेतव्यं विनाशश्च
गन्तव्यः। ततो येषां नामानि जगतः सृष्टिकालम् आरभ्य
जीवनपुस्तके लिखितानि न विद्यन्ते ते पृथिवीनिवासिनो भूतम्
अवर्त्तमानमुपस्थास्यन्तञ्च तं पशुं दृष्ट्वाश्चर्य्यं मंस्यन्ते। अत्र ज्ञानयुक्तया ९

बुद्ध्या प्रकाशितव्यं। तानि सप्तशिरांसि तस्या योषित उपवेशन-
१० स्थानस्वरूपाः सप्तगिरयः सप्त राजानश्च सन्ति। तेषां पञ्च पतिता
एकश्च वर्त्तमानः शेषश्चाद्याप्यनुपस्थितः स यदोपस्थास्यति तदापि
११ तेनाल्पकालं स्थातव्यं। यः पशुरासीत् किन्त्विदानीं न वर्त्तते
१२ स एवाष्टमः, स सप्तानाम् एको ऽस्ति विनाशं गमिष्यति च। त्वया
दृष्टानि दशशृङ्गाण्यपि दश राजानः सन्तिः, अद्यापि तै राज्यं न
प्राप्तं किन्तु मुहूर्त्तमेकं यावत् पशुना सार्द्धं ते राजान इव प्रभुत्वं
१३ प्राप्स्यन्ति। त एकमन्त्रणा भविष्यन्ति स्वकीयशक्तिप्रभावौ पशवे
१४ दास्यन्ति च। ते मेषशावकेन सार्द्धं योत्स्यन्ति, किन्तु मेषशावकस्तान्
जेष्यति यतः स प्रभूनां प्रभू राज्ञां राजा चास्ति तस्य सङ्गिनो
१५ ऽप्याहूता अभिरुचिता विश्वास्याश्च। अपरं स माम् अवदत्
सा वेश्या यत्रोपविशति तानि तोयानि लोका जनता जातयो
१६ नानाभाषावादिनश्च सन्ति। त्वया दृष्टानि दश शृङ्गाणि पशुश्चेमे
तां वेश्याम् ऋतीयिष्यन्ते दीनां नग्नाञ्च करिष्यन्ति तस्या मांसानि
१७ भोक्ष्यन्ते वह्निना तां दाहयिष्यन्ति च। यत ईश्वरस्य वाक्यानि
यावत् सिद्धिं न गमिष्यन्ति तावद् ईश्वरस्य मनोगतं साधयितुम्
एकां मन्त्रणां कृत्वा तस्मै पशवे स्वेषां राज्यं दातुञ्च तेषां
१८ मनांसीश्वरेण प्रवर्त्तितानि। अपरं त्वया दृष्टा योषित् सा महानगरी
या पृथिव्या राज्ञाम् उपरि राजत्वं कुरुते।

महाबाबिलोऽधःपतनम्।

१८ १ तदनन्तरं स्वर्गाद् अवरोहन् अपर एको दूतो मया दृष्टः
२ स महापराक्रमविशिष्टस्तस्य तेजसा च पृथिवी दीप्ता। स बलवता
स्वरेण वाचमिमाम् अघोषयत् पतिता पतिता महाबाबिल्, सा
भूतानां वसतिः सर्व्वेषाम् अशुच्यात्मनां कारा सर्व्वेषाम् अशुचीनां

दुष्टानाञ्च पक्षिणां पिञ्जरस्वाभवत्। यतः सर्व्वजातीयास्तस्या ३
व्यभिचारजातां कोपमदिरां पीतवन्तः पृथिव्या राजानश्च तया
सह व्यभिचारं कृतवन्तः पृथिव्या बणिजश्च तस्याः सुखभोगबाहुल्याद्
धनाढ्यतां गतवन्तः। ततः परं स्वर्गात् मयापर एष रवः श्रुतः, ४
हे मम प्रजाः, यूयं यत् तस्याः पापानाम् अंशिनो न भवत तस्या
दण्डैश्च दण्डयुक्ता न भवत तदर्थं ततो निर्गच्छत। यतस्तस्याः पापानि ५
गगनस्पर्शान्यभवन् तस्या अधर्म्मक्रियाश्चेश्वरेण संस्मृताः। परान् ६
प्रति तया यद्वद् व्यवहृतं तद्वत् तां प्रति व्यवहरत, तस्याः कर्म्मणां
द्विगुणफलानि तस्यै दत्त, यस्मिन् कंसे सा परान् मद्यम् अपाययत्
तमेव तस्याः पानार्थं द्विगुणमद्येन पूरयत। तया यात्मश्लाघा यश्च ७
सुखभोगः कृतस्तयो र्द्विगुणौ यातनाशोकौ तस्यै दत्त, यतः सा
स्वकीयान्तःकरणे वदति, राज्ञीवद् उपविष्टाहं नानाथा न च
शोकवित्। तस्माद् दिवस एकस्मिन् मारीदुर्भिक्षशोचनैः सा ८
समाश्लोष्यते नारी धक्ष्यते वह्निना च सा; यद् विचाराधिपस्तस्या ९
बलवान् प्रभुरीश्वरः, व्यभिचारस्तया सार्द्धं सुखभोगश्च यैः कृतः, ते
सर्व्वे एव राजानस्तद्दाहधूमदर्शनात् प्ररोदिष्यन्ति वक्षांसि चाहनिष्यन्ति
बाहुभिः। तस्यास्ते यातनाभीते दूरे स्थित्वेदमुच्यते, हा हा बाबिल् १०
महास्थान हा प्रभावान्विते पुरि, एकस्मिन् आगता दण्डे विचाराज्ञा
त्वदीयका। मेदिन्या बणिजश्च तस्याः कृते रुदन्ति शोचन्ति च ११
यतस्तेषां पण्यद्रव्याणि केनापि न क्रीयन्ते। फलतः सुवर्णरौप्यमणिमुक्ताः १२
सूक्ष्मवस्त्राणि कृष्णलोहितवासांसि पट्टवस्त्राणि सिन्दूरवर्णवासांसि
चन्दनादिकाष्ठानि गजदन्तेन महार्घकाष्ठेन पित्तललौहाभ्यां
मर्म्मरप्रस्तरेण वा निर्म्मितानि सर्व्वविधपात्राणि त्वगेला धूपः १३
सुगन्धिद्रव्यं गन्धरसो द्राक्षारसस्तैलं शस्यचूर्णं गोधूमो गावो मेषा

अश्वा रथा दासेया मनुष्यप्राणाश्चैतानि पण्यद्रव्याणि केनापि न
१४ क्रीयन्ते। तव मनोऽभिलाषस्य फलानां समयो गतः, त्वत्तो दूरीकृतं
यद्यत् शोभनं भूषणं तव, कदाचन तदुद्देशो न पुन र्लप्स्यते त्वया।
१५ तद्विक्रेतारो ये वणिजस्तया धनिनो जातास्ते तस्या यातनाया भयाद्
दूरे तिष्ठन्तो रोदिष्यन्ति शोचन्तश्चेदं गदिष्यन्ति हा हा महापुरि,
१६ त्वं सूक्ष्मवस्त्रैः कृष्णलोहितवस्त्रैः सिन्दूरवर्णवासोभिश्चाच्छादिता
१७ स्वर्णमणिमुक्ताभिरलङ्कृता चासीः, किन्त्वेकस्मिन् दण्डे सा महासम्पद्
१८ लुप्ता। अपरं पोतानां कर्णधाराः समूहलोका नाविकाः समुद्र-
व्यवसायिनश्च सर्व्वे दूरे तिष्ठन्तस्तस्या दाहस्य धूमं निरीक्षमाणा उच्चैः
१९ स्वरेण वदन्ति तस्या महानगर्य्याः किं तुल्यं? अपरं स्वशिरःसु
मृत्तिकां निक्षिप्य ते रुदन्तः शोचन्तश्चोच्चैःस्वरेणेदं वदन्ति हा हा
यस्या महापुर्य्या बाहुल्यधनकारणात् सम्पत्तिः सञ्चिता सर्व्वैः
सामुद्रपोतनायकैः, एकस्मिन्नेव दण्डे सा सम्पूर्णोच्छिन्नतां गता।

२० हे स्वर्गवासिनः सर्व्वे पवित्राः प्रेरिताश्च हे।
हे भाविवादिनो यूयं कृते तस्याः प्रहर्षत।
युष्माकं यत् तया सार्द्धं यो विवादः पुराभवत्।
दण्डं समुचितं तस्य तस्यै व्यतरदीश्वरः॥

२१ अनन्तरम् एको बलवान् दूतो बृहत्पेषणीप्रस्तरतुल्यं पाषाणमेकं
गृहीत्वा समुद्रे निक्षिप्य कथितवान्, ईदृग्बलप्रकाशेन बाबिल्
महानगरी निपातयिष्यते ततस्तस्या उद्देशः पुन र्न लप्स्यते।

२२ वल्लकीवादिनां शब्दः पुन र्न श्रोष्यते त्वयि।
गायकानाञ्च शब्दो वा वंशीतूर्य्यादिवादिनां।
शिल्पकर्म्मकरः को ऽपि पुन र्न द्रक्ष्यते त्वयि।
पेषणीप्रस्तरध्वानः पुन र्न श्रोष्यते त्वयि।

दीपस्यापि प्रभा तद्वत् पुन र्न द्रक्ष्यते त्वयि। २३
न कन्यावरयोः शब्दः पुनः संश्रोष्यते त्वयि।
यस्मान्मुख्याः पृथिव्या ये वणिजस्तेऽभवन् तव।
यस्माच्च जातयः सर्व्वा मोहितास्तव मायया।
भाविवादिपवित्राणां यावन्तश्च हता भुवि। २४
सर्व्वेषां शोणितं तेषां प्राप्तं सर्व्वं तवान्तरे॥

राजाधिराजयीशोर्विजययात्रा।

ततः परं स्वर्गस्थानां महाजनताया महाशब्दो ऽयं मया श्रुतः, १९ १
ब्रूत परेश्वरं धन्यम् अस्मदीयो य ईश्वरः।
तस्याभवत् परित्राणं प्रभावश्च पराक्रमः॥
विचाराज्ञाश्च तस्यैव सत्या न्याय्या भवन्ति च। २
या स्ववेश्याक्रियाभिश्च व्यकरोत् कृत्स्नमेदिनीं॥
तां स दण्डितवान् वेश्यां तस्याश्च करतस्तथा।
शोणितस्य स्वदासानां संशोधं स गृहीतवान्॥
पुनरपि तैरिदमुक्तं यथा, ३
ब्रूत परेश्वरं धन्यं यन्नित्यं नित्यमेव च।
तस्या दाहस्य धूमो ऽसौ दिशमूर्द्ध्वमुदेष्यति॥
ततः परं चतुर्व्विंशतिप्राचीनाश्चत्वारः प्राणिनश्च प्रणिपत्य ४
सिंहासनोपविष्टम् ईश्वरं प्रणम्यावदन्,
तथास्तु परमेशश्च सर्व्वैरेव प्रशस्यतां॥
अनन्तरं सिंहासनमध्याद् एष रवो निर्गतो, यथा, ५
हे ईश्वरस्य दासेयास्तद्भक्ताः सकला नराः।
यूयं क्षुद्रा महान्तश्च प्रशंसत व ईश्वरं॥

